क्रुध्यन् कुलं धक्ष्यति विप्रवह्निर्यास्यन् सुतस्तप्स्यति मां समन्युम्
इत्थं नृपः पूर्वमवालुलोचे ततोऽनुजज्ञे गमनं सुतस्य ॥ २३ ॥

समास इति। नञ्तत्पुरुषसंज्ञकसमासार्थं परे सूत्रं कुर्वन्ति तन्मते न योग्योऽयोग्य इति विग्रहः स्वमते योग्यादन्यः अयोग्यः अन्यारभ्येत्यादिना नञोऽन्यार्थत्वात् पञ्चमीसमासः व्यंपूर्वमिति नञः प्राग्भावः नञोनौवित्यः एवमब्राह्मण इत्यत्र ब्राह्मणस्य न सदृशोऽब्राह्मणः समार्थेनेत्यादिना नञः समार्थत्वात् षष्ठी तेनात्र षष्ठीसमासः अनिमित्तान्यथा पश्यन्नित्यत्र एकार्थेन निन्दितानि च तानि निमित्तानि चेति कर्मधारयः नञो निन्दितार्थे एकार्थत्वात् अपापमित्यत्र पापस्याभावोऽपापमित्यव्ययीभावः नञोऽव्ययत्वात् एवमन्यत्र यथान्वयं बोद्धव्यम्। "तत् सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः॥" इत्यसमासे तु नञो वाचकत्वानङ्गीकारात् तद्योगे उक्तव्याख्या प्राप्तविभक्तिर्न स्यात्। ममेव विधा प्रकारो यस्य तादृशः सर्वं जानातीत्यभिप्रायः ॥ २२ ॥ भ०

क्रुध्यन्नित्यादि। यद्यहं भूतरक्षणेऽधिकृतोऽस्य वचनं न कुर्यां तदा क्रुध्यन् सन् दिवादित्वात् श्यन् विप्रो वह्निरिव उपमितिसमासः धक्ष्यति कुलं भस्मसात् करिष्यति दहेर्लृट् दादेरिति घः भष्भावः चर्त्वं धकारस्य ककारः, इणकोरिति षत्वम्। यास्यन् गमिष्यन् सुतः मां समन्युं सशोकं तप्स्यति सन्तापयिष्यति तपेर्लृट्। इत्थमेवं प्रकारं नृपः पूर्वमादौ अवालुलोचे अवलोचितवान् अवाङ्पूर्वाल्लोचेर्लिट् तत उत्तरकालं सुतस्य गमनमनुजज्ञे अनुज्ञातं नृपेणेति विभक्तिविपरिणामेन तेनेति योज्यम्। कर्मणि लिट् ज्ञा अवबोधने इति

आशीर्भिरभ्यर्च्य ततः क्षितीन्द्रं प्रीतः प्रतस्थे मुनिराश्रमाय।
तं पृष्ठतः प्रष्ठमियाय नम्रो हिंस्रेषु दीप्रास्त्रधरः कुमारः॥ २४॥

परस्मैपदित्वात् न चानुपूर्वाद्गमादात्मनेपदं विहितम्॥ २२॥
ज० म०

क्रुध्यन्नित्यादि। विप्र एव वह्निः क्रुध्यन् कुलं धक्ष्यति भस्मीकरिष्यति दहौ दाहे ओदित्वान्नेम दादेर्घ इति हस्य घः झषभषसोरिति घस्य कः क्विलादिति षः। यास्यन् गमिष्यन् सुतः समन्युं सशोकं मां तपस्यति तपौ दाहे। इत्थमनेन प्रकारेण नृपः पूर्वमवालुलोचे आलोचितवान् लोचृङोचे ध्रुर्हिंष्यङीति द्विः झभखथहर्घेति शोकारस्य उकारः। ततोऽनन्तरं सुतगमनम् अनुजज्ञे। अत्रानुशब्दस्य उपसर्गप्रतिरूपकत्वेन जिन्अन्तपिवेति मम्। यद्वा विभक्तिव्यत्ययेन नृपेण सुतस्य गमनमनुजज्ञे अनुज्ञातं कर्मणि प्रत्ययः यद्वा अनु पश्चात् ततस्तेन सुतस्य गमनं जज्ञे ज्ञातं तसक्तेरिति तस् यद्वा जनीङो रूपम् अनुज्ञातार्थता हनगमित्युङ्लोपः॥ २३॥ भ०

आशीर्भिरित्यादि। रामगमनस्यानुज्ञातत्वात् प्रीतो मुनिः क्षितीन्द्रं राजानम् आशीर्भिरभ्यर्च्य पूजयित्वा आङ्शासेः क्विप्युपसंख्यानात् उपधाया इत्वं प्रतस्थे पुनराश्रमाय आश्रमं पुनः प्रस्थितवान्। तिष्ठतेः समवेत्यादिना लिटि तङ्। प्रष्ठम् अग्रयायिनं तं प्रष्ठोऽग्रगामिनीति षत्वं पृष्ठतः पश्चात् इयाय कुमारः। इणो णलि वृद्धिरायादेशः द्विर्वचनेचीति स्थानिवद्भावात् द्विर्वचनमिकारस्य अभ्यासस्यासवर्णे इतीयङ्। नम्रोऽनुकूलः हिंसनशीलाः इषवः शराः हिंस्रेषवः आप्तमविसंवादि यद्धनुः तत् हिंस्रेषु दीप्तमाप्तं धनुर्यस्य कुमारस्येति विग्रहः। अत्र धनुषश्चेति अनङ् न भवति

प्रयास्यतः पुण्यवनाय जिष्णोः
रामस्य रोचिष्णुमुखस्य धृष्णुः।

---

समासान्तविधिरनित्य इति। दीप्तास्त्रधनुरिति पाठान्तरम्। दीप्रमस्त्रं धृष्टतया यस्य धनुषस्तत् दीप्रास्त्रं धनुर्यस्येति सः। कस्मिन् विषये हिंस्रेषु नान्येषु नम्रादयो नमिकम्पोत्यादिना रप्रत्ययान्ताः ॥ २४ ॥ ज० म०

आशीर्भिरित्यादि। मुनीरामस्य गमनानुज्ञया प्रीतः सन् क्षितीन्द्रं पुनराशीर्भिरभ्यर्च्य आश्रमाय प्रतस्थे प्रतिज्ञानिर्णयप्रकाशे संप्रव्यवाच्चस्य इति मं गत्यर्थमन्यढे इति चतुर्थी आङ्. शासः क्विप् शासुङ्विद्दस इति उङ आकारस्य अः सर्वेसुस्रेति रङिर्व्यंनच्तयोतिर्घः। कुमारो रामस्तं प्रष्ठम् अग्रगं मुनिं पृष्ठतः पश्चात् इयाय। इन्लगतौ णप् धुर्द्विंष्यङीति द्विः ञ्णित्यन्तेजुङतोरिति त्रिः खेर्य्योरियुवर्णे इति इय प्रात्स्थोऽग्रगे इति षत्वं पृष्ठत इति स्यास्तस्। नम्रो विनयावनतः हिंसदीपेति कर्त्तरि रः। हिंस्रेषु हिंसकेषु दीप्रं दीप्यमानम् अस्त्रं धरतोति पचादित्वादन् हिंसदोपाभ्यां पूर्वेण रः। हिंस्रेषु दीप्तात्तधनुरिति पाठे हिंस्रेण इषुणा दीप्तमात्तं गृहीतं धनुर्येन इति विग्रहः ॥ २४॥ भ०

प्रयास्यत इत्यादि। प्रयास्यतो गमिष्यतो रामस्य लक्ष्मणः सध्र्यङ् अभूत् सहायीभूतः सहाञ्चतीति क्विन् अनुषङ्गलोपः उगिदचामिति नुम् हलन्तादिसंयोगान्तलोपौ क्विन्प्रत्ययस्येति कुत्वं नकारस्य ङकारः सहस्य सध्रिरिति सध्र्यादेशः। पुण्यवनाय पुण्यहेतुत्वात् पुण्यं वनं गत्यर्थात् कर्मणि चतुर्थी। जिष्णोः जयशीलस्य ग्लाजिस्थश्चेति ग्स्नुः। रोचिष्णु रोचनशीलं मुखं यस्य रामस्य पितुराज्ञया तुष्टत्वात् अलङ्कृञित्यादिना

त्रैमातुरः कृत्स्नजितास्त्रशस्त्रः
सध्र्यङ् रतः श्रेयसि लक्ष्मणोऽभूत् ॥ २५ ॥
इषुमति रघुसिंहे दन्दशूकान् जिघांसौ
धनुररिभिरसह्यं मुष्टिपीडं दधाने ।

---

इष्णुच् । धृष्णुः शत्रुविध्वंसने प्रगल्भः त्रसिगृधीत्यादिना क्नुः । त्रैमातुरः तिसृणां मातृणामपत्यमिति तद्धितार्थविषये समासः पश्चान्मातुरुत्संख्या इत्यादिना अण् उत्वञ्च द्विगोर्लुगनपत्य इति लुङ् न भवति स हि पिण्डद्वयप्राशनात्ताभ्याञ्च जनितः अस्त्रञ्च शस्त्रञ्चेति द्वन्द्वः । कृत्स्नं समग्रं जितमधिगतमस्त्रं शस्त्रं येनेति विग्रहः । रतः श्रेयसि कल्याणे प्रकृत्यैकाच् प्रशस्यस्य श्रः लक्ष्मोरित्यौणादिकः लक्षेर्मुट् ईप्रत्ययश्च सा यस्य विद्यते इति लक्ष्मणः । लोमादिषु लक्ष्म्या अञ्चेति अच् न प्रत्ययः अत्वञ्च ॥ २५ ॥ ज० म०

प्रयास्यत इत्यादि । रामस्य श्रेयसि कल्याणे रतो लक्ष्मणः सध्र्यङ् सहचरोऽभूत् । सह अञ्चति गच्छतीति क्विप् सहसमिवसमितिरीति सहशब्दस्य सध्र्यादेशः । किम्भूतस्य पुण्यहेतुत्वात् पुण्यं पवित्रं वा यद्वनं तस्मै प्रयास्यतो गमिष्यतः. गत्यर्थमन्यढे इति कर्मणि चतुर्थी जयतीति जिष्णुः ग्लाजिस्थश्च ग्स्नुरिति ग्स्नु । यन्मरच्चार्थे गमनानन्दात् रोचिष्णु दीप्यमानं मुखमस्य भ्राजिष्णुरिति इष्णुः । किम्भूतः धृष्णुः प्रगल्भः त्रसिगृधिधृषिक्षिपः क्नुरिति क्नुः शीलार्थे ग्स्नुक् इष्णु क्नु प्रत्यया इत्येके । तिसृणां मातृणामपत्यं त्रैमातुरः संख्यासंभद्रान्मातुरुच् इति उर् । कृत्स्नं समस्तं जितमस्त्रं शस्त्रञ्च येन स तथा रतः रम्धातोः क्तप्रत्यये वनतनाद्यनिमामिति मलोपः ॥ २५ ॥ भ०

व्रजति पुरतरुण्यो बद्धचित्राङ्गुलित्रे
कथमपि गुरुशोकान् मा रुदन् माङ्गलिक्यः ॥ २६ ॥

---

इषुमतीत्यादि । रघुसिंहे रामे रघुषु रघुवंशभवेषु सिंह इव शौर्य्यादियोगात् व्रजति सति इषुमति सनिषङ्गे प्रशंसायां मतुप् । दन्दशूकान् हिंस्रान् दंशेः लुपसदेत्यादिना यङ् जपजभेत्यादिना अभ्यासस्य नुक् । तदन्ताद्यजजपेत्यादिना ऊकः । अतो लोपः यस्य हलः जिघांसौ हन्तुमिच्छौ अज्झनेति दीर्घः । अभ्यासाच्चेति कुत्वं सनाशंसेति उः न लोकेति षष्ठीप्रतिषेधात् द्वितीयैव । धनुर्दधाने बिभ्राणे अरिभिरसह्यं सोढुमशक्यं शकिसहोश्चेति यत् । मुष्टिपीडं मुष्टिना पीडयित्वा मुष्टिशब्दे तृतीयान्ते उपपदे सप्तम्यां चोपपीडेति णमुल् तत्र चकारेण तृतीयानुकर्षणात् । बद्धं चित्रमङ्गुलित्रं येन अङ्गुलिं त्रायते इति कः । पुरे तरुण्यः पुरतरुण्यः णञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसङ्ख्यानमिति ङीप् । यदि तद्वचोऽर्थवत् नो चेद्गौरादिपाठात् ङीष् । रामो गत इति गुरु शोको यासां ताः । कथमपि मा रुदन् न रुदितवत्यः । रुदिरिरिनो वेति च्लेरङ् यतो माङ्गलिक्यः मङ्गलप्रयोजनाः तदस्य प्रयोजनमिति ठञ् टिड्ढाणञित्यादिना ङीप् ॥ २६ ॥ ज० म०

इषुमतीत्यादि । रघुसिंहे रघुश्रेष्ठे रामे व्रजति सति तद्विच्छेदात् गुरुशोकात् पुरतरुण्यः कथमपि महाकष्टेन मा रुदन् लघिरुदरोदे यतो माङ्गलिक्यः मङ्गलाय हिताः मङ्गलप्रयोजना वा विकारसङ्घेति ष्णिकः ष्णिद्गुह्याईति ईप् नदादित्वात् तरुणशब्दादीप् वयस्यचरमे इति क्रमदीश्वरादयः । रामे कीदृशे इषुमति मतुरस्त्यर्थे प्रशंसायाम् । दन्दशूकान्

अथ जगदुरनीचैराशिषस्तस्य विप्राः
तुमुलकलनिनादं तूर्य्यमाजघ्नुरन्ये ।

जिघांसौ दंशौ दंशने इत्यस्मात् जागयङन्तेति ऊकः यङो लुग्वेति यङो लुक् दंशो नलोपो वेनि नलोपः दन्दशूकान् दंशनशीलानिति धातुचन्द्रादयः दन्दशूकश्च पुंलिङ्गो राचसे च सरीसृपे इति मेदिनो हन्तुमिच्छुर्जिघांसुः सन्निच्छायामिति सन् अत्तुमिच्छति जिघत्सतीत्युक्तेस्तुम्गर्भाद्धातोः सन्निति बोध्यम् अन्यथाऽत्तुमिच्छतीत्युक्तेवैयर्थ्यं स्यात् सन्यङन्तो द्विरिति द्विः खेराद्यचो लोप्य इति खेर्लोपः झभखयेति हस्य जः ख्यस्येत्सनीति इः खेर्ह्रो घोञ्णितीति चेति हस्य घः घोंझनिङ्गमामिति दीर्घः। अरिभिरसह्यं धनुर्दधाने किम्भूतं तत् मुष्टिपीड़ं मुष्टिना पीडा यस्य तत्तथा एतेन मुष्टेर्दार्ढ्यं सूचितम्। अन्ये तु प्रमाणाशक्त्योस्तृतीयासप्तमीभ्यां क्त्वाच्णम् समासो वेत्याहुः। तन्मते मुष्टिना पीडयोत्वा इत्यर्थः। मुष्टिं पीडयतीति पचादित्वादन् मुष्टिपीडमिति विशेषणेन धनुषोऽतिदार्ढ्यं सूचितमिति केचित्। केचित्तु मुष्टिं मोषणं पीडयति खण्डयति इत्यनेन चौर्य्यापसारणमपि कविभिर्वर्ण्यते श्रुतौ तस्करता स्थितेति कालिदास इत्याह मुष्टिं हि सामर्थ्यात् मनुक्तां पीडयतीति केचित् धारणक्रियाविशेषणमिति केचित् विचित्रम् अङ्गुलित्रं बद्धं येन षङ्गुलिं त्रायते रचतीति इनजनादिति डः॥ २६ ॥ भ०

अथेत्यादि। तस्य रामस्य व्रजतः विप्राः अनीचैः महता ध्वनिना आशिषः इष्टवचनानि जगदुः गदितवन्तः। अन्ये वादकाः तूर्य्यं कांस्यतालपटहादिसमूहम् आजघ्नुः ताडितवन्तः आङो यमहन इति आत्मनेपदं न भवति। अकर्मका-

अभिमतफलशंसी चारु पुस्फोर बाहुः
तरुषु चुकुवुरुच्चैः पक्षिणश्चानुकूलाः ॥ २७ ॥
इति भट्टिकाव्ये रामोत्पत्तिर्नाम प्रथमः सर्गः ।

---

दित्यनुवर्त्तते । तुमुलो महान् कलो मधुरो निनादो ध्वनिर्यस्येति अभिमतम् इष्टं फलं शंसितुं शीलं यस्य बाहोः स च पुस्फोर सुतरां स्फुरितवान् । अत्र दक्षिणो बाहुः सामर्थ्याद्गम्यते स्वाङ्गत्वात् अनेन सीताप्राप्तिवीजमुपन्यस्तं स्फुरतेरभ्यासस्यशर्पूर्वाः खय इति खयः शेषः चर्त्वम् । पक्षिणश्च तरुषु स्थिताः अनुकूलाः सन्तः उच्चैः सुष्ठु चुकुवुः कूजितवन्तः । कुशब्द इत्यस्य लिटः कित्त्वादुवङादेशः ॥२७॥ज॰म॰

इति भट्टिकाव्यटीकायां जयमङ्गलाख्यायां प्रकीर्णकाण्डे रामसम्भवः प्रथमः सर्गः ॥

अथेत्यादि। अनन्तरं विप्रास्तस्य रामस्य अनीचैरुच्चैराशिषो जगदुः उक्तवन्तः । अन्ये तूर्य्यं वाद्यं आजघ्नुः वादितवन्तः । कीदृशं तुमुलो महान् कलो मधुरास्फुटो निनादो ध्वनिर्यस्य । तूर्य्योऽस्त्री वाद्यनिर्घोषे वादित्रं वादनञ्च तदिति कोषः । तस्य रामस्य बाहुश्चारु यथा स्यात्तथा पुस्फोर । किम्भूतः अभिमतं फलं शंसति कथयतीत्यर्थात् दक्षिणबाहुस्पन्दनं कान्तालिङ्गनसूचकमिति वृद्धाः । ग्रहादित्वाण्णिन्, अन्ये तु शीलार्थे णिन् इत्याहुः । अनुकूलाः पक्षिण उच्चैश्चुकुवुः शब्दं चक्रुः कुङ् शब्दे, एतेन गमनमङ्गलमुक्तम् । यदुक्तं "वामे मधुरवाव पक्षी वृक्षः पल्लवितोऽग्रतः । अनुकूलो वहन् वायुः प्रयाणे शुभशंसिन ॥" इति ॥ २७ ॥ भ॰

इति श्रीभरतसेनकृतायां भट्टिटीकायां मुग्धबोधिन्यां प्रकीर्णकाण्डे श्रीरामसम्भवो नाम प्रथमः सर्गः ॥

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



# द्वितीयः सर्गः।

वनस्पतीनां सरसां नदीनां तेजस्विनां कान्तिभृतां दिशाञ्च।
निर्याय तस्याः स पुरः समन्ताच्छ्रियं दधानां शरदं ददर्श ॥१॥

इदानीं विजिगीषूणां कण्टकान् समुद्धर्त्तुं शरत्काले समुद्योग इति तमेव वर्णयन्नाह वनस्पतीनामित्यादि। स रामः तस्याः पुरः अयोध्यायाः निर्याय निर्गत्य समन्तात् सर्वतः शरदं ददर्श दृष्टवान् कालस्याप्रत्यक्षत्वात् कार्य्याणां दर्शनात्तद्दर्शनमिति मन्यते। श्रियं दधानां धारयन्तीं केषां वनस्पतीनां पारस्करादिदर्शनात् सुट्। अत्र लोकप्रतीत्या वृक्षा द्रष्टव्या न तु पारिभाषिकाः। तथा सरसां तड़ागानां नदीनां गङ्गादीनां तेजस्विनाञ्चन्द्रतारादीनां कान्तिं नैर्मल्यं बिभ्रतां दिशाञ्च तदा हि निर्मला दिशो भवन्ति इति भावः। वनस्पत्यादीनां श्रियं दधानां शरदं ददर्श तां रामव्यापारं विना सामान्येन वर्णयन्नाह ॥ १ ॥ ज० म०

वनस्पतीनामित्यादि। स रामस्तस्याः पुरोऽयोध्याया निर्गत्य समन्तात्सर्वतः शरदं ददर्श। यद्यपि कालस्य प्रत्यक्षता नास्ति तथापि तद्व्यञ्जकदर्शनात्तथा व्यपदेशः। किम्भूतां वनस्पत्यादीनां श्रियं दधानां वनस्पतयो वृक्षाः परस्परं व्यतिबूनन्तीति ज्ञापकात् क्वचिदभिधानात् सकारागम इति बोध्यम्। वनस्पत्येतरद्वौ स्याद द्रुमान्तेऽपि वनस्पतिरिति। रभसः तेजो विद्यते येषां ते तेजस्विनश्चन्द्रादयः सज्ञ धास्मायादिति विन्। एषां कान्तिभृतामिति सम्बन्धः कान्तिं बिभ्रतीति क्विप स्वस्य तन् पितीति तन्। वनस्पतीनां पुष्प-

तरङ्गसङ्गाच्चपलैः पलाशैर्ज्वालाश्रियं सातिशयां दधन्ति ।
सधूमदीप्ताग्निरुचीनि रेजुस्ताम्रोत्पलान्याकुलषट्पदानि ॥ २ ॥
बिम्बागतैस्तीरवनैः समृद्धिं निजां विलोक्यापहृतां पयोभिः ।
कूलानि सामर्षतयेव तेनुः सरोजलक्ष्मीं स्थलपद्महासैः ॥ ३ ॥

---

सम्बन्धात् सरसां विकसितपद्मादिमत्त्वात् नदीदिक्तेजस्विनां अन्यत्कान्तिभृत्त्वम् ॥ १ ॥ भ०

तरङ्गेत्यादि । तरङ्गसङ्गात् सलिलोर्मिसम्पर्काच्चपलैः चञ्चलैः पलाशैः पत्रैः ज्वालाश्रियं सातिशयां दधन्ति सधूमदीप्ताग्निरुचीनि सधूमदीप्ताग्नेरिव रुचिर्येषां रक्तोत्पलानां तानि रेजुः दीप्यन्ते स्म राजेर्लिटि फणाञ्च सप्तानामिति एत्वाभ्यासलोपौ । आकुलाः इतस्ततोयायिनः षट्पदा येष्विति चलितपत्राणामग्निशिखातुल्यत्वात् षट्पदानाञ्च धूमतुल्यत्वात् सधूमदीप्ताग्निरुचीनीत्युक्तम् ॥ २ ॥ ज० म०

तरङ्गेत्यादि । ताम्रोत्पलानि रक्तोत्पलानि रेजुः राजृञ्ण दीप्तौ फणादित्वात् तॄफलभजत्रपेति अत एत्वं खिलोपश्च । कीदृशानि तरङ्गसङ्गाच्चपलैश्चञ्चलैः पलाशैः पत्रैः सातिशयां ज्वालाश्रियं दधन्ति धारयन्ति धूमेन सह वर्त्तमानस्य दीप्ताग्नेरुचिरिव रुचिर्येषाम् । आकुलाश्चञ्चलाः षट्पदा भ्रमरा यत्र रक्तोत्पलदलानां वह्निज्वालासादृश्यं भ्रमरस्य धूमसादृश्यमिति भावः ॥ २ ॥ भ०

बिम्बेत्यादि । बिम्बं प्रतिबिम्बं तेनागतैर्निपतितैरिति द्वितीयेति योगविभागात् सः । तीरवनैः कुसुमितैरित्यर्थात् तैः करणभूतैः पयोभिः कर्त्तृभिः समृद्धिं विभूतिं निजामात्मीयाम् अपहृतां विलोक्य कूलानि कर्त्तृभूतानि सामर्षतयेव साक्षमतयेव सरोजलक्ष्मीं कमलशोभां पयःसम्बन्धिनीं तेनुः

निशातुषारैर्नयनाम्बुकल्पैः पत्रान्तपर्य्यागलदच्छविन्दुः ।
उपारुरोदेव नदत्पतङ्गः कुमुद्वतीं तीरतरुर्दिनादौ ॥ ४ ॥

---

विस्तारितवन्ति। अत एकहल्मध्य इत्यादिना एत्वाभ्यास-लोपौ। कूले सरोजासम्भव इति चेदाह स्थलपद्महासैरिति स्थलकमलविकाशैरित्यर्थः ॥ ३ ॥ ज० म०

विम्बेत्यादि। प्रतिविम्भेनागतैस्तीरवनैः करणभूतैः पयोभिः कर्त्तृभिरात्मीयां समृद्धिं सम्पत्तिम् अपहृतां विलोक्य नद्यादीनां कूलानि सामर्षतया सक्रोधतया-स्थलपद्महासैः स्थलकमलविकाशैः पयःसम्बन्धिनीं सरोजलक्ष्मीं पद्मशोभां तेनुः तनदुञ् विस्तारे इत्वोत्र्यम्चायाम् ॥ ३ ॥ भ०

निशेत्यादि। निशायां तुषारैः हिमैः नयनाम्बुकल्पैः अश्रुतुल्यैः नयनानुकारिषु पत्रेषु स्थितत्वात्। तैर्हेतुभूतैः पत्रान्तपर्य्यागलदच्छविन्दुः पत्रान्तात्पर्य्यागलन्तः अच्छास्तुषारविन्दवो यस्य तीरतरोः। स दिनादौ दिनारम्भे कुमुद्वतीमुपारुरोदेव आक्रन्दितवानिव भाति शशिवियोगादीदृशी त्वं भूतासीति रोदनक्रियया आक्रन्दनविशिष्टया कुमुद्वत्या ईप्सिततमत्वात् रुदिः सकर्मकः। तदाक्रन्दनं योजयन्नाह नदत्पतङ्ग इति कूजत्पक्षीत्यर्थः पतेरङ्गत्यच्चिणीत्यौणादिकः। कुमुद्वती कुमुदनडेत्यादिना डमतुप् झय इति वत्वम् उगित्वात् ङीप् ॥ ४ ॥ ज० म०

निशेत्यादि। रात्रिसम्बन्धिहिमैर्नयनाम्बुतुल्यैर्हेतुभिः पर्णान्तपर्य्यागलदच्छविन्दुः सन् दिनादौ प्रातःकाले तीरस्थितो वृक्षः कुमुद्वतीम् उपारुरोद इव चन्द्रस्य विरहात् त्वमीदृशी जातेति क्रन्दितवानिव पर्णान्तेभ्यः समन्तात् गलन्तो निर्मला हिमानां विन्दवो यस्य एतेन नयनाम्बु-

वनानि तोयानि च नेत्रकल्पैः पुष्पैः सरोजैश्च निलीनभृङ्गैः ।
परस्परां विस्मयवन्ति लक्ष्मीमालोकयाञ्चक्रुरिवादरेण ॥ ५ ॥
प्रभातवाताहतिकम्पिताकृतिः कुमुद्वतीरेणुपिशङ्गविग्रहम् ।
निरास भृङ्गं कुपितेव पद्मिनी न मानिनी संसहतेऽन्यसङ्गमम् ॥ ६

---

त्वत्वं सूचितम् । नदन्तः कूजन्तः पतङ्गाः पक्षिणो यत्र एतेन पतङ्गशब्दैरेव रोदनं सूचितम् । आह्वानविशिष्टाया रोदनक्रियायाः सकर्मत्वं केवलायास्त्वकर्मकत्वमिति वृद्धाः वतो कुमुदस्यातो लोपो निपातनात् ॥ ४ ॥ भ०

वनानीत्यादि । वनानि पुष्पैर्निलीनभृङ्गैः स्थितभ्रमरैः लीयतेः स्वादय ओदित इति निष्ठा नत्वम् । नेत्रकल्पैः नेत्रतुल्यैः । तोयानि च सरोजैः निलीनभृङ्गैर्नेत्रकल्पैः विस्मयवन्ति जातविस्मयानि परस्परामन्योन्यस्य लक्ष्मीं शोभाम् आलोकयाञ्चक्रुरिव । आदरेण तात्पर्य्येण ॥ ५ ॥ ज० म०

वनानीत्यादि । नेत्रसदृशैः पुष्पैर्वनानि सरोजैस्तोयानि च परस्पराम् अन्योन्यस्य लक्ष्मीं शोभाम् आदरेण आलोकयाञ्चक्रुरिव शोभातिशयात् विस्मययुक्तानि परस्परामिति क्रियाव्यतीहारे निपातः परस्परमिति पाठोऽपि तथा क्रियाविशेषणं वा । नेत्रसादृश्ये हेतुगर्भविशेषणमाह निलीना आश्लिष्टा भृङ्गा येषु ॥ ५ ॥ भ०

प्रभातेत्यादि । प्रभाते यो वातस्तस्याघातेन कम्पिता चलिता आकृतिराकारो यस्याः पद्मिन्याः सा भृङ्गं निरास निरस्तवती । कुमुद्वतीरेणुना पिशङ्गः कपिशः विग्रहो यस्य भृङ्गस्य कुपितेव । यथा अन्यया स्त्रिया सहोषितं तदङ्गसंक्रान्तपरिमलकण्ठमालमात्मदयितं काचित् कुपिता निरस्यति तद्वत् । सा किमिति निरस्यति यतो मानिनी मानवती अन्य-

दत्तावधानं मधुलेह्विगीतौ प्रशान्तचेष्टं हरिणं जिघांसुः।
आकर्णयन्नुत्सुकहंसनादान् लक्ष्ये समाधिं न दधे मृगावित् ॥७॥

---

सङ्गमम् अन्यया सह सङ्गमं न सहते आत्मसङ्गादन्यसङ्गमं न संसहते न क्षमते ॥ ६ । ज० म०

प्रभातेत्यादि। पद्मिनी कुपितेव भृङ्गं निरस्यति स्म। कीदृशं कुमुद्वत्या रेणुभिः पिशङ्गः कपिलो विग्रहः शरीरं यस्य। कीदृशी प्रातःकालसम्बन्धिवाताभिघातेन कम्पिता आकृतिर्यस्याः सा यथा कुपिता स्त्री अन्ययोषिता सह गमितरात्रिं पतिं तदङ्गलग्नचन्दनचिह्नेन निर्णीय क्रोधात् कम्पितवती निरस्यति तथेयमपीति भावः। यतः प्रशस्तमानवती स्त्री अन्ययोषित्सङ्गमम् ईदृशं पतिं न सहते अन्याशब्दस्य पुंवत्कर्मधारयेति पुंवत्। संसहते इति पाठे अर्थात् पत्युरन्यस्त्रीसंसर्गं न सम्यक् सहते ॥ ६ ॥ भ०

दत्तेत्यादि। मधुलेह्विगीताविति मधु लेढुं शीलमेषामिति णिनिः। मधुलेहगीताविति पाठान्तरम्। तत्र लिहन्तीति लेहाः पचाद्यच् मधुनो लेहा इति षष्ठीसमासः मधु लिहन्तीति वा कर्मण्यण्। दत्तावधानं दत्तमानसं हरिणं प्रशान्तचेष्टं जिघांसुः हन्तुमिच्छुरपि मृगावित् व्याधः मृगान् विध्यतीति क्विप्। ग्रहिज्येत्यादिना सम्प्रसारणम् नहिवृतीत्यादिना दीर्घः। लक्ष्ये वध्ये समाधिं चित्तैकाग्रतां न दधे न धारितवान् जित्वात्तङ् लिटः कित्त्वे आतो लोपः। उत्सुकानां हंसानां नादानाकर्णयन् शृण्वन् तत्राभिरतचित्तत्वात्। वर्त्तमानकालो भूतेनाभिसम्बध्यमानः साधुः। धातुसम्बन्धे प्रत्यया इति च आकर्णयन्निति प्रातिपदिकाद्धात्वर्थे बहुलमिति णिच् लक्षणहेत्वोरिति शतृप्रत्ययः ॥ ७ ॥ ज० म०

गिरेर्नितम्बे मरुता विभिन्नं तोयावशेषेण हिमाभमभ्रम्।
सरिन्मुखाभ्युच्चयमादधानं शैलाधिपस्यानुचकार लक्ष्मीम् ॥८॥

दत्तावधानमित्यादि। प्रशान्ता चेष्टा शरीरक्रिया यस्य तादृशमपि हरिणं जिघांसुर्हन्तुमिच्छुर्मृगावित् व्याधः उत्सुकानां हंसानां नादान् आकर्णयन् शृण्वन् लक्ष्ये शरव्ये हरिणे समाधिम् अवधानं न दधे न धृतवान् हंसध्वनिश्रवणेन स्वस्योत्कण्ठितत्वात् प्रशान्तचेष्टत्वे हेतुगर्भविशेषणमाह मधुलेहिनां भ्रमराणां गीतौ दत्तमवधानं येन। मधुलेहीति ग्रहादित्वाण्णिन् मृगं विध्यतीति क्विप् वीरुद्दोधङ्क्वाविति दीर्घनिर्देशात् क्वचित् क्विबन्ते पूर्वपदस्य दीर्घत्वं स्यादिति सूचितं तेनात्र दीर्घत्वम् आङ्पूर्वस्य विध्यते रूपं वा व्यधौ ताडे इत्यस्य दन्त्यवत्वात् न ञत्वं तेन झभान्तस्यादित्वा-मित्यस्य न विषयः कर्णत्कभिदीत्यस्याङ्पूर्वस्य श्रवणार्थकत्वम्। वेध्यं लक्ष्यं शरव्यञ्च इष्टार्थोद्युक्त उत्सुक इति चामरः। शाकटायने तु उन्मनसि उत्सुकः साधितः ॥ ७ ॥ भ०

गिरेरित्यादि। गिरेः कस्यचित् नितम्बे मध्यभागे स्थितमभ्रं कर्तृ मरुता विभिन्नं विश्लीकृतं तोयावशेषेण पयसोऽवशिष्टतया हिमाभं हिमसदृशं सरिन्मुखानां गिरिनदीनिर्गमाणामभ्युच्चयं वृद्धिम् आदधानं कुर्वाणं शैलाधिपस्य हिमवतः लक्ष्मीं शोभामनुचकार अनुकृतवत् ॥ ८ ॥ ज० म०

गिरेरित्यादि। पर्वतस्य नितम्बे शिखरे स्थितम् अभ्रं मेघः शैलाधिपस्य हिमालयस्य लक्ष्मीं शोभामनुचकार सदृशीचकार। कीदृशं मरुता वायुना विभिन्नं तोयावशेषेण हिमस्येव आभा यस्य सरिन्मुखस्य गिरिनदीनिर्गमस्थानस्य अभ्युच्चयं वृद्धिं इच्छा आदधानं कुर्वाणम् अभ्रतीति अभ्रम् अभ्र-

गर्जन् हरिः साम्भसि शैलकुञ्जे प्रतिध्वनीनात्मकृतान्निशम्य ।
क्रमं बबन्ध क्रमितुं सकोपः प्रतर्कयन्नन्यमृगेन्द्रनादान् ॥ ९ ॥
अदृक्षतास्भांसि नवोत्पलानि रुतानि चाश्रोषत षट्पदानाम् ।

गत्यां पचादित्वादच्। यद्वा न भ्रश्यन्ति जलान्यस्मादिति नमादित्वात् हनजनाद्दमादेर्ड इति डः। न भ्रश्यन्ति यतस्तेभ्यो जलान्यभ्राणि तान्युत इति निरुक्तिः। आपो भ्रश्यन्त्यस्मादिति वा पूर्ववत् डः कृद्योरित्युक्तः तेन वकारवानप्यब्भ्रशब्दः। अपो बिभर्त्तीत्यब्भ्रमिति केचित्। नितम्बो रोधसि स्कन्धे शिखरे च कटीरके इति विश्वः ॥ ८ ॥ भ०

गर्जन्नित्यादि। हरिः सिंहः गर्जन् शब्दं कुर्वन् क्व शैलनिकुञ्जे गिरेर्गहने साम्भसि ससलिले एवंविधे प्रदेशे प्रतिध्वनीन् प्रतिशब्दान् आत्मकृतान् निशम्य श्रुत्वा सरोषः सकोपः क्रमं बबन्ध क्रमितुमुत्पतितुं यत् सामर्थ्यं तच्चकारेत्यर्थः। अनेकार्थत्वाद्धातूनां बधिरत्र करणे वर्त्तते। किमिति प्रतर्कयन्नन्यमृगेन्द्रनादान्। इदानीं रामं व्यापारेण वर्णयन्नाह ॥ ९ ॥ ज० म०

गर्जन्नित्यादि। हरिः सिंहः सजले पर्वतसम्बन्धिलतादिपिहितस्थाने गर्जन् शब्दं कुर्वन् आत्मकृतान् प्रतिनादान् वितर्कयन् सकोपः सन् क्रमितुमुत्पतितुं क्रममुत्पतनानुकूलशरीरक्रियां बबन्ध चकारेत्यर्थः। क्रमः शक्तौ परीपाट्यां क्रमं चरणपङ्कयोरिति विश्वः। तर्क दीप्ताविति दीप्त्यर्थोऽपि तर्कधातुर्वितर्कमाह। प्रयोगतोऽन्ये मन्तव्या अनेकार्था हि धातव इत्यभिधानात् ॥ ९ ॥ भ०

अदृक्षतेत्यादि। नवान्युत्पलानि येष्वम्भस्सु जलेषु तानि रामेणादृक्षत दृष्टानि दृशेः कर्मणि लुङ् शलइगुपधा इति

आघ्रायि वान् गन्धवहः सुगन्धस्तेनारविन्दव्यतिषङ्गवांश्च ॥ १०॥

---

प्राप्तस्य कसादेशस्य न दृश इति प्रतिषेधात् इरितो वेति सिजेव भवति। तेन विकल्पेनाङो विधीयमानत्वात् लिङ्सिचाविति कित्त्वे गुणाभावः। षट्पदानां रुतानि अश्रोषत श्रुतानि। शृणोतेः कर्मणि लुङ्। वहतीति वहः पचाद्यच् गन्धस्य वह इति कृद्योगे षष्ठी समस्यते। गन्धवहो वायुराघ्रायि आघ्रातः कर्मणि लुङ्। अरविन्देन पद्मेन व्यतिषङ्गः सम्पर्कः सोऽस्ति यस्य वायोः स वातीति वान् वातेः शतृप्रत्ययः सुगन्धः शोभनो गन्धो यस्य सः अरविन्दव्यतिषङ्गवत्त्वात्। गन्धस्येदुत्पूतिसुसुरभिभ्य इतीकारः समासान्तो न भवति। गन्धस्येत्वे तदेकान्तग्रहणमिति वचनात् सुगन्ध आपणिक इति यथा ॥१०॥ ज० म०

अदृक्षतेत्यादि। तेन रामेण अम्भांसि अदृक्षत दृष्टानि नवानि उत्पलानि यत्र अम्भांसि नवानि उत्पलानि चादृक्षत इति वा, षट्पदानां भ्रमराणां रुतानि शब्दा अश्रोषत श्रुतानि। वहतीति वहः पचादित्वादच् गन्धस्य वहो गन्धवहो वायुराघ्रायि, वान् गच्छन् वाल गमनहिंसयोः अरविन्देन पद्मेन व्यतिषङ्गवान् संसर्गवान् अतएव सुगन्धः शोभनो गन्धोऽस्य इति सूत्सुरभिपूतेर्गन्धादिरिति समवेतस्यैव गन्धस्य ग्रहणम् अत्र तु परम्परया गन्धसम्बन्धान्न इप्रत्ययः। सुगन्धिरिति पाठे विकारसंघेत्यादिना सुगन्धशब्दात् स्वार्थे ष्णिः। क्वचित्तु समवायाध्याहारात् सुगन्धिः समीरण इति प्रयोग इति पाणिनीयाः। अगन्धादेर्वा इति कालापाः। अदृक्षतादिषु कर्मणि टी। अदृक्षतेत्यत्र इगुङ्र्मंढोत्यस्य निम्किदिति कित्त्वान्न गुः मान्तोऽदनत इत्यन्तस्य अत्। आघ्रायीत्यत्र रत-

लतानुपातं कुसुमान्यगृह्णात् स नद्यवस्कन्दमुपास्पृशच्च ।
कुतूहलाच्चारुशिलोपवेशं काकुत्स्थ ईषत् स्मयमान आस्त ॥११

---

नोर्यंगिणाविति इण् तनो लोपः यन्वन्लिदिति यन् ॥१०॥ भ०

लतेत्यादि। विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोरिति द्वितीयान्त उपपदे णमुल्विधीयते। तत्र व्याप्यमाने द्रव्यवचनस्य आसेव्यमाने च क्रियावचनस्य नित्यवीप्सयोरिति द्विर्वचनं विधीयते, अत्र तु समासेनैवोक्तत्वात् नोपयुज्यते इति स्थितम्। स काकुत्स्थो रामो गच्छन् लतां लताम् अनुपात्य कुसुमान्यगृह्णात् गृहीतवान् लताम् अनुपात्यानुप्लुत्य च। तृतीयाप्रभृतीन्यन्यतरस्यामिति समासः, ग्रहेर्लङ्। श्नाप्रत्ययस्य अपिदिति ङित्त्वे ग्रहिज्यादिना सम्प्रसारणम्। नद्यवस्कन्दमिति नदीं नदीम् अवस्कन्द्य सर्वां नदीम् अवस्कन्द्य ढौकित्वा नदीं वा अवस्कन्द्यावस्कन्द्य उपास्पृशत् आचमनं कृतवान्। कौतूहलादिति सर्वत्र योज्यम्। चारुशिलोपवेशमिति चारुशिलाः चारुशिला उपविश्य चारुशिला उपविश्योपविश्य वा आस्त आसितवान्। आसेर्लङि रूपम्। ईषत्स्मयमानः ईषद्धसन् ॥११॥ ज० म०

लतानुपातमित्यादि। स काकुत्स्थो रामः लतानुपातं कुसुमानि पुष्पाणि अगृह्णात् गृहीतवान्। लतानां पातस्य पश्चात् लतानुपातमित्यव्ययीभावः लतानां पातमनुक्रम्येति लतानां पतनमनतिक्रम्येति वा अव्ययानामनेकार्थत्वादनुशब्दोऽनतिक्रमेऽपि। नद्यवस्कन्दम् उपास्पृशत् स्नातवान् नद्यामवस्कन्दोऽवगाहो यत्र स्नानक्रियायां नदीयमिति बोधी यत्रेति वा। उपस्पर्शः स्पर्शमात्रे स्नानाचमनयोरपीति विश्वः। कुतूहलादिति सर्वत्र योज्यं चारुशिलोपवेशमास्त चारुशि-

तिग्मांशुरश्मिच्छुरितान्यदूरात्प्राञ्चि प्रभाते सलिलान्यपश्यत्।

लायामुपवेशो वसनं यत्रासनक्रियायां, चारुशिलानां रत्नशिलानामुपगता वेशा यस्मादिति वा। एतेन रामस्थित्या रत्नशिलानां सौन्दर्य्यं सूचितम्। ईषत् स्मयमान ईषद्धसमानः। यद्यपि स्मिङ्धातोरीषद्धसनमेवार्थस्तथापि ईषत् शब्देन अत्यन्तानुपलभ्यहास्यत्वेन गाम्भीर्य्यं सूचितम्। पातादयो घञन्ताः लतानुपातमादयो णमन्ता इति पाणिनीयाः। तन्मते लतां लतामनुपात्य नदीं नदीमवस्कन्द्य गत्वा चारुशिलायां उपविश्येत्यर्थः। स्वमते चणम् समूलघातमित्यत्र व्याख्यातः। अग्टह्लादित्यादिषु घो। वृषरूपस्य इन्द्रस्य ककुदि स्थितत्वात् ककुत्स्थ इक्ष्वाकुः पृषोदरादित्वाद्दकारलोप इति रायमुकुटादयः। स्वमते मनीषादित्वादिति यथा देवीदासचक्रवर्त्ती कदाचिद्दानरेश्वर इव सुग्रीवो वैदेहीति ब्रुवाणस्याः लघुकाकुत्स्थस्यार्थिनः प्रार्थना क्रियतां सफलेति वानरपुङ्गवानादिशदिति नलचम्पूश्लेषः तेन निस्तकारकाकुत्स्थशब्द इति बोध्यम्। प्राधान्ये राजलिङ्गे च वृषाङ्के ककुदोऽस्त्रियामित्यमरः। केचित्तु निपातनात् ककुदशब्दस्यातो लुकि ककुत्स्थशब्दस्तकारवान् इत्याहुः। तैस्तु निपातनात् ककुदस्यातो लुगिति वृथोक्तं दान्तककुद्शब्दस्य विद्यमानत्वात्। तथाहि ककुदोऽस्त्री ककुच्च स्त्री वृषाङ्के राजलक्ष्मणीति भूरिप्रयोगः। ककुद्वंशे इत्यागमस्य निस्तकार एव ककुत्स्थशब्द इति कश्चित् तन्न तकारवतोऽपि प्रयोगस्य दृश्यमानत्वात्। तथाच राघवपाण्डवीये "सार्द्धं द्विजैः संव्रतधाम्नि जिष्णावुपेयुषि ख्यातककुत्स्थवंश्यः" इति। हनजनादिति तिष्ठतेर्डः, ततोऽपत्ये ष्यः॥ ११॥ भ०

गभस्तिधाराभिरिव द्रुतानि तेजांसि भानोर्भुवि सम्भृतानि ॥१२

दिग्व्यापिनीर्लोचनलोभनीया मृजान्वयाः स्नेहमिव स्रवन्तीः।
ऋज्वायताः शस्यविशेषपङ्क्तीस्तुतोष पश्यन् वितृणान्तरालाः ॥ १३ ॥

---

तिग्मांश्वित्यादि। अदूरात्समीपे सलिलान्यपश्यत्। दृशेर्लङि पाघ्रेति पश्यादेशः। तिग्मांशोरादित्यस्य रश्मिभिः छुरितानि रञ्जितानि तुक्। प्राञ्चि पूर्वस्यां दिशि अवस्थितानि। प्रपूर्वादञ्चतेर्ऋत्विगित्यादिना क्विप् अनुषङ्गलोपः शिः नपुंसकस्य नुम्। भानोरिव तेजांसि भुवि सम्भृतानि पिण्डीकृतानि। गभस्तिभिः रश्मिभिः धाराभिरिव द्रुतानि गलितानि धारा प्रपात इति भिदादिपाठाद् द्रष्टव्यम् ॥१२॥ज० म०

तिग्मांश्वित्यादि। रामोऽदूरात् समीपे सलिलानि अपश्यत् घ्राध्मापाघ्रादाणदृश्यर्त्तीति दृशः पश्यादेशः। किम्भूतानि प्रभाते तिग्मांशोः सूर्य्यस्य रश्मिभिश्छुरितानि प्राञ्चि पूर्वदिगवस्थितानि। अवोत्प्रेक्ष्यते भानोस्तेजांसि गभस्तीनां रश्मीनां धाराभिः द्रुतानि द्रवीभूतानि सन्ति भुवि सम्भृतानि। धाराभिरिति ध्वजस्तुलेच्छेत्यादौ निपातः ॥ १२ ॥ भ०

दिग्व्यापीत्यादि। शस्यविशेषाणां शाल्यादीनां पङ्क्तीः पश्यन् तुतोष तुष्टवान्। दिग्व्यापिनीः सर्वदिग्व्यापनशीलाः लोभयन्तीति लोभनीयाः बहुलवचनात्कर्त्तर्य्यनीयः। लोचनानां लोभनीया इति षष्ठीसमासः। मार्जनं मृजा शुद्धिः षिद्भिदादिभ्योऽङ्, तया अन्वयो अनुगमो यासां शुद्ध्यनुगता इत्यर्थः। ततः स्नेहमिव स्रवन्तीः ऋजवश्च ताः आयताश्च वितृणान्तरालाः उत्पाटितानि तृणानि अन्तराले मध्यभागे यासां ताः ॥ १३ ॥ ज० म०

वियोगदुःखानुभवानभिज्ञैः काले नृपांशं विहितं ददद्भिः ।
आहार्य्यशोभारहितैरमायैरैचिष्ट पुंभिः प्रचितान् स गोष्ठान् १४

दिग्व्यापिनीरित्यादि। स रामः शस्यविशेषाणां धान्यादीनां पङ्क्तीः पश्यंस्तुतोष। किम्भूताः दिशं व्याप्नुवन्तीति ग्रहादित्वात् णिन्, शीलार्थे णिनिरित्यन्ये। लोचनानां लोभनीयाः आकाङ्क्षणीयाः तव्यानीययया इत्यनीयः। यद्वा लोचनानां लोभनीयं लोभो दर्शनेच्छारूपो यत्र पूर्वेण भावेऽनीयः, लोचनानि लोभयन्तीति कर्त्तर्य्यनीय इति केचित्, स्वमतेऽपि नियोक्तुमर्हतीति नियोग्यः प्रभुरिति वाक्यात् क्वचित् कर्त्तर्य्यपि तव्यादयः स्युरिति सूचितम्। मृजूषलशुङ्गो षित्त्वात् भोषिचिन्तीत्यादिना ङः स्त्रियामाप् अनुयन्तीति अन्वयाः पचादित्वादन् मृजायाः अन्वयाः शुद्धानुगता इत्यर्थः मृजायाः अन्वयः सम्बन्धो यत्र इति वा, स्नेहं स्निग्धताम् अनुरागं वा स्रवन्तीरिव अतिस्निग्धत्वादुत्प्रेक्षा। ऋजवः सरलाश्च ता आयता दीर्घाश्चेति उत्पाटिततृणत्वात् तृणरहितम् अन्तरालम् अभ्यन्तरं यासाम् ॥ १३ ॥ भ०

वियोगेत्यादि। पुम्भिः गोपैः प्रचितान् व्याप्तान् गोष्ठान् गावस्तिष्ठन्ति येष्विति सुपिस्थ इति कः, अम्बाम्बेत्यादिना मूर्द्धन्यः। तान् स राम ऐचिष्ट दृष्टवान् अनुदात्तेत्त्वात्तङ् इट्। वियोगदुःखस्य योऽनुभवः अनुभवनं तस्यानभिज्ञैः तेषां पुत्रदारैः सहैव सर्वत्र गमनात्। एतावता कालेन एतावद्देयमिति विहितं कृतं दधातेर्हिः नृपांशकरं ददद्भिः आहार्य्यां कटकटादिभिः आहरणीया या शोभा दीप्तिः तया रहितैः अमायैः ऋजुभिः आहार्य्येति ऋहलोर्ण्यत् शोभयतीति शोभा पचाद्यच्। ख्यासम्नन्योयुजिति युच् न भवति तस्य स्त्रीलिङ्गे

स्त्रीभूषणं चेष्टितमप्रगल्भं
चारूण्यवक्राण्यपि वीक्षितानि ।
ऋजूंश्च विश्वासकृतः स्वभावान्
गोपाङ्गनानां मुमुदे विलोक्य ॥ १५ ॥

---

भावे अकर्त्तरि च कारके विधानात् । नन्द्यादिपाठात् ल्युर्न भवति तस्य वासरूपोऽस्त्रियामिति विकल्पितत्वात् अथवा शोभनं शोभा स्त्रीलिङ्गे भावे घञ् । कृत्यल्युटो बहुलमिति बहुलवचनादन्येऽपि कृतः प्राप्तमपि स्वाभिधेयं व्यभिचरन्ति ॥ १४ ॥ ज० म०

वियोगेत्यादि । स रामो गोष्ठान् गोस्थानानि ऐक्षिष्ट दृष्टवान् ईक्षङ्दर्शने । किम्भूतान् पुंभिः पुरुषैः प्रचितान् व्याप्तान् । किम्भूतैः प्रवासित्वात् वियोगेन स्त्रीपुत्रादिविच्छेदेन यो दुःखानुभवस्तत्रानभिज्ञैः एतावति काले एतावद्देयमिति विहितं नृपस्याग्यं करं ददद्भिः । आहार्य्यालङ्कारादिभिरा-हरणीया कृत्रिमा या शोभा तया हीनैः । आहार्य्येति हस्त्या-सोरिति ण्यत् शभेर्घञन्तस्य स्त्रीलिङ्गत्वं क्वचिदभिधानात् नास्ति माया येषां गवावादेरिति स्वः । गोष्ठशब्दोऽपि पुंलि-ङ्गोऽस्तीति प्राञ्चः । गावस्तिष्ठन्ति यत्रेत्यादन्तात्वनजनादिति डः कृद्योरित्युक्तेर्गोभूमिद्वित्वेत्यादिना रामानन्दसूत्रेण षत्वं मनीषादित्वाद्वा । गोष्ठान् गोष्ठसहितान् प्रदेशानिति केचित् ॥ १४ ॥ भ०

स्त्रीभूषणमित्यादि । गोपाङ्गनानां चेष्टितं गमनागम-नादि अप्रगल्भं लज्जावत् तच्च स्त्रीविभूषणं स्त्रीणामलङ्कारः तथा वीक्षितानि विलोकितानि अवक्राण्यपि कटाक्षादिर-हितान्यपि चारूणि शोभनानि स्वभावान् स्वाभिप्रायान्

विवृत्तपार्श्वं रुचिराङ्गहारं समुद्वहच्चारुनितम्बरम्यम् ।
आमन्द्रमन्थध्वनिदत्ततालं गोपाङ्गनानृत्यमनन्दयत्तम् ॥ १६ ॥

---

ऋजून् अकुटिलान् विश्वासकृतो विश्वासस्य जनकान् विलोक्य मुमुदे हृष्टवान् स रामः लिटोऽपित्त्वात्कित्त्वे गुणाभावः । कार्याणां दर्शनात् स्वभावानां दर्शनमित्युक्तम् ॥१५॥ ज० म०

स्त्रीभूषणमित्यादि । रामो गोपस्त्रीणामेतानि विलोक्य दृष्ट्वा मुमुदे जिमुदङ्हर्षे । तानि कानीत्याह स्त्रीभूषणं मेखला-कङ्कणादिकं चेष्टितं गमनादिकं स्त्रीणां भूषणमिव यतोऽप्रगल्भं सलज्जं तथा अवक्राणि कटाक्षादिरहितान्यपि चारूणि वीक्षितानि विलोकितानि तथा विश्वासजनकान् ऋजून् कपटरहितान् तत्कार्यविलोकनादेव तद्विलोकनव्यपदेशः गोपाङ्गनानां विलासवत्त्वाभावेऽपि स्वभावसिद्धचरितान्येव हर्षजनकानि भवन्ति । तथाहि विलासा नागरस्त्रीणां न तथा रमयन्ति नः, यथा स्वभावसिद्धानि वृत्तानि वनयोषितामिति कौमुदी । अन्येनाप्युक्तं "सर्वः प्रियः खलु भवेदनुरूपचेष्टः" इति । १५ ॥ भ०

विवृत्तेत्यादि । गोपाङ्गनानां दधिमन्थनाय यत् स्थानं कृतं तत् । नृत्यमिवेति गोपाङ्गनानृत्यं कर्तृ तं रामम् अनन्दयत् सन्तोषितवत् नन्देर्ण्यन्तस्य लङि रूपम् । विवृत्ते तिर्यक्चलिते पार्श्वे यत्र नृत्ये । रुचिरः शोभनोऽङ्गहारोऽङ्गविक्षेपो यत्र समुद्वहता तिर्यक् समुन्नच्छता चारुनितम्बेन कटिभागेन रम्यम् मनोहरम् । आमन्द्रः ईषद्गम्भीरो यो मन्थकृतो ध्वनिः तेन दत्तस्तालो यत्र ॥ १६ ॥ ज० म०

विवृत्तपार्श्वमित्यादि । दधिविलोडनावसरे गोपाङ्गनानां गात्रविक्षेपो नृत्यत्वेन वर्ण्यते गोपस्त्रीणां नृत्यमिव नृत्यं

विचित्रमुच्चैः प्लवमानमारात् कुतूहलं त्रस्नु ततान तस्य ।
मेघात्ययोपात्तवनोपशोभं कदम्बकं वातमजं मृगाणाम् ॥ १७ ॥
सितारविन्दप्रचयेषु लीनाः संसक्तफेनेषु च सैकतेषु ।

---

कर्त्तृं तं राममनन्दयत् अतोषयत् । कीदृशं विवृत्त तिर्य्यक् चलितं पार्श्वं यत्र, रुचिरो मनोहरोऽङ्गहारोऽङ्गविक्षेपो यत्र । समुद्वहता तिर्य्यगूर्द्ध्वमधश्चलता चारुणा नितम्बेन रम्यम् आमन्द्रेण ईषद्गम्भीरेण दधिमन्थनदण्डध्वनिना दत्तस्तालो यत्र एतेन नृत्यसादृश्यं व्यज्यते ॥ १६ ॥ भ०

विचित्रमित्यादि । मृगाणां कदम्बकं वृन्दन्तस्य रामस्य कुतूहलं ततान विस्तृतवत्, विचित्रम् कृष्णश्वेतत्वात् उच्चैः प्लवमानम् ऊर्द्ध्वं जिहानम् आरात् समीपे त्रस्नु त्रसनशील त्रसि गृधीत्यादिना क्नुः । मेघात्ययेन मेघापगमेन उपात्त-वनोपशोभम् उपात्तं गृहीतं वनम् उपशोभा च येनेति व्यधिकरणबहुव्रीहिः । वातमजति वातमजं वाताभिमुखं गच्छतीत्यर्थः वातशुनीति लक्षधेष्विति खश्, अरुर्द्विषदिति मुम् ॥ १७ ॥ ज० म०

विचित्रमित्यादि । मृगाणां कदम्बकं समूहस्तस्य रामस्य कुतूहलं ततान विस्तारितवत् । कीदृशं विचित्रं नानावर्णम् उच्चैः प्लवमानं प्लुङ सर्पणे, विचित्रं यथा स्यात्तथा उच्चैः प्लव-मानं वा आरात् समीपे त्रस्यतीति त्रस्नु क्षिपत्रसेति कर्त्तरि क्नुः, शीलार्थे क्नुरित्यन्ये । मेघात्ययेन शरत्कालेन मेघापग-मेन वा प्राप्तं वनम् उपशोभा च येन प्राप्तेन वनेन उपशोभते इति वा, वातमजं वायोरनुगामि अभिमुखधावि वा तूदृदृ-जीत्यादिना खः परन्तपवत् ॥ १७ ॥ भ०

सितेत्यादि । सितारविन्दान् प्रचयेषु समूहेषु एरच्

कुन्दावदाताः कलहंसमालाः प्रतीयिरे श्रोत्रसुखैर्निनादैः ॥१८॥

न तज्जलं यन्न सुचारुपङ्कजं
न पङ्कजं तद् यदलीनषट्पदम्।

---

सञ्ज्ञे चानौत्तराधर्य्ये इति घञ् कौ न भवतः प्राणिषु सञ्ज्ञशब्दस्य रूढत्वात् लीनाः कलहंसमालाः तथा संसक्तफेनेषु च सैकतेषु पुलिनेषु लीनाः सिकताः येषु विद्यन्ते इति देशे लुविलचौ चेति चकारादण्। कुन्दावदाताः कुन्दमिवावदाताः शुक्लाः उपमानानीत्यादिना समासः। प्रतीयिरे ज्ञाताः तेन रामेणेति विभक्तिविपरिणामेन सम्बन्धः। कर्मणि लिट् इणो यण् द्विर्वचनेऽचीति स्थानिवद्भावाद् द्विर्वचनम्। श्रोत्रसुखैर्मधुरैर्निनादैः करणभूतैः नौ गदेत्यादिना घञ्। शरद्वर्णनमुपसंहरन्नाह ॥ १८ ॥ ज० म०

सितारविन्देत्यादि। अर्थात् रामेण कर्त्रा श्रवणसुखकारिभिर्निनादैः कलहंसमालाः प्रतीयिरे ज्ञाताः कर्मणि ठो यिणोऽच्यणाविति इणो यादेशः। निनादश्रुतिव्यतिरेकेणाप्रत्यये हेतुगर्भविशेषणमाह शुक्लपद्मसमूहेषु फेनयुक्तेषु सैकतेषु च लीनाः गुप्ताः कन्दपुष्पवत् शुक्लाः सिकताशब्दात् विकारसञ्ज्ञेत्यादिना इदमर्थे विकारार्थे अस्त्यर्थे वा ष्णः। सैकतं वालुकामयस्थानमुच्यते। कादम्बे कलहंसः स्याद्राजहंसे च दृश्यते ॥ १८ ॥ भ०

न तज्जलमित्यादि। किं बहुना उक्तेन, सर्वथा न तज्जलं यत् सुचारुपङ्कजं न बभूव। पङ्कजमपि यदलीनषट्पदं तदपि न। असौ षट्पदोऽपि तथाविधो नाभूत्। यः कलं मधुरन् न जुगुञ्ज न गुञ्जितवान्। गुजि अव्यक्ते शब्दे इदितो नुम् धातोरिति नुमि लिटि रूपम्। गुञ्जितमपि तत् नैवासीत् यन्मनो

न षट्पदोऽसौ न जुगुञ्ज यः कलं
न गुञ्जितं तन्न जहार यन्मनः ॥ १९ ॥

तं यायजूकाः सह भिक्षुमुख्यैस्तपःकृशाः शान्त्युदकुम्भहस्ताः ।
यायावराः पुष्पफलेन चान्ये प्रानर्चुरर्च्यं जगदर्चनीयम् ॥२०॥

---

न जहार न हृतवत् रामस्य लोकस्य वा ॥ १९ ॥ ज० म०

न तदित्यादि। शरदि तज्जलं नास्ति यत्र न सुचारूणि पङ्कजानि सन्ति, तत् पङ्कजमपि नास्ति यत्र षट्पदा न लीनाः अनाश्लिष्टाः लीङ्‌ श्लेषे श्लिषि सूत्वाद्योरिति क्तस्य नत्वम्। असौ षट्पदोऽपि नास्ति यः कलं मधुरास्फुटं न जुगुञ्ज गुजिकूजने। तद्गुञ्जितमपि नास्ति यन्मनो न जहार ॥ १९ ॥ भ०

तमित्यादि। यायजूकाः अत्यर्थं यजनशीलाः यजजपदशां यङ इत्यूकः अतो लोपः यस्य हलः ते तपोवनस्थितास्तं राममागच्छन्तमानर्चुः सुष्ठु पूजितवन्तः अर्चेर्लिटि द्विर्वचनम् अत आदेरिति दीर्घत्वं, तस्मान्नुड् द्विहल इति नुट्। सह भिक्षुमुख्यैः भिक्षणशीलाः भिक्षवः परिव्राजकाः सनाशंसभिक्ष उः, तेषां ये प्रधानाः तैः सह, तपःकृशाः तपसा दुर्बलाः शान्त्यर्थमुदकं तेन पूर्णः कुम्भः एकलहादावित्यादिना उदकस्य उदभावः, स हस्ते येषामिति बहुव्रीहिः, परनिपातश्चात्र वाहिताग्न्यादिदर्शनात् प्रहरणार्थेभ्यश्च इति वा। शान्त्युदकुम्भस्त्वहितनिवारणसाधर्म्यात् उपचारेण प्रहरणन्ते शिरःसूदकदानेन प्रानर्चुः। अन्ये मुनयो यायावराः एकत्रानियतनिलयाः यातेर्यङन्तात् यश्चयङ इति वरच्। अतोलोपादि पुष्पफलेन प्रानर्चुः पुष्पाणि च फलानि चेति जातिरप्राणिनामिति एकवद्भावः। अर्च्यः अर्चनार्हः अर्हे कृत्यः अर्चनीय-

विद्यामथैनं विजयां जयाञ्च
रक्षोगणं क्षिप्नुमविक्षतात्मा।
अध्यापिपद्गाधिसुतो यथाव-
न्निघातयिष्यन् युधि यातुधानान्॥ २१॥

मित्यत्रापि। जगतां जगद्भिर्वा अर्चनीयं कृत्यानां कर्त्तरि वेति पक्षे षष्ठी, न तु कर्त्तृकर्मणोः कृतीति षष्ठी॥२०॥ज०म०

तमित्यादि। यायजूकाः पुनः, पुनरतिशयेन वा यज्ञशीलाः भिक्षूणां परिव्राजकानां मुख्यैः सह जगतामर्चनीयं तं रामं प्रानर्चुः अर्च पूजायां स्यान्तादाहदाद्यक्षोरिति खेरान् जागृयङन्तेति ऊकः, सनभिक्षेति भिक्षेरुप्रत्ययः, कीदृशाः तपोभिः कृशाः शान्त्यर्थं यदुदकं तस्य कुम्भो हस्ते येषाम् एतेन शान्तिजलेनार्चा प्रतीयते। उदकुम्भ इत्यत्र समासे उदकस्यासंयुक्तहलादौ पूर्व्वे इति उदादेशो विकल्पेनेति परे, स्वमते उदशब्दोऽप्यस्ति। अन्ये मुनयः पुष्पफलेन प्रानर्चुः यायावराः सन्तो नामावनभ्रमणशीलाः यातेर्यङन्तात् यायायभासकसेति वरः, यङ्लुक् गत्यर्थाद्वक्रे यङिति केचित्। यातिरत्र ज्ञानार्थः सर्वे गत्यर्थाः प्राप्त्यर्था ज्ञानार्थाश्चेति न्यायादत्यर्थज्ञानशीला इत्यर्थः। अर्च्याः स्तुत्यर्हाः ऋहच्श नुत्यां तेल्याः शक्यार्हप्रैष्येति घ्यण् सेमक्तात् न चजोः कगाविति कत्वम्॥ २०॥ भ०

विद्यामित्यादि। तपोवनं प्राप्तः गाधिसुतः एनं रामं द्वितीयाटाविस्येनादेशः। विद्यां नाम्ना विजयां जयाञ्च यथावत् यथाविधि अध्यापिपत् पाठितवान् णौचसंश्वङोरिति गाङभावपक्षे रूपम् अधिपूर्वादिङो हेतुमण्णिचि क्रीङ्जीनां णौ इत्यात्वम् पुगादिविधयः। रक्षोगणं क्षिप्नुं प्रेरयितारं

आयोधने स्थायुकमस्त्रजातममोघमभ्यर्णमहाहवाय ।
ददौ बधाय चणदाचराणां तस्मै मुनिः श्रेयसि नागरूकः॥२२॥

---

त्वसिग्दधीत्यादिना क्तः नलोकेति षष्ठीप्रतिषेधात् द्वितीयैव। अविचतात्मा रागादिभिरनभिभूतचित्तवृत्तिः। तस्य हि विद्या अमोघा भवति युधि संग्रामे यातुधानान् रचांसि निघातयिष्यन् मारयिष्यन्। हन्तेर्हेतुमन्णिच् घत्वं लृट्-लृटः सदादेशः॥ २१॥ ज॰ म॰

विद्यामित्यादि। अथानन्तरं युधि संग्रामे यातुधानान् राचसान् रामद्वारा निघातयिष्यन् गाधिसुतो विश्वामित्रः एनं रामं नाम्ना विजयां जयाञ्च विद्यां यथावत् यथाविधि अध्यापिपत् पाठयामास। किम्भूतां रचोगणं चिप्नुं चिप प्र भौ नुदि चिपत्वसीति कर्त्तरि क्नुः, शीलार्थे क्नुरित्यन्ये। ढषे-क्नत्येति सूत्रे उदन्तक्रत्प्रत्ययवर्जनात् न ढे षी। कीदृशः अविचतो बाणादिभिरनुपचत आत्मा यस्य। एनमिति इद-मसमानार्थकस्य एनशब्दस्य रूपं द्वितौसीति सूत्रस्यानूक्तिविष-यत्वात्। "जहातु नैनं कथमर्थसिद्धिः संशय्य कर्णादिषु तिष्ठते यः" इति भारविः। अध्यापिपदिति अधीङ्लध्ययने ञिः प्रिरणे इति ञिः क्रीजीङोऽजेत्वा क्रौक्लीति पन् ञिश्रीत्यङ् नाजन्तादेरिति निषेधात् धुर्द्विष्ठ्यङीति पीत्यस्यैव द्वित्वं ञेर्लोपः निघातयिष्यन्निति पूर्ववत् ञिः हनस्तङिति तङ् ञेर्ह्रौ घ इति घः॥ २१॥ भ॰

आयोधन इत्यादि। स मुनिः तस्मै रामायास्त्रजातम् अस्त्रसमूहं ददौ दत्तवान्। ददातेर्लिट् णल् आत औ णलः आयुध्यन्ते अस्मिन्निति आयोधनं संग्रामः अधिकरणे ल्युट्, तत्र स्थायुकं स्थितिकरणशीलं जयावहत्वात्। लषपतेत्या-

तं विप्रदर्श्यं कृतघातयत्ना यान्तं वने रात्रिचरी डुढौके ।

---

दिना उकञ् आतो युक् अतएवामोघम् अवन्ध्यम् अद्वथामोघ-त्वात् अभ्यर्णो निकटो महाहवो यस्य तस्मै अभिपूर्वादर्देः निष्ठायाम् अभेश्चाविदूर्य्ये इतीट् प्रतिषेधः रदाभ्यामिति नत्वम् अभ्यर्णः आहव इति आह्वयन्ते अस्मिन् युद्धायेति ह्वय-तेराङ् पूर्वादाङि युद्धे इति सम्प्रसारणम् अप्प्रत्ययः गुणावा-देशौ । बधाय क्षणदाचराणामिति क्षणदा रात्रिः तत्र चर-न्तीति चरेष्टः । तत्र हि महाहवे रामो राक्षसान् हनिष्यतीति हनस्च बध इति बधादेशः कृत्प्रयोगे क्षणदाचराणामिति कर्मणि षष्ठी । श्रेयसि जागरूकः तत्कल्याणे सावधानः जागर्त्तेरूकः ॥ २२ ॥ ज० म०

आयोधने इत्यादि । मुनिः क्षणदाचराणां राक्षसानां बधाय हिंसार्थं तस्मै रामाय अस्त्रजातं ददौ । कीदृशम् आयो-धने युद्धे स्थायुकं स्थितिशीलं जयावहत्वात् शॄस्थाभूकमिति लुकः यनञ्णिदिति यन् । अमोघम् अव्यर्थं तस्मै कीदृशाय अभ्यर्णः समीपवर्त्ती महानाहवः युद्धं यस्य अभ्यर्णेति अभिपूर्व-स्यार्देतेः क्तान्तरूपं क्षुब्धवाढेति निपातः । आह्वयन्ते योद्धा-रोऽस्मिन् इति आहवः अभिधानाज्जिः । कीदृशो रामस्य साधूनां वा श्रेयसि कल्याणे जागरूकः सावधानः जागृयङ-न्तेति जागर्त्तेरूकः । आयुध्यन्तेऽस्मिन् योद्धार इत्यायोधनम् आधारेऽनट् । हन्तेः कभावेऽमी इत्यनि कृते हनबधष्टी-त्यलीति बधादेशः । समूहार्थस्य जातस्य चवर्गादित्वमीरित-मिति विश्वः ॥ २२ ॥ भ०

तमित्यादि । विद्यामस्त्रजातञ्चादाय यज्ञकर्मणि विप्रोपद्रा-मनार्थं वने यान्तं रामं रात्रिचरी राक्षसी ताड़काख्या ताड-

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



जिघांसुवेदं धृतभासुरास्त्रस्तां ताड़काख्यां निजघान रामः ॥२३

अथालुलोके हुतधूमकेतुशिखाञ्जनस्निग्धसमृद्धशाखम् ।

काभिधाना डुढौके ढौकते स्म । ढौकतेरात्मनेपदिनो लिटि रूपम्। ताञ्च रामो निजघान निहतवान् । विप्रदर्शं कृतघातयत्ना विप्रान् ब्राह्मणान् दृष्ट्वा कृतमारणाभियोगा रात्रिचरी रामोऽपि जिघांसुवेदं धृतभासुरास्त्रः जिघांसु विदित्वा धृतं भासुरं भासनशीलम् अस्त्रं येनेति बहुव्रीहिः । विप्रदर्शं जिघांसुवेदमिति कर्मणि दृशिविदोः साकल्य इति णमुल् ॥२३॥ ज०म०

तमित्यादि। वने यान्तं गच्छन्तं तं रामं रात्रिचरी डुढौके प्राप्तवती ढौकृङ् गत्यां भ्रभवर्येति खेरौकारस्य कृस उकारः। रात्रौ चरतीति पचादित्वादन् ततो नदादित्वादीप्। कीदृशी विप्रदर्शं विप्रं दृष्ट्वा कृतो घाते यत्नो यया घात इति हन्ते र्घञन्तस्य रूपं यत्न, इति स्वपरचेति यतेर्नङ् । जिघांसु विदित्वा धृतं भासुरं दीप्तमस्त्रं येन स रामः तां ताडकानाम्नीं रात्रिचरीं निजघान भासृङ् दीप्तौ भिक्षासभन्ज इति घुरः। विप्रदर्शं जिघांसुवेदमिति चणम् वाभीक्ष्ण इत्यत्र योगविभागाण्णम् यद्वा विप्राणां दर्शो दर्शनं यस्मात् रामस्य विशेषणम्। एतेन रक्षोभिया पलायमानानां विप्राणां पूर्वं दर्शनं नासीत् रामागते तु विप्रदर्शनमिति व्यज्यते । जिघांसु वेत्तीति ढात् घण् पचादित्वादन् वा, इदमपि रामस्य विशेषणम् ॥२३॥ भ०

अथेत्यादि। अथासौ रामो राक्षसीं हत्वा तपोवनम् आलुलोके दृष्टवान् । कथम्भूतं हुतधूमकेतुशिखाञ्जनस्निग्धसमृद्धशाखम् । हुतश्चासौ धूमकेतुरग्निश्च हुतधूमकेतुः तस्य शिखाञ्जनेन स्निग्धाः समृद्धाश्च फलादिना शाखा यस्य तपो-

तपोवनं प्राध्ययनाभिभूतसमुच्चरच्चारुपतत्रिशिञ्जम् ॥ २४ ॥
क्षुद्रान्न जक्षुर्हरिणान् मृगेन्द्रा विशश्वसे पक्षिगणैः समन्तात् ।
नंनम्यमानाः फलदित्सयेव चकाशिरे तत्र लता विलोलाः ॥२५॥

---

वनस्य । प्राध्ययनेन वेदपाठेन अभिभूता तिरस्कृता समुच्चरन्ती चार्वी शोभना पतत्रिणां पक्षिणां शिञ्जा ध्वनिर्यत्र शिजि अव्यक्ते शब्दे शिञ्जनं शिञ्जा गुरोश्च हल इत्यकारप्रत्ययः । पतन्तं त्रायन्ते इति पतत्राणि पक्षाः आतोऽनुपसर्गे कः । तानि येषां सन्तीति पतत्रिणः । पतङ्गशिञ्जमिति पाठान्तरम् ॥ २४ ॥ ज० म०

अथेत्यादि । ताड़कावधानन्तरं रामस्तपोवनम् आलुलोके लोकृ ईचे । कीदृशं हुतस्य धूमकेतोरग्नेः शिखाया यदञ्जनं तेन स्निग्धा सम्बद्धा फलपुष्पवती शाखा यत्र तथा । धूमकेतुः स्मृतो वह्नावुत्पातग्रहभेदयोरिति विश्वः । प्राध्ययनेन प्रकृष्टाध्ययनेन अभिभूता समुच्चरन्ती उद्गच्छन्ती चारूणां पतत्रिणां पक्षिणां शिञ्जा अस्फुटशब्दो यत्र शिजि ल किङ्स्फुटध्वनौ सेमक्षात्सरोरिति ङः स्त्रीत्वञ्च, अमरकोषे तु भूषणानान्तु शिञ्जितमित्युपलक्षणम् ॥ २४ ॥ भ०

क्षुद्रानित्यादि । तत्र तस्मिंस्तपोवने तपोधनानां मित्रभावात् क्षुद्रानितरानपि हरिणान्मृगेन्द्राः सिंहाः न जक्षुः न बाधितवन्तः । क्षुद्यन्ते इति क्षुद्राः स्फायितञ्चीत्यादिना औणादिको रक् लिट्यन्यतरस्यामिति अदेर्घस्लृ गमहनेत्युपधालोपः खरिचेति चर्त्वं शासिवसीत्यादिना षत्वम् । पक्षिगणैः समन्तात्सर्वत्र विरुद्धैरपि काकोलूकादिभिः परस्परं विशश्वसे विश्वस्तम् भावे लिट् । लताश्च विलोलाश्चपलाश्चकाशिरे शोभन्ते स्म फलदित्सयेव मुनिभ्यः फलं दातुमिच्छयेव नंनम्य-

अपूपुजन् विष्टरपाद्यमाल्यैरातिथ्यनिष्ठा वनवासिमुख्याः ।
प्रत्यग्रहीष्टां मधुपर्कमिश्रं तावासनादि क्षितिपालपुत्रौ ॥ २६॥

---

मानाः अत्यर्थं नमन्त्यः दातुमिच्छा दित्सा ददातेः सन् सनिमीमेत्यादिना इस् अत्र लोपोऽभ्यासस्येति अभ्यासलोपश्च । यस्येत्यादिना सकारस्य तकारः अप्रत्ययादित्यकारप्रत्ययः । फलानां दित्सेति कर्मणि षष्ठीं विधाय कृद्योगे समासः । नंनम्यमाना इति नमेर्यङि नुगतोऽनुनासिकेति नुक् यङन्ताच्छानच् आने मुक् ॥ २५ ॥ ज० म०

क्षुद्रानित्यादि । तत्र तपोवने मृगेन्द्राः सिंहाः क्षुद्रान् हरिणान् न जक्षुः अद् लौ भक्षे ल्यां वेति घसादेशः हनगमित्युङ् लोपः । झपभसोरिति घस्य कः क्षिलादिति षः । पक्षिगणैः समन्तात् सर्वतो विशश्वसे तपःप्रभावात् नित्यविरोधस्याप्यभावात् भावे ठी । विलोलाश्चञ्चला लताश्चकाशिरे काश्ट्टङ्युतौ फलानि दित्सयेव नंनम्यमाना अतिशयेन नताः नमेर्यङन्तस्योऽमजपजभेति खेर्नुन् । फलभारनतासुत्प्रेक्षेयम् । दातुमिच्छा दित्सा दाञः सनि मिमीमादेतीस् खिलोपश्च सस्यरे इति तः संस्यादः स्त्रियामाप् ॥ २५ ॥ भ०

अपूपुजन्नित्यादि । वनवासिमुख्याः महर्षयो विष्टरादिभिः अपूपुजन् पूजितवन्तः तौ क्षितिपालपुत्त्रावित्यर्थात् द्वितीयान्तेन योज्यम् वनवासीति शयवासेत्यादिना विकल्पेन सप्तम्या अलुक् पूजेः स्वार्थिकण्यन्तस्य णौ चङि ह्रस्वः । दीर्घो लघोरिति अभ्यासस्य दीर्घः विष्टरमासनम् वृक्षासनयोर्विष्टर इति निपातनात् । पाद्यं पादार्थमुदकम् पादार्घाभ्यामिति यत् तदर्थत्वात्पङ्क्वाभावः । माल्यानि कुसुमानि मालायां साधरिति यत् । आतिथ्यनिष्ठाः अतिथ्यर्थम् आतिथ्यम्

दैत्याभिभूतस्य युवामवोढं मग्नस्य दोर्भिर्भुवनस्य भारम् ।

---

अतिथेर्ञ्यः, तत्र निष्णाः कुशलाः निनदीभ्यां स्नातेः कौशल इति षत्वम् । तौ च क्षितिपालपुत्रौ रामलक्ष्मणौ तदासनादि प्रत्यग्रहीष्टां प्रतिगृहीतवन्तौ प्रतिपूर्वात् ग्रहेर्लुङ् तसस्ताम् ग्रहोलिटि इति दीर्घः षत्वष्टुत्वे मधुपर्कमिश्रम् मधुपर्केण सहेत्यर्थः ॥ २६ ॥ ज० म०

अपूपुजन्नित्यादि । वनवासिनां मुनीनां मुख्या विष्टर-पाद्यमाल्यैरपूपुजन् अर्थात् रामलक्ष्मणौ पूजक्जे टौ ञिश्री-त्यङ् ञ्यङ्ग्ङः स्व इति स्वः स्वेः सन्वदित्यादिना खेर्घः । विष्टरम् आसनं वेत्रो नाम्नीति रामानन्दसूत्रेण मनीषादित्वात् वा षत्वम् । वृक्षासनयोर्विष्टर इति क्रमदीश्वरः । आसने कुशमुष्टौ च विष्टर इति विश्वः । विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनमित्यमरः । पादार्थं जलं पाद्यं विकारसंघेति ष्णयः । पाद्यं पादाय वारिणीत्यमरः । मालैव माल्यं स्वार्थे ष्णयः मालायां साधूनि माल्यानि कुसुमानि वा । किम्भूताः आतिथ्यनिष्णाः अतिथ्यर्थम् आतिथ्यम् अतिथिशब्दात् तादर्थ्ये ष्णयः स्वार्थे ष्णयः इति केचित् । क्रमादातिथ्यातिथेये ह्यतिथ्य-र्थेऽत्र साधुनीत्यमरः । वस्तुतस्तु आतिथ्यशब्देन अतिथिसे-वनमुच्यते तत्र निष्णाः कुशलाः नदीस्नातिनिस्नात्योर्दाक्षे इति रामानन्दसूत्रेण मनीषादित्वाद्वा षत्वम् । निनदीभ्यां स्नः कौशले इति षत्वविधायकं क्रमदीश्वरसूत्रम् । क्षितिपा-लस्य पुत्रौ रामलक्ष्मणौ मधुपर्केण सहितम् आसनादि प्रत्य-ग्रहीष्टां त्यां सिः ग्रहेरिमो घोऽद्यामिति घः क्विलादिति षः ष्टुभिरिति तस्य टः ॥ २६ ॥ भ०

दैत्येत्यादि । दितेरपत्यानि दैत्याः दित्यादित्येत्यादिना

हवींषि सम्प्रत्यपि रक्षतं तौ तपोधनैरित्थमभाषिषाताम् ॥ २७॥

ष्णाः, तैरभिभूतस्य मग्नस्य शरण्यस्य भुवनस्य भारमितिकर्त्तव्यतालक्षणं दोर्भिर्भुजैः युवामवोढम् ऊढवन्तौ नरनारायणौ युवामित्युक्तौ । त्वञ्च त्वञ्चेति एकशेषः । अवोढमिति वहेर्लुङ् थसस्तम् हलन्तलक्षणा वृद्धिः सिजलोपः सहिवहोरित्योत्वं ढत्वष्टत्वढलोपः दोरिति दमेर्डोसित्यौणादिको डोस् । हवींषि होतव्यानि सम्प्रत्यपि रक्षतम् अर्चिरुचिहुसृपिच्छादिच्छर्दिभ्य इसिरित्यौणादिक इसिः । राक्षसैः उपहन्यमानानि रक्षतं प्रार्थनायां लोट् । थप्थसस्तम् इत्थमिति इदमस्थमुः । अनेनोक्तप्रकारेण तपोधनैस्तप एव धनं येषामिति अभाषिषाताम् अभिहितौ भाषतेः कर्मणि लुङ् सिजिटौ ॥२७॥ ज० म०

दैत्येत्यादि । तप एव धनं येषां तैस्तपोधनैस्तपस्विभिस्तौ रामलक्ष्मणौ इत्थमभाषिषातां भाषृङ वाचीति कर्मणि टौ इदं प्रकारम् इत्थं निपातनात् । किं तदित्याह युवां भुवनस्य भारं परिरक्षणं दोर्भिर्भुजैः अवोढ़ं वहेर्थ्यास्तं झलस्त्वादिति सेर्लुक् हो ढो भाविति हस्य ढः ढभात्तथोरिति तस्य धः ष्टुभिरित्यादिना धस्य ढः सहवहोऽदोढि इत्योत्वं ढ्रोढ्रीति ढस्य लोपः । कीदृशस्य दैत्याभिभूतस्य अतएव मग्नस्य नष्टप्रायस्य दितेरपत्यानि दैत्याः बाह्याद्यत इत्यादिना गर्गादित्वात् ष्णाः मस्जेरीदित्वात् सूल्याद्योरित्यादिना क्तस्य नः स्यादेः सलोपः इत्यनेन सलोपः । चजोः कगाविति सूत्रे अनिम् यज्ञाङ्गयज इति कृते ये अनिम्धातवस्तेषां चजोः कगौ स्याताम् इति सर्वं सङ्गतं भवति तथापि यतोऽसेम इति कृतं चजोर्घिति क्ते च परे चजोः कगौ भवत इति सूचनार्थं तेन मग्नरुग्णभुग्नादयः सिध्यन्ति अन्यैः कङ् चेति कङ् विधानं अच्छाजेति षङ्

तान् प्रत्यवादीदथ राघवोऽपि यथेप्सितं प्रस्तुत कर्म धर्म्यम् ।
तपोमरुद्भिर्भवतां शराग्निः संधुक्ष्यतां नोऽरिसमिन्धनेषु ॥२८॥

---

विधाननिरासार्थं तेन सृजस्तु सृष्ट इत्यत्र षङ् विशेषविधित्वादिति देवीदासचक्रवर्त्तिना व्याख्यातं तेनैव सूत्रेण जस्य गः मनीषादित्वाद्वा सम्प्रत्यपि हवींषि होतव्यानि राक्षसेभ्यः रक्षतं विधिर्निमन्त्रणेति प्रार्थनायां गौ, हुलिड्होमिदने त्वासुसिति इस् ॥ २७ ॥ भ०

तानित्यादि । अथैतस्मिन् प्रस्तावे राघवोऽपि रघुसुतः तान्मुनीन् प्रत्यवादीत् वदव्रजेति वृद्धिः यथेप्सितं यथाभिमतम् आप्नोतेः आप् ज्ञप्धामीदितीत्त्वम् अभ्यासलोपश्च सनन्तात्कर्मणि निष्ठा । धर्मादनपेतं धर्म्यं यागादि कर्म प्रस्तुत प्रारभध्वम् प्रपूर्वस्तौतिः प्रारम्भे वर्त्तते तस्मान्निमन्त्रणे नियोगकरणे लोट् यस्य तः शपो लुक् । तपांसि मरुत इव तपोमरुद्भिः भवतां तपोमरुद्भिः नोऽस्माकं बहुवचनस्य वस्नसाविति नसादेशः । शराग्निः शरोऽग्निरिव संधुक्ष्यतां दीप्यताम् धुक्षधिक्षसन्दीपनक्लेदनजीवनेषु तस्मात्कर्मणि लोट् । अरिसमिन्धनेषु अरिकाष्ठेषु समिध्यते एभिरिति समिन्धनानि करणे ल्युट् । अरयः समिन्धनानीव ॥ २८ ॥ ज० म०

तानित्यादि । अथ तद्वचनानन्तरं रघोरपत्यं रामोऽपि तान् प्रत्यवादीत् प्रत्युक्तवान् वदेर्ल्यां सौ व्रजवदेति वृिः । यूयं यथेप्सितं धर्मादनपेतं कर्म प्रस्तुत आरभध्वं विधिनिमन्त्रणेति विधौ गौ लुगङ्गोऽप इत्यदादित्वात् शपो लुक् आप्लृनौकिव्यापने सनि ज्ञपर्द्धापामीर्ष्य इतीखिलोपौ । भवतां तपोवायुभिर्नोऽस्माकं शराग्निः अरिसमिन्धनेषु शत्रुकाष्ठेषु संधुक्ष्यतां धुक्षङ् सन्दीपने समर्थनाशिषोर्गीति आशिषि कर्मणि गौ ।

प्रतुष्टुवुः कर्म ततः प्रक्लृप्तैस्ते यज्ञियैर्द्रव्यगणैर्यथावत् ।
दक्षिण्यदृष्टं कृतमार्त्विजीनैस्तद्यातुधानैश्चिचिते प्रसर्पत् ॥२९॥

---

तपांसि मरुत इव शरोऽग्निरिव अरयः समिन्धनानीव इति व्याघ्राद्यैस्तद्गुणस्तुल्यस्येति समास इति क्रमदीश्वरादयः, स्वमते इवादेर्द्योतकत्वात् एकार्थताऽस्त्येव अविशेषणस्यास्मदो बहुत्वमेकत्वद्वित्वयोर्विकल्पेनेति पाणिन्यादयः, स्वमते कद्दवानेकद्विबहुष्वेकश्च इति सूत्रे एकद्विबहुत्वविवक्षया साक्षात्सम्बन्धेन परम्परासम्बन्धेन वेति व्याख्यानादत्रात्मगुणानां बहुत्वेनैव बहुजनसाध्यकार्य्यकारित्वात् द्वित्वे बहुत्वम् ॥ २८ ॥ भ०

प्रत्वित्यादि। ततो रामवचनादनन्तरं तपोधनाः कर्म यागक्रियां प्रतुष्टुवुः यथावत् यथाविधि प्रारब्धवन्तः यज्ञियैः यज्ञकर्मार्हैः द्रव्यगणैः प्रक्लृप्तैः मिलितैः कृपो रो लः दक्षिणामर्हन्तीति दक्षिण्याः महामुनयः कडङ्करदक्षिणाच्छ्चेति चकारादयत्, तैर्दिष्टमुक्तम् कृतमार्त्विजीनैः ऋत्विक्कर्मार्हैरनुष्ठितम् ऋत्विजश्च ब्रह्मादयः षोड़श पठिताः तच्च कर्म प्रसर्पत् वृद्धिं गच्छत् यातुधानैः राक्षसैः चिचिते ज्ञातं चिती संज्ञाने इत्यस्मात् कर्मणि लिट्। यज्ञियैरार्त्विजीनैरिति यज्ञर्त्विग्भ्यां घखञाविति तत्कर्मार्हतीति ॥ २९ ॥ ज० म०

प्रतुष्टुवुरित्यादि। ततो रामवचनानन्तरं ते मुनयो द्रव्यगणैः स्रुवादिभिः करणभूतैर्यथाविधि यागकर्म प्रतुष्टुवुः आरब्धवन्तः। किम्भूतैः प्रक्लृप्तैर्विरचितैः कृपः क्लृपोऽकृपादाविति कॢपादेशः यज्ञियैः यजेः स्वपरच्छकषयतेति नङ् जिनिषेधश्च। यज्ञाय साधवो यज्ञिया ढघेकादिति इयः। तत् कर्म यातुधानैराक्षसैश्चिचिते ज्ञातं चिती संज्ञाने कर्मणि ठौ। कीदृशं दक्षिण्यदिष्टं दक्षिणामार्हन्ति ढघेकादिति ष्यः

आपिङ्गरुक्षोर्द्ध्वशिरस्थबालैः शिरालजङ्घैर्गिरिकूटदघ्नैः।
ततः क्षपाटैः पृथुपिङ्गलाक्षैः खं प्रावृषेण्यैरिव चानशेऽब्दैः ॥३०॥

---

तस्यानित्यत्वविवक्षया न त्रिः दक्षिणा भक्षत्वेनारोपिता मुनयः तैर्दिष्टम् आर्त्विजीनैः ऋत्विक्कर्मार्हैः कृतम्। ऋतौ यजतीति क्विप् ग्रहस्वपेति जिः ऋत्विजः कर्म आर्त्विजं कर्मार्थे विकारसंघेत्यादिना ष्णः तदर्हतीति ढघेकादित्यादिना खीनः ऋत्विक् शब्दात् स्वार्थे खीनो वा प्रसर्पद्वृद्धिं गच्छतु ॥२९॥ भ०

आपिङ्गेत्यादि। ततः कर्मप्रवर्त्तनादनन्तरम् क्षपाटैः निशाचरैः अटन्तीत्यटाः पचाद्यच् क्षपायामटा इति सप्तमीतियोगविभागात् समासः खमाकाशमानशे व्याप्तम् अश्नोतेः कर्मणि लिट् अश्नोतेश्चेति नुट्। शिरसि जाताः शिरस्याः शरीरावयवाद्यत् आपिङ्गा आ समन्तात् पिङ्गा विद्युदिव रुक्षाः सूक्ष्माः ऊर्द्ध्वशिरस्या बाला येषां तैः। अन्योऽपि शिरस्यो भवति इति बालग्रहणम् अमङ्गलबाला इत्यर्थः। शिराः सन्ति यासामिति प्राणिस्थादातोलजन्यतरस्यामिति लच्। शिराला जङ्घा येषां तैः गिरिकूटदघ्नैर्गिरिकूटप्रमाणैः प्रमाणे द्वयसजिति दघ्नच। पृथूनि विस्तीर्णानि पिङ्गलानि चाक्षीणि येषां तैः। बहुव्रीहौ सक्थ्यक्ष्णोरिति षच्। प्रावृषेण्यैरिवेति प्रावृष एण्यः अब्दैर्मेघैः कृष्णसाधर्म्यात्। अपो ददतीति अब्दाः। चकारः पादपूरणार्थः ॥ ३० ॥ ज० म०

आपिङ्गेत्यादि। ततस्तज्ज्ञानानन्तरं क्षपाटैः राक्षसैः खम् आकाशम् आनशे व्याप्तम् अशूङ्व्याप्तिसंहत्योः कर्मणि ठो स्यान्तादिति खेरान्। कीदृशैः आपिङ्गा ईषत्कपिला रुक्षा ऊर्द्ध्वाः शिरस्याः शिरसि भवाः केशा येषां शिरस्यग्रहणं श्रवणकुण्डलादिवत् तदारूढिप्रतिपत्त्यर्थम्। शिरस्थबलैरिति

अधिज्यचापः स्थिरबाहुमुष्टिरुदञ्चिताक्षोऽञ्चितदक्षिणोरुः ।
तान् लक्ष्मणः सन्नतवामजङ्घो जघान शुद्धेषुरमन्दकर्षी ॥२१॥

---

क्वचित् पाठः । शिरा नाडी तया व्याप्ता जङ्घा येषां शिराशब्दात् गोत्रणमेधेत्यादिना चूडादित्वात्त्वः । गिरिकूटदघ्नैः गिरिशृङ्गप्रमाणैः दघ्नमात्रद्वयसन्नाने इति दघ्नः । पृथूनि पिङ्गलानि च अक्षीणि येषां सक्थ्यक्ष्णः सः स्वाङ्गे इति बहुव्रीहौ षः । प्रावृषिण्यैर्वर्षाकालीनैः अब्दैर्मेघैरिव प्रावृष एण्यो भवार्थे अभिधानात् अपो ददातीत्यब्दः आदन्तात् हनजनादिति डः । न केवलं चिचिते चानशे च इति चार्थः । पादपूरणे चेति केचित् ॥ २० ॥ भ०

अधीत्यादि । तान् क्षपाटान् गगनस्थान् लक्ष्मणो जघान हतवान् । कीदृशः अधिज्यचापः अध्यारूढा उत्कलिता ज्या गुणो यस्य चापस्य तदधिज्यम् प्रादिभ्यो धातुजस्येति समासः । अधिज्यं चापो यस्य लक्ष्मणस्य । स्थिरो निश्चलो बाहुर्मुष्टिश्च यस्य । उदञ्चिते उत्क्षिप्ते अक्षिणी येन स उदञ्चिताक्षः, आकाशस्थापितदृष्टिरित्यर्थः । अञ्चितः सङ्कोचितो दक्षिणोरुर्येन सोऽञ्चितदक्षिणोरुः अञ्चेः पूजायामितीटोऽनुत्पन्नत्वात् ण्यन्तस्य रूपम्, न चात्र पूजा गम्यते किन्तु गतिविशेष एव अनुषङ्गलोपोऽपि न भवति णिलोपस्य स्थानिवद्भावात् । समन्तात् नता वामजङ्घा यस्य स सन्नतवामजङ्घः । शुद्धेषुः निशितबाणः अमन्दमत्यन्तं कृष्टं शीलमस्यासावमन्दकर्षी कर्णान्ताकृष्टचाप इत्यर्थः ॥ २१ ॥ ज० म०

अधिज्येत्यादि । लक्ष्मणस्तान् राक्षसान् जघान । कीदृशः अधिरूढा ज्या गुणो यत्र तादृशश्चापो यस्य । स्थिरो निश्चलो दृढो वा बाहुमुष्टिर्यस्य स लक्ष्मणः दर्शनार्थम् उदञ्चिते ऊर्द्धमु-

गाधेयदिष्टं विरसं रसन्तं रामोऽपि मायाचणमस्त्रचुञ्चुः।
स्थास्नुं रणे स्मेरमुखो जगाद मारीचमुच्चैर्वचनं महार्थम् ॥३२॥

---

स्थापिते अक्षिणी येन आकाशक्षिप्तदृष्टिरित्यर्थः। अक्षितः सङ्कुचितो दक्षिणोरूर्येन अलोपेऽपि स्थानिवद्भावात् नाक्ष्णेर्न लोपः। सन्नना वामजङ्घा यस्य शृङ्गो निशतः इषुर्यस्य अमन्दं यथा स्यात्तथा धनुः कर्षतीति ग्रहादित्वात् णिन् कष्टुं शील-मस्येति परे ॥ ३१ ॥ भ०

गाधेयेत्यादि। गाधेरपत्यं गाधेयो विश्वामित्रः इञश्च इत्यनुवर्त्तमाने इतश्चानिञ इति ढक् तेन दिष्टं कथितं मारीचं नाम राक्षसं रामो जगाद गदितवान्। रसन्तम् विरसमश्राव्य-मिति क्रियाविशेषणम्। मायाचणम्मायया वित्तम् अस्त्रचुञ्चुः अस्त्रैः प्रतीतो रामः तेन वित्तश्चुञ्चुचणपाविति। स्थास्नुं रणे स्थितिशीलं तस्य सेनापतित्वात्। स्मेरमुखः चित्तस्याक्षोभा-दीषद्धसनशीलवदनः नमिकम्पीत्यादिना रः। उच्चैस्तारां जगादेति क्रियाविशेषणम्। वचनं वक्ष्यमाणं महार्थं प्रधानं ब्रुविशासीत्यत्र ब्रुवीत्यर्थग्रहणात् द्विकर्मकता मारिचं वचनञ्च ॥ ३२ ॥ ज० म०

गाधेयेत्यादि। रामः अपिशब्दात् लक्ष्मणोऽपि महार्थमु-च्चैर्वचनं मारीचं जगाद। याञ्चार्थदुहेति सूत्रे ब्रुवीत्यर्थस्य ग्रहणं तेन द्विकर्मकत्वं पचादित्वाद्वा। कीदृशं मारीचं गाधे-येन विश्वामित्रेण दिष्टं कथितं गाधेरपत्यार्थे वाह्वाद्यत इत्यनेन अत्रादित्वात् ण्येयः। विरसं कठोरं यथा स्यात्तथा रसन्तं शब्दायमानं मायया ख्यातं मायाचणं वित्ते चुञ्चुचणाविति चणः। रणे स्थास्नुं स्थितिशीलं ग्लाजिस्था

आत्मम्भरिस्त्वं पिशितैर्नराणां फलेग्रहीन् हंसि वनस्पतीनाम् ।
शौवस्तिकत्वं विभवा न येषां व्रजन्ति तेषां दयसे न कस्मात् ?
॥ ३३ ॥

---

इति स्नुः । रामः कीदृशः अस्त्रचुञ्चुः अस्त्रेण ख्यातः स्मेर-मीषद्धसनशीलं मुखमस्य हिंसदीपकम्पेति रः ॥ ३२ ॥ भ०

आत्मेत्यादि । नराणां पिशितैर्मांसैः आत्मानम् बिभर्षि पुष्णासि नान्यदपि शरीरस्थितिहेतुर्भवतीति भावः । स त्वमात्मम्भरिः आत्मभरणाय फलानि गृह्णन्ति ये वनस्पतीनां तान् फलेग्रहीन् फलाशिनो मुनीन् हंसि मारयसि शप लुक् फलेग्रहिरात्मम्भरिश्चेति निपातितौ । श्वो भवितारः शौव-स्तिकाः श्वसस्तुट् चेति ठञ् तुडागमश्च । द्वारादित्वादैजागमः शौवस्तिकत्वं तद्येषां विभवा न व्रजन्ति तेषामश्वस्तनिकवृ-त्तीनां कस्मान्न दयसे न रक्षसि ? अधीगर्थदयेशामिति कर्मणि षष्ठी ॥ ३३ ॥ ज० म०

आत्मम्भरिरित्यादि । त्वं वनस्पतीनां फलेग्रहीन् मुनीन् हंसि फलानि गृह्णन्ति तन्मात्रभोजित्वेन स्वीकुर्वन्तीति सकृत्-स्तम्बानित्यादिना इप्रत्ययः । फले इति सूत्रे निर्देशादेत्वम् । वनस्पतीनां मध्ये फलेग्रहीन् मुनीन् हंसि उन्मूलयसीति केचित् । त्वं कीदृशः नराणां पिशितैर्मांसैरात्मम्भरिः आत्मान-मेव बिभर्त्तीति कुक्ष्यात्मोदराद्भृञः खिरिति खिः खित्यव्योर्जेति मन् । येषां विभवाः सम्पदः शौवस्तिकत्वं भाविदिनस्थितत्वं न व्रजन्ति तेषां कस्मान्न दयसे समार्थेनेति कर्मणि षो श्वोभवः शौवस्तिकः श्वसो भवार्थेति कष्वभिधानात् कणि मनीषादि-त्वात् त्वागमः द्वारस्मरेत्विति ऊम् णित्ते व्रिरिति व्रिः तत्वौ भावे इति त्वं देवीदासचक्रवर्त्ती तु श्वस्तेकते श्वस्तिकः तिकञ गत्यां

अद्मो द्विजान् देवयजीन् निहन्मः कुर्मः पुरं प्रेतनराधिवासम् ।
धर्मो ह्ययं दाशरथे ! निजो नो नैवाध्यकारिष्महि वेदवृत्ते ॥३४॥

---

इजुङत्वात् कृगृत्व्राप्नोति कः, ततः स्वार्थे ष्णः । अन्यत् पूर्ववदित्याह ॥ ३३ ॥ भ०

अद्म इत्यादि । राक्षसः प्राह द्विजान् ब्राह्मणक्षत्रियवैश्यान् अद्मः भक्षयामः, देवयजीन् देवान् यजन्ति आराधयन्ति ये तान्निहन्मः अच इरित्यनुवर्त्तमाने खनीत्यादिषूह्यमानेष्वौणादिकेषु सूत्रेषु यद्यपि यजिर्न पठितस्तथापि नायजेरिः प्रकृतेश्च तदूह्यमिति वचनात् । जासिनिप्रहणेत्यत्र सङ्घातविगृहीतविपर्य्यस्तग्रहणात् षष्ठी प्राप्तापि न भवति कर्मणः शेषत्वेनाविवक्षितत्वात् पुरं नगरं प्रेतनराणां मृतनराणाम् अधिवासमवस्थानं कुर्मः नित्यहननेन श्मशानतुल्यम् इत्यर्थः । कस्मादेवमित्याह धर्म इति । दशरथस्यापत्यं दाशरथिः अत इञ्, हे दाशरथे ! हि यस्मादर्थे वर्त्तते यस्मादयं धर्मः आचारः निजो नित्यः न इत्यस्माकं वेदविरुद्ध इति चेत् नैवाध्यकारिष्महि वेदवृत्ते वेदविहितं वृत्तमिति मध्यमपदलोपी समासः । यत् ब्राह्मणानाम् उक्तमनुष्ठानं तत्र वयं नैवाधिकृता इत्यर्थः । अधिपूर्वात् करोतेः कर्मणि लुङ्, स्यसिजित्यादिना चिण्वदिट् ॥ ३४ ॥ ज० म०

अद्म इत्यादि । पूर्वापरपरामर्षात् मारीचप्रत्युत्तरमिदम् । वयं द्विजान् अद्मः भक्षयामः, देवयजीन् देवपूजकान् निहन्मः । ग्रहेरिनोर्म्मोऽव्यां व्रजेर्वदेरित्यादिनिर्देशात् सर्वधातुभ्य इप्रत्ययः स्यादिति सूचतं तेन यजिरिति सिद्धं वातप्रमीवत् दिर्घान्तोऽयमित्येके । पुरं मृतमनुष्याधिवासं श्मशानतुल्यं कुर्मः कुरुत्वोपोवमो इति कञ उपो लोपः कञोऽहनौ रे इत्यकारः । हे दाश-

धर्मोऽस्ति सत्यं तव राक्षसायमन्यो व्यतिस्ते तु ममापि धर्मः।
ब्रह्मद्विषस्ते प्रणिहन्मि येन राजन्यवृत्तिर्धृतकार्मुकेषुः॥ ३५॥

---

रथे! हि यस्मात् अयमेव अस्माकं निजो नित्यो धर्मः स्वभावः आचारो वा। धर्माः पुण्ययमन्यायस्वभावाचारसोमपा इत्यमरः। वेदवृत्ते वेदविहिते कर्मणि नैव अध्यकारिष्महि वयं नाधिकृताः विधात्रा इत्यर्थः। कर्मणि टौ हनग्रहदृश च इति मिण्॥ ३४॥ भ०

धर्म इत्यादि। रामः प्राह हे राक्षस! रक्ष एव राक्षसः प्रज्ञादित्वादण् स्वार्थिका अतिवर्त्तन्ते इति पुंलिङ्गता। तवायं पूर्वोक्तः पराभिद्रोहलक्षणो धर्मोऽस्तीति सत्यमेतत् किन्तु ममापि रामस्य अन्यो धर्मोऽशिष्टनिग्रहलक्षणो व्यतिस्ते व्यतिभवते इदमुक्तं भवति यद्यप्येवम्प्रकारस्त्वद्धर्मो भविष्यति तथापीदानीमेव या त्वद्धर्मेण विद्यमानतया निष्पाद्या सा अस्मद्धर्मेणैव निष्पादकत्वेन व्यतिस्ते। ततश्चान्यसम्बन्धिनीं क्रियामन्यः करोति इतरसम्बन्धिनीमितरः इति धर्मव्यतीहारसम्भवात् अस्तेः कर्मव्यतीहारे तङ्। तथाहि यो यदवसरे यां काञ्चित् क्रियां करोति स तत्क्रियाकारीत्युपचारात् लोक उच्यते। येन धर्मेण हेतुना ब्रह्मद्विषस्ते प्रणिहन्मि मारयामि स व्यतिस्ते इति योज्यम्। नेर्गदेत्यादिना णत्वं, जासिनीत्यादिना कर्मणि षष्ठी। तथा कथं तव धर्म इति चेदाह राजन्यवृत्तिरिति क्षत्रियवृत्तिः ततो राज्ञोऽपत्यं राजश्वशुराद्यत् ये चेति प्रकृतिभावः। धृतं कार्मुकम् इषवश्च येन सः यतः अहं राजन्यवृत्तिः ततोऽहं धृतकार्मुकेषुरिति। धृतकार्मुकेष्विति पाठान्तरम्। क्व राजन्यवृत्तिः साधुधेष्वित्यर्थः॥ ३५॥ ज० म०

इत्थं प्रवादं युधि संप्रहारं प्रचक्रतू रामनिशाविहारौ।
तृणाय मत्वा रघुनन्दनोऽथ बाणेन रक्षः प्रधनान्निरास्थत् ॥२६॥

---

धर्म इत्यादि। रामवाक्यमिदम्। हे राक्षस! तव अयं धर्मोऽस्तीति सत्यं रक्षःशब्दात् विकारसङ्घेत्यादिना स्वार्थे णः। त्रैलोक्यमित्युदाहरणेन स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्तेऽपीति सूचितं तेन पुंस्त्वम् किन्तु। ममापि अन्यो धर्मो व्यतिस्ते अस्ते र्व्यतीहारे गतिहिंसेति मं, लोपोऽस्यसोरित्यकारलोपः। यथा तव हिंसारूपो धर्मोऽस्ति तथा मम हिंसकहिंसाकारित्वरूपो धर्मोऽस्ति इत्यर्थः। धर्मं प्रकाशयति येन धर्मेण हेतुना ब्रह्मद्विषस्ते तव प्रणिहन्मि कर्मणि षी, प्राग्वन्तो ण इति णत्वम्। कुतस्तेऽयं धर्म इत्याह यतो राजन्यानां वृत्तिः धृतं कार्मुकमिषुश्च यत्र तथा भवति क्षत्रियाणां धनुर्बाणधारित्वं हिंसनाशार्थमेव। राजन्येति मन्वजानित्यादिना नलोपनिषेधः ॥ २५ ॥ भ०

इत्थमित्यादि। इत्थम् अनेन प्रकारेण प्रवादो अन्योन्याभिघातो यत्र सम्प्रहारे तं संप्रहारं परस्पराभिभवलक्षणं प्रकृतवन्तौ युधि रणभूमौ युध्यन्ते अस्यामिति सम्पदादित्वादधिकरणे क्विप्। रामनिशाविहारौ रामो निशाविहारो निशाचरो मारीचश्चेत्यर्थः निशायां विहारो यस्येति समासः। अथानन्तरं रघुनन्दनो रघुवंशस्य नन्दयिता रामो रक्षः मारीचं बाणेन तत्सम्बन्धिनि सत्यपि तृणाय मत्वा तृणमपि नावमत्यमन्यकर्मण्यनादर इति चतुर्थी तत्र प्रकृष्टकुत्सितग्रहणं कर्त्तव्यम् इह माभूत् तृणं मत्वेति प्रधनात् संग्रामात् निरास्थत् अपनीतवान् ॥ २६ ॥ ज० म०

इत्थमित्यादि। उक्तप्रकारं प्रवादं तदनन्तरं युधि युद्धे

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



जग्मुः प्रसादं द्विजमानसानि द्यौर्वर्षुका पुष्पचयं बभूव।
निर्व्याजमिज्या ववृते वचश्च भूयो बभाषे मुनिना कुमारः ॥२७॥

---

संप्रहारं रामनिशाविहारी प्रचक्रतुः। निशायां विहारोऽस्येति निशाविहारो मारीचः, सम्यक् प्रहारः यस्मात् इति संप्रहारं प्रवादविशेषणमित्यके। अथ रघुनन्दनो राघः मारीचं तृणाय मत्वा बाणेन प्रधनात् युद्धात् निरास्थत् गत्यर्थमन्यढे इति ची, तृणोपमानेनैवावज्ञा गम्यते तेन तृणादेव चतुर्थी ॥२६॥भ०

जग्मुरित्यादि। यागविघ्नकारिषु निरस्तेषु द्विजानां मानसानि मनांस्येव मानसानि प्रज्ञादित्वादण्। प्रसादम् अव्याकुलत्वं जग्मुः गतानि गमहनेत्युपधालोपः। द्यौः पुष्पचयं वर्षुका वर्षणशीला बभूव भवति स्म लषपतपदेत्यादिना उकञ्, नलोकेति षष्ठीप्रतिषेधः। निर्व्याजं निर्विघ्नं इज्या यागः व्रजयजोर्भावे क्यप्। ववृते वृत्तः लिट्। भूयः पुनरपि मुनिना गाधेयेन कुमारः रामः अकृतदारकर्मत्वात् वचो वक्ष्यमाणं बभाषे कर्मणि लिट्, ब्रुवीत्यर्थग्रहणात् द्विकर्मकता वचः कुमारस्य ॥ २७ ॥ ज० म०

जग्मुरित्यादि। शत्रुवधात् द्विजानां मानसानि प्रसादम् अव्याकुलत्वं जग्मुः हनगमित्युङ्लोपः। द्यौः स्वर्गः पुष्पस्य चयं समूहं वर्षुका बभूव। वर्षतीति वर्षुका वृषेः भृस्थाभूकमगमेति उकः, ढघे क्षतीति सूत्रे उकवर्जनात् न कर्मणि षष्ठी। निर्व्याजं निर्विघ्नं यथा स्यात्तथा मुनीनां इज्या यज्ञो ववृते निष्पन्ना यजेः स्त्रीव्रजेति क्यप् स्त्रियाम्। मुनिना विश्वामित्रेण कुमारो रामः भूयः पुनरपि बभाषे ब्रुवीत्यर्थात् द्विकर्मकत्वं, कुमारत्व केलौ पचादित्वादन्। कुमारो बालके स्कन्दे युवराजेऽश्ववारके इति विश्वः ॥ २७ ॥ भ०

महीय्यमाना भवतातिमात्रं सुराध्वरे घस्मरजित्वरेण ।
दिवोऽपि वज्रायुधभूषणाया ह्रिणीयते वीरवती न भूमिः ॥६८॥

---

महीत्यादि । भवता भूमिः पृथिवी महीय्यमाना पूज्यमाना अतिमात्रं सुष्ठु सम्यक् पालनाद्दिवोऽपि स्वर्गस्य न ह्रिणीयते न लज्जते किन्तु प्रतिस्पर्द्धते इति भावः । ह्रिणी महीङिति कण्ड्वादिपाठाद्यक् ङित्वात्तङ् अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवतीति महीयशब्दात्कर्मणि लकारः शानच् यक् अतो लोपः सुक् महीय्यमानेति रूपम् । सुराध्वरे सुरानुद्दिश्य योऽध्वरो यज्ञः क्रियते तत्र ये घस्मराः अदनशीलाः राक्षसाः सृघस्यदः क्मरच्, तेषां जित्वरेण जयशीलेन भवता इण्नशजित्यादिना क्वरप् । वज्रायुधभूषणायाः शक्र एवालङ्कारो यस्याः दिवः वीरवती त्वद्विधो वीरो यस्यां भूमाविति ॥ ३८ ॥ ज० म०

महीय्येत्यादि । भूमिर्दिवोऽपि स्वर्गादपि न ह्रिणीयते न लज्जते तामपि स्पर्द्धते इत्यर्थः, यतो भवतातिमात्रम् अतिशयेन वीरवती प्रशस्तवीरान्विता अतएव लोकैर्महीय्यमाना पूज्यमाना महीङ् वृद्धिपूजनयोः ह्रिणीङ् लज्जायाम् आभ्यां कण्ड्वादित्वात् नमस्तपोवरिव इत्यादिना क्यः कीदृशेन भवता सुराध्वरे देवानां यज्ञे घस्मराणां बहुभक्षणशीलानां राक्षसानां जित्वरेण त्वघसी भक्षे इत्यस्मात् घसस्दः क्मर इति क्मरः, क्वरप् सृजोनेति जिः क्वरप् स्वस्य तन् पितीत्यनेन तन् । दिवः कीदृश्याः वज्रमायुधमस्येति वज्रायुधः इन्द्रः स एव भूषणं यस्याः इन्द्रो यथा दिवः परिपालकस्तथा त्वं भूमेरिति भावः । आयुध्यतेऽनेनेति आयुधम् इगुपधत्वात् कृगृज्ञाप्रीगुङ इति

बलिर्बबन्धे जलधिर्ममन्थे जह्रेऽमृतं दैत्यकुलं विजिग्ये ।
कल्पान्तदुःस्था वसुधा तथोहे येनैष भारोऽतिगुरुर्न तस्य ॥३९॥
इति ब्रुवाणो मधुरं हितञ्च तमाञ्जिहन्मैथिलयज्ञभूमिम् ।

---

कर्त्तरि विहितप्रत्ययः करणेऽपि बोध्यः । छन्दोः कभावे इत्युक्तेरन्यत्रापि प्रयोगत इत्युक्तेः ॥ ३८ ॥ भ०

संक्षेपेण स्तुतिमाह बलिरित्यादि । येन भवता बलिर्बबन्धे बद्धः, जलधिर्ममन्थे मथितः, मन्दरं दोर्भिर्गृहीत्वा मन्थविलोडन इत्यस्य रूपम्, संयोगान्तत्वाल्लिटोऽकित्त्वे अनुनासिकलोपो न भवति । जह्रेऽमृतम् स्त्रीरूपधारिणा दैत्यवंशं विजिग्ये विजितमनेकधा संलिटोर्जेरिति कुत्वम् एरनेकाच इति यणादेशः । तथा कल्पान्ते प्रलये दुःस्था दुःखिता वसुधा पृथिवी ऊहे उद्धृता वराहरूपिणा वहेर्यजादित्वात् सम्प्रसारणम् । तस्य भवत एष भारो मुनिजनरक्षणम् अतिगुरुर्न भवति सर्वत्र कर्मणि लिट् ॥ ३९ ॥ ज० म०

बलिरित्यादि । येन भवता वामनावस्थायां बलिनामासुरो बबन्धे बद्धः, जलधिः समुद्रो ममन्थे मथितः मन्थः स्यात्त्वपित्किद्वेति किदभावपक्षे ङडो लोपाभावः । स्त्रीरूपेण असुरगृहीतममृतं जह्रे हृतं, दैत्यवंशो विजिग्ये विजितः जेर्गिः सन्लिटः अभ्वोरखचोति यत्वम् । कल्पान्ते प्रलयकाले दुःस्था जलप्लाविता वसुधा पृथिवी वराहरूपेण ऊहे उद्धृता सर्वत्र कर्मणि ठो वहेर्यजादित्वात् व्यधग्रहेति स्वेर्जिः ग्रहस्पाद्योरिति प्रकृतेर्जिः । दुःखेन तिष्ठतीति दुःस्था हनजनादिति डः, खसयुक्तशसिविसर्गस्य वा लोपो मनोषादित्वात् । तस्य भवत एष भारो मुनिरक्षणरूपो नातिगुरुर्भवति ॥३९॥ भ०

इतीत्यादि । इति यथोक्तप्रकारेण मधुरं श्रोत्रसुखं हितञ्च

रामं मुनिः प्रीतमना मखान्ते यशांसि राज्ञां निजिघृक्षयिष्यन्
॥ ४० ॥

---

ब्रुवाणो अभिदधानः लक्षणहेत्वोरिति शानच्। मुनिः प्रीतमनाः मखान्ते यज्ञावसाने तं रामं मैथिलस्य यज्ञभूमिं आञ्जिहत् गमितवान् मिथिलानां राजेति जनपदशब्दात् क्षत्रियादञित्यत्र तस्य राजन्यपत्यवदित्यतिदेशादञ् अहिगतौ इदितो नुम् प्रयोजकव्यापारे णिच् लुङ् आट् चङि णिलोपः द्विर्वचनेऽचीति स्थानिवद्भावादजादेर्द्वितीयस्येति हिशब्दस्य द्विर्वचनम् नन्द्रा इति नकारस्य प्रतिषेधः अभ्यासकार्य्यम् आञ्जिहदिति रूपम्। राज्ञां यशांसि निजिघृक्षयिष्यन् निग्रहीतुमभिभवितुमिषयिष्यन् ग्रहेः सन् सनि ग्रहगुहोश्चेति षट्-प्रतिषेधः द्विर्वचनादिः रुदविदेत्यादिना सनः कित्त्वम् ग्रहिज्येत्यादिना सम्प्रसारणम् ढत्वभष्भावौ गकारस्य घकारः कत्वषत्वे पश्चाण्णिच् तदन्ताद्भविष्यत्सामान्यविवक्षायां लृट् तेन भविष्यदनद्यतने लुङ् न भवति ॥ ४० ॥ ज० म०

इतीत्यादि। उक्तप्रकारेण मधुरं हितं ब्रुवाणो मुनिः प्रीतमना मखस्य यज्ञस्यान्ते तं रामं मैथिलस्य जनकस्य यज्ञभूमिं आञ्जिहत् प्रापयामास राज्ञां यशांसि निग्रहीतुं अभिभवितुं इच्छां कारयिष्यन् राम एव प्रयोज्यकर्त्ता मिथिलाया राजा मैथिलः विकारसंघेति ष्णः अहिङ् गतौ इदितो नुण् जिः प्रेरणे जिश्रीत्यङ् नाजन्तादेरिति स्यादौ नवद्रोऽये इति निषेधात् हिशब्दस्य द्वित्वं खेर्झभखयेति ह्रस्य जः ञेर्लोपः ग्रहेः सनि नेमुगुह इतीम्निषेधः ग्रहस्वपेति जिः होढः झभान्तखादिजवामिति घः षढो कः से इति ढस्य कः क्विलादिति षः सनयङन्तो द्विः खेराद्यचो लोपः झभखयेति खेर्घस्य जत्व

इतः स्म मित्रावरुणौ किमेतौ किमश्विनौ सोमरसं पिपासू ।
जनं समस्तं जनकाश्रमस्थं रूपेण तावौजिहतां नृसिंहौ ॥४१॥

ऋकारस्य अत्वञ्च ण्यस्येत्सनि ततो ञिः ततः स्यटः ॥४०॥ भ०

इत इत्यादि। एतौ तत्रागतौ नृसिंहौ नरौ सिंहाविव जनकाश्रमस्थं जनं रूपेण स्वरूपतया औजिहतां वितर्कं कारितवन्तौ ऊह वितर्के इत्यस्माद्धातोः ण्यन्तात् कर्त्तुः क्रियाफलाविवक्षायां णिचश्चेति तङ् न भवति चङि णिलोपस्य स्थानिवद्भावात् अजादेर्द्वितीयस्येति द्विर्वचनम्। ऊहमाह मित्रावरुणौ आदित्यरुवणौ देवताद्वन्द्वे इत्यानङ् तयोर्महानुभावत्वात् सोमरसम्पिपासू पातुमिच्छू न लोकेति षष्ठीप्रतिषेधः एतावागतौ आङ् पूर्वस्येणो निष्ठायां रूपम्। किमश्विनौ अश्विनीकुमारौ सोमरसम्पिपासू एताविति एवञ्जनम् औजिहतां सुशब्द इति पाठे एतौ सुमित्रेति पाठः एतौ स्म मित्रेति स्मशब्दो निपातः पादपूरणार्थः ॥ ४१ ॥ ज० म०

इत इत्यादि। तौ नृसिंहौ मनुष्यश्रेष्ठौ रामलक्ष्मणौ रूपेण सौन्दर्य्येण समस्तं जनकाश्रमस्थं जनं औजिहतां वितर्कं कारितवन्तौ ऊहङ् वितर्के ञिः प्रेरणे ञिश्रीत्यङ् नाजन्तादेरिति निषेधात् हेर्द्वित्वं घोञोञेरिति ज्ञानार्थत्वात् कर्त्तुः कर्मत्वम्। वितर्कमाह किमेतौ मित्रावरुणौ सूर्य्यवरुणौ सोमरसं पातुमिच्छावन्तौ इतः स्म असुं देशं प्राप्तवन्तौ इण्गतौ क्तौ स्म नातीतेति इति क्तौ किंवा एतौ अश्विनौ अश्विनीकुमारौ नासत्यदस्रौ नासत्यश्चैव दस्रश्च स्मृतौ तौ नामतोऽश्विनाविति मार्कण्डेयपुराणम्। केचित्तु स्मशब्दः पादपूरणे इतोऽस्मिन् देशे एतौ आगतौ आङ् पूर्वादिणः क्तः इत्याहुः। मित्रश्च वरुणश्चेति द्वन्द्वे सहचरितदेवताद्वन्द्वे

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



अजिग्रहत्तं जनको धनुस्तत् येनार्दिदद्दैत्यपुरं पिनाकी ।
जिज्ञासमानो बलमस्य बाह्वोर्हसन्नभाङ्क्षीद्रघुनन्दनस्तत् ॥४२॥

---

पूर्वपदस्यादन्तता निपातनात् देवोदासचक्रवर्त्ती तु एकादश इत्युदाहरता विश्वराजोऽदेत्यस्य योगविभागात् क्वचित् समासे पूर्वपदस्य दीर्घत्वं सूचितमित्याह ॥ ४१ ॥ भ०

अजिग्रहदित्यादि । येन धनुषा दैत्यपुरं पिनाकी महादेव आर्दिदत् हिंसितवान् अर्दः स्वार्थिकण्यन्तात् चङि अजादेर्द्वितीयस्येति दिशब्दो द्विरुच्यते रेफस्य प्रतिषेधः । तद्धनुः तं रामं जनकः अजिग्रहत् बोधितवान् अनेन धनुषा त्रिपुरं दग्धमिति ग्रहेर्हेतुमण्ण्यन्ताच्चङि णिलोपः, णौ चङि ह्रस्वः, सन्वद्भावादित्वम्, ग्रहेश्च बुद्ध्यर्थत्वात् गतिबुद्धीत्यादिना रामस्य कर्मसंज्ञा । अस्य रामस्य बाह्वोर्भुजयोर्बलं जिज्ञासमानो जनकः एवम्भूतं धनुः हसन् स्मयमानो रघुनन्दनो रामः अभाङ्क्षीत् भग्नवान् भञ्जेर्लुङि सिचि हलन्तलक्षणा वृद्धिः, तत्र हि हल्ग्रहणं समुदायप्रतिपत्त्यर्थमित्युक्तम् ॥४२॥ ज० म०

अजिग्रहदित्यादि । जनको राजा तं रामं तद्धनुरजिग्रहत् ग्राहयामास धातूनामनेकार्थत्वात् ग्रहिरत्र ज्ञानार्थ इत्यन्ये, घोजोर्जेरिति प्रयोज्यकर्त्तुः कर्मत्वं, अग्रज्युङः स्व इति ह्रस्वः, खेः सन्वदिति सन्वत् । येन धनुषा पिनाकी शिवो दैत्यानां पुरं त्रिपुरं आर्दिदत् हतवान् अर्दक् बधे स्यादीनवद्रोऽये इति निषेधात् देर्द्वित्वम् । केचित्तु धनुषा प्रयोज्यकर्त्रा घातयामास इत्यर्थमाहुः । जनकः कीदृशः अस्य रामस्य बाह्वोर्बलं जिज्ञासमानः ज्ञातुमिच्छन् स्मृदृशनत्रुज्ञेति सनन्तज्ञो मं, हसन् लीलयैव तद्धनुरभाङ्क्षीत् भन्जधौ मोटने ख्यां सिः अनिमत्वात् व्रजवदेति त्रिः चाङिति कुङ् ॥ ४२ ॥ भ०

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



ततो नदीष्णान् पथिकान् गिरिज्ञानाह्वायकान् भूमिपतेरयोध्याम्।
दित्सुः सुतां योधहरैस्तुरङ्गैर्व्यसर्जयन्मैथिलमर्त्त्यमुख्यः॥ ४३॥

तत इत्यादि। धनुर्भङ्गादनन्तरं महानयमिति ज्ञात्वा जनकः सुतां दुहितरं दित्सुः दातुमिच्छुः ददातेः सनि मीमेत्यादिना अच इस् द्विर्वचनम् अत्रलोप इत्यभ्यासलोपः सस्येति तत्वं सनाशंसभिक्ष उः। भूमिपतेर्दशरथस्य आह्वायकान् आह्वयन्ति आकारयन्तीति कर्त्तरि ण्वुल् आतो युक् कत्र्योगे भूमिपतेः कर्मणि षष्ठी। तान् अयोध्यां व्यसर्जयत् विसर्जितवान् विपूर्वस्य सृजेर्हेतुमण्ण्यन्तस्य लङि रूपं, गत्यर्थत्वात् द्विकर्मकता। नद्यां स्नान्तीति नदीष्णाः सुपिस्थ इति योगविभागात्कः आतो लोपः निनदीभ्यां स्नातेरिति षत्वं, नदीं तरीतुं कुशलान् इत्यर्थः। पथिकान् पथि कुशलान् तत्र कुशलः पथ इति ठक्, गिरिज्ञान् यथाप्रदेशं गिरिज्ञान् इगुपधेत्यादिना कः। तुरङ्गैः अश्वैः करणभूतैः युध्यन्ते इति योधाः पचाद्यच्। तानाहर्त्तुं चमैः वयसि चेत्यच्। हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन्नित्यौणादिकस्तन्। म्रियन्ते प्राणिनोऽस्मिन्निति मर्त्तो भूर्लोकः तत्र भवा मर्त्त्या मनुष्याः दिगादेराकृतिगणत्वात् यत् आकृतिगणत्वस्य लिङ्गं देवमनुष्यपुरमर्त्त्येभ्य इति निर्देशः। मुखमेव मुख्यः प्रधानम् शाखादिभ्यो यः। मर्त्त्यानां मुख्यो मर्त्त्यमुख्यः मैथिलश्चासौ मर्त्त्यमुख्यश्चेति विशेषणसमासः, जनक इत्यर्थः॥ ४३॥ ज० म०

तत इत्यादि। धनुर्भङ्गानन्तरं मिथिलासम्बन्धिमनुष्यश्रेष्ठो जनकः रामाय सुतां दित्सुर्दातुमिच्छुः सन् भूमिपतेर्दशरथस्य आह्वायकान् दूतान् तुरङ्गैरयोध्यां व्यसर्जयत् प्रे-

क्षिप्रं ततोऽध्वन्यतुरङ्गयायी यविष्ठवद् वृद्धतमोऽपि राजा ।
आख्यायकेभ्यः श्रुतसूनुवृत्तिरग्लानयानो मिथिलामगच्छत् ॥४४

---

यामास । तुरङ्गैः कीदृशैः योधहरैः योधान् हर्त्तुं क्षमैः हृञः पचादित्वादन्, वयोबोधकवहनार्थेऽनिति क्रमदीश्वरादयः । एतेन शीघ्रगमनं दर्शितम् । शर्वंजहेत्यादिना तुरङ्गो निपातितः किम्भूतान् नदीष्णान् नदीसन्तरणकुशलान् नदीस्नातिनि-स्नात्योर्दार्ढ्ये इति रामानन्दसूत्रेण मनीषादित्वात् वा षत्वम् । नदीष्णो नदीज्ञ इति पुरुषोत्तमः । पन्थानं गच्छति वेत्ति वा इति निपातनादकः णान्तात् स्वार्थे को वा । पथि कुशलः पथिक इति केचित् । गिरिं जानन्तीति गिरिज्ञाः हनजना-दिति डः ॥ ४३ ॥ भ०

क्षिप्रमित्यादि । आख्यान्ति कथयन्ति ये ते आख्याय-कास्तेभ्यः श्रुता सूनुवृत्तिर्येन स राजा दशरथः सूयते इति सूनुः पुत्त्रः दाभाभ्यानुरिति वर्त्तमाने सुवः किच्चेत्यौणादिको नुप्रत्ययः । ततोऽनन्तरमेव क्षिप्रं शीघ्रं स्फायितञ्चीत्यादिना रक्, क्रियाविशेषणञ्चैतत् । मिथिलामगच्छत् भरतशत्रुघ्नाभ्यां सहेत्यर्थादनुषक्तव्यं गमेर्लङि इषुगमियमाच्छः । अध्वानम् अल-ङ्गामिनो ये तुरङ्गा अश्वाः ते अध्वन्याः अलङ्गामीत्यस्मिन्नर्थे अध्वनो यत् खाविति यत् ये चाभावकर्मणोरिति प्रकृतिभावः । तैः साधु यातीति साधु कारिणि णिनिः अध्वन्यतुरङ्गयायी एवञ्च कृत्वा अग्लानयानः न विद्यते ग्लानं ग्लानिर्यस्मिन् याने तत् अग्लानम् अग्लानं यानं यस्य तादृशैः तुरङ्गैः सुखयानः ग्लानेति भावे निष्ठा संयोगादेरात इति नत्वम् । वृद्धतमोऽपि यविष्ठवत् युवशब्दस्येष्ठनि स्थूलदूरेत्यादिना यणादिपरलोपः पूर्वस्य च गुणः पश्चात्तेन तुल्यम् इति वतिः ॥ ४४ ॥ ज० म०

वृन्दिष्ठमार्चीद्द वसुधाधिपानां तं प्रेष्ठमेतं गुरुवद्गरिष्ठम् ।
सदृङ्महान्तं सुकृताधिवासं वंहिष्ठकीर्त्तिर्यशसा वरिष्ठम् ॥४५॥

---

क्षिप्रमित्यादि । ततोऽनन्तरम् आख्यायकेभ्यः श्रुता सूनोः पुत्त्रस्य वृत्तिर्व्यवहारो येन स राजा दशरथः मिथिलां जनकपुरीं शीघ्रमगच्छत् कीदृशः अध्वन्यैस्तुरङ्गैर्यातीति ग्रहादित्वास्मिन् शीलार्थे णिन्नित्ये के आवश्यके णिन् इति केचित् अध्वानमत्यर्थं गच्छतीति ष्यत्रः अनित्यविवक्षया न त्रिः मन्वर्जानवर्मेति नलोपाभावः अध्वनि कुशलोऽध्वन्यो वा । वृद्धतम इति अयमेषामतिशयेन वृद्धोऽपि यविष्ठवत् प्रकृष्टयुववत् गुणाद्वैष्ठेयसू इतीष्ठः, वाढान्तिकेति यूनो यवादेशः जीमंस्वडिन्नेकाच इति डित्वात् टेर्लोपः । अग्लानमक्लिष्टं यानं यस्य ग्लै कान्तिसंक्षये क्तः यलयुक्तादन्तत्वात् सूल्वाद्योरिति क्तस्य नत्वम् ॥ ४४ ॥ भ०

वृन्दिष्ठमित्यादि । तं राजानमेतमायातं जनक आर्चीत् पूजितवान् अर्चेर्लुङि रूपम् । वृन्दिष्ठं वृन्दारकतमं प्रशस्ततममित्यर्थः केषां वसुधाधिपानां पृथ्वीपतीनां प्रेष्ठं प्रियतमं गुरुवत् गुरुणा तुल्यं वर्त्तमानं गरिष्ठं गुरुतमं सदृक् समानान्ययोश्चेत्युपसंख्यानाद्द दृशेः क्विप् । रूढिशब्दश्चायम् । नात्र दर्शनक्रिया विद्यते । अभिजनादिभिस्तुल्यो जनक इत्यर्थः महान्तं महानुभावसदृशं मध्ये महान्तं सुकृताधिवासं सुकृतनिलयम् अधिवसत्यस्मिन्निति अधिकरणे घञ्, वंहिष्ठा बहुलतमा कीर्त्तिर्यस्य स वंहिष्ठकीर्त्तिः यशसा वरिष्ठं गुरुतमम् । अत्र वृन्दारकप्रियगुरुबहुलोरूणामिष्ठनि यथासङ्ख्यं प्रियस्थिरेत्यादिना वृन्दप्रगरवंहवर इत्येते आदेशा भवन्ति ॥ ४५ ॥ ज० म०

त्रिवर्गपारीणमसौ भवन्तमध्यासयन्नासनमेकमिन्द्रः ।
विविक्तदृश्वत्वमगात् सुराणां तं मैथिलो वाक्यमिदं बभाषे ॥४६॥

---

वृन्दिष्ठमित्यादि । अर्थात् जनकस्तमागतं दशरथं आर्चीत् पूजितवान् । किम्भूतं वसुधाधिपानां राज्ञां मध्ये वृन्दिष्ठं प्रशस्ततमं प्रेष्ठं प्रियतमं गुरुवत् उपदेष्टृवत् पितृवद्वा गरिष्ठं गुरुतमं महान्तं महाशयं सुकृतानि पुण्यानि अधिवसन्त्यस्मिन्निति आधारे घञ् । यशसा वरिष्ठं उरुतमं वृहत्तममित्यर्थः । जनकः कीदृशः सदृक् अर्थात् दशरथस्य समान इव दृश्यते योऽसाविति तदादिभवत् समानेति क्विप् समानेदमिति सादेशः, सदृशानां महान्तमित्यन्ये । वंहिष्ठा बहुतमा कीर्त्तिर्यस्य तथा वृन्दिष्ठादौ गुणाद्देष्ठेयसू इतीष्ठः वाढान्तिकेत्यादिना वृन्दारकप्रियगुरुबहुलोरूणां वृन्दप्रगरवंहवरादेशः ओमंखेति डित्त्वात् टेर्लोपः । प्रेष्ठमित्यत्र एकाचत्वान्न डित्त्वम् ॥ ४५ ॥ भ०

त्रिवर्गेत्यादि । तं दशरथं मैथिलो जनकः वाक्यमिदं बभाषे ब्रुवीत्यर्थग्रहणात् द्विकर्मकता । किन्तद्वाक्यमित्याह असाविन्द्रो भवन्तम् एकासनमध्यासयन् आरोपयन् विविक्तदृश्वत्वमगादिति सम्बन्धः । आसनस्याधिशीङित्यादिना अधिकरणे कर्मसंज्ञा, भवन्तमिति गतिबुद्धीत्यादिना आस्तेरण्यन्तावस्थायामकर्मकत्वात् । पारङ्गमीत्यस्मिन् वाक्ये अवारपारेत्यादिना पारशब्दात् खः तत्र विगृहीतविपर्य्यस्तग्रहणात् त्रिवर्गस्य धर्मार्थकामस्य पारीणमिति षष्ठीसमासः त्रिवर्गपारीणं भवन्तं सुराणां मध्ये स एवैको विविक्तदृश्वत्वं विवेकज्ञतामगात् इणो गा लुङि गातिस्थेत्यादिना सिचो लुक् । विविक्तं दृष्टवानिति दृशेः क्वनिप् ॥ ४६ ॥ ज० म०

हिरण्मयी साललतेव जङ्गमा
च्युतादिवः स्थास्नुरिवाचिरप्रभा।
शशाङ्ककान्तेरधिदेवताकृतिः
सुता ददे तस्य सुताय मैथिली ॥ ४७ ॥

---

त्रिवर्गेत्यादि। मैथिलो जनकः तं दशरथं इदं वाक्यं बभाषे ब्रुवीत्यर्थत्वात् द्विकर्मकता। किन्तदित्याह भवत्त्वमेकमासनमध्यामयन् उपवेशयन् इन्द्रः सुराणां विविक्तदृष्टत्वं सदसद्विवेचकत्वं अगात् प्राप्तवान्। कीदृशं त्रिवर्गस्य पारं गच्छतीति ढवेकादिति पीनः। त्रिवर्गो धर्मकामार्थैरित्यमरः। असाविति बुद्धिस्थनिदर्शनं विवेकं दृष्टवानिति त्वासुसिति क्वनिप्, भवन्तमिति अध्यासेः प्रागविवक्षितकर्मत्वादकर्मकत्वेन प्रयोज्यकर्त्तुः कर्मम्, आसनमिति कर्मक्रियेत्यादिना आधारस्य कर्मत्वम् ॥ ४६ ॥ भ०

हिरेत्यादि। तस्य दशरथस्य सुताय रामाय सूयते इति सुतः सुप्रसवैश्वर्ययोरित्यस्मात् कर्मणि निष्ठा सुता मैथिली सीता ददे जनकेनेत्यर्थात् कर्मणि लिट्। मैथिलस्यापत्यं अत इञ् तदन्तादितो मनुष्यजातेरिति ङीष्। रामस्य ज्येष्ठत्वात्तस्यैव कविना परिणय उक्तः न शेषाणां तेन अन्या अपि तदैव दुहितरो दत्ताः। हिरण्मयी सुवर्णनिर्मितेव साललता वृक्षलता सुवर्णच्छवित्वात् तस्याः हिरण्यविकार इति मयटि दाण्डिनायनेत्यादिना यलोपनिपातनम्। जङ्गमा सञ्चारिणी न तु स्थावरा भृत्यर्थं गच्छतीति यङि नुगत इति मुक् यचन्तात्पचाद्यचि यङोऽचि चेति यङो लुक्। च्युता दिवः आकाशात् पतिता अचिरप्रभेव विद्युदिव तेजस्वित्वात् तन्वीत्वाच्च किन्तु स्थास्नुरचञ्चला सा तु चञ्चलेति व्यतिरेकः, ऋतुञ

लब्धां ततो विश्वजनीनवृत्तिस्तामात्मनीनामुदवोढ रामः।
सद्रत्नमुक्ताफलभर्मभूषां संबंहयन्तीं रघुवंश्यलक्ष्मीम्॥ ४८॥

---

इति ऊङ् न भवति क्रियाशब्दत्वात् तत्र मनुष्यजातेरिति वर्त्तते शशाङ्ककान्तेर्याधिदेवता अधिष्ठात्री देवता तस्या आकृतिर्यस्याः सौम्यत्वात्, आक्रियते अनयेत्याकृतिः संस्थानम् अकर्त्तरि कारकेति स्त्रियां क्तिन्॥ ४७॥ ज० म०

हिरण्मयीत्यादि। अर्थात् जनकेन तस्य दशरथस्य सुताय मैथिली सुता ददे मैथिलस्यापत्यं स्त्रीति ष्णः यद्वा मिथिलायां नगर्य्यां अर्थात् मिथिलाख्यभूभागे जाता अयोनिसम्भवत्वात् पार्थिवीत्यर्थः अयोनिसम्भवत्वेन दिव्यत्वाल्लक्ष्मीत्वं सूचितम्। रामसमीपे सीता कीदृशी हिरण्मयी स्वर्णमयी सालवृक्षसम्बन्धिनी लतेव एतेन रामस्य सालवृक्षतुल्यत्वं सूचितम्। मयटि हिरण्यस्य यलोपो निपातनात्। जङ्गमा सञ्चारिणी अन्या लता स्थिरेति विशेषः। यद्यपि गत्यर्थाद्वक्रतायां यङ् स्यात्तथापि जङ्गमशब्दोऽयं रूढः। दिवः च्युता अचिरप्रभा विद्युदिव स्थास्नुः स्थितिशीला विद्युच्चञ्चला इति विशेषः। ग्लाजिस्थश्चेति स्नुः। अतिसौम्यत्वात् चन्द्रकान्तेरधिदेवताया अधिष्ठातृदेवताया इवाकृतिर्यस्याः॥ ४७॥ भ०

लब्धामित्यादि। ततो दानानन्तरं लब्धां तामात्मनीनाम् आत्मने हितां आत्मविश्वेति खः। रामः उदवोढ वहेः स्वरितेत्त्वात्कर्त्तुः क्रियाफलविवक्षया तङ्। विश्वजनीना विश्वजनाय हिता वृत्तिः प्रवृत्तिर्यस्य रामस्य स पूर्ववत् खः। सती उत्कृष्टा रत्नादिशोभा यस्याः तैरलङ्कृतत्वात् तां सद्रत्नमुक्ताफलभर्मशोभां भर्म स्वर्णं सर्वधातुभ्यो मनिन्। भर्मभूषामिति पाठान्तरम्। सद्रत्नादिभूषा अलङ्कारो यस्या इति योज्यम्।

सुप्रातमासादितसम्मदं तद् वन्दारुभिः संस्तुतमभ्ययोध्यम्।
अश्वीयराजन्यकहास्तिकाढ्यमगात्स्वराजं बलमध्वनीनम् ॥४९॥

---

गुरोश्च हल इत्यकारः। संवंहयन्तीं सम्बहुलामतिस्थिरां कुर्वाणाम् बहुलशब्दात्तत्करोतीति णिचि इष्ठवद्भावात् प्रियस्थिरेत्यादिना वंहादेशः पश्चात्तदन्तस्य सम्पूर्वस्य साधनेन योगः। कामित्याह रघुवंश्यलक्ष्मीमिति रघुवंशे भवां विभूतिं वर्गान्ताच्चेत्यनुवृत्तौ अशब्दे यत् खावन्यतरस्यामिति यत् ॥४८॥ ज० भ०

लब्धामित्यादि। ततोऽनन्तरं आत्मने हितां लब्धां तां सीतां राम उदवोढ उत्पूर्ववहः परिणये, सहवहोऽदोढीति अत ओत्वं, दन्त्यवत्वात् भत्वाभावः। विश्वेषां जनानां हिता वृत्तिर्व्यवहारो यस्य विकारसंघेत्यादिना हितार्थे ईनः मन्त्रेत्यादिना आत्मनो नलोपाभावः। सद्रत्नानि मुक्ताफलानि भर्माणि भूषा अलङ्कारो यस्याः शोभामिति पाठे तैः शोभते पचादित्वादच्। सती वर्त्तमाना रत्नादीनां शोभा यत्रेति वा। हेम स्वर्णं जातरूपं सुवर्णं भर्म हाटकं शातकुम्भमिति हलायुधः। रघुवंश्यलक्ष्मीं संवंहयन्तीं सम्यक् बहुलीकुर्वतीं लेः कृत्याख्याने णिः वाढान्तिकेति वंहादेशः ॥ ४८ ॥ भ०

सुप्रातेति। विवाहं निर्वर्त्त्य प्रभाते अयोध्याभिमुखं तत् बलं दशरथस्यागात् गतवत्। सुप्रातं निरुपद्रवत्वात् शोभनं प्रातर्दिनमुखं यस्य बलस्य। सुप्रातसुश्वेत्यादिना समासान्तष्टिलोपश्च निपात्यते। आसादितसम्मदं प्राप्तहर्षं प्रमदसम्मदौ हर्षं इति निपातनम्। वन्दारुभिः संस्तुतं कृतस्तवम् अभ्ययोध्यम् अयोध्याभिमुखम् अभिप्रती आभिमुख्य इति अव्ययीभावः। अश्वानां समूहो अश्वीयं केशाश्वाभ्यां यञ्छा-

विशङ्कटी वक्षसि बाणपाणिः सम्पन्नतालद्वयसः पुरस्तात् ।

---

विति छः । राजन्यानां क्षत्रियाणां समूहो राजन्यकम् । गोत्रोक्षेत्यादिना वुञ् प्रकृत्याकेराजन्यमनुष्ययुवान इति प्रकृतिभावादपत्ययकारलोपो न भवति । हस्तिनां समूहो हास्तिकम् अचित्तहस्तीति ठक् । एषां सेनाङ्गत्वात् द्वन्द्व एकवद्भावः तेनाढ्यमुपचितमिति तृतीयेति योगविभागात् समासः । सह राज्ञेति विग्रह्य साकल्यवचने यौगपद्ये अव्ययीभावः । वाव्ययीभावे चाकाल इति सभावः अनश्चेति टच् समासान्तः । अध्वनीनमध्वानमलङ्गामीत्यध्वनो यत् खौ आत्माध्वानौ खे इति प्रकृतिभावः ॥ ४९ ॥ ज० म०

सुप्रातमित्यादि । तत् बलं दशरथसैन्यं अभ्ययोध्यं अयोध्यामभिमुखीकृत्य अगात् इणो गा लुङि शोभनं प्रातर्यस्य तत् सुप्रातं निश्चिन्तत्वात् निपातनेन स्वार्थे क्षेन वा साध्यम् । आसादितः प्राप्तः सम्मदो हर्षो येन, वन्दारुभिः स्तुतिपाठकैः संस्तुतं वदिङ्नुत्यभिवादयोः शृवन्द्य आरुः अश्वराजन्यहस्तिनां समूहेन आढ्यं प्रभूतं विकारसंघेत्यादिना समूहार्थे अश्वादीयः राजन्यहस्तिभ्यां कण् राज्ञा सह विद्यमानं सराजं राजसहितं अनवशिष्टं युगपद्वा इत्यर्थः । वः कसामीप्येति साकल्ये यौगपद्ये वा अव्ययीभावः अन इत्यनेनाप्रत्ययः । सहः सोऽकाले इति सः अध्वानमनुगच्छति ढखेकादिति ईनः मन्वर्जानित्यादिना नलोपाभावः ॥ ४९ ॥ भ०

विशेत्यादि । एवमस्य गच्छतः पथि मार्गे सप्तम्यां भस्य टेर्लोपः, पुरस्तादग्रतः अस्ताती चेति पूर्वस्य पुरादेशः । रामो जामदग्न्यः जमदग्नेरपत्यं रामोऽयम् गर्गादिपाठाद्यञ्, स ऐति स्म आगतवान् आङ्पूर्वादिणो लट्, एत्येधत्यूट्स्विति

भीष्मो धनुष्मानुपजान्वरत्निरैति स्म रामं पथि जामदग्न्यः ॥५०॥
उच्चैरसौ राघवमाह्वतेदं धनुः सबाणं कुरु मातियासीः ।

ङ्घ्रिः । विशङ्कटो वक्षसि विशाल उरसि वेः शालच्छङ्कट-चाविति शङ्कटच् । बाणः पाणावस्येति बाणपाणिः प्रहरणार्थेभ्य इत्यादिना सप्तम्यन्तस्य परनिपातः । सम्पन्नो निष्पन्नो यस्तालवृक्षः स प्रमाणं यस्य स तथोक्तः प्रमाणे द्वयसच् । भीयते अस्मादिति भीष्मः भियः षुग्वेति औणादिको मक्-प्रत्ययः वा षुगागमश्च । भीमादयोऽपादाने साधुः । धनुष्मान् धनुषा युक्तः संसर्गे मतुप् । जानुनोः समीपमुपजानु सामीप्येऽव्ययीभावः उपजानु अरत्निर्यस्य स तथोक्तः प्रलम्ब-बाहुरित्यर्थः ॥ ५० ॥ ज० म०

विशङ्कट इत्यादि । अथ जामदग्न्यः परशुरामः पुरस्तात् पूर्वस्यां दिशि अग्रतो वा पथि रामम् ऐति स्म आगतः जमदग्नेरपत्यमिति गर्गादित्वात् ण्यः, पुरस्तादिति दिक्शब्दाद्दिग्देशकाले स्तादिति स्तात्, पूर्वाधरावरा इति पुरादेशः । वक्षसि विशङ्कटो विशालः बाणः पाणौ यस्य बाणयुतः पाणिर्यस्येति वा । संम्पन्नो विशालो यस्तालवृक्षः स परिमाणं यस्य दघ्नमात्रद्वयसण्माने इति द्वयसः, बिभेत्यस्मात् भीष्मो निपातनात् । धनुष्मान् प्रशस्तधनुर्युक्तः मतुरस्त्यर्थे जानुनोः समीपमुपजानु तत्रारत्निर्यस्य दीर्घबाहुत्वात् अरत्निस्तु निष्कनिष्ठेन मुष्टिना इत्यमरः । रत्नारत्नी स्त्रियौ हस्तौ बद्धमुष्टितलाङ्गुली इत्यमरमाला ॥ ५० ॥ भ०

उच्चैरित्यादि । उच्चैर्महता ध्वनिना राघवं दाशरथिं एवं वक्ष्यमाणमाह्वत आह्वतवान् स्पर्द्धायामाङ इत्यात्मनेपदम् आत्मनेपदेष्वन्यतरस्यामिति च्लेरङ् । धनुः सबाणं कुरु

पराक्रमज्ञः प्रियसन्ततिस्तं नम्रः क्षितीन्द्रोऽनुनिनीषुरूचे ॥५१

धनुषि बाणमारोप्य युद्धाय सज्जीभवेत्यर्थः मातियासीः मातिक्रम्य गमनङ्कार्षीः यातेर्माङि लुङ् अडभावः यमरमनमातां सक्चेति इट्, इट ईटीति सिचो लोपः। अथ क्षितीन्द्रो दशरथः तमूचे ब्रुवो वचिः आदेशस्य स्थानिवद्भावेन कर्त्तुः क्रियाफलविवक्षायां तङ्, न वचेः परस्मैपदित्वात् वच्यादिना सम्प्रसारणम्। पराक्रमज्ञः यतस्तस्य पराक्रमं जानाति राजा प्रियसन्ततिः प्रिया सन्ततिर्यस्य रामे व्यापादिते मा भूत् सन्तानविच्छेद इति नम्रः प्रणतो भूत्वा अनुनिनीषुः अनुनेतुमिच्छुः। तदनुनयमाह ॥ ५१ ॥ ज० म०

उच्चैरित्यादि। असौ परशुरामः उच्चैर्महाशब्देन राघवं राममाहृत स्पर्द्धयामास आह्वानं कृतवान् स्पर्द्धायामाङ इति ह्वेञो मं वक्तव्यस्यख्यालिपेति ङः। इदं मदीयं धनुः सबाणं कुरु अत्रैव बलं ज्ञात्वा युद्धं करिष्यामि एतावतैव पराजितोऽहमिति भावः। अन्ये तु इदं त्वदीयं धनुः सबाणं कुरु धनुषि बाणमारोप्य युद्धाय सज्जीभवेत्यर्थः इत्याहुः इदमिति हस्तनिर्दिष्टत्वादुक्तं मातियासीः मातिक्रम्य गच्छ मेत्यव्ययं निषेधे तद्योगेऽम्निषेधः यमरमनमेति इमसनौ। अथ क्षितीन्द्रो दशरथस्तं जामदग्न्यमूचे वचोऽरे इति ब्रुञो वचादेशः स्थानिवद्भावात् कर्त्तुः क्रियाफलवत्त्वविवक्षायां मं व्यथयहेति खेर्जिः ग्रहस्वपाद्योरिति प्रकृतेर्जिः। स किम्भूतः पराक्रमज्ञः परशुरामस्य पराक्रमं जानाति प्रिया सन्ततिः सन्तानो यस्य प्रियसन्तानः अतएव नम्रः प्रणतः सन् अनुनिनीषुः अनुनेतुमिच्छुः ॥ ५१ ॥ भ०

अनेकशो निर्जितराजकस्त्वं पितॄनतार्प्सीर्नृपरक्ततोयैः ।
संक्षिप्य संरम्भमसद्विपक्षं कास्थार्भकेऽस्मिंस्तव राम ! रामे ॥५२॥

---

अने इत्यादि । संरम्भं क्रोधं संक्षिप्य उपसंहर क्षिपेः लोटि मध्यमैकवचने रूपं श्यन् एकमेकमिति विगृह्य सङ्ख्यै-कवचनाच्चेति शस् पश्चान्नञ्समासः । अनेकशोऽनेकप्रकार-मिति क्रियाविशेषणमेतत् निर्जितं पराजितं राजकं राज्ञां समूहो येन स निर्जितराजकः गोत्रोक्षेत्यादिना वुञ् । त्वं पुनः पितॄनतार्प्सीः प्रीणितवानसि कैः नृपरक्ततोयैः तृप प्रीणन इत्यस्माल्लुङ् सिच् हलन्तलक्षणा वृद्धिः । असद्विपक्षम् असन्न विद्यमानो विपक्षो यस्मिन् संरम्भे । निर्जितराजकत्वात् रामो विपक्ष इति चेदाह कास्थार्भकेऽस्मिंस्तव राम ! रामे हे परशुराम ! अर्भके बालके रामे तव का आस्था क आदरोऽस्ति नैवेत्यभिप्रायः ॥ ५२ ॥ ज० म०

अनेकश इत्यादि । हे राम ! हे परशुराम ! संरम्भं क्रोधं संक्षिप्य संहर क्षिप्यौनुदि अनेकवारं निर्जितं राजकं येन तथाभूतस्त्वं अतः क्रोधो न युक्तः नृपाणां रक्तानि रुधिरा-ण्येव तोयानि तैस्त्वं पितॄन् अतार्प्सीः प्रीणितवान् एकविंश-तिवारान् निःक्षत्रीकृत्य तद्रक्तैः पितृतर्पणकरणं तस्य प्रसिद्धं त्रिल्तृप प्रीणने कृषमृषस्तृपेति विकल्पात् सिः वेसूदिति रधादित्वाद्विकल्पेमभावपक्षे व्रजवदेति व्रिः । संरम्भं कीदृशं असन्न वर्त्तमानो विपक्षो यत्र तादृशम् । निर्जितराजकत्वात् रामो विपक्ष इति चेदाह अस्मिन् मत्पुत्रे रामे अर्भके बालके तव का आस्था आदरो यत्नो वा ? न कापीति भावः । आस्था चालम्बनास्थानयत्नापेक्षासु कथ्यते इति विश्वः । राम-पदद्वयेन नामसाम्यादपि क्रोधो नोचित इति व्यज्यते ।

अजीगणद्दाशरथं न वाक्यं यदा स दर्पेण तदा कुमारः ।
धनुर्व्यकार्षीद् गुरुबाणगर्भं लोकानलावीद्विजितांश्च तस्य ॥५३॥

---

अनेकश्च एकमेकं इति विगृह्य संख्यैकार्थाद्वीप्सायामिति चशस् पश्चान्नञ् समासः । अनेकस्यापि संख्यावाचित्वात् तत एव चशस् इत्येके । राजकमिति विकारसंघेति राज्ञः समूहार्थे कण् ॥ ५२ ॥ भ०

अजीगेत्यादि । दाशरथं दशरथस्येदं दाशरथं तस्येदमित्यण्, वाक्यं वचनं यदा स्वदर्पेण स्वमदेन हेतुना जामदग्न्यः नाजीगणत् न गणितवान् गणसङ्ख्यान इत्यस्यादन्तत्वान्न वृद्धिः चङि चेति द्विर्वचनम् ईचगण इति अभ्यासस्येकारः । तदा कुमारो रामो धनुर्व्यकार्षीत् आकृष्टवान् कृष आकर्षणे स्पृशमृशेत्यादिनोपसङ्ख्यानेन सिचि पक्षे रूपम्, हलन्तलक्षणा वृद्धिः, षढोः कस्सीति कत्वम् । कृतदारकर्मापि पुत्रः पितरि जीवति कुमार इति व्यपदिश्यते । गर्भयतीति गर्भः गुरुर्बाणो गर्भो यस्य धनुषः लोकांश्च स्वप्रभावाद्विजितान् तस्य परशुरामस्य अलावीत् छिन्नवान् लुनातेर्लुङि सिचि वृद्धौ रूपम् । समुच्छिद्यन्तामस्य लोका इति अमोघमस्त्रं मुक्तवानित्यर्थः ततः प्रभृति तस्य सर्वं तेजोऽपहृतम् ॥ ५३ ॥ ज० म०

अजीगणदित्यादि । यदा स जामदग्न्यः दाशरथं वाक्यं दर्पेण दर्पात् न अजीगणत् न गणितवान् दशरथस्येदमिति विकारसंघेत्यादिना णः । गणक संख्याने वेङ्गणकथः खेर्ज्यङीति खेरीट् । तदा कुमारो युवराजो बालको रामो धनुर्व्यकार्षीत् आकृष्टवान् कृषौ त्वाकृषि कृषमृषेति सिः व्रजवदेति व्रिः, षढो कः सेति कः, क्रिलादिति षः । कीदृशं धनुर्गुरु महत् बाणो गर्भ इव मध्यवर्त्ती यत्र बाणो गर्भे यस्येति

जिते नृपारौ सुमनीभवन्ति शब्दायमानान्यशनैरशङ्कम् ।
वृद्धस्य राज्ञोऽनुमते बलानि जगाहिरेऽनेकमुखानि मार्गान् ॥ ५४

वा गुर्विंति बाणविशेषणं वा । ततस्तस्य जामदग्न्यस्य विजितान् वशीकृतान् लोकान् सर्वानलावीत् छिन्नवान् तत्र गमनं निषिद्धवानित्यर्थः लुञ्गिच्छिदि टी ॥ ५३ ॥ भ०

जित इत्यादि । जिते नृपारौ परशुरामे बलानि सैन्यानि मार्गान् पथः जगाहिरे अवष्टब्धवन्ति । वृद्धस्य राज्ञो दशरथस्यानुमते सति गच्छतेति । जामदग्न्यसंरम्भादसुमनांसि सुमनांसि सन्ति सुमनीभवन्ति बलानि अरुर्मन इत्यादिना च्वावन्त्यस्य लोपे अस्य च्वावितीत्वे रूपम् । शब्दायमानानि अशनैः सुष्ठु शब्दं कुर्वाणानि एवं जितस्तथा जितो नृपारिरिति शब्दवैरेत्यादिना क्यङ् । अशङ्कं निर्भयं जगाहिरे इति क्रियाविशेषणम् । अनेकमुखानि पृथग्भूतानि पूर्वभयेन बहुलीभूतत्वादनीकानां बहुवचनमिति ॥ ५४ ॥ ज० म०

जित इत्यादि । नृपाणां अरौ परशुरामे रामेण जिते सति वृद्धस्य राज्ञो दशरथस्यानुमते अनुमतौ सत्यां बलानि सैन्यानि अशङ्कं यथा स्यात्तथा मार्गान् पथो जगाहिरे आक्रान्तवन्ति गा ह्रुङ् विलोडे । कीदृशानि पूर्वं जामदग्न्यभयात् असुमनांसि सुमनांसि भवन्ति च्विः कृभ्वस्त्वभूततद्भावे इति च्विः । मनश्चचुरिति सलोपे अकारस्य ईः । अशनैरुच्चैः शब्दायमानानि जयशब्दं कुर्वाणानि शब्दसखकष्टादेरिति ङ्यः घोञ्ज्यरे इति दीर्घः । अनेकमुखानि पूर्वं भयात् वर्तुलीभूय सम्प्रति पृथग्भूतानि ॥ ५४ ॥ भ०

पथेत्यादि । अथेत्यानन्तर्ये बलं दाशरथं तूर्णं शीघ्रम् ऋषमत्वरेत्यादिना पचे इड़भावः । ञ्वरत्वरेति वकारोप·

अथ पुरुजवयोगान्नेदयद् दूरसंस्थं
द्रवयदतिरयेण प्राप्तमुर्वीविभागम् ।
क्लमरहितमचेतन्नीरजीकारितक्ष्मां
बलमुपहितशोभां तूर्णमायादयोध्याम् ॥ ५५ ॥

इति भट्टिकाव्ये प्रकीर्णकाण्डे सीतापरिणयो नाम
द्वितीयः सर्गः ।

---

धयोरूट् रदाभ्यामिति नत्वम् । अयोध्यामायात् आगतम् आङ्पूर्वाद्यातेर्लङि रूपम् । पुरुर्महान् वेगो जवः तेन योगात् पूर्य्यते वर्द्धते इति पुरः कुब्ज्रश्चेत्यधिकृत्य पृभिदिव्यधीत्यादिना कुप्रत्ययः । दूरसंस्थं दूरे सन्तिष्ठत इति कः । उर्वीविभागं नेदयत् अन्तिकं कुर्वत् अन्तिकशब्दात् समीपवाचिनः तत्करोतीति णिच्, इष्ठवद्भावादन्तिकवाढयोर्नेदसाधाविति नेदादेशः पश्चाल्लट् शतरि शप् अयादेशः । प्राप्तं विषयीकृतं चोर्वीविभागं भूविभागम् अतिरयेण अतिवेगेन द्रवयत् दूरीकुर्वत् पश्चाद्भागेन दूरशब्दात् पूर्ववण्णिचि इष्ठवद्भावे च स्थूलदूरेत्यादिना यणादिपरलोपः पूर्वस्य च गुणः पश्चात्तथा एव लडादयः । क्लमरहितम् अपगतश्रमम् अचेतत् कियद्दूरमागतोऽहमित्यबुध्यमानम्, चितीसंज्ञान इत्येतस्य शतरि रूपम् । अनीरजा नीरजाः कारितेति अरुर्मन इत्यादिना च्वावन्त्यलोपः । अस्य च्वावितीत्वम् नीरजीकारिता क्ष्मा भूमिर्यस्यामयोध्यायां तां सिक्तसंसृष्टभूतलामित्यर्थः । उपहितशोभां छत्रध्वजपताकाभिरारोपितशोभाम् ॥ ५५ ॥ ज० भ०

इति भट्टिकाव्यटीकायाञ्जयमङ्गलाख्यायाम्प्रकीर्णकाण्डे
सीतापरिणयो नाम द्वितीयः सर्गः ।

अथेत्यादि । अथानन्तरं बलं दशरथसैन्यं तूर्णं शीघ्रं

# तृतीयः सर्गः ।

वधेन संख्ये पिशिताशनानां क्षत्रान्तकस्याभिभवेन चैव ।
आढ्यम्भविष्णुर्यशसा कुमारः प्रियम्भविष्णुर्न स यस्य नासीत् ॥१

---

अयोध्यां आयात् आङ्-पूर्वाद्यातेर्ह्यीँ। त्वरतिः क्तो श्विवावमवज्वरेति ऊठा सह वस्य ऊट् सूत्वाद्योदिति क्तस्य नत्वम्। कीदृशं पुरुजवयोगात् प्रचुरजवयोगात् दूरसंस्थं नेदयदन्तिकं कुर्वत् लेः कल्याख्याने ञिः वाढान्तिकेति नेदादेशः। अतिरयेण अतिवेगेन प्राप्तं उर्व्वीविभागं दवयत् दूरं कुर्वत् ञिः दवादेशः। क्लमरहितम् अतिहर्षात् अपगतश्रमम् अतएव अचेतत् कियद्दूरमागतमित्यजानत् चिती संज्ञाने शवः। कीदृशीमयोध्यां अनीरजा नीरजाः कारिता निर्धूलीकारिता क्ष्मा भूमिर्यस्यां सिक्तसंमृष्टभूतलामित्यर्थः मनश्चक्षुरिति च्वौ सलोपः। उपहितशोभां ध्वजपताकादिभिः प्रापितदीप्तिम् ॥ ५५ ॥ भ०

इति भरतसेनकृतायां मुग्धबोधिन्यां भट्टिटीकायां
श्रीरामपरिणयो नाम द्वितीयः सर्गः।

---

वधेतेत्यादि। संख्ये संग्रामे पिशिताशनानां राक्षसानां पिशितं मांसम् अशनं येषामिति तेषां वधेन हननेन हनश्च वध इति अप्प्रत्यये वधादेशः कृद्योगे कर्मणि षष्ठी। क्षत्रान्तकस्य परशुरामस्य अभिभवेन पराजयेन च ऋदोरप् चैवशब्दो निपातसमुदायः समुच्चये। तेन हेतुभूतेन यशसा आढ्यम्भविष्णुः अनाढ्य आढ्यो भूतः कर्त्तरि भुव इति खिष्णुच्, अरु·

ततः सुचेतीकृतपौरभृत्यो राज्येऽभिषेक्ष्ये सुतमित्यनीचैः ।
आघोषयन् भूमिपतिः समस्तं भूयोऽपि लोकं सुमनीचकार॥२

द्विषदिति सुम्, कुमारो यस्य न प्रियम्भविष्णुः यस्यापि प्राक् प्रियो न जातः पश्चादपि तथैव न प्रियो भूतः स नासीत् न बभूव ॥ १ ॥ ज० म०

बधेनेत्यादि। संख्ये युद्धे पिशिताशनानां राक्षसानां बधेन क्षत्रियाणामन्तकस्य परशुरामस्य अभिभवेन च हेतुना यशसा आढ्यम्भविष्णुः समृद्धो भवन् कुमारो रामो यस्य न प्रियम्भविष्णुः स नासीदेव सर्वस्यैव प्रिय इत्यर्थः। एवशब्दो नासीदित्यत्रान्वितः, चैवशब्दः समुच्चये वा। अनाढ्य आढ्यो भवति इति प्रागप्रियोऽपि भूत्वा पश्चात् प्रियो भवति भुवो घे खिष्णुखुकञाविति घे खिष्णुः, खित्यव्याजरुष इति मन्, अस्तेर्घ्यां रुदाद्यस्तीति ईम् ॥ १ ॥ भ०

तत इत्यादि। ततः प्रियम्भविष्णुताया अनन्तरं भूमिपतिर्दशरथो लोकं सुमनीचकार किमयं सम्यक् पालयिष्यति न वेति असुचेतसः पौरा भृत्याश्च जाताः ते सम्यक् पालनात् सुचेतसः कृता येन स सुचेतीकृतपौरभृत्यः भूयोऽपि पुनरपि लोकं समस्तं सुमनीचकार। कथमित्याह राज्ये राजकर्मणि पालने रक्षणे सुतं रामं अभिषेक्ष्ये तदभिषेकं करिष्यामीति सिचेरुभयपदित्वात्तङ्। अनीचैर्महता ध्वनिना आघोषयन् घोषणां कारयन् सुचेतीसुमनीशब्दौ अरुर्मन इत्यादिना साधू ॥ २ ॥ ज० म०

तत इत्यादि। ततोऽनन्तरं अहं राज्ये राजकर्मणि सुतमभिषेक्ष्ये अभिषिक्तं करिष्ये इति अनीचैरुच्चैराघोषयन् भूमिपतिर्दशरथः समस्तं लोकं भूयः पुनरपि सुमनीचकार असु-

आदिच्चदादीप्तकृशानुकल्पं सिंहासनं तस्य सपादपीठम् ।
सन्तप्तचामीकरवल्गुवज्रं विभागविन्यस्तमहार्घरत्नम् ॥ ३ ॥
प्रास्थापयत् पूगकृतान् स्वपोषं पुष्टान् प्रयत्नाद्दृढगात्रबन्धान् ।

---

सनसं सुमनसं कृतवान् । कीदृशः असुचेतसः सुचेतसः कृताः पौरा भृत्याश्च येन स तथा अभिषेककाले किमयं सम्यक् परिपालयिष्यति न वेत्याशङ्कया पौरभृत्यानामसुचेतस्त्वमासीत् सम्यक् पालनात् तेषां सुचेतस्त्वं कृतं रामस्य प्रियम्भविष्णुतया तदभिषेकमदृष्ट्वा पुनः पुनरसुमना लोक आसीत्. रामाभिषेकाघोषणया पुनः पुनः सुमनसं चकार सुचेतोसुमनोशब्दौ पूर्ववत् मनश्चक्षुरित्यादिना सिद्धौ सिच्पशौन् च्वरणे च्विति कङ् ॥ २ ॥ भ०

आदिच्चदित्यादि । तस्य रामस्य सिंहासनमादिच्चत् आदिष्टवान् एवंविधं कारयेति । दिशः स्वरितेतो लुङि शल इगुपधादित्यादिना च्लेः क्सः, अकर्तृगामिक्रियाफलत्वात्तिप् । आदीप्तकृशानुकल्पं ज्वलिताग्नितुल्यं तस्य कारणमाह सन्तप्तचामीकरवर्णानि उत्तप्तसुवर्णवर्णानि वज्राणि यस्मिन् तथा विभागेषु विन्यस्तानि अतिमहार्घाणि रत्नानि पद्मरागादीनि यत्र सपादपीठं सह पादपीठेन ॥ ३ ॥ ज० म०

आदिच्चदित्यादि । दशरथस्तस्य रामस्य सिंहासनम् आदिच्चत् आदिष्टवान् दिशो लुङ् अतिसर्जने टौ, हलशोऽनिमित्तुङ इति शक्, शच्छ्राजेति षङ्, षढोः कः से इति कः । कीदृशं सम्यक् ज्वलिताग्नितुल्यं त्यादेशौने इति कल्पः । पादपीठेन सहितं अग्नितुल्यस्वर्णशोभितहीरकं विशिष्टदेशार्पितमहामूल्यपद्मरागादिकम् ॥ ३ ॥ भ०

प्रास्थेत्यादि । तीर्थजलार्थं पुरुषान् प्रयत्नात् आदरेण

सभर्मकुम्भान् पुरुषान् समन्तात्पत्काषिणस्तीर्थजलार्थमाशु ॥४॥
उच्चांप्रचक्रुर्नगरस्य मार्गान् ध्वजान् बबन्धुर्मुमुचुः खधूपान् ।

---

समन्तात् सर्वासु दिक्षु आशु शीघ्रं प्रास्थापयत् प्राहिणोत् । प्रपूर्वस्तिष्ठतिर्गमने वर्त्तते तस्य हेतुमण्ण्यन्तस्य लङि रूपम् । पूगकृतान् अपूगाः पूगाः कृता इति श्रेण्यादिषु च्व्यर्थवचनमिति समासः, सङ्घीकृतानित्यर्थः । स्वपोषं पुष्टान् स्वे पुष इति णमुल् अमैवाव्ययेनेति समासः यथाविध्यनुप्रयोगश्च । दृढो गात्रबन्धो येषां तान् संयतकायान् महाभारोद्वहनक्षमत्वात् सहेमकुम्भान् ससुवर्णकलसान् पत्काषिणः पादौ कषितुं हिंसितुं शीलं येषामिति सुप्यजातौ णिनिः हिमकाषिहतिषु चेति पदादेशः पदातीनित्यर्थः । आश्विति कृवापाजीत्यादिना उण् ॥ ४ ॥ ज० म०

प्रास्थापयदित्यादि । दशरथस्तीर्थजलार्थं समन्तात् सर्वासु दिक्षु आशु शीघ्रं पुरुषान् प्रयत्नात् आदरात् प्रास्थापयत् प्रपूर्वस्थाधातुर्गत्यर्थः घौ, ञिः प्रेरणे क्रीङ्जीति पन्, पूगकृतान् अभिधानात् अपूगाः पूगाः कृता इति च्व्यर्थे समासः, सङ्घीकृतानित्यर्थः । स्वपोषं यथा स्यात्तथा पुष्टान् स्वानां ज्ञातीनां पोषो यत्र पोषणक्रियायां पोषो घञन्तः गतार्थात् पोषणम्, तदनुप्रयोगश्चेति पाणिनीयादयः, तन्मते स्वेन धनेन पुष्टानित्यर्थः । दृढो गात्राणां बन्धो येषां भारोद्वहनक्षमत्वात् स्वर्णकलससहितान् पादकषणशीलान् कषवधे ग्रहादित्वाणिन्, पादचारिण इत्यर्थः । अत्र पादस्य पदादेश इति पाणिनीयादयः, स्वमते पद्शब्दोऽस्ति । पदङ्घ्रिश्चरणोऽस्त्रियामित्यमरः । केन उम्यते पूर्य्यते इति कुम्भो निपातनात् ॥ ४ ॥ भ०

उच्चामित्यादि । ये निपुणा अर्थेषु कार्य्येषु राज्ञा दश-

दिशश्च पुष्पैश्चकरुर्विचित्रैरर्थेषु राज्ञा निपुणा नियुक्ताः ॥ ५ ॥
मातामहावाससमुपेयिवांसं मोहादपृष्ट्वा भरतं तदानीम् ।

रथेन नियुक्ताः अधिकृतास्ते नगरस्य मार्गान् पथः उच्चान् सिक्तवतः प्रचक्रुः । उच्चणमुच्चा गुरोश्च हल इत्यकारः, सा विद्यते येषामित्यर्श आदिभ्योऽच् इजादेश्च गुरुमत इत्यादिना आम्प्रत्यये प्रचक्रुरित्यनुप्रयोगो न घटते कृञ्चानुप्रयुज्यते इत्यनुशब्दस्य व्यवहितनिवृत्त्यर्थत्वात् । ध्वजान् बबन्धुः उच्छ्रायितवन्तः । मुमुचुः खधूपान् आकाशे घटिकादिभिर्धूपान् मुमुचुः प्रमुक्तवन्तः । दिशश्च पुष्पैश्चकरुः छादितवन्तः कॄ विक्षेप इत्यस्य लिटि ऋच्छत्यॄतामिति गुणः । विचित्रैः नानाप्रकारैः ॥ ५ ॥ ज० म०

उक्षामित्यादि । अर्थेषु प्रयोजनेषु राज्ञा नियुक्ता निपुणाः कर्मकुशला जना नगरस्य मार्गान् उक्षाम्प्रचक्रुः सिक्तवन्तः उक्ष सेचने वीजादित्याम् ध्वस्कृञ्चाम इति सूत्रे णाम् इति पञ्चम्यैवेष्टसिद्धौ अनुग्रहणं उपसर्गक्रियाविशेषणव्यवधानेऽपि तदनुप्रयोगज्ञापनार्थं इति रामानन्दाचार्य्येण व्याख्यातं तेनात्र तेनैव सोपसर्गस्य कृञोऽनुप्रयोगः । क्रमदीश्वरेण तु सप्रसादिकृभ्वस्तिभिश्चेति सूत्रं कृत्वा अयमेव श्लोको निदर्शितः । केचित्तु नगरस्य उक्षां सेकं प्रचक्रुः भग्नान् मार्गान् ध्वजांश्च बबन्धुरित्याहुः । जयमङ्गलादिस्तु उक्षानिति पठित्वा उक्षणमुक्षा सास्त्येषामिति अर्शआदित्वादच् इति व्याख्यातम् । ध्वजान् बबन्धुः उत्थापितवन्तः, खे आकाशे धूपान् मुमुचुः त्यक्तवन्तः, पुष्पैर्दिशश्चकरुश्छादितवन्तः कॄश विक्षेपे ॠतो णः कित्त्वामिति णः ॥ ५ ॥ भ०

मातेत्यादि । तत् पूर्वोक्तमभिषेकसंविधानं सोढुमशक्नु-

तत् कैकयी सोढुमशक्नुवाना ववार रामस्य वनप्रयाणम् ॥६॥

---

वना असहमाना कैकयी रामस्य वनप्रयाणं ववार प्रार्थितवती राज्ञ इत्यर्थात्। सहेः शक्नोतावुपपदे शकधृषेत्यादिना तुमुन् तत्र नञा शक्त्यर्थस्य प्रतिषेधेऽपि न दोषः प्रतिषेधस्य बहिरङ्गत्वात् शक्नोतेः परस्मैपदित्वात् शानज् नास्ति ताच्छील्यवयोवचनेत्यादिना चानश् स्वादित्वाच्छ्नुः अचिश्नुधात्वित्यादिना उवङ्। किं कृत्वेत्याह तदानीं प्रार्थनाकाले देशान्तरावस्थितत्वात् किमिवं क्रियते न वेति न भरतं पृष्टवती। देशान्तरावस्थितिं दर्शयन्नाह मातामहावासमिति मातुः पिता मातामहः पितृव्यमातुलेत्यादिना निपातनात् डामहच्। आवासः निलयम् आवसत्यस्मिन्निति अधिकरणे घञ्। उपेयिवांसम् उपेयिवाननाश्वाननूचानश्च इत्यादिना निपातितः। मोहादज्ञानात् दूतप्रेषणेनापृष्ट्वा रामस्येति कर्त्तरि षष्ठी। वनाय प्रयाणं गमनमिति चतुर्थीति योगविभागात् समासः। गत्यर्थकर्मणीत्यादिना चतुर्थी परत्वात् कृल्लक्षणया षष्ठ्या भवितव्यमिति चेत् न पुनर्द्वितीयाग्रहणात्परामपि षष्ठीं बाधित्वा द्वितीयैव यथा स्यादिति। यद्येवं द्वितयैव स्यात् न चतुर्थी नैष दोषः द्वितीयाग्रहणस्योपलक्षणार्थत्वात् तथा च वृत्तावुभयमुक्तं ग्रामं गन्ता ग्रामाय गन्तेति ॥ ६ ॥ ज० म०

मातामहेत्यादि। तदानीं तस्मिन् समये तत् पूर्वोक्तमभिषेकविधानं सोढुमशक्नुवाना असमर्था कैकयी मोहादज्ञानात् भरतम् अपृष्ट्वा रामस्य वनप्रयाणं ववार राजानं प्रार्थितवती। भरतं किम्भूतं मातामहावासमुपेयिवांसं उपगतम् अपृष्ट्वेत्यत्र हेतुरयं एतेन भरतदोषपरिहारः कृतः मातृपितृभ्यां तत्पितरि

कर्णेजपैराहितराज्यलोभा स्त्रैणेन नीता विकृतिं लघिम्ना।
रामप्रवासे व्यमृशन्न दोषं जनापवादं सनरेन्द्रमृत्युम्॥ ७॥

---

डामहट् निपातनात् आवसन्त्यस्मिन् आवासो गृहं अधिकरणे घञ् उपपूर्वाद्दिनः क्तः वसोर्घसिमाजितीम् खेः क्विति घ इति घः यिनाऽच्यणाविति यादेशः सहेश्वतुमि ह्वोढोभाविति हस्य ढः ढभात्तथोरिति तस्य धः ष्टुभिरिति धस्य ढः। सहवह्वोदोढीति अत ओत्वं ढ्रोढ्रीति ढलोपः शक्निरुशक्तौ शक्तिवयस्ताच्छील्ये इति शतुः शानः। वनाय वनस्य वा प्रयाणं वनप्रयाणं गत्यर्थमन्यढ इति चतुर्थी ढघेक्तीति क्तप्रयोगात् ढे षी अनयोर्विवक्षाधीनत्वात् चतुर्थ्या षष्ठ्या वा विग्रहः॥६॥ भ०

कर्ण इत्यादि। कर्णे जपन्ति कर्णेजपाः सूचकाः मन्थरादयः स्तम्भकर्णयोरित्यच् तत्पुरुषे कृति बहुलमिति सप्तम्या अलुक्, तैराहितः आनायितो राज्यलोभो यस्याः सैवं स्त्रैणेन स्त्रिया अयं स्त्रीपुंसाभ्यान्नञ्स्नञाविति नञ् लघोर्भावो लघिमा पृथ्वादित्वादिमनिच् टिलोपः, तेन विकृतिमन्यथात्वं नीता कैकयी रामप्रवासे सति दोषं न व्यमृशत् आलोचितवती मृश आमर्शन इति तौदादिकस्य लङि रूपम्। किंस्वरूपं दोषं जनापवादं लोकवैमुख्यं राज्यार्हो ज्येष्ठः पुत्त्रोऽनया प्रव्राजित इति। नरेन्द्रस्य दशरथस्य मृत्युना सह वर्त्तमानम्॥७॥ ज० म०

कर्णेजपैरित्यादि। कैकयी रामप्रवासे जनापवादरूपं दोषं न व्यमृशत् नालोचितवती मृशशौ मृशि राजार्हो ज्येष्ठोऽनया निष्काशित इति लोकापवादः किम्भूतं नरेन्द्रस्य दशरथस्य मृत्युना सहितं दोषानालोचने हेतुगर्भविशेषण-

वसूनि देशांश्च निवर्त्तयिष्यन्रामं नृपः सङ्गिरमाण एव।
तयावजज्ञे भरताभिषेको विषादशङ्कुश्च मतौ निचख्ने ॥ ८ ॥

---

माह कर्णजपैः पिशुनैर्मन्थरादिभिराहित आरोपितो राज्यस्य लोभो यस्याः कर्णे जपन्ति इति पचादित्वादन् अभिधानात् सप्तम्या अलुक्। परकीयवुद्ध्या दोषकर्तृत्वे हेतुमाह स्त्रैणेन स्त्रीसम्बन्धिना लघिम्ना लघुत्वेन विकृतिं प्रकृतेरन्यथात्वं नीता प्रापिता स्त्रिया अयं स्त्रैणः पुंस्त्रियोरिति नञ् लघो-र्भावो लघिमा गुणादिभ्यः इमन् भावे इति इमन् ओसंश्च डिदिति डित्वे टेर्लोपः ॥ ७ ॥ भ०

वसूनीत्यादि। रामं निवर्त्तयिष्यन् रामं निवर्त्तयितुं वसूनि द्रव्याणि देशांश्च सङ्गिरमाण एव प्रतिजानान एव दास्यामीति नृपो राजा कैकेय्या तदनङ्गीकरणादवजज्ञे अव-ज्ञातः ज्ञा इत्ययं धातुरवपूर्वोऽवज्ञाने वर्त्तते तस्मात् कर्मणि लिट् गमहनेत्युपधालोपः तत्र वृतेर्हेतुमण्ण्यन्तात् क्रियार्थो-पपदे लट्। सङ्गिरणञ्च क्रिया गिरिस्तौदादिकाद्वादश इति अधिकृत्य समः प्रतिज्ञान इति तङ् शानच् ऋत इत् आनेमुक्। इदञ्चापरमनुष्ठितं तया भरतो राज्येऽभिषिच्य-तामिति भरताभिषेको मतौ मनसि निचख्ने निखातः कर्मणि लिट् गमहनेत्यादिना उपधालोपः तथा विषादः शङ्कुरिव शल्यमिव निचख्ने ज्येष्ठत्वात् नायं समभिषिच्यत इति विषादः। संग्रामात्किल परिश्रान्तमागतं दशरथं कैकयी परिचचार तेन परितुष्टेनोक्तं किं ते दास्यामीति सा प्राह यदार्थयिष्यते तदा यूयं दास्यथेति सा तदवसरं बुद्ध्वा वरद्वयं प्रार्थितवती एको रामस्य वनगमनं द्वितीयो राज्ये भरतोऽ-भिषिच्यतामिति ॥ ८ ॥ ज० म०

ततः प्रविव्राजयिषुः कुमारमादिक्षदस्याभिगमं वनाय ।
सौमित्रिसीतानुचरस्य राजा सुमन्त्रनेत्रेण रथेन शोचन् ॥ ९ ॥

---

वसूनीत्यादि । रामं निवर्त्तयिष्यन् निवारयितुं केकय्यै वसूनि धनानि देशांश्च संगिरमाणः रामस्तिष्ठतु सर्वं दास्यामीति प्रतिजानान एव नृपो दशरथस्तया केकय्या तदनङ्गीकारात् अवजज्ञे अनादृतः पूर्वप्रतिज्ञातस्य तदभिमतप्रदानस्यानिर्वाहात् ज्ञावबोधने अवपूर्वोऽयमनादरे वर्त्तते कर्मणि ठो वृतिः प्रेरणे जन्तात् शद्धः गिरतेस्तौदादिकात् समः प्रतिज्ञायामिति मम् । भरताभिषेकस्तत्संशयित्वेन विषादरूपशङ्कुश्च मतौ मनसि निचख्ने चिन्तितः । यद्वा दशरथस्य नृपस्य मनसि भरताभिषेको निचख्ने आरोपितः तत् प्रार्थनायाः पूर्वं प्रतिज्ञाभयेन तत्स्वीकारात् शङ्कुरिव यो विषादः सोऽपि निचख्ने तत् प्रभृति विषादावतारात् खनेः कर्मणि ठो हनगमजनेत्युङ्लोपः । पुरा परितुष्टेन राज्ञा केकय्यै वरद्वयं देयमिति प्रतिश्रुतं तत्रेदानीमेकं रामस्य प्रवासनमपरं पुत्त्रस्य राज्यं केकयी प्रार्थयामासेति प्रसिद्धिः ॥ ८ ॥ भ०

तत इत्यादि । कैकेयीप्रार्थनानन्तरं राजा कुमारं रामं प्रविव्राजयिषुः प्रव्रजन्तमेनं प्रव्राजयितुमिच्छुः व्रजेर्हेतुमण्ण्यन्तात् सन् । अस्य कुमारस्य रथेन वनायाभिगममभिगमनम् । ग्रहवृदृनिश्चिगमश्चेत्यप् । आदिक्षत् आदिष्टवान् अस्येति कर्त्तरि षष्ठी, वनायेति गत्यर्थकर्मणीति चतुर्थी । सौमित्रिसीतानुचरस्य लक्ष्मणसीतासहायस्य सुमित्राया अपत्यम् बाह्वादित्वादिञ् सहचरत्वेनाभ्यर्हितत्वात् पूर्वनिपातः । अनु पश्चाच्चरतीति अनुचरः भिक्षासेनादायेषु चेति चकारस्यानुक्तसमुच्चयार्थत्वात् टः । अनुचरश्चानुचरी च पुमान् स्त्रियां तावनुचरौ

केचिन्निनिन्दुर्नृपमप्रशान्तं विचुक्रुशुः केचन सास्रमुच्चैः ।

---

सौमित्रिसीते अनुचरौ सहायौ यस्य। कालापिकास्ततोऽन्यत्रापि पठन्ति अनधिकरणोपपदे चरेष्टः इत्यर्थः। नीयतेऽनेनेति नेत्रं लोचनं दाम्नीत्यादिना ष्टन्। सुमन्त्रनामा रथवाहको नेत्रमिव यस्य रथस्य तद्वशात्तस्य प्रवृत्तेः शोचन् परिदेवयमानो राजा ॥ ८ ॥ ज० म०

तत इत्यादि। केकयीप्रार्थनानन्तरं राजा शोचन् कुमारं रामं प्रव्रज्यां कारयितुमिच्छुः अस्य रामस्य रथेन वनाभिगमनम् आदिष्टवान् हशस इत्यादिना सक्। व्रजिः प्रेरणे णन्तात् वनायेति गत्यर्थमन्यढे इति कर्मणि चतुर्थी। श्रीपतिदत्तादयस्तु नित्यं कर्मणि तुम्प्रयोगिनश्चतुर्थीत्याहुः। वनं गन्तुमित्यर्थः। कीदृशस्य रामस्य सीतालक्ष्मणसहायस्य सुमित्राया अपत्यम् इति बाह्वादित्वात् ष्णः अनुचरतीति अनुचरः कर्मप्रतिरूपकोऽयमनुशब्दः तेन हनचरगष्टक् इति टक्। रेफिकेत्तौ च परे इति निर्दिशता स्त्रीपुंसयोस्तन्मात्रकृतभेदयोरेकशेषः पुमान् भवतीति सूचितम्। तेन अनुचरश्च अनुचरी च अनुचरौ सौमित्रिसीते अनुचरौ यस्य स तथा। यद्वा सौमित्रिसीताभ्यामनुचर्य्यते यः स तथा घजलनटोऽघे इति कर्मणि अल्। प्राग्भावस्य विवक्षाधीनत्वात् सौमित्रेः प्राग्भावः अभ्यर्हितस्य प्राग्भाव इति ये वदन्ति तन्मते सदा सहचरत्वेन सौमित्रेरभ्यर्हितत्वम्। कीदृशेन रथेन सुमन्त्रो नाम कश्चित् स नेत्रो नायको यस्येति तेन। नेत्रं रथे च नाड्याञ्च नेत्रो नेतरि भेद्यवदिति विश्वः। सुमन्त्रो नेत्रं चक्षुरिव यस्येति केचित्। नोत्रः त्रासुसितित्रः ॥ ८ ॥ भ०

केचिदित्यादि। राज्ञा वनगमने समादिष्टे सति केचि-

ऊचुस्तथान्ये भरतस्य मायां धिक्केकयीमित्यपरो जगाद ॥१०॥
गतो वनं श्वोभवितेति रामः शोकेन देहे जननातिमात्रम् ।

ज्जना नृपं निनिन्दुः कुत्सितवन्तः णिदि कुत्सायाम् । अप्रशान्तं वृद्धभावेऽपि स्त्रीवशम् । केचन केचित्सास्रं सवास्रमुच्चैः सुष्ठु विचुक्रुशुः सुतरामाक्रन्दितवन्तः तथान्ये भरतस्य मायां शाठ्य-मूचुः उक्तवन्तः । तत्कृतोऽयं प्रयोगो तेनात्मस्मरणार्थं माता-महगृहनिवासि स्थितः इति भावः । अपरो धिक्केकयीं यथैव-मनुष्ठितमिति जगाद गदितवान् धिगुपर्य्यादिषु त्रिष्विति धिग्योगे द्वितीया ॥ १० ॥ ज० म०

केचिदित्यादि । राज्ञि रामस्य वनगमनमादिष्टवति सति केचिज्जना नृपं निनिन्दुः णिदि कुत्सने । कोदृशं अप्र-शान्तं वार्द्धकेऽपि स्त्रीवशीभूतत्वात् शान्तिरहितम् । केचन सास्रं सवास्रं उच्चैर्महाध्वनिना विचुक्रुशुः क्रन्दितवन्तः । केचित् केचन इत्यत्र किमः त्र्यन्ताच्चिच्चणाविति विद्यानिवाससूत्रेण चिच्चणौ किंवा असाकल्ये तु चिच्चणाविति कोषात् विभक्त्य-न्तकिमः परमनयोः प्रयोगः । अन्ये भरतस्य मायां शाठ्यं ऊचुः मातरमेव राज्यलोभाय नियुज्य स्वदोषहरणार्थं मातामहगृहं गतवानिति मायार्थः । अपरः कश्चित् केकयीं धिगिति जगाद धिक् समयेति द्वितीया । धिगिति निन्दायाम् अपर इत्यत्र एकत्र एकवचनात् अल्प एव लोकः केकयीं निन्दति बहवस्तु राजानं केकय्याः स्त्रीत्वेन स्वभावतो मन्दबुद्धित्वं नृपस्य तु तथाविधस्यापि स्त्रीवचनान्मतिभ्रंश इति महान् दोष इति व्यज्यते तेन प्रक्रमभङ्गोऽत्र न दोषावहः ॥१०॥ भ०

गत इत्यादि । श्व आगामिनि दिवसे वनङ्गतो रामो भवितेति तास् जनता जनसमूहः ग्रामजनबन्धु इत्यादिना

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



धीरास्तु यत्र च्युतमन्यवोऽन्ये दधुः कुमारानुगमे मनांसि ॥११॥
प्रस्थास्यमानावुपसेदुषस्तौ शोशुच्यमानानिदमूचतुस्तान् ।
किं शोचतेहाभ्युदये वतास्मान् नियोगलाभेन पितुः कृता-
र्थान् ॥१२॥

---

ताल्, देहे दग्धा कर्मणि लिट्, अतएकहलित्येत्वाभ्यासलोपौ गत इति भूतकालः श्वोभवितेति भविष्यत्कालेन सम्बध्यमानः साधुः धातुसम्बन्धे प्रत्यया इति। ये तु तत्र धीराः ते च्युतमन्यवो विगतशोकाः सन्तः कुमारानुगमे कुमारस्य पश्चाद्गमननिमित्तं मनांसि दधुः कृतवन्तः राममनुव्रजाम इति निमित्तात्कर्मसंयोगे सप्तमीति। मनांसीति कर्मणा योगात् ॥ ११ ॥ ज० म०

गत इत्यादि। रामः श्वो भाविदिने वनं गतो भविता इति हेतोः शोकेन जनता जनसमूहोऽत्यर्थं देहे दग्धा दहेः कर्मणि ठौ तृफलेति अत एत्वं खिलोपश्च। जनखनादित्वाज्जनात्तः सङ्गे स्त्रीत्वमभिधानात् भवितेति भवद्भूतभव्ये इति भविष्यति डो श्वः प्रभृति भविष्यत्कालमात्रे अभिधानात् श्व इति न व्यर्थं तत्सम्बन्धात् गत इति धातुसम्बन्धे प्रत्यया इति वचनात् भविष्यत्कालेऽपि साधुः। अन्ये तु तत्र ये धीरास्ते च्युतममन्यवो विगतशोकाः सन्तः कुमारस्य रामस्य पश्चाद्गमने मनांसि दधुर्धृतवन्तः धाञश्च्या रूपम्, अनुगम इति ढेनार्थादिति सप्तमी विषयसप्तमी वा ॥ ११ ॥ भ०

प्रस्थेत्यादि। तौ रामलक्ष्मणौ प्रस्थास्यमानौ गमिष्यन्तौ समवप्रविभ्यः स्थ इति तङ्, जनान् इदं वक्ष्यमाणमूचतुः उक्तवन्तौ ब्रवीत्यर्थग्रहणात् वचेर्द्विकर्मकता, उपसेदुषस्तौ ढौकितवतः जनान् भाषायां सदवसेत्यादिना क्वसुः। शोशुच्यमा-

असृष्ट यो यश्च भयेष्वरक्षीद् यः सर्वदास्मानपुषत् स्वपोषम्।
महोपकारस्य किमस्ति तस्य तुच्छेन यानेन वनस्य मोक्षः ॥१३

नान् अत्यर्थं शोकं कुर्वतः भृशार्थे यङ्। किमूचतुरित्याह किं शोचतेति हे जनाः! कस्मादस्मान् शोचत परिदेवयध्वम् विधावपूर्वार्थप्रकाशने लोट्, इहाभ्युदये वतशब्दो विस्मये तस्मिन् आश्चर्यभूते अभ्युदये वृद्धौ सत्याम्। कुत इत्याह पितुर्नियोगलाभेन वनगमनाज्ञालाभेन कृतार्थान् लब्धप्रयोजनान् कृतार्थत्वादशोच्या वयमित्यर्थः ॥ १२ ॥ ज० म०

प्रस्थास्यमानावित्यादि। प्रस्थास्यमानौ गमिष्यन्तौ तौ रामलक्ष्मणौ उपसेदुषः उपसन्नान् जनानिदं वक्ष्यमाणम् ऊचतुः। किम्भूतान् शोशुच्यमानान् पुनः पुनरतिशयेन शोचतः सूवसूत्वेत्यादिना यङ् खेर्नुः प्रस्थास्यमानावित्यर्थः। प्रतिज्ञानिर्णयेत्यादिना संपूर्वात् तिष्ठतेर्मं स्यमानः। उपसेदुष इति उपपूर्वात् सदेष्ठीपमवदिति क्वसुः वसोर्घसे इतीम् तृफक्वेति अत एत्वं खिलोपश्च वसोर्वः सेमपीति उः। किमूचतुरित्याह इहाभ्युदये वृद्धौ सत्यां किमस्मान् यूयं शोचत विधिनिमन्त्रणेत्यत्रादिशब्दात् विधावपूर्वप्रकाशने गी वर्तेति खेदानुकम्पासन्तोषविस्मयामन्त्रितेष्वपीति वर्द्धमानः। अभ्युदयः कुत इत्याह पितुर्नियोगलाभेन वनगमनाज्ञालाभेन कृतार्थान् लब्धप्रयोजनान् अस्मानिति द्वयोरप्यस्मदो बहुत्वमिति परः, स्वमते वाह्याध्यात्मिकभावबहुत्वविवक्षया सीतान्वितत्वाद्वा ॥१२॥ भ०

असृष्टेत्यादि। असृष्ट जनितवान् सृजेर्दैवादिकस्यात्मनेपदित्वात् लुङि रूपम्, न तौदादिकस्य परस्मैपदित्वात् सृजिदृशोरित्यम्। यश्च भयेषु सत्सु अरक्षीत् पालितवान् रक्षपालन इत्यस्य लुङि रूपम्, यः सर्वदा सर्वकालं सर्वकाम्येत्या-

विद्युत्प्रणाशं स वरं प्रणष्टो यद्दोर्ष्वपोषं तृणवद्विशुष्कः।
अर्थे दुरापे किमुत प्रवासे न शासनेऽवास्थित यो गुरूणाम् ॥ १४

दिना दाप्रत्ययः। यश्चापुषत् पुष्टवान् स्वपोषं धनेनापुषत् पुषे-र्लुङि रूपम् पुषादित्वादङ् स्वपुष इति णमुल् अमैवाव्ययेनेति समासः यथाविध्यनुप्रयोगश्च। तस्य पितुः सम्बन्धिनो महोपकारस्य किमस्ति मोक्षः प्रत्युपकारो नैवेति भावः। केनेत्याह तुच्छेन असारेण वनस्य यानेन यातेर्भावे ल्युट् वनस्येति शेषसामान्ये षष्ठी कर्मलक्षणायास्तु षष्ठ्या गत्यर्थ-कर्मणि चतुर्थी बाध्यमानत्वात् ॥ १३ ॥ ज० म०

असृष्टेत्यादि। योऽस्मान् असृष्ट जनितवान् सृजीश्च वि-सर्गे, यश्च भयेषु अरक्षीत् रक्षेष्ध्यां रूपं, यः सर्वदा सर्वकालम् अस्मान् स्वपोषम् अपुषत् स्वेन धनेन पुष्टवान् स्वपोषमिति णमुल् वाभीक्ष्ण्ये इत्यत्र वाशब्दस्य व्यवस्थावाचित्वाच्चणम् तद-नुप्रयोगस्त्वभिधानात् अपुषदिति शासलिद्युदिति ङः, सर्वदा इति सर्वैकात् काले दाच्। तस्य पितुः सम्बन्धिनो महोपका-रस्य तुच्छेन लघीयसा वनस्य गमनेन किं मोक्षः प्रत्युपका-ऽस्ति नास्त्येवेति भावः। वनस्येति ढघे कृतीति कर्मणि षष्ठी ॥ १३ ॥ भ०

विद्युदित्यादि। अर्थे कार्य्यविशेषे दुरापेऽपि कृच्छ्रप्रा-ऽपि ईषद्दुस्सुष्वित्यादिना खल्, गुरूणां यच्छासनमादेशः तस्मिन् यो नावास्थित नावस्थितवान् अवपूर्वात्तिष्ठतेर्लुङ् समवेत्यादिना तङ् स्थाघ्वोरिच्चेति कित्त्वमित्वञ्चाकृत्त्वादङ्गा-दिति सिचो लोपः। स वरं विद्युत्प्रणाशं प्रणष्टः विद्युदिवो-त्पत्त्यनन्तरमेव विनाशं गतः कषादिषु यथाविध्यनुप्रयोग इति ... कर्मणि चेति चकारात् कर्त्तोर्जीवपुरुषयोरित्यतः कर्त्तृग्रहणानुवृत्तौ कर्त्तृवाचिनि

पौरा निवर्त्तध्वमिति न्यगादीत् तातस्य शोकापनुदा भवेत ।
मा दर्शतान्यं भरतश्च मत्तो निवर्त्तयेत्याह रथं स्म सूतम् ॥१५॥

विद्युच्छब्द उपपदे णमुल् उपसर्गादसमास इत्यादिना णत्वम्। यद्देत्यथवा स ऊर्द्ध्वशोषं तृणवद्विशुष्कः ऊर्द्ध्वशुषीत्यादिना णमुल् उभयत्रासेवेत्यादिना समासः यथाविध्यनुप्रयोगश्च। किमु प्रवासे किं पुनः प्रवासविषये यच्छासनं तत्र तावदनवस्थितस्य सुतरामेव पूर्वोक्तं प्रयुज्यते ॥ १४ ॥ ज० म०

विद्युदित्यादि। दुरापे दुःखेन प्राप्येऽर्थे प्रयोजने गुरूणां शासने आज्ञायां यो न अवास्थित न तस्थौ स वरं विद्युत्प्रणाशं प्रणष्टो विद्युदिव उत्पत्त्यनन्तरमेव नष्टः चणम् वेत्यत्र वाशब्दस्य व्यवस्थावाचित्वात् कर्त्तुरुपमानात् नशो गतार्थाच्चणम् तदनुप्रयोगस्त्वभिधानात् प्राग्वन्नो ण इति शान्तनशो णत्वम् । दुराप इति ईषद्दुःसोः खल्भावढे इति खल् । अवास्थितेति अवपूर्वात्तिष्ठतेः प्रतिज्ञानिर्णय इति मं थ्यां सिः स्थादीङ्ङिष्टीमि न णुरिति ङिस्तस्य गुणाभावः झसस्वादिति सेर्लोपः। शासनं राजदत्तोर्व्वीलेखाज्ञाशास्त्रशास्तिष्विति विश्वः। वरं मनागिष्टे, देवकल्पितजामातोर्वरः श्रेष्ठे पुनस्त्रिषु। मनागिष्टे भवेत् क्लीवमन्ये त्वाहुस्तदव्ययमिति रन्तिदेवः। यद्वा अथवार्थे तृणवदूर्द्ध्वशोषं विशुष्क ऊर्द्ध्वशुष्क इत्यर्थः ऊर्द्ध्वाच्छुषेर्गतार्थाच्च तदनुप्रयोगश्चाभिधानात् किमु सुप्रवासे सुकरप्रवासविषये यत् शासनं तत्र यो नावास्थित स किं पुनः सुतरामेव पूर्वोक्तं युक्तम् । किमुतेति क्वचित् पाठः ॥ १४ ॥ भ०

पौरा इत्यादि। हे पौराः ! यथागतं निवर्त्तध्वं विधौ लोट्। इति तान् न्यगादीत् उक्तवान् रामः गदेरतो हलादेरिति वृद्धिः इटीति सिचो लोपः। तातस्य पितुः शोकापनुदाः

ज्ञात्वेङ्गितैर्गत्वरतां जनानामेकां शयित्वा रजनीं सपौरः ।

शोकस्यापहर्त्तारो भवेत तुन्दशोकयोरित्यादिना कः, भवते-र्विधौ प्रार्थनायां वा लिङ् मध्यमपुरुषबहुवचनम् । भरतश्च मत्तो मत्तः सकाशात् अस्मदः पञ्चम्यास्तसिल्प्रत्ययोत्तरपद-योश्चेति मदादेशः । अन्यं भरतं मा दर्शत मा द्रष्टारः स्थः अपि तु योऽहं स एव भरतः स च प्रतिष्ठितः राज्यं पालयिष्यतीत्येव न्यगादीत् । दृशेर्माङि लुङ् इरितो वेत्यङ् ऋदृशोऽङि गुणः । निवर्त्तय रथमिति सूतञ्च सुमन्त्रमाह स्म लट् स्म इति लट् ब्रुवः पञ्चानामित्याहादेशः तिपो णप् ॥ १५ ॥ ज० म०

पौरा इत्यादि । हे पौराः ! पुरवासिनः ! यूयं निवर्त्तध्वं निवृत्ता भवत विधिनिमन्त्रणेति विधौ गी । तातस्याग्रत्यितु शोकापहर्त्तारो यूयं भवेत विधिनिमन्त्रणेति विधौ प्रार्थनायां खो ख्या यायुसयामामिति याशब्दस्य इत्वं शोकापनुदा इति कृगृज्ञा इति इजुडत्वात् नुदेः कः । मत्तोऽन्यं भरतं यूयं मा दर्शत अहमिव सोऽपि पालयिष्यतीति ध्वनिः । दृशिरौ प्रेचणे माप्योगे टौ इरनुबन्धात् शास्लिद्युदिति विकल्पितो ङः दृशोर्ण्ङ्रिति गुणः । मत्त इति अन्यारभ्येति पञ्चमी तस् ङ्करिति तस् बाहुल्यात् त्यदां टेरत्त्वाविति न टेर इत्युक्तम् । रामो न्यगा-दीत् उक्तवान् हसादेः सेम इति वृद्धिः । त्वं रथं निवर्त्तयेति सूतं सारथिं सुमन्त्रमाह स्म क्तौ स्मेनातीते इति स्मेन योगे-ऽतीते क्तो पञ्चतिण्पञ्चणव्वाहश्चेति तिपो णप् ब्रुव आहादेशः ॥१५॥ भ०

ज्ञात्वेत्यादि । निवर्त्तध्वमित्युक्ते ये त्वानिवृत्ताः तेषां जनानां रामो गत्वरतां गमनशीलतां ज्ञात्वा गत्वरश्चेति निपातितः । तैरिङ्गितैरभिप्रायसूचकैश्चेष्टितैः इङ्गितैर्भावि

रक्षन् वनेवासकृताद्भयात्तान् प्रातश्छलेनापजगाम रामः ॥१६॥
असाक्षुरस्त करुणं रुवन्तो मुहुर्मुहुर्न्यश्वसिषुः कवोष्णम् ।
हा राम! हा कष्टमिति ब्रुवन्तः पराङ्मुखैस्तैर्न्यवृतन्मनोभिः
॥ १७ ॥

---

निष्ठा वनेवास इति सप्तमीति योगविभागात् समासः शयवा-सवासिष्विति विभाषा सप्तम्या अलुक्। तेन कृतात् सिंहा-दिभयात् रक्षन् पालयन् तान् पौरान् सपौरः पौरैः सह एकां रजनीं शयित्वा कालाध्वनोरिति द्वितीया। शयित्वेति नक्त्वासेडिति कित्त्वप्रतिषेधात् गुणो भवति। प्रातः प्रातःकाले छलेन सन्ध्यावन्दनादिव्याजेन अपजगाम गतवान् ॥१६॥ ज०म०

ज्ञात्वेत्यादि। निवर्त्तध्वमित्युक्तेऽपि तत्रानिवृत्तानामि-ङ्गितैरभिप्रायबोधकैश्चेष्टितैर्गत्वरतां गमनशीलतां ज्ञात्वा रामः सपौरः पौरैः सह एकां रात्रिं शयित्वा तान् जनान् वनेवास-कृताद्भयात् रक्षन् प्रातश्छलेन सन्ध्यावन्दनादिव्याजेन अप-जगाम। इङ्गितैरिति इगि गत्यां भावे क्तः, गत्वरतामिति क्वरप्-मस्य तस्य। रजनीमिति देशाध्वकालेति कर्मसंज्ञा। शयित्वे-ति सेमच्छुधेत्यादिना किन्निषेधात् पुगन्तेति गुणः, वनेवास इति अकालवाचिनः शयवासवासिष्विति सप्तम्या अलुगिति परः। स्वमते सरसिजमित्युदाहरता क्वचित् समासे विभक्तेर-लुगिति सूचितम् ॥ १६ ॥ भ०

असाक्षुरित्यादि। ते पौरा राममपश्यन्तः करुणं रुवन्तो विलपन्तः रुशब्द इत्यस्य शतरि रूपम्। अस्तम् अस्रु अस्राक्षुः सृजवन्तः सृजेस्तौदादिकस्य परस्मैपदिनः सिचि सृजिदृशोरि-त्यम् हलन्तलक्षणा वृद्धिः चोः कुः खरि चेति चर्त्वम्। मुहुर्मुहुः भूयो भूयः कवोष्णमीषदुष्णमन्तःसन्तापात् कवच्चोष्णे इति

सूतोऽपि गङ्गासलिलैः पवित्वा सहाश्वमात्मानमनल्पमन्युः ।

---

कीः कवादेशः । न्यश्वसिषुः श्वसेर्लुङ् ह्म्यन्तेत्यादिना श्वसेर्वृद्धि-प्रतिषेधः अतोहलादेर्लघोरिति विकल्पस्य प्राप्तत्वात् । हा राम ! हा कष्टं कष्टमिति ब्रुवन्तः पराङ्मुखैः येन गतो रामस्तेन गतैर्मनोभिरित्यभ्भूतैः न्यवृतन् निवृत्तवन्तः द्युद्भ्यो लुङीति परस्मैपदविकल्पात् द्युतादित्वादङ् ॥ १७ ॥ ज० म०

अस्राद्युरित्यादि । ते पौरा राममपश्यन्तः करुणं रुदन्तो विलपन्तः अस्रं नेत्रजलम् अस्राद्युस्त्यक्तवन्तः । रुदन्त इति रुद रोदे शब्दः । अस्राद्युरिति सृजोश्च विसर्गे च्लां सिः वद्रोऽ-किदिति ऋकारस्य रः व्रजवदेति अनिम्त्वात् वृिः शच्छ्राजेति षङ् षढोः कः से इति कः क्विलादिति षः अनुस्सिद्वेरिति अन उस् । कवोष्णम् ईषदुष्णम् अन्तःसन्तापात् कत्कवी चाग्न्युष्ण इति ईषदर्थे कवादेशः । मुहुर्मुहुर्वारं वारं न्यश्वसिषुः निःश्वसत-वन्तः ह्मसादेः सेम इत्यादौ श्वसवर्जनात् श्वसेर्न वृिः । हा राम ! हा कष्टमिति ब्रुवन्तः ते पौराः पराङ्मुखैः रामदिगनुसारिभि-रपूर्णकामत्वात् परिभूतैर्वा मनोभिरुपलक्षिताः सन्तः निवृत्ताः वृतेर्द्युतादित्वात् शासुलिद्युदिति ङः तेनैव लोपोऽतोऽदेचोरि-त्याकारलोपः । साधनहेतुविशेषणेति विशेषणे तृतीया । हा रामेति हाशब्दयोगे षष्ठ्यर्थे द्वितीया अत्र तु तदभाव इति श्रीपतिः । सामान्येन हाशब्दं प्रयुज्य रामः सम्बुध्यते इति दौर्गाः, सम्बुद्धाविति हादियोगे द्वितीयानिषेधार्थं क्रमदीश्वर-सूत्रं, समते हाशब्दवाच्येन कष्टेन नात्र रामस्य योगो विव-क्षितः किन्तु पौराणामेव तद्योगाभावान्न द्वितीया ॥ १७॥ भ०

सूत इत्यादि । सूतोऽपि सुमन्त्रः सहाश्वमश्वैः सह अन-ल्पमन्युः प्रवृद्धशोकः राघवयोः रामलक्ष्मणयोः सकृपाणा-

ससीतयोराघवयोरधीयन् श्वसन् कदुष्णं पुरमाविवेश ॥ १८ ॥
प्रतीय सा पूर्ददृशे जनेन द्यौर्भानुशीतांशुनिराकृतेव ।

---

नित्येकशेषः । ससीतयोः सीतासहितयोः अधीयन् स्मरन् इक् स्मरणे इत्यस्य शतरि रूपं यणादेशः अधीगर्थेति कर्मणि षष्ठी। श्वसन् कदुष्णम् ईषदुष्णं कवञ्चोष्णे इति चकारात् कदादेशः गङ्गातटात् प्रति निवृत्य पुरमयोध्यामाजगाम आगतवान् गङ्गासलिलैः आत्मनो वाह्यमाभ्यन्तरञ्च पवित्रीकृत्य पूङ्श्चेति विकल्पेनेट् पूङः क्त्वा चेति कित्त्वप्रतिषेधात् गुणः ॥१८॥ ज०म०

सूत इत्यादि। सूतः सारथिः सुमन्त्रोऽपि गङ्गाजलैः सद्दाश्वम् आत्मानं पवित्वा पवित्रीकृत्य सीतासहितयोः रामलक्ष्मणयोरधीयन् स्मरन् कदुष्णं श्वसन् पुरमयोध्यां आविवेश प्रविष्टवान् अनल्पमन्युः प्रवृद्धशोकः गङ्गासलिलैः पवित्वा इत्यनेन गङ्गापर्य्यन्तं तद्गमनं ध्वन्यते, पूङ्क्लिशुदित इम् इति विभाषत इम् सेमक्षुधेत्यादिना कित्त्वनिषेधात् गुर्घूङ इति गुणः। ससीतयोरिति सहः सो वेति बहुव्रीहौ सादेशः। राघवयोरिति समार्थेनेत्यादिना कर्मणि षष्ठी। अधीयन्निति अधीकलस्मृत्याम् इखदिक इति वाक्यात् यिणोऽच्यणाविति यादेशः क्वचिन्न स्यात् आतिदेशिककार्य्यमनित्यमिति न्यायात् तेनात्र अ्रुध्वोरन्वचीति इयादेशः। कदुष्णमिति कत्कवौ चेति कोः कदादेशः ॥ १८ ॥ भ०

प्रतीयेत्यादि। जनेन रामानुयायिना प्रतीय प्रतिनिवृत्य पूरयोध्या ददृशे दृष्टा कर्मणि लिट्। प्रतीय इति ईङ्गताविवस्य रूपं न पुनरिणः तस्य हि तुकि प्रतीत्येति स्यात्। षत्वतुकोरसिद्ध इत्येकादेशस्यासिद्धत्वात् प्रतीयुषा सा ददृशे इति पाठान्तरम्। प्रतिनिवृत्तेन सा पूर्ददृशे दृष्टेत्यर्थः। अस्मिन्

राजन्यनक्षत्रसमन्वितापि शोकान्धकारक्षतसर्वचेष्टा ॥ १९ ॥
विलोक्य रामेण विना सुमन्त्रमच्योष्ट सत्वान्नृपतिस्सुरताभः ।

---

पाठे तु उपेयिवानित्यादिना इणः क्वसौ रूपं द्रष्टव्यमत्रोपसर्गस्यातन्त्रत्वात्। शोकोऽन्धकार इव शोकान्धकारः तेन क्षता नीतानुष्ठेयकर्मणि चेष्टा परिस्पन्दो यस्यां पुरि सा तथोक्ता, राज्ञोऽपत्यानि राजश्वशुराद्यत् राजन्याः क्षत्रियाः ये चाभावकर्मणोरिति प्रकृतिभावः, राजन्या नक्षत्राणीव तैः समन्वितापि द्यौः भानुशीतांशुविनाकृतेव द्यौराकाशः यथा नक्षत्रसमन्वितापि रात्रौ भानुचन्द्राभ्यां विनाकृता रहिता अन्धकारच्युतसर्वचेष्टा तद्वत् सापि भानुचन्द्रस्थानीययोः राघवयोर्विरहादिति भावः॥ १९ ॥ ज० म०

प्रतीयेत्यादि। जनेन रामानुयायिना प्रतीय प्रतिनिवृत्य सा पूरयोध्या ददृशे कर्मणि ठी। प्रतीयेति ईयङ्गत्यामित्यस्य रूपं न ल्विणस्तनागमप्रसङ्गात्। प्रतीयुषेति पाठे प्रतिपूर्वादिणः क्वसुः प्रतीयिवःशब्दस्य वसेर्वः सेमपीति सेमवस्योत्वं, प्रतीयुषा प्रतिनिवृत्तेन जनेन पूर्ददृशे इति योजना। कीदृशी पूः शोकोऽन्धकार इव तेन क्षता नाशिता सर्वेषां चेष्टा सर्वा वा चेष्टा यस्यां सा तथा। राजन्याः नक्षत्राणीव तैः समन्वितापि पूः सूर्य्यचन्द्राभ्यां रहिता द्यौराकाशमिव यथा नक्षत्रसमन्वितापि द्यौः सूर्य्यचन्द्राभ्यां निराकृता अन्धकारक्षतसर्वचेष्टा तद्वत् सापि सूर्य्यचन्द्रतुल्ययोराघवयोरभावादिति भावः। राजन्य इति राज्ञां समूह इति गर्गादित्वात् यञः मन्वर्जानित्यादिना नलोपनिषेधः॥ १९ ॥ भ०

विलोक्येत्यादि। रामेण विना सुमन्त्रं विलोक्य दृष्ट्वा नृपतिर्दशरथः सत्वात् स्वभावादच्योष्ट च्युतः च्यवतेरकर्मका-

मधूनि नैषीद् व्यलिपन्न गन्धैर्मनोरमे न व्यवसिष्ट वस्त्रे ॥२०॥
आसिष्ट नैकत्र शुचा व्यरंसीत् कृताकृतेभ्यः क्षितिपालभाग्भ्यः।
स चन्दनोशीरमृणालदिग्धः शोकाग्निनागाद् द्युनिवासभूयम्
॥ २१ ॥

लुङ्। गतोऽपि मद्वचनमतिक्रम्य आगच्छेद्राम इति अस्य या आशा सा च्युता यस्य स च्युताशः सत्त्वात् च्युतश्च मधूनि पातुं नैषीत् नेष्टवान् नेटीति सिचि वृद्धिप्रतिषेधः। गन्धैश्चन्दनादिभिर्नाल्लिपत् लिपेर्लिपिसिचिह्वश्चेत्यङ्। मनोरमे चेतोहारिणी वस्त्रे न व्यवसिष्ट न परिहितवान् वस आच्छादने इत्यस्मात् लुङ् अनुदात्तेत्त्वात्तङ्॥ २० ॥ ज० म०

विलोक्येत्यादि। रामेण विना सुमन्त्रं विलोक्य नृपतिर्दशरथः सत्वात् स्वभावात् व्यवसायाद्वा अच्योष्ट च्युतः च्युतोऽकर्मकात् टी। गतोऽपि रामः कदाचित् पौराणामनुरोधान्मद्वचनमतिक्रम्य आगच्छेदित्याशा च्युता यस्य स तथा मधूनि नैषीत् इषु इच्छायां टी। गन्धैश्चन्दनादिभिर्न व्यलिपत् वक्ष्यस्यालिपेति ङः। मनोरमं वस्त्रद्वयं न व्यवसिष्ट न परिहितवान् वसलङ् आच्छादने। सत्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः। आत्मनि व्यवसाये च चित्ते प्राणिषु जन्तुषु इति विश्वः॥ २० ॥ भ०

आसिष्टेत्यादि। एकत्र स्थाने शुचा शोकेन नासिष्ट नोपविष्ट आसेरात्मनेपदिनो लुङ्। कृतानि चाकृतानि चेति क्तेन नञ्विशिष्टेनानञिति समासः, असमापितेभ्य इत्यर्थः क्षितिपालं भजन्ते यानि दूतप्रेषणादीनि तेभ्यः क्षितिपालभाग्भ्यः व्यरंसीत् विरतः विमुखोऽभूदित्यर्थः जुगुप्साविरामप्रमादार्थानामुपसंख्यानमिति अपादानसंज्ञा रमेर्लुङ् व्याङ्-

विचुक्रुशुर्भूमिपतेर्महिष्यः केशान् लुलुञ्चुः स्ववपूंषि जघ्नुः ।
विभूषणान्युन्मुमुचुः क्षमायां पेतुर्बभञ्जुर्वलयानि चैव ॥ २२ ॥

---

परिभ्यो रम इति क्षिप् यमिरमित्यादिना सगिटौ । स एवम्भूतो राजा चन्दनोशीरमृणालैः शोकाग्निप्रतीकारभूतैर्दिग्ध उपलिप्तोऽपि उद्वेगाग्निनैव द्युनिवासभूयं देवत्वमगात् गतवान् दिहेर्निष्ठायां दादेर्धातोर्घ इति घः झषस्तथोर्धोऽधः झलांजशझशीति जश्त्वम् । दिवि निवासो येषां ते द्युनिवासाः देवाः तेषां भाव इति भुवो भावः इति क्यप् ॥२१॥ ज० म०

आसिष्टेत्यादि । शुचा शोकेन एकत्र एकस्थाने न आसिष्ट आसलङ् उपवेशे । कृताकृतेभ्यः क्षितिपालभाग्भ्यः राजकर्त्तव्यदूतसम्प्रेषणादिभ्यो व्यरंसीत् विरतवान् वे पं परानु इत्यादिना विपूर्वात् रमिः पं यमरमेति इमसनौ कृतावयवसम्बन्धात् कृतं अकृतावयवसम्बन्धाच्चाकृतं इति एकार्थत्वात् कर्मधारयः । अनञः क्तान्तस्य तेन सनञेति कर्मधारय इति परः । क्षितिपालं भजन्ते इति ढाञ्जवहेति विण् । स ईदृशो राजा चन्दनोशीरमृणालैस्तापोपशान्तिसाधनैर्दिग्धो लिप्तोऽपि शोकाग्निनैव हेतुना द्युनिवासभूयं देवत्वमगात् दिवि निवासो यस्य इति विग्रहः निवसन्त्यत्रेति घञि द्यौर्निवासो यस्येति वा उहस्युडिति उङ् तस्य भवनं भूहनं क्यविति भुवो भावे क्यप् । दिग्ध इति दिह उपलेपे क्तः दादेर्घः ढभात्तथोरिति तस्य धः झपझसोरिति धस्य गः । उशीरं वीरणमूलम् ॥ २१ ॥ भ०

विचुक्रुशुरित्यादि । भूमिपतेः राज्ञो महिष्यः पत्न्यः अविमह्याष्टिषच् इत्यौणादिकः ष्टिषच् । विचुक्रुशुः रुदितवत्य इत्यर्थः हा स्वामिन्निति तथा केशान् लुलुञ्चुः उत्पाटितवत्यः,

ताः सान्त्वयन्ती भरतप्रतीक्षा तं बन्धुता न्यक्षिपदाशु तैले ।
दूतांश्च राजात्मजमानिनीषून् प्रास्थापयन्मन्त्रिमतेन यूनः ॥ २३॥

---

स्ववपूंषि स्वशरीराणि जघ्नुस्ताडितवत्यः, विभूषणानि हारादीनि उन्मुमुचुर्मुक्तवत्यः, क्षमायां भुवि पेतुः, वलयानि अवैधव्यचिह्नानि बभञ्जुः चूर्णितवत्यः, एते लिडन्ताः तुपेरेत्वाभ्यासलोपौ ॥ २२ ॥ ज० म०

विचुक्रुशुरित्यादि । भूमिपतेर्दशरथस्य महिष्यः विचुक्रुशुः क्रन्दितवत्यः, हाहा स्वामिन्निति नृपमाहूतवत्यो वा । यद्यपि कृताभिषेका महिषीत्यमरः सा चैकैव तथाप्युपचारात् पत्नीमात्रेऽपि तिसृणामेव कृताभिषेकत्वमिति केचित् । केशान् लुलुञ्चुः उत्पाटितवत्यः स्यात्व्यपितृकिद्वेति अकित्पक्षे उङ्नलोपाभावः । स्ववपूंषि जघ्नुः ताड़ितवत्यः, विभूषणानि हारादीनि उन्मुमुचुः त्यक्तवत्यः, क्षमायां भुवि पेतुः तृफलेति पतेरत एत्वं खिलोपश्च । वलयानि अवैधव्यलक्षणानि बभञ्जुः, सर्वत्र व्या उस् ॥ २२ ॥ भ०

ता इत्यादि । बन्धुता बन्धुसमूहः ग्रामजनबन्धुसहायेभ्यस्तल् । ता महिषीः सान्त्वयन्ती संस्थापयन्ती सान्त्वङ्करोतीति णिच् । तं दशरथं मृतं तैले न्यक्षिपत् निक्षिप्तवती आशु शीघ्रं माभूत् पूतिरिति क्षिपेर्लुङ् पुषादित्वादङ् । कस्मात्तमक्षिपदित्याह भरतप्रतीक्षा तेन संस्कारः कर्त्तव्य इति सा भरतप्रतीक्षते ईक्षिक्षमिभ्याञ्चेत्युपसङ्ख्यानात् सः । दूतान् प्रास्थापयत् प्रहितवती राजात्मजं भरतमानिनीषून् आनेतुमिच्छून् अन्यथा कैकेयीवैमुख्याद् भरतेऽपि वैमुख्यात् दूता अपि नानेतुमिच्छन्ति तत्रापि मन्त्रिमतेन न स्वमतेन यूनः तेषां गन्तुं समर्थत्वात् ॥ २३ ॥ ज० म०

सुप्तो नभस्तः पतितं निरीक्षाञ्चक्रे विवस्वन्तमधः स्फुरन्तम्।
आख्यदसन्मातृकुले सखिभ्यः पश्यन् प्रमादं भरतोऽपि राज्ञः २४

ता इत्यादि। बन्धुता बन्धुसमूहः ता महिषीः सान्त्वयन्ती आश्वासयन्ती तं मृतं दशरथं शीघ्रं पूतिगन्धाशङ्कया तैले न्यक्षिपत् क्षिपस्तुदादित्वात्। कुतो न्यक्षिपदित्याह भरतप्रतीक्षा भरतं प्रतीक्षते इति पचादित्वादन् भरते प्रतीक्षा यस्या इति वा। दूतांश्च मन्त्रिणां मतेन बुद्ध्या केकयीं प्रति क्रोधेन भरते वैमुख्यान्न तु स्वेच्छया प्रास्थापयत् प्रहितवती राजात्मजं भरतं आनिनीषून् आनेतुमिच्छून् ये स्वत एव भरतमानेतुमिच्छन्ति तत्प्रस्थापनं युक्तमिति भावः। यूनस्तरुणान् शीघ्रगमनसामर्थ्यात्। बन्धुतेति जनबन्धेति समूहार्थे तः। सान्त्वयन्तीति सान्त्वक्ष सान्त्वने शतृः॥ २३॥ भ०

सुप्त इत्यादि। भरतोऽपि मातृकुले वसन् सखिभ्यो मित्रेभ्यः आख्यत् कथितवान् ख्यातेर्लुङ् अस्यतिवक्तीत्यादिनाङ, क्रियाग्रहणं कर्त्तव्यमिति सम्प्रदानसंज्ञायाञ्चतुर्थी। किमाख्यदित्याह अहं सुप्तः सन् नभस्तो नभस्तलात् आकाशात् पतितं विवस्वन्तमादित्यं स्फुरन्तञ्चलन्तं निरीक्षाञ्चक्रे निरीक्षितवान् ईक्षेरिजादेरित्याम्। उत्तमविषये सुप्तप्रमत्तावस्थायां चित्तव्याक्षेपात् परोक्षे लिट्। पश्यन् विलोकयन् राज्ञो दशरथस्य प्रमादमनिष्टम् ॥२४॥ ज० म०

सुप्त इत्यादि। भरतोऽपि मातृकुले वसन् सन् राज्ञो दशरथस्य प्रमादं अनिष्टं पश्यन् वितर्कयन् सखिभ्यो मित्रेभ्य आख्यत् कथितवान् वक्तयस्येति ङः तादर्थ्ये चतुर्थी, यदभिप्रेत्य धात्वर्थस्तत्र चतुर्थीति परः। किमाख्यदित्याह सुप्तोऽहं नभस्त आकाशात् पतितं अधः स्फुरन्तं विवस्वन्तं सूर्य्यं निरीक्षाञ्चक्रे

अभिश्रवन्नात्ययिकं तमेत्य दूता यदार्थं प्रयियासयन्तः ।
आंहिष्ट जाताञ्जिहिषस्तदासावुत्कण्ठमानो भरतो गुरूणाम् ॥ २५ ॥

दृष्टवानस्मि अस्मदि चित्तस्य विक्षेपे ठीति परः, स्वमते नियमाभावात् भवत्येव सुप्तस्य तादृशसूर्य्यदर्शनेन चित्तविक्षेपार्थोऽपि गम्यते एव ईक्षङ् दर्शने विंजादीत्याम् ॥ २४ ॥ भ०

अभीत्यादि । दूता एत्य आगत्य भरतमाकुलमित्यर्थः । आङ् पूर्वादिणः क्त्वाप्रत्ययस्य ल्यपि तुकि च रूपम् । यदा तं भरतमर्थं वचनमभिश्रवन् आवितवन्तः अर्थयतेऽनेनेति णिच् घञ्च शृणोतेर्ण्यन्तात्लुङि चङि द्विर्वचनं स्रवतिशृणोतीत्यभ्यासस्येत्वम् । आत्ययिकम् अत्ययो विनाशः स प्रयोजनमस्येति तदस्य प्रयोजनमिति ठञ् । पिता ते ग्लानस्त्वां द्रष्टुमिच्छतीति आत्ययिकं वचनं तमिति गतिबुद्धीत्यादिना कर्मसंज्ञा शृणोतेः शब्दकर्मत्वात् अर्थमिति कर्त्तुरीप्सिततममित्यनेन प्रयियासयन्तः प्रयातुमिच्छन्तो भरतम्प्रयोजितवन्तः सनन्तण्यन्तोऽयम् । तदा असौ भरतो जाताञ्जिहिषः जाता अञ्जिहिषा गमनेच्छा यस्य सः अहि गतौ इदितो नुम् तस्मादंहितुमिच्छतीति सन् इट् अजादेर्द्वितीयस्येति हिशब्दो द्विरुच्यते नकारस्य नन्द्रा इति प्रतिषेधः अभ्यासकार्य्यम् अनुस्वारपरसवर्णौ अः प्रत्ययादित्यकारप्रत्ययः टाप् । आंहिष्ट गतवान् तस्मादेवात्मनेपदिनो लुङ् । उत्कण्ठमानः स्मरन् मठिकठिशोक इत्यस्मादात्मनेपदिनो रूपम् अनेकार्थत्वाद्धातूनाम् । गुरूणां पितामहादीनाम् अधीगर्थेति कर्मणि षष्ठी ॥ २५ ॥ ज० म०

अभिश्रवन्नित्यादि । दूता एत्य आगत्य अर्थात् भरतमाकुलं तं भरतम् अत्ययरूपम् अर्थं वस्तु यदा अभिश्रवन् आचितवन्तः प्रयियासयन्तः भरतं गमनेच्छां कारयन्तः तदा

**बन्धूनशङ्किष्ट समाकुलत्वादासेदुषः स्नेहवशादपायम् ।**
**गोमायुसारङ्गगणाश्च सम्यङ्नायासिषुर्भीममरासिषुश्च ॥२६॥**

---

असौ भरतः जाता अभ्निहिषा गमनेच्छा यस्य तादृशः सन् गुरूणां पित्रादीनाम् उत्कण्ठमानः स्मरन् आंहिष्ट गतवान् । अशिश्रवन्निति श्रु श्रवणे णिः प्रेरणे इति णिः णिश्रीत्यङ् धुद्वि ब्यञ्जोति द्विः खेः सन्वत् स्रुशुस्तु द्रुप्रुप्लु च्यङां वेति खेरुकारस्य इत्वं णिल्यन्तेजुङतोरिति विः यलाययवायव इति आव् णप्रष्यु ङः स्वः णेर्लोपः घोऽणौ णेरिति प्रयोज्यस्य कर्त्तुः कर्मत्वम् । आत्ययिकमिति अत्ययो विनाशः विकारसंघेति णिकः । अर्थोऽभिधेये शब्दानां धनकारणवस्तुषु । प्रयोजने निवृत्तौ च विषये च प्रयुज्यते । केचित्तु अर्थयते अनेनेत्यर्थं वचनम् आत्ययिकम् अनर्थसम्बन्धीत्यर्थः । अर्थमित्यत्र असुमिति पाठे असुं भरतं प्रयियासयन्त आत्ययिकं राज्ञो मरणम् । एत्येति व्यादनञ इति आङ्पूर्वादिणः क्वायप् खस्य तन् पितीति तन् । प्रयियासयन्त इति यातेः सनन्तात् णिः शब्दः । आंहिष्टेति अहिङ्गतौ इदित्वान्नुन् । जाताभ्निहिषः इति अंहेः सन इम् नाजन्तादेरादिद्विरिति स्यादौ नवद्रोये इति च निषेधात् आदिनकारस्य न द्वित्वं संस्थाद इति अः कठिङ् आध्याने इष्टानवाप्तौ तदवाप्तयेऽभिलाष उत्कण्ठेत्यन्ये । गुरूणामिति समार्थेनेत्यादिना कर्मणि षष्ठी ॥ २५ ॥ भ०

बन्धूनित्यादि । दुःस्वप्नदर्शनेन अकस्माच्च पितृदूतागमनेन स्नेहवशात् चेतसि समाकुलत्वाद्भरतो बन्धूनशङ्किष्ट शङ्कितवान् उत्प्रेक्षितवानित्यर्थः शङ्कतेरात्मनेपदिनो लुङि रूपम् । कीदृशान् आसेदुषः अपायं विनाशं गतवतः भाषायां सदवसेत्यादिना क्वसुः अत एकहलित्येत्वाभ्यासलोपौ । अस्मद्बन्धुः

स प्रोषिवानेत्य पुरं प्रवेच्यन् शुश्राव घोषं न जनौघजन्यम् ।

---

कश्चित् व्यसनमापन्नोऽभूदिति गच्छतस्तस्य गोमायुशारङ्ग- गणाः शृगालमृगगणाश्च सम्यगनुकूलं नायासिषुः नागताः यातेर्लुङि यमरमेति सगिठौ, शृगालाः प्रदक्षिणङ्गताः मृगाश्च सव्यमित्यर्थः । भीममुद्वेगकरमरासिषुः रसिताः रसेः परस्मै- पदिनो लुङ् अतो हलादेरिति वृद्धौ रूपम् न रासेः तस्यात्मने- पदित्वात् ॥ २६ ॥ ज० म०

बन्धूनित्यादि । दुःस्वप्नदर्शनात् अकस्मात् पितृदूतागम- नाच्च स्नेहवशात् चेतसि समाकुलत्वात् गच्छन् भरतो बन्धून् अपायं विनाशम् आसेदुषः प्राप्तान् अशङ्किष्ट शङ्कितवान् शकिङ् त्रासशङ्कयोः । गच्छतस्तस्य गोमायुशारङ्गगणाः शृगाल- हरिणसमूहाः सम्यगनुकूलं नायासिषुः नागतवन्तः शृगालाः प्रदक्षिणं गता इत्यर्थः । यातेर्ष्यां यमरमेतीम्सनौ अनुस्मि- द्वेरिति अन उस् । भीमं भयानकं यथा स्यात्तथा अरासिषुः शब्दं कृतवन्तः रस शब्दे हसादेः सेम इति व्रिः अन उस् । चातके हरिणे पुंसि सारङ्गः शवले त्रिष्विति दन्त्यादौ रभसः शृणोतेर्ञ्जग्रन्तादङ्गः औणादिक इति तालव्यादि केचिदाहुः ॥ २६ ॥ भ०

स इत्यादि । स भरतः प्रोषिवान् मातामहकुलात् प्रोषितः सन् भाषायामित्यादिना क्वसुः यजादित्वात् सम्प्रसारणं द्विर्व- चनम् वस्वेकाजाद् घसामिति इट् । पुरमयोध्यामेत्य आगत्य प्रवेच्यन् गृहमित्यर्थात् पुरं प्रविष्टः घोषं शब्दं न शुश्राव न श्रुतवान्, जनौघजन्यं जनसमूहेन जन्यमुत्पाद्यं तद्विशसि- षतियतीति जनैर्यत् । तथा वेदध्वनीनाकर्णयामास न श्रुत-

आकर्णयामास न वेदनादान्न चोपलेभे बणिजां पणायाः ॥ २७॥

वान् प्रातिपदिकाद्धात्वर्थं इति णिच् तदन्तात् लिट्यामि अप्रामन्त्रे त्ययादेशः न चोपलेभे नापलब्धवान् बणिजां पण्य- जीविनां पणायान् पणलाभान् कथञ्चिद्रूपव्यवहारस्योच्छि- न्नत्वात् पणन्ते इति बणिजः पणेरिजादेश्चैव इत्यौणादिकः पण्यन्ते इति पणाः नित्यं पणः परिमाणे इत्यप् व्यवह- र्त्तव्याः। ईयन्ते प्राप्यन्ते बणिग्भिरित्ययाः लाभा एरजिति इणः कर्मणि अच् पणानामयाः पणायाः तान्। पणायामिति पाठान्तरं बणिजां वस्तूनि संव्यवहारविषयाणि नोपलेभे संव्यवहारकुशलाः साधव इति गुपादिषु स्तुत्यर्थपणिना साहचर्य्यात् पणेरपि तदर्थादेवायप्रत्ययः अः प्रत्ययादित्य- कारः टाप्। बणिजां प्रलापानिति तृतीयः पाठः, बणिक्प्रसा- रकलहानित्यर्थः ॥ २७ ॥ ज० म०

स इत्यादि। स भरतः प्रोषिवान् मातामहकुले कृत- प्रवासस्तत एत्यागत्य पुरमयोध्यां प्रवेक्ष्यन् प्रवेशं करिष्यन् जनसमूहजन्यं घोषं शब्दं न शुश्राव। प्रोषिवानिति प्रपू- र्वाद्वसी ऐ निवासे इत्यस्मात् क्वसुः अहस्वपाद्योरिति जिः डित्वं वसोर्घसेकाजितीम्। प्रवेक्ष्यन्निति विशशी प्रवेशे स्यद्धः। जन्य- मिति कृद्वोः कभाव इत्युक्तः कर्त्तरि घ्यण्, जनौघाज्जात- मित्यर्थः किंवा तव्यानीयया इति अन्ताज्जनेः कर्मणि यः। वेदध्वनिं न आकर्णयामास न श्रुतवान् कर्णत्व भिदि। बणि- जां पणोपजीविनां पणायाः क्रयविक्रयव्यवहारान् न च उपलेभे ददर्श पणङ् व्यवहारे स्तुतौ कमक्रतेत्यादिना आयः शंस्याद इति अः स्त्रीत्वञ्च। पणायानिति पाठे पण्यन्ते इति पणाः घञलनटोऽघे इत्यल् आयो लाभः, इमान् व्यवहर्त्तव्य-

चक्रन्दुरुच्चैर्नृपतिं समेत्य तं मातरोऽभ्यर्णमुपागतास्राः ।
पुरोहितामात्यमुखाश्च योधा विवृद्धमन्युप्रतिपूर्णमन्याः ॥ २८॥

---

लाभानित्यर्थः। वणिगापणायामिति पाठे वणिजामापणो निषद्या तत्रायानित्यर्थः। आपणस्तु निषद्यायामित्यमरः ॥ २७ ॥ भ०

चक्रन्दुरित्यादि। तं भरतं गृहगतमभ्यर्णं समीपीभूतं समेत्य ढौकित्वा मातरः कौशल्याद्याः नृपतिमुच्चैरत्यर्थं चक्रन्दुः क्रन्दितवत्यः हा स्वामिन्! हा राजन्! क्व गतोऽसीति उपागतं प्राप्तमस्रमश्रुजलं यासां ताः एवंविधाः युध्यन्ते इति योधाः पचादित्वादच्। ते च तं समेत्य नृपतिं चक्रन्दुः पुरो धीयते इति पुरोहितः निष्ठा दधातेर्हिः। अमाशब्दः सहार्थे सह राज्ञा कार्य्येषु भवतीत्यमात्यः अमेहक्वतसित्रेभ्यः इति निपातात् पुरोहितामात्यौ मुखं प्रधानं येषां योधानां ते पुरोहितामात्यमुखाः अमात्यस्याजाद्यदन्तत्वेऽपि पुरोहितस्याभ्यर्हितत्वात् पूर्वनिपातः। विवृद्धमन्युना शोकेन प्रतिपूर्णं मन्ये गलशिरे येषामिति ॥ २८ ॥ ज० म०

चक्रन्दुरित्यादि। तं भरतम् अभ्यर्णं समीपवर्त्तिनं समेत्य प्राप्य मातरः कौशल्यादयो नृपतिं चक्रन्दुः तमुद्दिश्य सशब्दं रुरुदुरित्यर्थः उपागतम् अस्रं नेत्रजलं यासां तास्तथा। अभ्यर्णमित्यभिपूर्वस्यार्दधातोः क्तान्तस्य रूपं क्षुब्धवाढेत्यादिना निपातितम्। युध्यन्ते इति योधाः पचादित्वादच्, तेऽपि तं समेत्य चक्रन्दुः पुरोऽग्रे धीयते स्थाप्यते इति पुरोहितः धाञो हिः अमाशब्दः सहार्थे सह राज्ञा कार्य्येषु भवति अमात्यः त्यब्नेर्ध्रुव इति त्यः, पुरोहितामात्यौ मुखं प्रधानं येषां योधानां ते तथा ते जना योधाश्चेति वा विवृद्धेन मन्युना शोकेन प्रतिपूर्णा

दिदृक्षमाणः परितः ससीतं रामं यदा नैक्षत लक्ष्मणञ्च ।
रोरुद्यमानः स तदाभ्यपृच्छद्यथावदाख्यन्नथ वृत्तमस्मै ॥ २९ ॥
आबद्धभीमभ्रुकुटीविभङ्गः शिक्षीयमानारुणरौद्रनेत्रः ।

---

मन्या येषां यासां वा दान्तशान्तपूर्णेति निपात्यते । पश्चाद्ग्रीवाशिरा मन्या इत्यमरः ॥ २८ ॥ भ०

दिदृक्षमाण इत्यादि । स भरतो यदा ससीतं रामं लक्ष्मणञ्च परितः सर्वतो दिदृक्षमाणः द्रष्टुमिच्छन् ज्ञाश्रुस्मृदृशां सन इति तङ् हलन्ताच्चेति सनः कित्त्वे सृजिदृशोरित्यम् न भवति । नैक्षत न दृष्टवान् तदा रोरुद्यमानः अत्यर्थं रुदन् यङि रूपम् । अभ्यपृच्छत् पृष्टवान् । ऐक्षताभ्यपृच्छदिति भूतसामान्यविवक्षया लङ् अन्यथा कवेः परोक्षत्वात् लिट् स्यात् । अथैतस्मिन् प्रस्तवे यथावत् यादृशं वृत्तं भूतं तथावत् आख्यन् कथितवन्तः पुरोहितामात्यमुखा अस्मै भरताय । ख्यातेरस्यतीत्यादिना च्लेरङ् आतो लोपः ॥ २९ ॥ ज० म०

दिदृक्षमाण इत्यादि । स भरतः ससीतं रामं लक्ष्मणञ्च परितः सर्वतः दिदृक्षमाणः द्रष्टुमिच्छन् यदा न ऐक्षत तदा रोरुद्यमानो भृशं रुदन् अभ्यपृच्छत् पृष्टवान् । अथानन्तरं यादृशं वृत्तं तादृशं तस्मै भरताय आख्यन् कथितवन्तः अर्थात् पुरोहितामात्यमुखा योधाश्च दिदृक्षमाण इति दृशेः सन् गुर्नानिसीति गुणनिषेधः स्मृदृशनुज्ञा इति सं ईक्षङ् दर्शने धी रुदेर्मूत्वसूत्रेत्यादिना यङ् प्रच्छीश्च्छोसे धी ग्रहस्वपाद्योरिति जिः ख्यातेर्वक्त्रयस्येति ङः, तादर्थ्ये चतुर्थी यदभिप्रेत्य धात्वर्थं इति चतुर्थीति परः ॥ २९ ॥ भ०

आबद्धेत्यादि । स भरतः उच्चैर्महता ध्वनिना कैकयीञ्च मुहुर्भूयो भूय उपालब्ध उपालब्धवान् उपाङ्पूर्वो लभि-

उच्चैरुपालब्ध स केकयीञ्च शोके मुहुश्चाविरतं न्यमाङ्क्षीत् ॥३०॥

---

रुपालम्भे वर्त्तते तस्मादात्मनेपदिनो झलो झलीति सिज्लोपे धत्वजश्त्वे रूपम्। शोके च मन्यौ अविरतमजस्रं न्यमाङ्क्षीत् निमग्नः मस्जेर्लुङि मस्जिनशोर्झलीति नम् तत्रापि मस्जेरन्त्यादिनियमात् नुम् संयोगादिलोपः हलन्तलक्षणा वृद्धिः हल्ग्रहणं समुदायप्रतिपत्त्यर्थमित्युक्तम्। कीदृशः आबद्धभीमभ्रुकुटीविभङ्गः भ्रमेश्च डुरित्यौणादिको डुः कुडे स्त्रीलिङ्गे भावे क्षुशादिभ्य इतोः तदन्तात् कृदिकारादिति ङीष् भ्रुवोः कुटी कौटिल्यं भ्रुकुटी इको ह्रस्वोऽङ्यो गालवस्येति ह्रस्वः, तस्या विभङ्गो विरचनम् आबद्धः कृतः प्रयत्नेनायासवृत्तेन भीमो भयानको भ्रुकुटीविभङ्गो येन यस्य वेति शोश्वीयमाने अत्यर्थं शूयमाने अरुणे लोहिते रौद्रे भयानके नेत्रे यस्य सः श्वयतेर्यङि विभाषाश्वेरिति वा सम्प्रसारणम्। तमुपालब्ध आह ॥ ३० ॥ ज० म०

आबद्धेत्यादि। स भरतः उच्चैर्यथा स्यात्तथा मुहुर्वारं वारं केकयीं उपालब्ध निर्भर्त्सितवान्, शोकेऽविरतं न्यमाङ्क्षीत् निममज्ज। कीदृशः आबद्धः कृतो भयङ्करो भ्रुकुटीविभङ्गः येन स तथा। पुनः किम्भूतः शोश्वीयमाने अत्यर्थविवृद्धे अरुणे रक्ते रौद्रे भयानके नेत्रे यस्य स तथा, भ्रुवोः कुटी कौटिल्यं वैकल्यस्यार्थेऽसे इत्यत्र व्यवस्थितविभाषार्थो वाशब्दस्तेन सम्ब्यतिरिक्तस्थाने क्वचित् समासे ह्रस्वः स्यादिति देवीदासचक्रवर्त्तिना व्याख्यातं तेनात्र पाक्षिको भ्रुवो ह्रस्वः मनीषादित्वाद्वा टु ओश्वि गतिवृद्ध्योः मूत्रसूत्रेति यङ् श्वेर्णुः घोऽज्यरे उपाङ्पूर्वाल्लभेर्गर्हायां टी तन् झसस्थाज्झसीति सेर्लोपः टुमस्जोश शुद्धौ ल्यां सिः अनिम्त्वात् व्रजवदेति त्रिः स्थादेः

नृपात्मजौ चिक्लिशतुः ससीतौ ममार राजा विधवा भवत्यः ।
शोच्या वयं भूरनृपा लघुत्वं कैकय्युपज्ञं बत बह्वनर्थम् ॥ २१ ॥

---

स्रो लोपः चूङिति कुङ् क्लिलादिति षः नुण् रघ इति नुण् न्नोर्नुरित्यनुस्वारः अपेजन्नोरिति ङः ॥ २० ॥ भ०

नृपेत्यादि। नृपात्मजौ रामलक्ष्मणौ ससीतौ सीतया सह चिक्लिशतुः क्लिष्टौ, ममार मृतो राजा म्रियतेर्लुङ्लिङो-श्चेति नियमात् तङोऽभावः। विधवाः धवो भर्त्ता तेन विना भवत्यो जाताः, शोच्याः शोचनीया वयम् अयशोभाजनत्वात् ऋहलोर्ण्यत्। शङ्क्या इति पाठान्तरम् शङ्कनीया वयम् एतत्कृ·तोऽयं प्रयोग इति, भूश्चानृपा न विद्यते नृपो यस्यामिति नञोऽस्त्यर्थानामिति बहुव्रीहिः। लघुत्वं राज्यप्रार्थनालक्षणं कैकय्युपज्ञम् कैकय्याः प्रथमतो ज्ञातं नान्यस्य कस्यचित् पूर्वं ज्ञातम्। उपज्ञायते इत्युपज्ञम् आयश्चोपसर्ग इति स्त्रियामङ् कल्लक्षणा षष्ठी कैकय्या उपज्ञेति समासः। उपज्ञोपक्रम-मिति नपुंसकता बत कष्टं बह्वनर्थं बहुदोषं क्लेशमरणाद्यनि-ष्टानां सम्भवात् भरतकृत एवायं प्रयोग इत्येतत् परिहर-न्नाह ॥ २१ ॥ ज० म०

नृपात्मजावित्यादि। सीतासहितौ नृपात्मजौ राम-लक्ष्मणौ चिक्लिशतुः दुःखितौ क्लिश्युङ् उपतापे। राजा ममार मृङ्स्त्रीढेत्र इति नियमात् पम्। धवो भर्त्ता तेन विहीना भवत्यो जाताः मातृगणं सम्बोध्योक्तं कैकय्युपालम्भोऽयम्। वयं शोच्याः अयशोभाजनत्वात् शोकार्हाः तेत्याः शक्यार्ह इति अर्हार्थे घ्यण् इमन्तत्वात् चजोः कगाविति सेमुक्तवर्जनात् कत्वं किंवा आवश्यकत्वविवक्षया नावश्यके इति निषेधः। शङ्क्या इति पाठे एतत्कृतोऽयं प्रमाद इति लोकैः शङ्कय

नैतन्मतं मत्कमिति ब्रुवाणः
सहस्रशोऽसौ शपथानशप्यत् ।
उद्वाश्यमानः पितरं सरामं
लुठ्यन् सशोको भुवि रोरुदावान् ॥२२॥

---

वितर्कणीया, भूरनृपा राजशून्या, लघुत्वं राज्यप्रार्थनरूपं नीचकर्म कैकय्युपज्ञं कैकय्याः सकाशात् प्रथमत उपलब्धं नान्यतः केनापि दृष्टमित्यर्थः, उपज्ञायते इत्युपज्ञा क्विप्। उपज्ञोपक्रमान्तस्य तदादित्वप्रकाशने इत्यमरवचनात् नपुंसकत्वं लिङ्गस्य लोकाश्रयत्वात् बह्वनर्थं बहवोऽनर्था दोषा यत्र तत्तथा, वत इति खेदे ॥ २१ ॥ भ०

नैतदित्यादि। यदेतत् कैकय्यनुष्ठितं मतमभिप्रायः न मत्कं मत्कृतं तत् नाहमस्य ग्रामणीर्न प्रभुरिति अस्मच्छब्दात् स एषां ग्रामणीरिति कन्प्रत्ययोत्तरपदयोश्चेति मपर्यन्तस्य मादेशः सास्मन्मतादनुष्ठितमनयेत्यर्थः इत्येवं ब्रुवाणः सहस्रशो बहुवारानसौ भरतः शपथान् सम्प्रत्ययकारणवचनानि अशप्यत् कृतवान् अनेकार्थत्वाद्धातूनां शपेर्दैवादिकस्य उभयपदिनो लुङि रूपम्। उद्वाश्यमानः आह्वयन् वाश्र शब्दे दैवादिकः अनुदात्तेत्। पितरं सरामं हा तात! हा रामेति लुठ्यन् भुवि लुठन् लुट विलोडने दैवादिकः परस्मैपदी। सशोक इति शाठ्यपरिहारार्थं रोरुदावान् अत्यर्थं रोदनं कुर्वन् यङन्तात् अः प्रत्ययादित्यकारः अतो लोपः यस्य हलः स्त्रियामतष्टाप् सा विद्यते यस्येति मतुप् ॥ २२ ॥ ज० म०

स्वदोषं परिहरन्नाह। नैतदित्यादि। यदेतत् कैकय्या कृतं तन्न मत्कं मत्स्वामिकं मत्कर्तृकं मतम् अहमस्य प्रभुरित्यर्थे विकारसंघेत्यादिना कः, इति ब्रुवाणोऽसौ भरतः सह-

तं सुखयन्तः सचिवा नरेन्द्रं दिधच्चयन्तः समुदूहुरारात्।
अन्त्याहुतिं हावयितुं सविप्राश्चिचीषयन्तोऽध्वरपात्रजातम्
॥ ३३ ॥

सशो बहुवारान् शपथान् प्रत्ययकारणानि अशप्यत उक्तवान् शपयौज आक्रोशे आक्रोशो भाषणं धातूनामनेकार्थत्वात् शपिरत्र करोत्यर्थो वा। सरामं पितरं उह्यमानः हा राम ! हा तातेति आह्वयन् उच्चाश्चक्ष्चशब्दे भुवि लुठन् लुटविलोडने रोरुदावान् अत्यर्थरोदनयुक्तः रुदेर्यङन्तात् संस्याद इति अप्रत्ययः ततो वतुः। हेतुमाह सशोक इति सहसशब्दात् संख्यैकार्थादिति चशम् ॥ ३२ ॥ भ०

तमित्यादि। सचिवा अमात्याः कार्य्येषु सचन्ते समवयन्तीति सचेरिवन्नित्यौणादिक इवन्। तं भरतं सुखयन्तः सुखं कुर्वाणाः तत् करोतीति णिच्। नरेन्द्रं दशरथं समुदूहुः उद्वाहितवन्तः शिविकायामारोप्य वहिरन्तर्भावितण्यर्थोऽत्र द्रष्टव्यः यजादित्वात्सम्प्रसारणम् आरात् नातिदूरे दिधच्चयन्तः दग्धुमिच्छन्तं भरतं प्रयोजितवन्तः दहेः सनि दातेर्द्धातो घः भषभावत्वे प्रयोजकव्यापारे णिच् अन्ते विनाशे वभा या आहुतिः दिगादित्वाद्यत्। तामन्त्याहुतिं हावयितुमग्नौ प्रक्षेपयितुं सविप्राः ब्राह्मणैः सहिताः सचिवाश्चिचीषयन्तः चेतुं निधातुमिच्छन्तः प्रयोजितवन्तः। किं तत् अध्वरपात्रजातं यज्ञोपयोगिपात्राणां स्रुवादीनां समूहम् ॥ ३३ ॥ ज० म०

तमित्यादि। विप्रसहिताः सचिवाः अमात्यास्तं भरतं सुखयन्तः सुखं कुर्वन्तः नरेन्द्रं दशरथं समुदूहुः वहेरन्तर्भावितण्यर्थात्। शिविकायामारोप्य उद्वाहितवन्त इत्यर्थः विप्राणां वहनानौचित्यात् वहेः णौ प्रापणे ठौ व्यथयहेति जिः यहस-

उदक्षिपन् पट्टदुकूलकेतूनवादयन् वेणुमृदङ्गकांस्यम् ।
कम्बूंश्च तारानधमन् समन्तात्तथानयन् कुङ्कुमचन्दनानि ॥३४॥

---

पाय्योरिति प्रकृतेर्जिः । सुखयन्त इति लेःक्त्याख्याने ञिरिति सुखशब्दात् ञिः । आरात् समीपे दिधक्षयन्तो दग्धुमिच्छां कारयन्तः दहेः सनन्तात् ञिः शद्धः । अन्त्याहुतिं ह्वावयितुम् अग्नौ प्रक्षेपयितुम् अध्वरपात्रजातं यज्ञोपयोगिस्रुवादिसमूहं चिचीषयन्तः चेतुमिच्छां कारयन्तः अन्तकाले भवोऽन्त्यः ढघेकादिति ण्यः सचिः सेवा विद्यतेऽस्य सचिवः गोत्रणेत्यादिना केशादित्वाद्वः, सचन्ति कार्य्येषु समवयन्तीत्यर्थे सचिवाः निपातनाद्वा ॥ ३३ ॥ भ०

उदेत्यादि । पट्टदुकूलविरचितान् केतून् ध्वजानुदक्षिपन् उच्छ्रितवन्तः ये नियुक्ताः क्षिपिस्तौदादिकस्य ग्रहणम् । वेणुमृदङ्गकांस्यं वंशमुरजकांस्यतालमवादयन् वादितवन्तः वदेर्ण्यन्तस्यैव प्रयोगः जातिरप्राणिनामित्येकवद्भावः न पुनस्तर्य्याङ्गत्वात् तत्र हि प्राणिनां तुङ्गानां द्वन्द्वैकवद्भावः यथा मार्दङ्गिकपाणविकमिति वृत्वर्दिहनिकमिकषिभ्यः सः इत्यौणादिकः कंसशब्दः तदर्थाय हितं कंसीयं त्रपुणा दृढद्रव्यं प्रकृतिविकारभावे छः तस्य विकार इति कंसीयपरशव्ययोर्यञञौ लुक् वेति छस्य लुक् यञ् च प्रत्ययः । कम्बून् शङ्खान् तारान् उच्चैस्तरध्वनीन् अधमन् शब्दितवन्तः प्राघ्रेत्यादिना धमादेशः तथा कुङ्कुमचन्दनानि आनयन् आनीतवन्तः सर्वत्र लङि रूपम् । अन्त्येष्टिं दर्शयन्नाह ॥ ३४ ॥ ज० म०

उदक्षिपन्नित्यादि । अर्थात् तत्र नियुक्तास्ते जनाः पट्टदुकूलरचितान् केतून् ध्वजान् उदक्षिपन् उच्छ्रितवन्तः क्षिपस्तौदादिकः । कार्पासं बादरं प्रोक्तं दुकूलाद्यञ्च वाल्कलम् ।

श्रोत्राच्छिनासावदनं सरुक्मं कृत्वाजिने प्राक्शिरसं निधाय।
सञ्चित्य पात्राणि यथाविधानमृत्विग् जुहाव ज्वलितं चिताग्निम्
॥ ३५ ॥

---

कौषेयं क्रिमिजञ्चापि राङ्कवं मृगरोमजमित्यमरमाला। वेणुमृदङ्गकांस्यम् अवादयन् वादितवन्तः अप्राणिजातित्वात् समाहार इति कालापाः, तूर्य्याङ्गत्वात् इति वासवताः। सर्वो द्वन्द्वः समाहार इति प्राञ्चः। स्वमते इतरेतरयोगे च समाहारे च चो द्विधेति समान्येन द्विविधो द्वन्द्व उक्तः, तत्र क्वचिदितरेतरः क्वचित् समाहारः अभिधानात् बोद्धव्यः। यदुक्तं "कृत्तद्धितसमासानामभिधानं नियामकम्" इति। कम्बून् शङ्खान् तारान् उच्चतरध्वनीन् अधमन् शब्दायितवन्तः स्थादानपाघ्रेति ध्माधमः तथा कुङ्कुमचन्दनानि आनयन् सर्वत्र घौ ॥ ३४ ॥ भ०

श्रोत्रेत्यादि। अजिने कृष्णसारचर्मणि प्राक् पूर्वं शिरो मूर्द्धा यस्येति तं प्रक्शिरसं शवं निधाय स्थापयित्वा पश्चात् श्रोत्राच्छिनासावदनं प्राण्यङ्गत्वादेकवद्भावः द्वतृवदीत्यादिसूत्रस्यानन्तरं नयतेराचेति प्रकृतेराकारे नासेत्यौणादिकं रूपम्। सरुक्मं ससुवर्णं कृत्वा सञ्चित्य विन्यस्य अङ्गप्रत्याङ्गेषु पात्राणि स्रुवादीनि यथाविधानं यादृशं विधानमुक्तं गृह्यशास्त्रे। ऋत्विक् याजकः ऋतौ यजतीति ऋत्विग्दधृगित्यादिना निपातितः। ज्वलितञ्चिताग्निं चयनं चितं तदर्थमग्निं जुहाव जुहोति स्म ॥ ३५ ॥ ज० म०

श्रोत्रेत्यादि। प्राक् पूर्वस्यां दिशि शिरो यस्य तादृशं शरीरं अजिने कृष्णसारचर्मणि निधाय संस्थाप्य श्रोत्राच्छिनासावदनं सरुक्मं सुवर्णयुक्तं कृत्वा यथाविधानं विधानमनतिक्रम्य

कृतेषु पिण्डोदकसञ्चयेषु हित्वाभिषेकं प्रकृतं प्रजाभिः ।
प्रत्यानिनीषुर्विनयेन रामं प्रायादरण्यं भरतः सपौरः ॥ २६ ॥

---

पात्राणि स्रुवादीनि सञ्चित्य अङ्गेषु निधाय ऋत्विक् याजकः ज्वलितं चिताग्निं जुहाव एतेनान्त्येष्टिरुक्ता । ऋतौ यजतीति ऋत्विक् त्वासुसिति क्विप् चुडिति कुङ् । श्रोत्रेत्यादि प्राण्यङ्गत्वात् द्वन्द्वैकत्वं क्लीवत्वञ्च नित्यं भजते इति परः । स्वमतेऽत्र वेणुमृदङ्गकांस्यमितिवत् समाहारो द्वन्द्वः इतरेतरोऽपि दुर्निवारः । यथा ग्रीवाकुक्षिललाटेषु नित्यं स्वेदः प्रशस्यते । गण्डे चुम्बं ललाटाक्षिकक्षोरुभगमूर्द्धसु ॥” इत्यादि दर्शनात् परमतं हेयम् ॥ २५ ॥ भ०

कृतेष्वित्यादि । पिण्डोदकदानास्थिसञ्चयेष्वनुष्ठितेषु प्रजाभिः प्रकृतं प्रस्तुतमभिषेकमादि कर्मणि क्तः । हित्वा त्यक्त्वा जहातेश्च क्त्वीति हिरादेशः । रामं प्रत्यानिनीषुः प्रत्यानेतुमिच्छुः विनयेन प्रसादनया न भयादरण्यं वनं प्रायात् गतवान् भरतः सह पौरैः अयोध्यासर्वैर्जनैर्मयैकेन प्रसाद्यमानः कदाचिन्नागमिष्यतीति भावः ॥ २६ ॥ ज० म०

कृतेष्वित्यादि । पिण्डोदकदानास्थिसञ्चयनेषु कृतेषु पश्चात् प्रजाभिः प्रकृतं प्रस्तुतमभिषेकं हित्वा विनयेन रामं प्रत्यानिनीषुः प्रत्यानेतुमिच्छुर्भरतः पौरैः सह अरण्यं प्रायात् जगाम यातेर्ल्यां रूपम् । प्रकृतमिति आरम्भे क्तः । हित्वेति हाको हिः । आत्मनो विनयज्ञापनार्थं मयैकेन प्रसाद्यमानः कदाचित् नागच्छेदित्याशङ्क्य पौरैः सह गमनं पिण्डोदकपदेन दानं लक्षणा सञ्चयोऽस्थिसञ्चयनं पिण्डोदकानां सञ्चया इति केचित् ॥ २६ ॥ भ०

शीघ्रायमाणैः ककुभोऽश्नुवानैर्जनैरपन्थानमुपेत्य सृप्तैः।
शोकादभूषैरपि भूश्चकासाञ्चकार नागेन्द्ररथाश्वमिश्रैः ॥२७॥

---

शीघ्रेत्यादि। जनैर्हेतुभूतैर्भूश्चकासाञ्चकार शोभते स्म कर्त्तुः क्रियाफलयोगेऽपि नात्मनेपदम् आम्प्रत्ययवदित्यत्र पूर्वग्रहणानुवृत्तेः चकासेश्च परस्मैपदित्वादिति विधिनियमौ स्थितौ। शीघ्रायमाणैः अशीघ्रैः शीघ्रैर्भवद्भिर्झटिति गच्छद्भिरित्यर्थः भृशादित्वात् क्यङ् ङित्त्वात्तङ्। ककुभोऽश्नुवानैः दिशो व्याप्नुवद्भिः अश्नोतेः सौवादिकस्य आत्मनेपदिनो रूपम्। अपन्थानमुपेत्य सृप्तैः बहुलत्वादमार्गमपि गत्वा गतैः ऋक्पुरित्यादिना समासान्तः प्राप्तो नञस्तत्पुरुषादिति प्रतिषिद्धः सन् पथो विभाषेति विकल्पितः। शोकाद्धेतोरभूषैरनलङ्कारैरपि चकासाञ्चकार भूः भूमिः भूषेति गुरोश्च हल् इत्यकारप्रत्ययः, चकासृ दीप्तावित्यस्मात् कास्यनेकाज् ग्रहणञ्चुलुम्पाद्यर्थमित्याम्। नागेन्द्ररथाश्वमिति द्वन्द्वे एकवद्भावः अल्पाच्तरस्य न पूर्वनिपातः बहुष्वनियम इति वचनात् तेन सेनाङ्गत्वात् कृतकवद्भावेन मिश्रैर्युक्तैः पूर्वसदृशेत्यादिना तृतीयासमासः॥ २७॥

ज० म०

शीघ्रायमाणैरित्यादि। शोकात् भूषारहितैरपि जनैर्भूश्चकासाञ्चकार चकासृ दीप्तौ विंजादिदयेत्यादिनाम् भ्वस्कृ न्वामः भूषेति सेमुज्ञात् सरोरिति अः। किम्भूतैः शीघ्रायमाणैः अशीघ्रैः शीघ्रैर्भवद्भिः कार्य्यवशात् द्रुतं गच्छद्भिरित्यर्थः भृशादेश्चय्यर्थे इति ञ्यः घोऽञ्य्यरे इति घः ङित्त्वान्मम्। ककुभो दिशः अश्नुवानैर्व्याप्नुवद्भिः अशूङ्ण व्याप्तिसं त्योः बहुलत्वात् अपन्थानमपि व्याप्य सृप्तैर्गतैः विकल्पितमप्रत्ययान्तम्। नागेन्द्रा हस्तिश्रेष्ठा रथा अश्वाश्चेति परमते सेनाङ्गत्वात् समाहारद्वन्द्व

उच्चिकियिरे पुष्पफलं वनानि सस्नुः पितॄन् पिप्रियुरापगासु ।
आरेमुरित्वा पुलिनान्यशङ्कं छायां समाश्रित्य विशश्रमुश्च ॥ ३८॥

---

एव स्वमते इतरेतरद्वन्द्वोऽपि लभ्यते । मिश्रैर्युक्तैः ॥ ३७ ॥ भ०

उच्चीत्यादि । ते जनाः गच्छन्तः पुष्पफलं पुष्पाणि फलानि चेति जातिरप्राणिनामित्येकवद्भावः । उच्चिकियिरे उच्चितवन्तः ञित्वात्तङ् कर्त्तुः क्रियाफलयोगात् विभाषा चेरिति धातोः कुत्वमेरनेकाच इति यणादेशः । उच्चिच्यिरे इति पाठान्तरं युक्तं वनानीति हेतुत्वेनाकथितं कर्म । वनानि विघट्टयन्तः फलानि जगृहुरित्यर्थः, ततः सस्नुः स्नातवन्तः स्नातेर्लिटि उस्यपदान्तादि-पररूपम् । पितॄन् पिप्रियुः उदकाञ्जलिना तर्पितवन्तः प्रीणातेर्लिटि इयङादेशः, आपगासु नदीषु एतत् कृत्वा पुलिनानि सैकतानि इत्वा आरेटुः आरटिताः । आरेमुरिति पाठान्तरं शोकापनोदनार्थं कियन्तमपि कालमारमन्ति स्म व्याङ्परिभ्यो रम इति परस्मैपदम् । अशङ्कं विस्रब्धं छायां समाश्रित्य विशश्रमुः विश्रान्ताः ॥ ३८ ॥ ज० म०

उच्चिक्यिरे इत्यादि । ते जना वनानि पुष्पाणि फलानि च उच्चिकियिरे चिञ् चयने ठो याच्ञार्थदुहचिप्रच्छीति द्विकर्मकत्वं चेः किर्वेति किः अ्युध्वोरिति यत्वम् । वनानि विघट्टयन्तः पुष्पफलं जगृहुरित्यर्थः, परमते अप्राणिजातित्वात् समाहारद्वन्द्वः, स्वमतं मृदङ्गकांस्यमित्यत्रोक्तम् । आपगासु नदीषु सस्नुः स्नातवन्तः. पितॄन् पिप्रियुः तर्पितवन्तः प्रीञ् तर्पणे अ्युध्वोरितीयादेशः । पुलिनानि सैकतानि इत्वा गत्वा आरेमुः शोकापनोदनार्थं क्रीड़न्ति स्म घे पमित्यादिना पं आरेटुरिति पाठे शोकात् शब्दं चक्रुरित्यर्थः । रटपरिभाषणे तृफलेति अत

सम्प्राप्य तीरं तमसापगाया गङ्गाम्बुसम्पर्कविशुद्धिभाजः ।
विगाहितुं यामुनमम्बु पुण्यं ययुर्निरुद्धश्रमवृत्तयस्ते ॥ २९ ॥
ईयुर्भरद्वाजमुनेर्निकेतं यस्मिन् विशश्राम समेत्य रामः ।

---

एवं खिलीपश्च । अशङ्कं निःशङ्कं यथा स्यात्तथा छायां समाश्रित्य विशश्रमुः ॥ २८ ॥ भ०

सम्प्राप्येत्यादि । तमसापगायाः तमसाख्यायाः आपगायाः नद्याः अत्यविचमितमिनमिरभिलभितपिपतिजनिपणिमहिभ्योऽसच् । यस्याः स्मरणात् पापं ताम्यति सा तमसा । तरसा इति पाठान्तरं, तत्र तरसा वेगेन आपगाया अर्थात्तमसाया नद्या गङ्गाम्बुसम्पर्कात् विशुद्धिं पवित्रतां भजते या तस्यास्तीरं कूलं सम्प्राप्य गत्वा ते जना निरुद्धश्रमवृत्तयः ययुः गताः । गङ्गेति गन् गम्पद्योरित्यौणादिको गन् विगाहितुं विगाहिष्यामहे इति कृत्वा यामुनमम्बु यमुनाया इदं यमुनासम्बन्धि जलं पुण्यं पुण्यहेतुत्वात् पुण्ययुक्तत्वात् वा ॥ २९ ॥ ज० म०

सम्प्राप्येत्यादि । ते जनास्तमसापगायास्तमसानामनद्यास्तीरं कूलं सम्प्राप्य निरुद्धश्रमवृत्तयः सन्तः यामुनं यमुनासम्बन्धि पुण्यं पावनम् अम्बु जलं विगाहितुं ययुः । तरसेति पाठे वेगेनेत्यर्थः । यमुनाशब्दात् विकारसंघेत्यादिना इदमर्थे ष्णः णित्ते वृिरिति वृिः । तमसापगायाः कीदृश्याः गङ्गाजलसम्पर्कात् अतिशयितशुद्धिं भजते या तस्याः ढाङ्गजसहृवहेति विण् ॥ २९ ॥ भ०

ईयुरित्यादि । भरद्वाजमुनेर्निकेतम् आश्रममीयुः गताः इणो यणिति यत्वम् अभ्यासस्य दीर्घः, इणः कितीति दीर्घत्वम् । यस्मिन् निकेते रामो विशश्राम श्रिश्रान्तः, समेत्य मिलित्वा

च्युताशनायः फलवद्विभूत्या व्यस्यन्नुदन्यां शिशिरैः पयोभिः ॥ ४० ॥

वाचंयमान् स्थण्डिलशायिनश्च युयुक्षमाणाननिशं मुमुक्षून् ।

---

तमीयुर्जना इति योज्यम् । फलवद्विभूत्या फलवतां वृक्षाणां समृद्ध्या हेतुभूतया च्युताशनायोऽपगतबुभुक्षः अशनायेत्यादिना निपातितः । व्यस्यन् उदन्यां वारयन् असिर्दैवादिकस्य रूपम् । उदन्यां पिपासां शिशिरैः शीतलैः पयोभिः ॥ ४० ॥ ज० म०

ईयुरित्यादि । ते भरद्वाजमुनेर्निकेतमीयुर्गता इत्यर्थः इण गतौ ठौ यिणोऽच्यणाविति यादेशः खेः क्ङिति र्व दीर्घः । यस्मिन् निकेते रामः समेत्य संगत्य विशश्राम विश्रान्तः । कीदृशः स फलवतां वृक्षाणां विभूत्या समृद्ध्या च्युताशनायः व्यपगतबुभुक्षः अशनशब्दात् क्षोम्बरादिति क्यः धनोदकाशन इत्यादिना अन्नार्थे ङ्यः ततः शंस्त्याद इत्यः स्त्रीत्वञ्च । च्युता अशनाया यस्य स तथा । शिशिरैः शीतलैः पयोभिर्जलैरुदन्यां पिपासां व्यसन् अपनयन् असु इक्षेपे शद्घः उदकस्य उनङ् पानार्थे पूर्ववत् । पयोभिरिति पीङ्य पाने त्वासुसिति अस ॥ ४० ॥ भ०

वाचमित्यादि । ते भरद्वाजमुनिं सशिष्यं शिष्यैः सह वर्तमानं प्रणेमुः प्रणमन्ति स्म । विनयात् विनयेन अतएव पद्गाः पदातयः पादाभ्यां गच्छन्तीति अन्येष्वपि दृश्यते इति डः हिमकाषिहतिषु चेति चकारस्य अनुक्तसमुच्चयार्थत्वात् गमोत्तरपदे पदादेशः पदिति योगविभागाद्वा । कीदृशम् अध्यापयन्तं पाठयन्तं कान् वाचंयमान् मौनव्रतान् वाचियमो व्रत इति खच् वाचंयमपुरन्दरौ चेति निपातनात् पूर्वपदस्य अम

अध्यापयन्तं विनयात् प्रणेमुः पद्गा भरद्वाजमुनिं सशिष्यम्
॥ ४१ ॥

आतिथ्यमेभ्यः परिनिर्विवत्सोः
कल्पद्रुमा योगबलेन फेलुः।

---

न्तता। स्थण्डिलशायिनः भूशायिनः स्थण्डिलाच्छयितरिव्रत इति णिनिः। युयुक्षमाणान् योक्तुमिच्छतः योगाभ्यासनिष्ठा- नित्यर्थः अनिशमविच्छेदेन मुमुक्षून् मोक्षाभिलाषिण इत्यर्थः अतएव योगाभ्यासमिच्छून् ॥ ४१ ॥ ज० म०

वाचंयमानित्यादि। ते जनाः सशिष्यं भरद्वाजमुनिं प्रणेमुः नमो शब्दनत्योः तृफलेति अत एत्वं खिलोपश्च प्राग्वन्नो ण इति णत्वं नादित्वात्। विनयात् विनयं विधाय यवर्थे पञ्चमी हेतौ वा। कीदृशाः पद्गाः एतेन यानस्था अपि ये तेऽपि विनयात् पद्गाः पद्भ्यां गच्छन्तीति हनजनादिति डः। पादसमानार्थोऽयं पच्छब्दः। अध्यापयन्तं पाठयन्तं क्रीजीङोऽजेतीङ आक्रीवी- रीत्यादिना पन्। कानित्याह वाचंयमान् मौनव्रतिनः तृक्षवृट- जीत्यादिना आवन्तयाचा शब्दान् यमः खः खित्यव्याजेति मन् खश्च, परे तु वाक्शब्दोपपदेन साधयन्ति। स्थण्डिलशा- यिनः तृणाच्छादितभूमिशायिनः ग्रहादित्वान्निन्, व्रते णिन्निति परः। युयुक्षमाणान् योक्तुमिच्छून् योगाभिलाषिण इत्यर्थः युज्यौङ् समाधौ सन् शानः शानेऽतो मन्। अनिशं निरन्तरं मुमुक्षून् मोक्षाभिलाषिणः मुलृशपञ्चौ मोक्षे सन् सनभिक्षाशंस उः वृमृजुषस्त्विणिति शास्तेः क्यप् शासुङिति इत् क्विला- दिति षः ॥ ४१ ॥ भ०

आतीत्यादि। अतिथ्यर्थमातिथ्यमन्नपानादि अतिथेर्ण्यः एभ्यो भरतादिजनेभ्यः इति सम्प्रदाने चतुर्थी परिनिर्विवत्सोः

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



धामप्रथिम्नो म्रदिमान्वितानि
वासांसि च द्राघिमवन्त्युदूहुः ॥ ४२ ॥

---

निर्वप्तुमिच्छोर्दातुमिच्छोरित्यर्थः । निपूर्वो वपिर्दाने वर्त्तते धामप्रथिम्नः धाम्ना तेजसा प्रथिमा पृथुत्वं यस्य तेजसो वहिर्निर्गतत्वात् शरीरस्य पृथुत्वं जायते । तस्य भरद्वाजमुनेर्योगबलेन समाधिबलेन युज समाधावित्यस्य रूपम् । कल्पद्रुमाः फेलुः फलिताः भक्ष्यान्नपानादिकमित्यर्थः तॄफलभजत्रपश्चेत्येत्वमभ्यासलोपश्च । वासांसि च वस्त्राणि उदूहुः उद्वहन्ति स्म यजादित्वात् सम्प्रसारणम् । म्रदिमान्वितानि मृदुत्वमुपगतानि द्राघिमवन्ति दैर्घ्ययुक्तानि पृथुमृदुदीर्घशब्देभ्यस्तस्य भाव इत्यर्थे पृथ्वादिभ्य इमनिच् पृथुमृदुशब्दयोॠतो हलादेरिति रादेशः दीर्घशब्दस्य प्रियस्थिरेत्यादिना द्राघादेशः पश्चान्मतुप् ॥ ४२ ॥ ज० म०

आतिथ्यमित्यादि । आतिथ्यम् अतिथ्यर्थमन्नपानादिकम् एभ्यो भरतादिभ्यः परि सर्वतो निर्वप्तुं दातुमिच्छोर्मुनेर्योगबलेन समाधिबलेन कल्पवृक्षाः फेलुः अर्थात् अन्नपानादिकं तॄफलेति अत एत्वं खिलोपश्च विकारसंघेत्यादिना तादर्थ्ये अतिथेः ण्यः निपूर्वो वपिर्दाने वर्त्तते युज्यौङ् समाधौ घञि चजो कुगाविति जस्य गत्वम् । तस्य मुनेर्धामप्रथिम्नो हेतोस्तेजोबाहुल्यात् ते कल्पद्रुमा वासांसि उदूहुः उद्वहन्ति स्म चकारः समुच्चये वहैञौ प्रापणे व्यथग्राहेति जिः । कीदृशानि म्रदिमान्वितानि मृदुत्वेन युक्तानि द्राघिमा दैर्घ्यं विद्यते येषां तानि गुणादिमन् भावे इति पृथमृदुदीर्घशब्देभ्यः इमन् पृथुमृदुभृशेति पृथुमृदुशब्दयोः ऋकारस्य रः वाढान्तिकेति दीर्घस्य द्राघादेशः औमंश्चडिदिति डित्त्वे टेर्लोपः द्राघिमश-

आज्ञां प्रतीषुर्विनयादुपास्थुर्जगुः सरागं ननृतुः सहावम्।
सविभ्रमं नेमुरुदारमूचुस्तिलोत्तमाद्या वनिताश्च तस्मिन्॥४३॥

---

ब्दात् मोज्भ्रूपादित्यस्यार्थ वतुः। तेजसां प्रथिमा यस्य इति मुनिविशेषणं केचिदाहुः॥ ४२॥ भ०

आज्ञामित्यादि। तस्मिंस्तपोवने तिलोत्तमाद्या वनिता दिव्यस्त्रियः आगता आज्ञामादेशं मुनेः प्रतीषुः प्रतीष्टवत्यः चेटीभवत्य इत्यर्थः प्रतिपूर्व इषिर्ग्रहणे वर्त्तते तस्य लिटि रूपम्। विनयादुपास्थुः उपस्थिताः पादप्रक्षालनादिदानेन उपस्थानं कृतवत्यः उपपूर्वात्तिष्ठतेर्लुङि सिच् गातिस्थेति सिचो लुक् सिजभ्यस्तविदिभ्यश्चेति झेर्जुस् उस्यपदान्तादिति पररूपम्। जगुः सरागं सरक्तं गीतवत्यः, ननृतुः सहावं सशृङ्गारचेष्टं नर्त्तितवत्यः। सविभ्रमं नेमुः सविलासं प्रणताः, उदारमूचुः अग्राम्यमुक्तवत्यः॥ ४३॥ ज० म०

आज्ञामित्यादि। धामप्रथिम्नः किमित्याह तस्मिन् वने तिलोत्तमाद्या वनिता अप्सरस आगत्य मुनेराज्ञां प्रतीषुर्गृहीतवत्यः प्रतिपूर्व इषिर्ग्रहणे ल्यां रूपम्। विनयात् उपास्थुः भरतादीनाम् उपासनां चक्रुः उपपूर्वात्तिष्ठतेर्ल्यां रूपं भूस्थापिबेति सेर्लुक् अनुस्सिद्वेरिति अन उस् उस्येचीत्यालोपः। सरागं मालवादिरागयुक्तं यथा स्यात्तथा जगुः गीतवत्यः गै गाने ठो। सहावं शृङ्गारचेष्टायुक्तं ननृतुः नृत्यञ्चक्रुः। हावाः क्रियाः शृङ्गारभावजा इत्यमरः। सविभ्रमं नेमुः प्रणामं चक्रुः। विभ्रमस्त्वरया काले भूषास्थानविपर्य्ययः। चित्तवृत्त्यनवस्थानं शृङ्गाराद्विभ्रमोऽथवा। विलास इत्यन्ये। उदारमग्राम्यमूचुः। वनिता जनितात्यर्थानुरागायाञ्च योषितीति कोषः। चकारः पूर्वापेक्षया॥ ४३॥ भ०

वस्त्रान्नपानं शयनञ्च नाना कृत्वावकाशे रुचिसम्प्रक्लृप्तम् ।
तान् प्रीतिमानाह मुनिस्ततः स्म निवद्ध्वमाद्ध्वं पिबताऽत्त शेध्वम्
॥ ४४ ॥

---

वस्त्रेत्यादि । ततो वनितोपस्थानानन्तरमवकाशे प्रदेशे यथाभिमते वस्त्रान्नपानं सर्वो द्वन्द्वो विभाषैकवद्भवतीत्येकवद्भावः । शयनमित्यधिकरणे ल्युट् । नाना कृत्वा पृथक् कृत्वा रुचिसम्प्रक्लृप्तं यस्य यावदभिरुचितं तत्तथैव सम्पादितम्, कृपो रो लः प्रीतिमान् मुनिस्तान् भरतादीनाह स्म उक्तवान् । किमाह निवद्ध्वं परिधत्त वस्त्राणि वस आच्छादने इत्यस्य विधौ लोट्, झलाञ्जशझशीति सकारस्य दकारः । आद्ध्वं उपविशत आसेः पूर्ववत् दादेशः । अत्त खादत अन्नादिकं अद भक्षणे इत्यस्मात् लोट् । पानादिकं पिबत पिबतेः पाघ्रादिसूत्रेण पिबादेशः । शेध्वं स्वपत शयने । सर्वत्र विधौ लोट् ॥ ४४ ॥ ज० म०

वस्त्रान्नपानमित्यादि । ततो वनितोपस्थानानन्तरं धामप्रथिम्नो हेतोर्वा अवकाशे यथायोग्यस्थाने वस्त्रं अन्नं पानं शयनञ्च रुचिसम्प्रक्लृप्तं यस्य यथा रुचिस्तथैव सम्पादितम् । अतएव नानाविधं कृत्वा प्रीतिमान् मुनिस्तान् भरतादीन् आह स्म उवाच । किन्तदित्याह निवद्ध्वं वस्त्राणि परिधत्त वसङ्ल स्तृतौ स्तृतिराच्छादनं झपभषोरिति सस्य दत्वं, निर्दकारपठे धि सलोपो वेति पाक्षिकः सलोपः । सर्वत्र विधौ णी । आद्ध्वम् उपविशत जिआसङ् उपवेशे पूर्ववत् । पिबत पयःप्रभृतिकमर्थात् पा पाने स्यादानेति पिबादेशकरणान्न गुणः किंवा पिबादेशोऽयमदन्तः तेन गुर्घुङ इत्यस्य न विषयः, लोपोऽतोदेघोरित्यकारलोपः । अत्त भक्षयत अदृलो भक्षणे । शेध्वं शयनं कुरुत शीङो रे गुः । वस्त्रमिति वसेस्त्रासुसिति त्रः । अन्नमिति

ते भुक्तवन्तः सुसुखं वसित्वा
वासांस्युषित्वा रजनीं प्रभाते ।
द्रुतं समध्वा रथवाजिनागैः
मन्दाकिनीं रम्यवनां समीयुः ॥ ४५ ॥

---

गोक इति सूत्रे अन्नव्यवस्थनेति ज्ञापकात् न जग्धादेशः अदो जग्धिरनोदने इति परसूत्रं पानमिति कर्मणि आधारे वा अनट् । शयनमित्याधारेऽनट् ॥ ४४ ॥ भ०

ते भुक्तेत्यादि । ते भरतादयः सुसुखमिति क्रियाविशेषणम्, भुक्तवन्तः सन्तो वासांसि वसित्वा परिधाय रजनीमुषित्वा रजनीं रात्रीं वसतिक्षुधोरिट् कालाध्वनोरिति द्वितीया । द्रुतं शीघ्रं प्रभाते मन्दाकिनीं नदीं समीयुः सम्भूय गताः । समध्वा अविच्छिन्नाध्वानः सङ्गता अध्वन इति प्रादिसमासः उपसर्गादध्वन इति समासान्तष्टच् रथवाजीति द्वन्द्वैकवद्भावः । तेन सहिता नागा इति शाकपार्थिवादित्वात् समासः अन्यथा सेनाङ्गत्वात् समुदायस्यैकवद्भावः स्यात् । रम्यवनां रमणीयकाननां रमणीयजलां वा ॥ ४५ ॥ ज० म०

ते इत्यादि । सुसुखं यथा स्यात्तथा भुक्तवन्तः कृतभोजना भरतादयो वासांसि वस्त्राणि वसित्वा परिधाय रजनीं उषित्वा स्थित्वा प्रभाते समध्वा अध्वानं सङ्गताः सन्तः रथवाजिनागैर्द्रुतं शीघ्रं रम्यवनां मन्दाकिनीं समीयुः सङ्गतवन्तः इणश्चरूपम् । मन्दाकिनी चित्रकूटवर्त्मनि नदीविशेषो नर्मदेति प्रसिद्धा गङ्गामात्रे मन्दाकिनीति केचित् । रम्याणि वनानि यत्र । वनं काननीरयोरिति विश्वः । वसित्वेति वसङ् स्तृताविव्यस्य रूपम् । उषित्वेति ऐ वसी निवासे क्षुधवसपूजार्थश्चेति इम् ग्रहस्वपाद्योरिति जिः रजनीमिति देशाध्वकालेति

वैखानसेभ्यः श्रुतरामवार्त्तास्ततो विशिश्राणपतत्त्रिसङ्घम्।
अभ्रंलिहाग्रं रविमार्गभङ्गमानंहिरेऽद्रिं प्रति चित्रकूटम् ॥४६॥

---

कर्मत्वं समध्वा इति गैरध्वन इत्यः न्वोर्लोपीतीते इति नस्य लोपः ययोर्लोप इत्यकारलोपः। रथाश्च वाजिनोऽश्वाश्च नागा हस्तिनश्चेतीतरेतरद्वन्द्वः, परे तु सेनाङ्गानां बहुत्वे समाहार इति रथश्च वाजी च नागाश्चेत्येकवचनेन विग्रहं वदन्ति समाहारविधेरनित्यत्वमित्यन्ये। आदौ रथवाजिशब्दाभ्यां समाहारस्ततो रथवाजिना सहिता नागाः रथवाजिनागाः शाकपार्थिवादित्वादिति केचित् ॥ ४५ ॥ भ०

वैखेत्यादि। ततो मन्दाकिनीगमनान्तरं वैखानसेभ्यस्तृतीयाश्रमिभ्यः चित्रकूटे रामोऽस्तीति श्रुतरामवार्त्ताः चित्रकूटनामानमद्रिं पर्वतं प्रति लक्षणेत्थम्भूताख्यानेत्यादिना कर्मप्रवचनीयसंज्ञा कर्मप्रवचनीययुक्त इति द्वितीया। तं लक्ष्यीकृत्य आनंहिरे जग्मुः अंहतेर्लिटि द्विर्वचनं हलादिः शेषः अत आदेरिति दीर्घः तस्मान्नुट् द्विहल इति नुट्। विशिश्राणपतत्त्रिसङ्घं कूजत्पक्षिगणं अभ्रंलिहाग्रं अभ्रस्पृक्शिखरम् वहाभ्रंलिह इति खश् अरुर्द्विषदित्यादिना मुम्। रविमार्गभङ्गम् उच्चैस्तरत्वात् रवेर्मार्गभङ्गो यस्मिन्नद्राविति ॥ ४६ ॥ ज० म०

वैखानसेभ्य इत्यादि। ततो मन्दाकिनीगमनानन्तरं वैखानसेभ्यो वानप्रस्थेभ्यः श्रुता रामवार्त्ता यैस्तादृशा भरतादयश्चित्रकूटमद्रिं प्रति लक्ष्यीकृत्य आनंहिरे गतवन्तः अहिङ्गती ठो इदित्त्वान्नुण् द्वित्वं स्यान्तादाद्यदाद्यस्नोरिति खेरान्न्नोर्नुरित्यनुस्वारः होर्फस इति हस्य झसत्वात् धिक्समयेति प्रतियोगे द्वितीया। वैखानसो वनेवासी वानप्रस्थश्च तापस इति वैजयन्ती। अद्रिं किम्भूतं विशिश्राणः पतत्त्रिणां पक्षिणां

दृष्ट्वोर्णुवानान् ककुभो बलौघान्
वितत्य शार्ङ्गं कवचं पिनह्य ।
तस्थौ सिसंग्रामयिषुः शितेषुः
सौमित्रिरचिभ्रुवमुज्जिहानः ॥ ४७ ॥

---

सङ्घः समूहो यत्र एतादृशं शिजिकिङ्कस्फुटध्वनौ । अभ्रंलिहाग्रम् अभ्रस्पृक्शिखरं परन्तपवत् खः बाहुल्यात् गुणाभावः उच्चैस्तरत्वाद्रवेर्मार्गभङ्गो वर्त्मविघाती यस्मिन् ॥ ४६ ॥ भ०

दृष्ट्वेत्यादि। बलौघान् दृष्ट्वा सौमित्रिस्तस्थौ स्थितः अभ्यासस्य शर्पूर्वाः खय इति खः । शेषः कीदृशः ककुभो दिश ऊर्णुवानान् आच्छादयतः ऊर्णोतेरादादिकस्योभयपदिनः शानचि उवङादेशे च रूपम् । शार्ङ्गं शृङ्गस्य विकारं धनुर्वितत्य आरोपितगुणं कृत्वा वा ल्यपीत्यनुनासिकलोपः । कवचं पिनह्य बद्ध्वा नह बन्धन इत्यस्य ल्यपि अपिशब्दाकारलोपस्तु । वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः । धाञ्कृञोस्तनिनह्योश्च बहुलत्वेन शौनकिरिति । सिसंग्रामयितुमिच्छुः संग्राम युद्ध इति चौरादिको णिच् तदन्तस्य सनि प्रथमस्यैकाचो द्विर्वचनम् । शितेषुः तीक्ष्णशरः अक्षिणी च भ्रुवौ च अचिभ्रुवम् अचतुरेत्यत्र निपातितः । उज्जिहानः ऊर्द्ध्वं नयन् ओहाङ्गतावित्यस्य जुहोत्यादिकस्य भजामितीत्वम् ॥ ४७ ॥ ज० म०

दृष्ट्वेत्यादि । ककुभो दिशः ऊर्णुवानान् आच्छादयतो बलौघान् सैन्यसमूहान् दृष्ट्वा सौमित्रिर्लक्ष्मणः कवचं पिनह्य बद्ध्वा शृङ्गविकारं शार्ङ्गं धनुर्वितत्य सज्यं कृत्वा आकर्षणेन विस्तार्य्य वा अचिभ्रुवमुज्जिहान उत्क्षिपन् सिसंग्रामयिषुः युद्धेच्छुः सन् तस्थौ नवातोडीः । किम्भूतः शितस्तीक्ष्ण इषुः शरो यस्य स तथा शोय निशाने छाशोर्वेति ङिः । ऊर्णुवानानिति

शुक्लोत्तरासङ्गभृतो विशस्त्रान्
पादैः शनैरापततः समन्यून् ।
औहिष्ट तान् वीतविरुद्धबुद्धीन्
विवन्दिषून् दाशरथिः स्ववर्ग्यान् ॥ ४८ ॥

---

ऊर्णुञ्ञ् आच्छादने शानः अ ुध्वोरित्युवः । वितत्येति तनदुञ् विस्तृतौ वनतनाद्यनिमामिति नस्य लोपः ह्रस्य तन् पिति । पिनह्येति अपिपूर्वः णह्यञौ बन्धे वातोऽवाप्योरित्यपेर्लुक् । सिसंग्रामयिषुरिति संग्रामङ्तक् युद्धे सन उः । अक्षिभ्रुवमिति अक्षिणी च भ्रुवौ च अक्षिभ्रुवमिति निपातनात् । उज्जिहान इति ओहाङ्लि गतौ शानः ह्रादीरेद्धिः पृभ्रादेरिति खेङिः ॥ ४७ ॥ भ०

शुक्लेत्यादि । दाशरथिस्तान् स्ववर्ग्यान् स्ववर्गे भवान् अशब्दे यत् खाविति यत् । आत्मीया अपि कदाचित् दुष्टबुद्धयो भवन्तीत्याह वीतविरुद्धबुद्धीन् औहिष्ट ऊहितवान् ऊहतेरा-त्मनेपदिनो लुङि आटवृद्धिः । तदेवाविरुद्धबुद्धित्वं दर्शयन्नाह शुक्लोत्तरासङ्गभृतः शुक्लो य उत्तरासङ्ग उत्तरीयं तं बिभ्रतीति क्विप् । विशस्त्रान् निरायुधान् पादैरापतत आगच्छतो मुक्त-वाहनत्वात् शनैर्न त्वरया प्रमन्यून् प्रकृष्टशोकान् आगतशो-कान् वा विवन्दिषून् वन्दितुमिच्छून् ॥ ४८ ॥ ज० म०

शुक्लेत्यादि । दाशरथिस्तान् स्ववर्ग्यान् वीतविरुद्धबुद्धीन् विगतदुष्टमतीन् औहिष्ट ज्ञातवान् ऊहङ् वितर्के वर्गात् भवार्थे ण्यः । कदाचिदात्मीया अपि दुष्टचेतसः स्युरत उक्तं वीतेति इणः क्तः । वीतविरुद्धत्वं कुतो ज्ञातमित्याह शुक्लेति शुक्लो य उत्तरासङ्ग उत्तरीयं तं बिभ्रति इति क्विप् युद्धे शुक्लो-त्तरासङ्गो निषिद्धः । विशस्त्रान् निरायुधान् शनैर्मन्दं यथा

समूलकाषं चकषूरुदन्तो
रामान्तिकं बृंहितमन्युवेगाः।
आवेदयन्तः क्षितिपालमुच्चैः-
कारं मृतं रामवियोगशोकात् ॥ ४९ ॥

स्यात्तथा पादैरापतत आगच्छतस्त्यक्तवाहनत्वात् समन्यून् सशोकान् विवन्दिषून् वन्दितुमिच्छून् ॥ ४८ ॥ भ०

समूलेत्यादि। ते रामान्तिकं रामसमीपं प्राप्ताश्चकषुः पिष्टवन्तः समूलकाषं समूलं कषित्वा भूमेरधोभागमुत्खत्य निमूलसमूलयोः कष इति कषेर्णमुल् कषादिषु यथाविध्यनुप्रयोगः। रुदन्तः रोदनं कुर्वन्तः बृंहितमन्युवेगा विवृद्धशोकवेगा बृंहि वृद्धावित्यस्य रूपम्। रामवियोगशोकात् कारणात् क्षितिपालं दशरथमुच्चैःकारं कृत्वा मृतं निधनं गतम् आवेदयन्तः अव्यये यथाभिप्रेताख्यान इति कृञो णमुल् एतद्यथाभिप्रेताख्यानमिति नीचैराख्यातुमभिप्रेतत्वात् उच्चैरावेदयन्ति ॥४९॥ ज० म०

समूलकाषमित्यादि। ते रुदन्तो रामान्तिकं रामसमीपदेशं समूलकाषं यथा स्यात्तथा चकषुः पिष्टवन्तः भूमौ स्वशरीराघातात् समूलस्य साधोभागस्य रामसमीपदेशस्य काषः पेषणं यस्मादिति कषणक्रियाविशेषणं काषो घञन्तः समूलघातवत् णमुल् वा। केचित्तु समूलं भूमेरधोभागमपि कषित्वा पिष्ट्वा पुनः पिष्टवन्तः इति व्याख्याय णमन्तस्य पूर्वकालत्वमाहुः। अन्ये तु णमन्तस्यात्र पृथगर्थाभावमाहुः तेन समूलकाषञ्चकषुः समूलं चकषुरित्यर्थः। कष वधे ण्यां रूपं समूलमिति साकल्येऽव्ययीभावः मूलसहितमित्यर्थो वा। किम्भूतास्ते बृंहितमन्युवेगा विवृद्धशोकवेगाः बृहि वृद्धौ रामवियोगहेतु-

चिरं रुदित्वा करुणं सशब्दं
गोत्राभिधायं सरितं समेत्य ।
मध्येजलाद्राघवलक्ष्मणाभ्यां
प्रत्तं जलं द्व्यञ्जलमन्तिकेऽपाम् ॥ ५० ॥

कात् शोकात् मृतं क्षितिपालम् उच्चैः कृत्वा आवेदयन्तो ज्ञापयन्तः उच्चैःकारमिति अव्ययात् कृञोऽनिष्टकथने णमुल् कारं विघ्नं किंवा उच्चैर्यथा स्यात्तथावेदयन्तः। किम्भूतं क्षितिपालं कारं रामवियोगे प्राणवियोगकारित्वेनैव विघ्नत्वं कृकङ् विज्ञाने इत्यस्मात् कभावेऽमी इति वचनात् कर्त्तरि घञ् ॥ ४९ ॥ भ०

चिरमित्यादि। चिरं महान्तं कालं करुणं समन्यु सशब्दं प्रतिकृत्य रुदित्वा रलोव्युपधाद्धलादेरिति कित्त्वे विकल्पिते रुदविदेत्यादिना कित्त्वम्। सरितं समेत्य नदीं सम्भूय गत्वा मध्येजलात् जलस्य मध्यात् तस्माद्वा उत्थाय अवतीर्य्य ल्यब्लोपे पञ्चमी पारे मध्ये षष्ठ्या वेत्यव्ययीभावः अपञ्चम्या इति प्रतिषेधात् अम् भवति नाव्ययीभावादिति लुक्प्रतिषेधश्च राघवलक्ष्मणाभ्यां अपामन्तिके समीपे जलं प्रत्तं दत्तं अच उपसर्गात्तः गोत्राभिधायं नामाभिधायं द्वितीयायाञ्चेति णमुल् द्व्यञ्जलमिति अञ्जलिपरिच्छिन्नं जलमञ्जली द्वौ विगृह्य तद्धितार्थे समासः द्वित्रिभ्यामञ्जलेरिति टच् ताभ्याम्प्रत्येकमञ्जलिप्रदानात् द्वावञ्जली प्रमाणमस्येत्यस्मिन् वाक्ये प्रमाणप्रत्ययस्य प्रमाणे लुक् द्विगोर्नित्यमिति लुक् ततः समासान्तो न प्राप्नोति अतद्धितलुकीत्यधिकारात् ॥ ५० ॥ ज० म०

चिरमित्यादि। चिरकालं करुणं सशोकं सफूत्कारं रुदित्वा क्रन्दित्वा सरितं नदीं समेत्य सम्भूय गत्वा मध्ये अवतीर्य्य

जलमध्यादाकृष्य वा रामलक्ष्मणाभ्यां अपां अन्तिके जलसमीपे तटे द्व्यञ्जलमञ्जलिद्वयपरिच्छिन्नं जलं गोत्राभिधायं यथा स्यात्तथा प्रत्तं प्रदत्तं डुदाञ् इ दाने क्तः ग्यचस्त्वेति पक्षे तादेशः मध्येजलादिति मध्ये इत्यव्ययं हस्ते पाणौ प्राङ्गमित्यादौ तत्-ग्रहणात् जलस्य मध्ये मध्येजलमित्यव्ययीभावः यवर्थे पञ्चमी अन्यारभ्येत्यादिना सामान्यतो यवर्थे पञ्चम्युक्ता तेन सर्वस्मात् कारकाकारकात् यवर्थे पञ्चमी दुर्निवारा परैस्तु कर्माधाराभ्यां यवर्थे पञ्चमी भूरिप्रयोगार्थमुक्ता क्वचिदन्यत्रापीति तैरुक्तत्वात् वोपदेवेनापि सामान्यतो यवर्थे पञ्चमीमुक्त्वा चानन्दादीश्वरः शैलादासनादीक्षतेऽलकामित्यत्र शैलमारुह्य आसने उपविश्य इत्यर्थ इति व्याख्यातं तेन कर्माधाराभ्यां यवर्थे पञ्चम्या भूरिप्रयोगो ज्ञापितः वात्तैर्मोऽतोप्या इति पीवर्जनात् न मः मध्ये समेत्य जलादुत्थाय जलं प्रत्तमिति केचित् द्व्यञ्जलमिति द्वयोरञ्जल्योः समाहार इति द्वित्रिभ्यामञ्जलेर इत्यप्रत्ययः यद्यो-लोप इतीकारलोपः तत्परिच्छिन्नत्वादभेदोपचारात् जलमपि द्व्यञ्जलमुक्तं ताभ्यामेकैकाञ्जलिदानादञ्जलिद्वयं जलं दत्तमित्यर्थः केचित्तु अतद्धितार्थे द्विगौ द्वित्रिभ्यामञ्जलेर इत्युक्त्वा द्वावञ्जली प्रमाणमस्येति वाक्यं दूषयन्ति प्रमाणार्थस्य तद्धितवाच्यत्वात् गोत्राभिधायमिति गोत्रस्य नाम्नोऽभिधानं यत्र दानक्रियाविशेषणं अभिपूर्वात् धाञो घञि यन्ञ् णिदिति यन् किंवा गोत्रमभिधाय गोत्राभिधायं द्वितयान्तात् धातोर्णमभिधानात् केचित्तु आत्मीयैर्धृताभ्यां नीताभ्यां रामलक्ष्मणाभ्यां अपामन्तिके चिरं रुदित्वा तदनु मध्ये मध्यभागसमीपे सरितं समेत्य नाभिपर्यन्तं जलं गत्वेत्यर्थः जलं प्रत्तं कीदृशं जलं जलात् अदेः कर्मणि क्विप् जलस्य जड़स्य अदनीयं भावे क्विपि जड़स्य अदनीयं भोजनं

अरण्ययाने सुकरे पिता माम्
प्रायुङ्क्त राज्ये बत दुष्करे त्वाम् ।
मा गाः शुचं वीर ! भरं वहामुम्
आभाषि रामेण वचः कनीयान् ॥ ५१ ॥

---

यस्मादिति वा लोकान्तरं प्राप्तस्यापि दशरथस्य जड़त्वं त्यक्त-रामत्वात् प्रेतत्वाद्वा मनीषादित्वात् डस्य पाक्षिकं लत्वं गोत्राभिधायमित्यस्य रुदित्वेत्यनेन वा सम्बन्ध इत्याहुः ॥ ५० ॥ भ०

अरण्ययाने इत्यादि । अरण्याय यानं अरण्ययानं तस्मिन् सुकरे सुखसाध्ये पिता मां प्रायुङ्क्त नियुक्तवान् युजेरौधादिकस्य लङि रूपम्, कर्त्रभिप्राये प्रोपाभ्यां युजेरित्यात्मनेपदम् । राज्ये दुष्करे दुःखसाध्ये त्वां प्रायुङ्क्त एवञ्च सति हे वीर ! शुचं शोकं मा गाः मा कार्षीरित्यर्थः इणो गा लुङि गातिस्थेति सिचो लुक् बत इति खेदे किन्तु भरममुं पितुर्नियोगं भृ भरण इत्यस्मात् ऋदोरप् वह सम्पादय विधौ लोट् एवं वचः रामेण कनीयान् अनुजो भ्राता भरतः आभाषि भाषितः कर्मणि लुङ् ब्रुवीत्यर्थग्रहणात् द्विकर्मकता अल्पशब्दादीयसुनि युवाल्पयोरित्यादिना कनादेशः ॥ ५१ ॥ ज० म०

अरण्ययाने इत्यादि । रामेण कनीयान् भरतो वच आभाषि कथितः ब्रुवेरर्थग्रहणात् याञ्चार्थदुहचोत्यनेन द्विकर्मकत्वं गौणे याचादय इति गौणकर्मोक्तं अल्पशब्दाद्गुणादिष्ठेयसू इति ईयसुः युवाल्पौ कन् वेति कनादेशः । किं तद्वच इत्याह पिता सुकरे सुखसाध्ये अरण्ययाने वनगमने मां प्रायुङ्क्त दुष्करे दुःखसाध्ये राज्ये राजकर्मणि त्वां प्रायुङ्क्त

कृती श्रुती वृद्धमतेषु धीमान्
त्वं पैतृकं चेद्वचनं न कुर्य्याः ।
विच्छिद्यमानेऽपि कुले परस्य
पुंसः कथं स्यादिह पुत्रकाम्या ? ॥ ५२ ॥

नियुक्तवान् युजेर्ण्यां रुधादित्वात् श्नम् युजिर उद्दयच इति मं नणोत्रेणाविति नादेशः चुडिति कुङ् जपेजन्नोः ईषद्‌दुःस्रोः खलिति कृञः खल् विकारसंवेत्यादिना राज्ञः कर्मार्थे ष्यः मन्वर्जानित्यादिना भावकर्मयवर्जनात् न्चोर्लोपो ताविति राज्ञो नस्य लोपः बत खेदे एवं सति हे वीर ! शुचं शोकं मा गाः न लभस्व इणो गा ल्यां भूस्थापिवेति सेर्लुक् अमुं भरं पितृनियोगरूपं त्वं वह सम्पादय विधौ गो । भरोऽतिशय-भारयोरिति कोषः ॥ ५१ ॥ भ०

कृतीत्यादि । वृद्धानां पण्डितानां मतेषु श्रुतानि कृतानि चानुष्ठितानि येनेति श्राद्धमनेनेत्यधिकृत्य इष्टादित्वादिनिः क्तस्येन्विषयस्येति कर्मणि सप्तमी स्वमते भावक्तान्तादस्त्यर्थे इन् । स त्वमेवंविधः धीमान् पैतृकं पितुरागतं पितुर्य-च्चेति चकाराट्टतष्ठञि ईसुसुक्तां तान्तः चेद्यदि वचनं न कुर्य्याः मध्यमपुरुषैकवचने लिङि रूपम्, तदा विच्छिद्यमाने कुले वंशे परस्यापि अन्यस्यापि पुंसः अपिशब्दो भिन्नक्रमः कथं स्यादिह लोके पुत्रकाम्या आत्मनः पुत्रेच्छा नैवेत्यर्थः पुत्रशब्दात् काम्यच्चेति काम्यच् तदन्तादप्रत्ययः टाप् ॥ ५२ ॥ ज० म०

कृतीत्यादि । कृती त्वं पैतृकं पितुरागतं चेद्यदि न कुर्य्याः न करिष्यसि तदा कुले वंशे विच्छिद्यमानेऽपि परस्य उत्तरकालीनस्य श्रेष्ठस्य अन्यस्य वा पुंसः कथं इह लोके पुत्र-

अस्माकमुक्तं बहु मन्यसे चेत्
तदीशिषे त्वं न मयि स्थिते च ।
जिह्रेष्यतिष्ठन् यदि तातवाक्ये
जहीहि शङ्कां व्रज शाधि पृथ्वीम् ॥ ५२ ॥

काम्या आत्मनः पुत्रेच्छा स्यात् भवन्तं दृष्ट्वा अग्रिमस्य लोकस्य वचनाकरणेन पुत्रेऽप्यश्रद्धाप्रसङ्गात् । त्वं कथम्भूतः वृद्धमतेषु पण्डितमतेषु क्षती श्रुती च वृद्धमतानि क्षतानि येन स वृद्धमतेषु क्षती वृद्धमतानि श्रुतानि येन स वृद्धमतेषु श्रुती क्तेनाढे इति कर्मणि सप्तमी क्तेनाढे इति ज्ञापकात् क्तान्तात् कर्त्तरीन्प्रत्ययो बोध्यः किंवा क्षतं करणम् अनुष्ठानं श्रुतं श्रवणं क्षश्रुभ्यां भावे क्तः ततोऽस्त्यर्थे नेकाजादितीन् वृद्धमतेष्विति विषयसप्तमी, धीमान् प्रशस्तबुद्धियुक्तः पैत्रकमिति पितृशब्दादागतार्थे ढघेकादिति कण् कुर्य्या इति भव्ये वा फलहेत्वोरिति खौ कुरुवोपो इत्युपोलोपः पुत्रकाम्येति लेः काम्यक् खेच्छायामिति काम्यक् संख्यादः ॥ ५२ ॥ भ०

अस्माकमित्यादि । अस्माकमुक्तम् अस्मत्सम्बन्धि वचनं चेद्यदि बहु मन्यसे आद्रियसे पितृतुल्यो भ्राता अस्यानुमतः कथमेवं न कुर्य्यामिति यदि च मयि स्थिते नेशिषे न प्रभुत्वं करोषि प्रभुस्त्वमहं त्वदाज्ञाकर इति ईशेरदादिकस्य ईशः स ईतीडागमः गुरुवचनमनतिक्रमणीयं विशेषतस्तातवाक्यं तस्मिन्नतिष्ठन् वचनमकुर्वाणः यदि जिह्रेषि लज्जसे श्नौ द्विर्वचनम् एतन्निश्चित्याह जहीहि शङ्कां त्यज विकल्पं व्रज गच्छ अयोध्यां शाधि पालय पृथ्वीं जहातेश्चेति इत्वे विकल्पिते ईहल्यघोरितीत्वम् शासेः शाहाविति शाभावः तस्याभीयत्वेनासिद्धत्वात् हुजल्भ्यो हेर्धिः ॥ ५२ ॥ ज० म०

वृद्धौरसां राज्यधुरां प्रवोढुं
कथं कनीयानहमुत्सहेय ।
मा मां प्रयुङ्क्थाः कुलकीर्त्तिलोपे
प्राह स्म रामं भरतोऽपि धर्म्यम् ॥ ५४ ॥

---

अस्माकमित्यादि । अस्माकमुक्तं वचनं चेद्यदि बहु मन्यसे आद्रियसे यदि वा मयि स्थिते त्वं न ईशिषे प्रभुत्वं न करोषि तातस्य वाक्ये अतिष्ठन् पितृवचनमकुर्वाणो यदि जिह्रेषि लज्जसे तदा पृथ्वीं शाधि पालय एवं सति मम पितुश्च वचनं कृतं स्यात् अतो व्रज गच्छ अयोध्यां शङ्कां स्वायशोभयं जहीहि त्यज अस्माकमिति स्यभावक्तेति कर्त्तरि षष्ठी सम्बन्धे इत्यन्ये गौरवे बहुत्वमभिधानात् अहमपि तव पितृतुल्य इति बहुत्वेन बोध्यते उक्तमिति भावे क्तः मन्यौङ् बोधे ईशलङ् ऐश्वर्य्ये सध्वोरस्येमिति इम् ह्रीलि लज्जे ओहाक्लि त्यागे विधौ गौ स्नाद्योरित्यादिना ङौ शासुच्लु शासने जह्योधि शाधीति शाधि ॥ ५३ ॥ भ०

वृद्धौरसामित्यादि । भरतः प्राह धूर्वहनशीला धूर्नयनशीला इत्यर्थः अनेकार्थत्वाद्धातूनां भ्राजभासेति क्विप् राल्लोप इति वलोपः राज्यस्य समाङ्गस्य धूर्धात्री प्रकृतिरिति विग्रह्य ऋक्पूरित्यकारप्रत्ययः परवल्लिङ्गमिति धूरिति स्त्रीलिङ्गं ततष्टाप् । कीदृशीं वृद्धौरसां वृद्धो ज्येष्ठः औरसः पुत्रो यस्यां उरसा निर्मित इति छन्दसो निर्मित इत्यनुवृत्तौ उरसोऽण् चेत्यण् तां तिष्ठति रामे प्रवोढुं कथमुत्सहेय कनीयान् सन् नैवेत्यर्थः शकधृषेत्यादिना वहेः सहावुपपदे तुमुन् गर्हायां लडपिजात्वोरित्यनुवृत्तौ विभाषाकथमिलिङ् चेति लिङ् सहे-

ऊर्जस्वलं हस्तितुरङ्गमेतत्
अमूनि रत्नानि च राजभाञ्जि।

---

रत्पूर्वस्य आत्मनेपदित्वात् सीयुट् इटोत् लिङः सलोपोऽनन्त्यस्य। अतो मां प्रयुङ्क्थाः मा नियोजय माङि लुङ् झलो-झलीति सिचो लोपः कुलकीर्त्तिलोपे लोपयतीति लोपः पचाद्यच् रघुवंशस्य या कीर्त्तिः तस्या लोप इति समासः पूर्वैरनाचरितत्वात् एवञ्च धर्म्यं धर्मादनपेतं भरतोऽपि प्राह स्म उक्तवान् पुनश्चाह ॥ ५४ ॥ ज० म०

वृद्धौरसामित्यादि। रामस्य धर्म्यवचनानन्तरं भरतोऽपि धर्म्यं धर्मादनपेतं वचो रामं प्राह स्म प्रोवाच विकारसंघेत्या-दिना अनपेतार्थे धर्मात् यः। किं प्राह स्म इत्याह कनीया-नहं अनुजोऽहं राज्यधुरां प्रवोढुं कथं उत्सहेय उत्साहं करिष्यामि कथमाखो च वेति पक्षे खौ राज्ञो धूः राजधुरा धुरोऽनक्षस्या इति अः स्त्रियामत आप्। धूश्च स्यात् भारचि-न्तयोरिति कोषः। कीदृशीं वृद्धो ज्येष्ठ औरसः पुत्त्रो यस्यां तां उरसा निर्मित इति ढवेकादिति ष्णः ज्येष्ठपुत्त्रसम्बन्धिनीं राज्यधुरामित्यर्थः वहेस्तुमि सहवहोरोदवर्णस्येत्योत्वम् अतएव कुलकीर्त्तिलोपे धूर्वहे मां मा प्रयुङ्क्था न नियोजय लोप-यतीति लोपः पचादित्वादच् यद्वा लोपो नाशः युजेर्माङि वेति टी युजिर उत्सर्गे च इति मं झसस्त्वाज्झसीति सेर्लुक् मायोगेऽम्निषेधः ॥ ५४ ॥ भ०

ऊर्जेत्यादि। एतद्धस्तितुरङ्गं सेनाङ्गत्वादेकवद्भावः। ऊर्ज-स्वलं बलवत् ऊर्जनमूर्क् सम्पदादित्वात् क्विप् सा विद्यते यस्येति ज्योत्स्नातमिस्त्राद्यादिना वलच् असुगागमश्च।

राजन्यकं चैतदहं चितीन्द्रः
त्वयि स्थिते स्यामिति शान्तमेतत् ॥ ५५ ॥
इति निगदितवन्तं राघवस्तं जगाद
व्रज भरत! गृहीत्वा पादुके त्वं मदीये।

---

अमूनि च रत्नानि राजभाञ्जि राजगृह्याणि एतच्च राजन्यकं क्षत्रियसमूहः क्षितीन्द्रो राजा अहं त्वयि स्थिते स्यामिति भवामीति शान्तमेतत् अलीकमेतत् स्यामिति निमन्त्रणे नियोगकरणे लिङ् ॥ ५५ ॥ ज० म०

ऊर्जस्वलमित्यादि। एतदूर्जस्वलं बलवद्धस्तितुरङ्गम् अमूनि राजयोग्यानि रत्नानि एतच्च राजन्यकं क्षत्रियसमूहः एवं सर्वं निवेद्यात्मानं निराकरोति त्वयि स्थिते अहं क्षितीन्द्रः स्यां भवेयं इत्येतत् वचनं शान्तम् अलीकम् अनुचितमित्यर्थः अस्तेर्निमन्त्रणे नियोगकरणे प्रार्थने वा स्त्री ऊर्जक् जीवने बले वासुसिति असत्ऊर्जो विद्यतेऽस्य इति गोत्रणमिधेत्यादिना रजआदित्वाद्वलः हस्तिनश्च तुरङ्गाश्च इति समाहारद्वन्द्वः राजन्यशब्दात् विकारसङ्घेत्यादिना सङ्घार्थे कण् ॥ ५५ ॥ भ०

इतीत्यादि। इति एवं निगदितवन्तं उक्तवन्तं तं भरतं राघवो रामो जगाद उक्तवान्। किमित्याह हे भरत! मदीये पादुके उपानहौ गृहीत्वा त्वं व्रज गच्छ विधौ लोट् अस्मद्-स्त्यदादित्वे त्यदादीनि चेति वृद्धिसंज्ञायां तस्येदमर्थे वृद्धाच्छः प्रत्ययोत्तरपदयोश्चेति मदादेशः ततश्च पूज्यमानो जनौघैर्जनस-मूहैः च्युतनिखिलविशङ्कः अपगताशेषविकल्पः सकलभुवन-राज्यं सर्वत्र भूमण्डले राज्यं कारय अनुष्ठापय पादुके इति योज्यं असम्मतेन अस्माकमभिप्रायेण अत्र मदादेशो न भवति

च्युतनिखिलविशङ्कः पूज्यमानो जनौघैः
सकलभुवनराज्यं कारयास्मन्मतेन ॥ ५६ ॥

इति भट्टिकाव्ये प्रकीर्णकाण्डे श्रीरामप्रवासो नाम
तृतीयः सर्गः ।

---

अस्मदो बहुवचनान्तस्य विवक्षितत्वात् तत्र ह्येकवचन इति वर्त्तते ननु कथं मदीय इत्यत्र मदादेशः बहुवचनान्तत्वादिति विरोधः पादुके रामस्यैव तर्ह्यस्मन्मतेन इत्यत्रापि एकवचनम् आवयोः रामलक्ष्मणयोर्मतेनेति षष्ठीसमासे न दोषः ॥ ५६ ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायां प्रकीर्णकाण्डे
रामप्रवासो नाम तृतीयः सर्गः ।

इतीत्यादि । इत्येवं निगदितवन्तं भरतं राघवो रामो जगाद । किं जगादेत्याह हे भरत ! मदीये पादुके गृहीत्वा त्वं व्रज गच्छ अयोध्यामित्यर्थात् विधौ गौ विकारसङ्घेति इदमर्थे ईयः युष्मदस्मदोस्त्वाहावित्यादिनास्मदो मदादेशः । च्युतनिखिलविशङ्कः अपगताशेषविशङ्कः जनौघैर्जनसमूहैः पूज्यमानस्त्वं सकलभुवनराज्यम् अस्मन्मतेन कारय पादुके इत्यर्थात् किंवा अस्मन्मतेन प्रयोज्यकर्त्रा राज्यं कारय घोऽ-णौवेरिति प्रयोज्यकर्त्तुः पाक्षिककर्मत्वम् अत्र साधनहेत्विति तृतीया अस्मन्मतमेव राज्यं करोतु त्वत्क्रियमाणरक्षणेनेति भावः किंवा रामो राज्यमकारयदितिवत् स्वार्थे ञिः चु ञिरित्यत्र योगविभागात् किंवा हे अस्मन्मते ! अस्मत्सदृश-बुद्धे ! राज्यं न कारय न घातय शत्रुभिरित्यर्थः शीघ्रं गत्वा राज्यं रक्षेति भावः कृञगि हिंसे इत्यस्मात् ञिः प्रेरणे आवयोः रामलक्ष्मणयोरिव मतिर्यस्य तस्य सम्बोधनं एतेन राज्य-

# चतुर्थः सर्गः ।

निवृत्ते भरते धीमानत्रेरामस्तपोवनम् ।
प्रपेदे पूजितस्तस्मिन् दण्डकारण्यमीयिवान् ॥ १ ॥

---

रक्षणे राममतितुल्यमतित्वं दर्शितं किंवा अस्मन्मतेन राज्यं कारय ज्ञापय लोकानित्यर्थात् स्वयम् अहं राज्यं न करोमि किन्तु रामाज्ञया करोमीति पादुकाग्रहणविनयेन लोकान् ज्ञापय इति भावः कृकङ् विज्ञाने इत्यस्मात् प्रेरणे ञिः राज्ञो भावः कर्म वा राज्यम् अस्माकं मतम् अस्मन्मतं तेन सीता-लक्ष्मणसहितत्वेन बहुत्वविवक्षया न मदादेशः ॥ ५६ ॥ भ०

इति भरतसेनकृतायां मुग्धबोधिन्यां प्रकीर्णकाण्डे
रामप्रवासो नाम तृतीयः सर्गः ।

निवृत्ते इत्यादि। धीमान् बुद्धिमान् अत्र स्थिते मयि कदाचिद्भरतः पुनरेष्यतीत्येवम्बुद्धिमान्रामः अत्रेर्महर्षेस्तपोवनं प्रपेदे गतः तस्मिंश्च तपोवने अर्घ्यपाद्यादिभिः पूजितः दण्डको नाम ऋषिर्भार्गवकन्यामहरत् तच्छापात् पांशुवर्षेणाक्रान्तः सबन्धुराष्ट्रविनाशो यस्मिन् स्थाने तदुपलक्षितं अरण्यमभूत् तदीयिवान् गतवान् उपेयिवानित्यत्र उपसर्गस्यातन्त्रत्वात्केव-लादपीणः क्वसुः ॥ १ ॥ ज० म०

निवृत्ते इत्यादि। भरते निवृत्ते सति रामोऽत्रेर्महर्षेस्तपोवनं प्रपेदे गतवान् तत्र वने मुनिभिः पूजितः सन् दण्डकारण्यमी-यिवान् गतः इणः क्वसुः वसोर्वसेकाजितोम् खेः क्विति घः यिणोऽचणी दण्डकनाम्नः कस्यचिद्राज्ञोऽपराधेन ब्रह्मशापात् तद्देशे अरण्योत्पत्त्या दण्डकारण्यमिति प्रसिद्धः ॥ १ ॥ भ०

अटाट्यमानोऽरण्यानीं ससीतः सहलक्ष्मणः ।
बलाद् बुभुक्षुणोत्क्षिप्य जह्रे भीमेन रक्षसा ॥ २ ॥
अवाक्शिरसमुत्पादं कृतान्तेनापि दुर्दमम् ।
भंक्त्वा भुजौ विराधाख्यं तं तौ भुवि निचख्नतुः ॥ ३ ॥

---

अटेत्यादि । महदरण्यमरण्यानी इन्द्रवरुणेत्यादिना हिमारण्ययोर्महत्त्वे ङीषानुकौ तां अटाट्यमानः अत्यर्थमटन् रामः सूचिसूत्रीत्यादिना यङ् ससीतः सहलक्ष्मणः वोपसर्जनस्येति विकल्पेन सभावः बलात् बलवत्तया जह्रे हृतः गृहीत इत्यर्थः कर्मणि लिट् उत्क्षिप्य उत्थाप्य हस्ताभ्यां केनापि रक्षसा वैश्रवणशापात् तुम्बुरुनाम्ना गन्धर्वेण राक्षसीभूतेन विराधाख्येन बुभुक्षणा भोक्तुमिच्छुना भीमेन भयानकेन भियः षुक् इत्यौणादिकषुगभावपक्षे रूपम् ॥ २ ॥ ज० भ०

अटाट्यमान इत्यादि । बुभुक्षुणा भोक्तुमिच्छुना भीमेन भयानकेन रक्षसा राक्षसेन उत्क्षिप्य हस्ताभ्यामुत्थाप्य रामः जह्रे गृहीत इत्यर्थः कर्मणि ठो । किम्भूतः सीतया लक्ष्मणेन च सहितो रामः अरण्यानीं महारण्यं अटाट्यमानः पुनःपुनरतिशयेन वा अटन् गच्छन् सूत्रसूत्रेति यङ् केचित्तु गत्यर्थाद्गलुपेति नियमात् अत्रापि वक्रताविवक्षेत्यहुः तन्मते पथोऽभावात् वृक्षसंयोगेन वक्रं गच्छन्नित्यर्थः महदरण्यं अरण्यानी नारीसखीत्यादिना निपातः सहः सो वेति सहशब्दस्य विकल्पेन सादेशः ॥ २ ॥ भ०

अवागित्यादि । तं विराधाख्यं राक्षसं कृतान्तेनापि यमेनापि दुर्दमं दुःखेन दम्यते इति खल्, तौ रामलक्ष्मणौ भुवि निचख्नतुर्निखातवन्तौ । कीदृशम् अवाक्शिरसं अधोमस्तकम् अवाक् शिरो यस्येति ऊर्ध्वं पादौ यस्येति उत्पादम् भुजौ

आंह्विषातां रघुव्याघ्रौ शरभङ्गाश्रमं ततः ।
अध्यासितं श्रिया ब्राह्म्या शरण्यं शरणैषिणाम् ॥ ४ ॥

---

भंक्त्वा मोटयित्वा :जान्तनशां विभाषेत्यनुनासिकलोपाभावपक्षे रूपम् ॥ ३ ॥ ज० म०

अवाक्शिरसमित्यादि । तौ रामलक्ष्मणौ तं विराधाख्यं राक्षसं भुजौ भंक्त्वा भुवि निचख्नतुः निखातवन्तौ हनगमित्युङ्लोपः । किम्भूतं अवाक्शिरसं अधोमस्तकं ऊर्द्ध्वपादं ऊर्द्ध्वौ पादावस्येति बहुव्रीहिः । कृतान्तेन यमेनापि दुर्दमं दुःखेन दमनीयं ईषद्दुःसोरिति खल् । भंक्त्वेति भन्जोऽनिम् इति विभाषितकित्त्वात् पक्षे नलोपाभावः ॥ ३ ॥ भ०

आंहोत्यादि । ततो विराधवधानन्तरं रघुव्याघ्रौ शरभङ्गनाम्नो मुनेराश्रमं आंह्विषातां गतवन्तौ अंहेर्लुङि रूपं अध्यासितं आश्रयीकृतं श्रिया लक्ष्म्या ब्राह्म्या ब्रह्मसम्बन्धिन्या ब्रह्मण इयमित्यण् ब्राह्मी जाताविति निपातनात् टिलोपः टिड्ढाणञित्यादिना ङीप् शरणे अवस्थाने साधु अनुकूलं शरण्यं तत्र साधुरिति यत् शरणैषिणां शरणं त्राणमेषितुं शीलं येषाम् ॥ ४ ॥ ज० म०

आंह्विषातामित्यादि । ततो विराधवधानन्तरं रघुव्याघ्रौ रघुवंशश्रेष्ठौ शरभङ्गनाम्नो मुनेराश्रमं आंह्विषातां अहि गतौ टौ । ब्राह्म्या ब्रह्मसम्बन्धिन्या श्रिया लक्ष्म्या अध्यासितम् आश्रयीकृतं ब्रह्मणो देवस्य विप्रस्य तपसो वा इयमिति ष्णः शरणं त्राणम् एषितुं शीलं येषां तेषां शरण्यं शरणेऽवस्थाने त्राणे वा साधु अनुकूलं विकारसंघेति साध्वर्थे यः । शरणं बधरक्षित्रोः शरणं रक्षणे गृहे इति विश्वः ॥ ४ ॥ भ०

पुरो रामस्य जुहवाञ्चकार ज्वलने वपुः।
शरभङ्गः प्रदिश्यारात् सुतीक्ष्ण मुनिकेतनम्॥ ५॥
यूयं समैष्यथेत्यस्मिन्नासिष्महि वयं वने।
दृष्टाः स्थ स्वस्ति वो यामः स्वपुण्यविजितां गतिम्॥ ६॥

---

पुर इत्यादि। शरभङ्गो रामस्य पुरः अग्रतः वपुः शरीरं ज्वलने अग्नौ जुहवाञ्चकार कुष्ठित्वात्तस्य भीह्रीभृहुवामिति आम् आमि श्लुभावे द्विर्वचनम्। किं कृत्वेत्याह प्रदिश्य कथयित्वा किं आरात् समीपे सुतीक्ष्णनाम्नो मुनेः केतमम् आश्रमं तत्र वासमुपकल्पयेति तव किमर्थमत्रावस्थानमिति चेदाह॥ ५॥ ज० म०

पुर इत्यादि। शरभङ्ग आरात् समीपे सुतीक्ष्णनाम्नो मुनेः केतनं आश्रमं प्रदिश्य तत्र वासं कल्पयेति कथयित्वा रामस्य पुरोऽग्रतः ज्वलनेऽग्नौ वपुः शरीरं जुहवाञ्चकार हुतवान् पश्चाम् वा भीह्रीति पश्चाम् श्लित्वाद्द्वित्वे ह्वादीरेद्विः श्वस्कृन्वामः प्रक्षेपमात्रस्य धात्वर्थस्य विवक्षितत्वात् ज्वलन इत्यस्य होमलब्धत्वात् वैयर्थ्यं न वाच्यम्॥ ५॥ भ०

यूयमित्यादि। तव किमर्थमत्रावस्थानमिति चेदाह अपि नाम यूयं समैष्यथ आगमिष्यथ आङ्पूर्वं इण् आगमने वर्त्तते इत्येधत्यूट्स्विति वृद्धिः इत्यस्मात्कारणात् अस्मिन् वने वयमासिष्महि स्थिताः। आसेर्लुङि रूपम् अस्मदो द्वयोश्चेति चकारस्यानुक्तसमुच्चयत्वादेकत्वे बहुवचनम्। अस्मदागमने किन्ते फलमिति चेदाह दृष्टाः स्थ अधुना दृष्टा भवथ। अस्तेर्मध्यमपुरुषबहुवचने श्नसोरल्लोपः। स्वस्ति कल्याणं वः युष्मभ्य नमःस्वस्तीत्यादिना चतुर्थी बहुवचनस्य वस्नसौ। स्वपुण्येन विजितां लब्धां गतिं जन्म यामः व्रजामः रामरूपेण

तस्मिन् कृशानुसाद्भूते सुतीक्ष्णमुनिसन्निधौ।
उवास पर्णशालायां भ्रमन्ननिशमाश्रमान्॥ ७॥

---

विष्णुरवतीर्णः तं दृष्ट्वा यास्याम इत्यत्र वयं स्थिता इति भावः॥ ६॥ ज० म०

यूयमित्यादि। न केवलं सुतीक्ष्णमुनिकेतनं प्रदिश्य एतदपि प्रदिश्येति योज्यं यूयं समैष्यथ समागमिष्यथ इति हेतोरस्मिन् वने वयमासिष्महि आङ्पूर्वं इण् आगमने वर्त्तते आसिष्यां सिः। वयमिति एकत्वेऽपि बहुत्वविवक्षा। परे तु एकत्वे वा बहुत्वमस्मदोऽविशेषेण इत्याहुः। यूयं दृष्टाः स्थ लोपोऽस्त्यस्रोरित्यकारलोपः। स्वस्ति वः कल्याणं युष्मभ्यम्। शक्तार्थवषडित्यादिना चतुर्थी द्वीचोषीणामित्यादिना वसादेशः। वयं स्वपुण्येन विजितां लब्धां गतिं यामो गच्छामः विष्णुरूपे त्वयि दृष्टे शोभना गतिर्भविष्यतीत्याशया एतावन्तं कालं तिष्ठाम इति भावः॥ ६॥ भ०

तस्मिन्नित्यादि। तस्मिन् शरभङ्गे कृशानुसाद्भूते कात्स्न्येनाग्नीभूते विभाषा सातिः कात्स्न्य इति सातिः। रामः सुतीक्ष्णस्य मुनेः सन्निधौ समीपे पर्णशालायां पर्णकुट्यामुवास उषितवान् तत्र कृताधिवासस्य वृत्तिमाह भ्रमन्ननिशमाश्रमान् पर्यटन् सदा तपोवनानि मुनीन् उपासितुम्॥ ७॥ ज० म०

तस्मिन्नित्यादि। तस्मिन् शरभङ्गे कृशानुसाद्भूते कात्स्न्येनाग्नीभूते सति रामः सुतीक्ष्णमुनेः सन्निधौ समीपे पर्णशालायां पर्णकुट्यां उवास वसैश्री निवासे ठो व्यथग्रहेति जिः कात्स्न्यायत्योरिति चसात् क्विलादित्यादौ साद्दर्शनात् न

वनेषु वासतेयेषु निवसन् पर्णसंस्तरः ।
शय्योत्थायं मृगान् विध्यन्नातिथेयो विचक्रमे ॥ ८ ॥

---

षत्वम् । अनिशं निरन्तरं आश्रमान् भ्रमन् पर्य्यटन् अर्थात् मुनीनुपासितुम् ॥ ७ ॥ भ०

वनेष्वित्यादि । वासतेयेषु वसतौ साधुषु पथ्यतिथी-त्यादिना ढञ् निवसन् शयानः संस्तीर्य्यते इति संस्तरः ऋदो-रप् पर्णानि संस्तरो यस्येति पर्णसंस्तरः शय्योत्थायं शय्याया उत्थाय उत्पूर्वात्तिष्ठतेरपादाने परीप्सायामिति णमुल् शय्यते अस्यामिति शय्या संज्ञायामित्यादिना क्यप् । त्वरया मुखधावनादीन्यपि न कृत्वा मृगान् विध्यन् ताड़यन् ग्रहि-ज्यादिना सम्प्रसारणम् । तत्रापि नात्मार्थं लुब्ध इत्याह आति-थेयः अतिथौ साधुः पूर्ववत् ढञ् विचक्रमे विहरति स्म वेः पादविहरण इति तङ् ॥ ८ ॥ ज० म०

वनेष्वित्यादि । वासतेयेषु वसतौ निवासे रात्रौ वा साधुषु वनेषु निवसन् वासं कुर्वन् शयानो वा पर्णसंस्तरः पत्ररचितशय्यः सन् शय्योत्थायं शय्यायास्त्वरया उत्थाय मृगान् विध्यन् ताड़यन् विचक्रमे विहरति स्म । तत्रापि नात्मार्थं बध इत्याह आतिथेयः अतिथौ साधुः ढघेकादिति वसत्यथितिभ्यां साध्वर्थे ष्णेयययोर्लोप इतीकारलोपः शय्योत्थायमित्यभिधा-नात् पञ्चम्यन्तात् त्वरायां चणम्, किंवा शय्याया उत्थानं यस्मै इति मृगवेधनक्रियाविशेषणं एतेन शयनोचितकालेऽपि मृगताड़मनिमित्तं शय्योत्थानं गम्यते तेन च सुतरां त्वरापि अस्मिन् पक्षे भावे घञ् यन्‌ञिणदिति यन् उदः सः स्थास्तम्भो-रिति सलोपः शेरतेऽस्यामिति शय्या शीव्रजयजेति क्यप्

ऋग्यजुषमधीयानान् सामन्यांश्च समर्चयन्।
बुभुजे देवसात् कृत्वा शूल्यमुख्यञ्च होमवान् ॥ ९ ॥

---

शीङ्गोङ्व्येऽणो व्यध्यौ ताडेः शतः ग्रहस्वपाद्योरिति जिः वेपडिरिति विपूर्वात् क्तमो मम् ॥ ८ ॥ ८ ॥ भ०

ऋग्यजुषमित्यादि। ऋक् च यजुश्च ऋग्यजुषम् अचतुरेत्यादिना निपातितम् द्वन्द्वाच्चुदषहान्तात् समाहारे टच् ऋग्वेदं यजुर्वेदञ्च अधीयानान् पठतः इङोऽधिपूर्वस्य लटि शानचि रूपम् नलोकेति षष्ठीप्रतिषेधः सामन्यांश्च सामसु साधून् द्विजान् तत्र साधुरिति यत् ये चाभावकर्मणोरिति प्रकृतिभावः समर्चयन् पूजयन् शूल्यमुख्यञ्च मांसं बुभुजे भुक्तवान् शूले उखायाञ्च स्थाल्यां संस्कृतं शूलोखाद्यत् भुजोऽशन इति तङ्। किङ्कृत्वा देवसात् कृत्वा देवेभ्यो दत्त्वा तदधीनङ्कृत्वा देये त्रा चेति चकारात् सातिश्च होमवान् होमो विद्यते यस्येति कृताग्निकार्य्य इत्यर्थः ॥ ९ ॥ ज० म०

ऋग्यजुषमित्यादि। ऋग्यजुषं ऋग्वेदं यजुर्वेदञ्च अधीयानान् पठतो मुनीन् सामन्यान् सामवेदकुशलांश्च समर्चयन् सम्यक् पूजयन् शूल्यं शूलपाचितं उख्यं स्थालीसंस्कृतं च मांसं देवसात् कृत्वा देवाय देयं कृत्वा बुभुजे भुजोऽशने इति मं होमवान् कृताग्निकार्य्यः नित्यं होमो विद्यतेऽस्येति मोङ्मभ्यादिति वतुः ऋक् च यजुश्चेति चैक्याच्चुदसहोरिति अः अधीङ् अध्ययने शानः स्नुध्योरितीयः सामशब्दात् ढघे कादिति साध्वर्थे णत्रः मन्वर्जेत्यादिना नलोपाभावः अर्चक् पूजे चुरादिञन्तात् शतः देये त्राचेति चकारात् चसात् ढघेकादिति शूलोखाभ्यां तत्र संस्कृतेऽर्थे यः ॥ ९ ॥ भ०

वसानस्तन्त्रकनिभे सर्वाङ्गीणे तरुत्वचौ ।
काण्डीरः खाङ्गिकः शार्ङ्गी रक्षन् विप्रांस्तनुत्रवान् ॥१०॥

---

वसान इत्यादि। असौ रामो वनेष्वानभ्र भ्रान्तवानिति वक्ष्यमाणेन श्लोकेन सम्बन्धः वसानः परिदधानः वस आच्छादने इत्यस्मात् शानच् तरुत्वचौ वल्कले प्रत्यग्रे तन्त्रकः तन्त्रादचिरापहृत इति कन् तन्निभे तत्तुल्ये सर्वाङ्गीणे सर्वाङ्गाणि व्याप्नुवत्यौ तत्सर्वेत्यादिना खः काण्डीरः काण्डोऽस्यास्तीति काण्डाण्डादीरन्नीरचौ खाङ्गिकः खड्गोऽस्यास्तीति अत इनिठनौ। खाड्गिक इति पाठान्तरम्। तत्र खड्गप्रहरणमिति ठक् शार्ङ्गी सधनुः तनुत्रवान् तनुं शरीरं त्रायते इति तनुत्रम् आतोऽनुपसर्गे कः संसर्गे मतुप् पिनद्धकवच इत्यर्थः स एवंविधो विप्रान् ब्राह्मणान् रक्षन् ॥१०॥ ज० म०

वसान इत्यादि। असौ रामो वनेष्वानभ्र इति वक्ष्यमाणश्लोकेनान्वयः। कीदृशः तरुत्वचौ वसानः परिदधानः वसलुङ् स्तृतौ शानः। कीदृश्यौ तन्त्रकनिभे नूतनवस्त्रतुल्ये तन्त्रात् पटोपकरणात् अचिरोद्धृतं वस्त्रं तन्त्रकं ढघेकादिति विकारसङ्घेत्यादिना आदिशब्दात् अचिरोद्धृतार्थे तन्त्रशब्दात् कः। तन्त्रकश्च नवाम्बरे इत्यमरः। सर्वाङ्गीणे सर्वाङ्गं व्याप्नुवन्त्यौ ढघेकादिति तद्व्याप्नोतीत्यर्थे ईनः काण्डीरः प्रशस्तकाण्डयुक्तः गोष्ठणमेधेत्यादिना अस्त्यर्थे ईरः खाड्गिकः खड्गेन युध्यतेऽसाविति ढघे कादिति ष्णिकः शार्ङ्गी शृङ्गस्य विकारः शार्ङ्गं धनुः विकारसंघेति ष्णः शार्ङ्गं विद्यतेऽस्येति नैकाजादिति इन् तनुं शरीरं त्रायते इति तनुत्रं कवचं हनजनादिति डः तद्युक्तः एवम्भूतः सन् विप्रान् रक्षन् ॥ १० ॥ भ०

हित्वाश्रितङ्गवीनानि फलैर्येष्वाश्रितम्भवम् ।
तेष्वसौ दन्दशूकारिर्वनेष्वानभ्र निर्भयः ॥ ११ ॥
व्रातीनव्यालदीप्रास्त्रः सुत्वनः परिपूजयन् ।

---

हित्वेत्यादि। आश्रितास्तृप्ता गावो येषु भवन्ति तृणप्रायत्वात् अषडच्चादिसूत्रेण खः पूर्वपदस्य च मान्तत्वं निपात्यते तान्यरण्यानि हित्वा येषु वनेषु फलैराश्रितम्भवमाश्रितस्य भवनं तृप्तिर्वर्त्तते आश्रिते भुव इत्यादिना भावे खच् तेष्वानभ्र अभ्रवभ्रेति गत्यर्थो धातुः लिटि अत आदेरिति दीर्घे तस्मान्नुड्द्विहल इति नुट् दन्दशूकारिः व्यालानां हन्ता लुपसदेत्यादिना दंशेर्यङ् तदन्तात् यजजपेत्यादिना ऊकः ॥ ११ ॥ ज० म०

हित्वेत्यादि। आश्रितङ्गवीनानि वनानि हित्वा त्यक्त्वा तेषु वनेषु असौ आनभ्र भ्रमति स्म अभ्रगत्यां ठी स्यान्तादिति खेरान् आश्रितास्तृप्ता गावो यत्र तदाश्रितगु आङ्पूर्वोऽस्नातिस्तृप्त्यर्थः परे तु तृप्त्यर्थेऽश्रितस्यादौ दीर्घ इत्यहुः ततः स्वार्थे ईनः मकारागमो निपातनात् गोतृप्त्या तृणबाहुल्यात्तत्त्यागः केष्वित्याह येषु च फलैराश्रितम्भवं आश्रितेन तृप्तेन भूयते भावघेत्वाश्रिताद्भुव इति खः दन्दशूकानां व्यालानामरिर्हन्ता निर्भयो भयरहितः ॥ ११ ॥ भ०

व्रातीनेत्यादि। तेषु वनेषु भ्रमन् नैकटिकाश्रमानाट गतवान् अटेरभ्यासस्यात आदेरिति दीर्घत्वं ग्रामस्यान्तिके क्रोशमात्रं त्यक्त्वा यतयो भिक्षवो ये निवसन्ति ते नैकटिकाः निकटे वसतीति ठक्। तेषामाश्रमांस्तपोवनानि कीदृशः व्रातीनव्यालदीप्रास्त्रः नानाजातीयाः अनियतवृत्तयः शरीरमायासेन ये जीवन्ति ते व्रातास्तेषां यत्कर्म तदपि व्रातं तेन

परिषद्बलान्महाब्रह्मैराट नैकटिकाश्रमान् ॥ १२ ॥

---

जीवन्ति इति व्रातीनाः व्रातेन जीवतीति खञ् तेषां व्याला हिंस्राः उपघातकाः तेषु दीप्रास्त्रः ज्वलदायुधः सप्तमीति योगविभागात्सः । सुत्वनः सुतवतः परिपूजयन् सोमपायिन इत्यर्थः सुयजो ङ्वनिप् तुक् नसंयोगादित्यल्लोपो न पर्षद्वलानिति पर्ष स्नेहने अस्मात्पर्षते स्निह्यतीति पृषोदरादिरित्यत्र पर्षे बाहुलकादौणादिको दिः पर्षत् तत्र यदि रजःकृष्यासुतिपर्षदो वलजिति तदा पर्षत् विद्यते येषां सुत्वनामिति वलच् । अत्र परिषीदतीति परिषत् क्विबन्तो यदा परिषद्प्येषा गुणग्राहिणी तदा परिषद्वलं सहायो येषामिति बहुव्रीहिः महाब्रह्मैर्महाब्राह्मणैः कुमहद्भ्यामन्यतरस्यामिति टच् तैः सहाट ॥ १२ ॥ ज० म०

व्रातीनेत्यादि । रामो नैकटिकाश्रमान् आट । अट गतौ ठौ निकटे वसन्ति नैकटिका ढचे कादिति ष्णिकः तेषां मुनीनामाश्रमान् तपोवनानि किम्भूतः नानाजातीया अनियतवृत्तयः शरीरक्लेशेन ये जीवन्ति ते व्रातास्तेषां यत् कर्म तदपि व्रातमिति रूढं तेन जीवन्तीति व्रातीनाः पूर्ववदीनः तेषां मध्ये ये व्याला उपघातकास्तेषु दीप्राणि अस्त्राणि यस्य स तथा । व्यालो भुजङ्गमे क्रूरे श्वापदे दुष्टदन्तिनीति विश्वः । सुत्वनः सोमपान् परिपूजयन् षुञ् अभिषवे त्वासुसिति क्वनिप् ह्रस्य तन् पितीति तन् । आश्रमान् कीदृशान् महाब्रह्मैर्महद्भिः ब्रह्मभिर्ब्राह्मणैः परिषद्वलान् सभायुक्तान् देशाद्ब्रह्मणः कुमहद्भ्यां तु वेति षः परिषीदन्त्यत्रेति क्विप् परिषत् सभा गोष्ठ्येत्यादिना रज आदित्वाद्वलः नवाक्षरादस्यापीष्टत्वात् न चात्र श्लोके छन्दोभङ्गः पर्षद्वलानिति

परेद्यव्यद्य पूर्वेद्युरन्येद्युश्चापि चिन्तयन् ।
वृद्धिक्षयौ मुनीन्द्राणां प्रियम्भावुकतामगात् ॥ १२ ॥

---

पठो पर्य्युपसर्गस्य इकारलोपो निपातनात् । आस्थानं संसदास्थानो पर्षत्पतिषदौ समे इति रभसः । केचित्तु ब्राह्मणवाचके महच्छब्दविशेषणस्य विरुद्धार्थत्वात् महाब्रह्मैर्संहातपोभिरुपलक्षितान् सुत्वनः विशेषणे तृतीया । न च देशाद् ब्रह्मण इति सूत्रे ब्राह्मणवाचको ब्रह्मशब्द इति नियम इत्याहुः ॥ १२ ॥ भ०

परेद्यवीत्यादि । परेद्यवि परस्मिन् आगामिनि दिवसे इत्यर्थः अद्यैतस्मिन्नहनि पूर्वेद्युः पूर्वस्मिन्नहनि अन्येद्युरन्यस्मिन्नहनि चिरातिक्रान्ते चिरगामिनि दिवसे परेद्यवीत्यादिषु दिवसेषु मुनीन्द्राणां वृद्धिक्षयौ उदयापचयौ चिन्तयन् प्रियम्भावुकताम्पूर्वं प्रियाभावनियुक्तत्वादतथाभूतः सन् प्रियो भवतीति प्रियम्भावुकः आद्यसुभगेत्यधिकृत्य कर्त्तरि भुवः खिष्णुच्खुकञाविति खुकञ् तद्भावः तामगात् गतः अर्थात् मुनीन्द्राणामेव परेद्यव्यादयः शब्दाः सद्यः परुदित्यादिना निपातिताः ॥ १२ ॥ ज० म०

परेद्यवीत्यादि । परेद्यवि परस्मिन्नहनि पूर्वेद्युः पूर्वस्मिन्नहनि अन्येद्युः अन्यस्मिन्नहनि च मुनीन्द्राणां वृद्धिक्षयौ धनशरीरादिगतोपचयापचयौ चिन्तयन् स्मरन् रामः प्रियम्भावुकताम् अगात् प्राप्तवान् अप्रियोऽपि प्रियो भवतीति भुवो चे खिष्णुखुकञाविति च्व्यर्थे खुकञ् परेद्यवि अद्य चेति कुतः क कुह इत्यादिना निपातनात् पूर्वान्यान्यतरेति पूर्वान्याभ्यां एद्युस् ॥ १२ ॥ भ०

आतिष्ठद्गु जपन् सन्ध्यां प्रक्रान्तामायतीगवम्।
प्रातस्तरां पतत्रिभ्यः प्रबुद्धः प्रणमन् रविम्॥ १४॥
युग्मकम्।

---

आतीत्यादि। जपन्मन्त्रमिति सामर्थ्यलभ्यं सन्ध्याकालोऽधिकरणं तेनात्यन्तसंयोगे द्वितीया सम्यग्ध्यायन्त्यस्यामिति आतश्चोपसर्ग इत्यङ् किमवधिं सन्ध्यामित्याह प्रक्रान्तामायतीगवम् आयत्यः आयान्त्यो भवन्ति यस्मिन् काले गावः अस्मिन्नायतीगवं तिष्ठद्गुप्रभृतीनि चेत्यव्ययीभावसमासत्वात् साधुः नाव्ययीभावादिति यस्मिन् काले सप्तम्या अभावः आङ्पूर्वादिणः शतरि इणो यण्विति यणि ङीपि च रूपम् आयतीति गावोऽपि गोचरात् गोष्ठमायान्ति दिवसस्यार्द्धनाडिकावशेषे सन्ध्यापि तदैव प्रवर्त्तते कियन्तमेवञ्जपन्नित्याह आतिष्ठद्गु इति तिष्ठन्ति गावो यस्मिन् काले दोहाय गावो हि रात्रिप्रथमयामस्य नाडिकायामतीतायां अतिक्रान्तायां विश्रान्ताः सत्यः उत्थाप्य दुह्यन्ते आतिष्ठदित्याङ् मर्य्यादाभिविध्योरित्यव्ययीभावः तिष्ठद्गुप्रभृतीनि चेति चकारस्यानुक्तसमुच्चयार्थत्वादव्ययीभाव एव पुनः समासान्तरं न भवति प्रातस्तरामिति प्रातरित्यव्ययं प्रभातवाचि प्रकर्षविवक्षायान्तं तरप् तदन्तात्किमेत्तीत्यादिना आम् अतिप्रभाते पतत्रिभ्यः कुक्कुटादिभ्यः प्रथमम्प्रबुद्ध उत्थितः पञ्चमी विभक्ते इति पञ्चमी रविमादित्यं प्रणमन् यदा चरति तदा प्रियम्भावुकतामगादिति पूर्वेण योज्यम्॥ १४॥ ज० म०

आतिष्ठदित्यादि। प्रियम्भावुकताम् अगादिति पूर्वेणान्वयः तिष्ठन्ति स्थिरीभवन्ति गावो यस्मिन् स तिष्ठद्गुः कालः रात्रेः प्रथमनाडिका तत्र हि विश्रान्ता गावः पश्चादुत्थाप्य

ददृशे पर्णशालायां राक्षस्याभीकयाथ सः ।
भार्य्योढं तमवज्ञाय तस्थे सौमित्रयेऽसकौ ॥ १५ ॥

---

दुह्यन्ते आयन्ति गोष्ठं गावो यस्मिन् काले स आयतीगवः कालः अर्द्धास्तमितभास्करः प्रायशस्तत्रैव गवानयनात् आङ्पूर्वादिणः शतृः तिष्ठद्ग्वायतीगवशब्दौ कालेऽव्ययीभावे निपातितौ आयतीगवकाले प्रक्रान्ताम् आरब्धां सन्ध्यां व्याप्य तिष्ठद्गुकालं यावत् जपन् अर्थान्मत्रम् अन्यारभ्येत्यादिना आङ्योगे पञ्चमी लुक् परादित्यादिना पञ्चमीलुक् सन्ध्यामिति सदाध्वादीति द्वितीया आयतीगवमिति तोष्योर्वेति सप्तम्यामः प्रातस्तरामिति प्रभाते पतत्रिभ्यः कुक्कुटादिभ्योऽपि प्रबुद्धोऽधिकप्रबोधवान् तेभ्योऽपि प्रागुत्थितः सन् रविं प्रणमन् अधिकभावविवक्षायां पञ्चमी अभिधानात् पक्षिशब्देभ्यः प्रबुद्ध इत्यन्ये किमिव्याच्चेति चतराम् ॥ १४ ॥ भ०

ददृशे इत्यादि। पर्णानां शालायां स्थितः स रामः राक्षस्या ददृशे दृष्टः। कीदृश्या अभीकया कामुक्या अनुकाभीकेत्यादिना निपातितः दृशि कर्मणि लिट्। अथ दर्शनानन्तरं भार्य्योढम् ऊढभार्य्यमूढा भार्य्या यस्येति आहिताग्न्यादिषु दर्शनात् निष्ठान्तस्य परनिपातः। अवज्ञाय अनादृत्य सज्ञार्य्यत्वात् असकौ राक्षसी पापासौ कुत्सायामव्ययसर्वनाम्नामकच् सौमित्रये लक्ष्मणाय श्लाघह्नुङ्स्थेत्यादिना सम्प्रदानसंज्ञा तस्थे स्वाभिप्रायं मैथुनायाविष्कृतवती प्रकाशनस्थेयाख्ययोश्चेति प्रकाशने तङ् ॥ १५ ॥ ज० म०

ददृशे इत्यादि। अभीकया कामुक्या राक्षस्या सूर्पणखया पर्णशालायां स रामो ददृशे कर्मणि ठी। अथ दर्शनानन्तरं भार्य्योढं कृतविवाहं तं रामं अवज्ञाय सभार्य्यत्वाद-

दधाना बलिभं मध्यं कर्णजाहविलोचना ।
वाक्त्वचेनातिसर्वेण चन्द्रलेखेव पक्षती ॥ १६ ॥

---

नाढत्व असकौ राक्षसी सौमित्रये लक्ष्मणाय तस्थे स्वस्थित्वा मैथुनाभिप्रायं प्रकाशयामास इत्यर्थः प्रतिज्ञानिर्णयप्रकाश इति मं यस्मैदित्सेत्यादिना चतुर्थी। असकौ इति त्यादिव्यासेत्यादिनाऽदसष्टेः पूर्वोऽक्, परमते अविज्ञाता निन्दिता वा असौ असकौ। तथाच "कृपायां निन्दनेऽज्ञाने नीतौ दानेन मानिते। प्रायोऽगन्त्यस्वरात् पूर्वः सर्वनामतिङव्ययात् ॥" इति। ऊढा भार्य्या येन स तथा अग्न्याहितादित्वात् पक्षे परनिपातः ॥१५॥ भ०

दधानेत्यादि। सा तं प्रार्थयाञ्चक्रे इति वक्ष्यमाणेन सम्बन्धः। कीदृशी मध्यं स्तनजघनयोरन्तरं बलिभं बलयोऽस्मिन् सन्तीति तुन्दिबलिवटेर्भः, दधाना धारयन्ती कर्णजाहविलोचना कर्णजाहं कर्णमूलसमीपमित्यर्थः तस्य पाकमूल इत्यादिना जाहच् कर्णजाहयोर्विश्रान्ते विलोचने यस्या इति सप्तम्युपमानेत्यादिना उपपदलोपी बहुव्रीहिः वाक्त्वचेन वाक् च त्वक् चेति प्राण्यङ्गत्वादेकवद्भावः द्वन्द्वाच्चुदषहान्तादिति टच् अतिसर्वेण अतिक्रान्तेन सर्वम् अत्यादय इति सः एकविभक्तेश्चापूर्वनिपात इति सर्वशब्दस्योपसर्जनत्वेऽपि पूर्वनिपातो न भवति अपूर्वनिपात इति प्रतिषेधात् वाक्त्वचेन वाङ्मयेन माधुर्य्येण मार्दवेन चासाधारणेनोपलक्षितेत्यर्थः इत्थम्भूते तृतीया चन्द्रलेखेव पक्षती तनुत्वात् पक्षोऽर्द्धमासः तस्य मूले प्रतिपदि पक्षातिः ॥ १६ ॥ ज० म०

दधानेत्यादि। सा तं प्रार्थयाञ्चक्रे इति चतुर्थश्लोकेनान्वयः बलिभं बलियुक्तं मध्यं दधाना गोढणमिधेत्यादिनेभः।

सुपाद् द्विरदनासोरूर्मृदुपाणितलाङ्गुलिः ।
प्रथिमानं दधानेन जघनेन घनेन सा ॥ १७ ॥

---

कर्णस्य मूलं कर्णजाहः तत्र विलोचनं यस्याः सा तथा कर्णान्तायतनेत्रेत्यर्थः अतिसर्वेण माधुर्य्यसौन्दर्य्याभ्यां सर्वमतिक्रान्तेन वाक्त्वचेन उपलक्षिता वाक् च त्वक् च इति द्वन्द्वे चैक्याच्चुदषहोऽ इत्यः विशेषणे तृतीया। पक्ष्मतौ पक्ष्ममूले प्रतिपदि चन्द्रलेखेव द्रष्टुं सुष्ठुत्वात् ॥ १६ ॥ भ०

सुपादित्यादि। शोभनौ पादौ यस्याः असौ सुपात् सङ्ख्यासुपूर्वस्येति पादान्तलोपः पादोऽन्यतरस्यामिति यदा ङीप् नास्ति तदेत्थं रूपम् द्विरदनासोरूर्द्विरदनासे इव करिपोतकरा इव ऊरुर्यस्याः उपमानपूर्वो बहुव्रीहिः ऊरूत्तरपदादौपम्य इति ऊङ् रद्यते अनेनेति रदः दन्तः पुंसि संज्ञायाङ्घः करणे द्वौ रदौ यस्येति द्विरदः मृदुपाणितलाङ्गुलिः तलञ्च अङ्गुलिश्चेति द्वन्द्वः तत्र घ्यन्ताल्पाच्तरयोः अल्पाच्तरस्य पूर्वनिपातः पाण्योस्तलाङ्गुलिः पाणितलाङ्गुलिः मृदुः पाणितलाङ्गुलिर्यस्या इति योज्यम्। प्रथिमानं पृथुतां दधानेन धारयता घनेन उपचितेन जघनेनोपलक्षिता सा राक्षसी ॥ १७ ॥ ज० म०

सुपादित्यादि। शोभनौ पादौ यस्याः सा संख्यासूपमानादिति पादस्य पाद्भावः द्विरदनासेव हस्तिशुण्डेव ऊरुर्यस्याः सा तथा रम्भलक्ष्मणेत्यादिना ऊङ् मृदु पाणितलञ्चाङ्गुलिश्च यस्याः सा तथा ये तु अल्पाचः पूर्वनिपातं तथा प्राण्यङ्गत्वे समाहारं वदन्ति तन्मते प्रथमं तलाङ्गुलिशब्दयोः समाहारद्वन्द्वः तदनु पाणिना सह षष्ठीसमासः तदनु मृदुना बहुव्रीहिः। प्रथिमानं महत्त्वं दधानेन निविडेन जघनेनोपल-

उन्नसं दधती वक्त्रं शुद्धदल्लोलकुण्डलम् ।
कुर्वाणा पश्यतः शंयून् स्रग्विणी सुहसानना ॥ १८ ॥
कलापकम् ।

---

च्छिता । पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुर इत्यमरः ॥ १७ ॥ भ०

उन्नसमित्यादि । उच्यते अनेनेति वक्त्रम् सर्वधातुभ्य औणादिकः तन् तत्र वक्त्रशब्दो मुखैकदेशे वर्त्तमानोऽपि कविभिः समुदाये प्रयुज्यते । वक्त्रं मुखमुन्नसं दधती नाभ्यस्ता-च्छतुरिति नुम् न भवति । उन्नता नासिका यस्मिन्निति अन्-नासिकायाः संज्ञायान्नसञ्चेत्यधिकृत्य उपसर्गाच्चेत्यच् नासिका च नसादेशमापद्यते शुद्धदत् शुद्धाः शुक्ला दन्ता यस्मिंस्तच्छु-द्धदत् अग्रान्तशुद्धेत्यादिना दत्रादेशः । लोले चञ्चले कुण्डले यस्मिन् तत् लोलकुण्डलं पश्यतो जनान् शंयून् विद्यमानसु-खान् कुर्वाणा शं सुखं तदस्यास्तीति कंशंभ्यां वभयुस्तितुत-यस इति युस् सित्त्वात् प्रदसंज्ञा अनुस्वारः अपश्यतो वा शंयून् कुर्वाणा पश्यतान्तु पीडाकरी स्रग्विणी मालावती अस्मायें-त्यादिना विनिः । सुहसानना हसनं हसः सनहसोर्वेत्यप् शोभनहसनमाननं यस्याः सा ॥ १८ ॥ ज० म०

उन्नसमित्यादि । ऊर्द्धनासिकं वक्त्रं मुखं दधती उपसर्गा-न्नासिकाया नसादेशो बहुव्रीहाविति परे स्मरते नसाशब्दस्य रूपम् । तथाच रभसः "लपनं वदनं तुण्डमाननं नासिका नसा ।" नसा नासा च नासिकेति कोषान्तरम् । उच्यते अनेनेति वक्त्रं त्रासुसिति त्रः । वक्त्रं कीदृशं शुद्धदत् शुद्धा दन्ता यस्येति दन्तस्य ददादेश इति परे स्मरते दत्शब्दोऽस्ति । लोले चञ्चले कुण्डले यत्र मुखे तत्तथा । सा किम्भूता पश्यतो जनान् शंयून्

प्राप्य चञ्चूर्य्यमाणासौ पतीयन्ती रघूत्तमम् ।
अनुका प्रार्थयाञ्चक्रे प्रियाकर्त्तुं प्रियंवदा ॥ १९ ॥
सौमित्रे ! मामुपायंस्थाः कम्रामिच्छुर्वशंवदाम् ।

---

सुखिनः कुर्वाणा शंकंभ्यां ययुततुतिवभा इति अस्त्यर्थे युः । स्रग्विणी मालावती स्रङ्मेधासमयादिन्वेति अस्त्यर्थे विन् । शोभनो हसो यत्र तादृशमाननं यस्याः सा तथा ॥ १८ ॥ भ०

प्राप्येत्यादि । प्राप्य ढौकित्वा चञ्चूर्य्यमाणा गर्हितमाचरन्ती प्राणिनो हन्तव्या इति चरेर्लुपसदेत्यादिना भावगर्हायां यङ् चरफलोश्चेत्यभ्यासस्य लुक् उत्परस्यात इत्युत्वं हलि चेति दीर्घत्वम् । पतीयन्ती आत्मनः पतिमिच्छन्ती सुप आत्मनः क्यच् । अनुका अभिलाषुका अनुकेत्यादिना निपातितः । रघूत्तमं लक्ष्मणं प्रार्थयाञ्चक्रे प्रार्थितवती प्रियाकर्त्तुमनुलोमयितुं पतिर्मे स्यादिति सुखप्रियादानुलोम्य इति डाच् ॥१९॥ ज०म०

प्राप्येत्यादि । असौ राक्षसी रघूत्तमं लक्ष्मणं प्राप्य प्रियाकर्त्तुं प्रर्थयाञ्चक्रे प्रार्थितवती । किं कुर्वती चञ्चूर्य्यमाणा गर्हितं पुनः पुनश्चरन्ती गत्यर्थात् गॄलुपसदचरेति गर्हार्थे यङ् चरफलोरुच्चोङो ननुरिति खेर्नुन् उङ उकारश्च व्यंनच्तयीति दीर्घः । पतीयन्ती आत्मनः पतिमिच्छन्ती क्योऽव्याद्यश्चेति क्यः र्घोऽन्य्यरे इति दीर्घः । किम्भूता सा अनुका कामुकी प्रियंवदा प्रियं वदतीति प्रियवशाद्वयेत्यादिना खः खित्यव्याजेति मन् । प्रियाकर्त्तुमिति सपत्रनिष्पत्रेत्यादिना आनुकूल्यार्थे डाच् । १९ ॥ भ०

प्रार्थनामाह सौमित्रे इत्यादि । हे सौमित्रे ! इच्छुरेषणशीलः विन्दुरिच्छुरिति निपातितः । अशङ्कः निर्विकल्पः सन् किम्भावयिष्यतीति मामुपायंस्थाः परिणय आशंसायाम्भू-

सुभोगीनां सहचरीमशङ्कः पुरुषायुषम् ॥ २० ॥
तामुवाच स गौष्ठीने वने स्त्रीपुंसभीषणे ।

---

तवच्छेति लुङ् उपायमः स्वीकरण इति तङ् विभाषोपयमन इत्यकित्त्वपक्षे रूपम् । कम्रां नमिकम्पीत्यादिना रः । वशंवदां अहन्ते वश्येति वदन्तीं त्वद्भोगीनां त्वच्छरीराय हितां अवैध-व्यादिलक्षणयोगात् आत्मविश्वजनेत्यादिना खः सहचरीं सह-गामिनीं भिक्षासेनादायेषु चेति चकारस्यानुक्तसमुच्चयार्थ-त्वात् टप्रत्ययः । कियन्तं कालं पुरुषायुषं पुरुषस्यायुर्यावत् अचतुरेत्यादौ निपातितः अत्यन्तसंयोगे द्वितीया चरणक्रि-यायाः कृत्स्नसंयोगात् यथा मासमुषित इति ॥ २० ॥ ज० म०

सौमित्रे इत्यादि । एतत् प्रार्थयाञ्चक्रे इति पूर्वेणान्वयः हे सौमित्रे ! त्वं इच्छुः सन् मामुपायंस्थाः परिणय अभि-धानात् आशंसायां टी उपयमो विवाह इति मं यमः सूचने वातूहाहे इति सेर्विभाषितकित्त्वात् पक्षे अम्लोपाभावः । कीदृशीं मां कम्रां कामयमानां रूपवतीमित्यन्ये हिंसदी-पेत्यादिना रः । वशंवदां अहं ते वश्येति वदन्तीं प्रियवशादि-त्यादिना खः । सुभोगीनां सुभोगाय हितां विकारसंघेत्यादिना ईनः भुज्यतेऽनेनास्मिन् वेति भोगः शरीरं मैथुनाद्युपभोग इत्यन्ये पुरुषस्यायुर्जीवितकालः निपातनात् अत् स्वार्थे ष्णो वा । पुरुषायुषं कालं व्याप्य सहचरीं सहचरेति हनचरगष्टक् कर्मप्रतिरूपकोऽयं सहशब्दः किंवा पचादित्वादन् नदादि-त्वादोप् सदाध्वादीति द्वितीया । इच्छतीति इच्छुः विन्देच्छू इति निपातः ॥ २० ॥ भ०

तामित्यादि । राक्षसीं लक्ष्मण उवाच उक्तवान् । किमि-त्याह गौष्ठीने वने गोष्ठं भूतपूर्वं यस्मिन् वने ईदनीन्नामापि

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



असूर्य्यम्पश्यरूपा त्वं किमभीरुररार्य्यसे ॥ २१ ॥

न ज्ञायते गोष्ठात् खञ् भूतपूर्व इति खञ् स्त्रीपुंसभीषणे स्त्री च पुमांश्चेति स्त्रीपुंसौ अचतुरित्यादौ निपातितौ तयोर्भीषण इति षष्ठीसमासः बिभेतेर्णिचि हेतुभये षुक् तदन्तात् कृत्यल्युटो बहुलमिति कर्त्तरि ल्युट् तस्मिन्नभीरुः सती किमित्यरार्य्यसे अत्यर्थमटसि अर्त्तेः सूचिसूत्रीत्यादिना यङ् यङि चेति गुणः ननद्रा इति प्रतिषेधस्य प्रतिषेधो यकारपरस्य न द्वित्वनिषेध इति रेफो द्विरुच्यते भयशीला भीरुः भियः क्रुक्लुकनौ क्रियाशब्दत्वादूङुत इति ऊङ् न भवति अमनुष्यत्वाच्च। तथाहि लक्ष्मणेनामानुषीयमिति ज्ञाता तथाच भङ्ग्या दर्शयन्नाह असूर्य्यम्पश्यरूपा अतिगोपनीयतया सूर्य्यमप्यनिषिद्धदर्शनं न पश्यतीति असूर्य्यललाटयोरित्यादिना खश् पाघ्रेत्यादिना पश्यादेशः असूर्य्यम्पश्यं रूपं यस्या इति समासः सा न पश्यतीति रूपमपि न पश्यतीत्युक्तम् ॥ २१ ॥ ज० म०

तामित्यादि। तां राक्षसीं लक्ष्मण उवाच। किमित्याह त्वं वने किमर्थमभीरुः सती अरार्य्यसे अत्यर्थं भ्रमसि ऋगतौ सूचसूत्रेति यङ् स्याद्यर्त्त्यृतो गुणरिति गुणः नाजन्तादेरादिर्द्विरिति निषेधात् आद्यचरस्य न द्विः स्यादीनवद्ग्रे ये इति वर्ज्जनात् रेफसहितस्य यस्य द्वित्वं खेराद्यच इति खेर्यलोपः घोऽनित इति खेर्दीर्घः। वने किम्भूते गौष्ठीने भूतपूर्वं गोष्ठं यस्मिन् सम्प्रति गोसञ्चारोऽपि नास्ति अतएव स्त्रीपुंसयोर्भीषणे भयजनके गावस्तिष्ठन्ति अस्मिन्निति गोष्ठं निपातनात् विकारसंघेत्यादिना भूतपूर्वेऽर्थे गोष्ठात् नीनः स्त्री च पुमांश्च स्त्रीपुंसौ निपातनात् जन्तभीधातोर्नन्द्यादित्वादनः भीर्भीष् वेति भीषादेशः भीषिचिन्तीति सूत्रनिर्देशात् भीषधातु-

मानुषानभिलष्यन्ती रोचिष्णुर्दिव्यधर्मिणी।
तमप्सरायमाणेह स्वतन्त्रा कथमञ्चसि ॥ २२ ॥

---

रप्यस्तीति केचित्। कीदृशी असूर्य्यम्पश्यरूपा सूर्य्यमपि न पश्यति असूर्य्यम्पश्यं घटीखारीत्यादिना खश् स्यादानेति दृशः पश्यादेशः असूर्य्यम्पश्यं रूपं यस्याः सा तथा दृशिना सम्बद्धस्य नञः सूर्य्येण सह समासो गमकत्वात् न बिभेतीति अभीरुः क्रु क्लु कौभिय इति क्रुः क्रियावचनस्य भीरुशब्दस्य मनुष्यजातित्वाभावात् उतोऽयुङ रज्ज्वादेरिति सूत्रेण उप्प्रत्ययः ॥ २१ ॥ भ०

मानुषानित्यादि। मनोरपत्यानि मानुषाः मनोर्जाता-वञ्यतौ षुक् च तानभिलष्यन्ती कामयन्ती रन्तुमिच्छन्ती वाभ्राशेत्यादिना श्यन् रोचिष्णुः रोचनस्वभावा अलङ्कञी-त्यादिना इष्णुच् अतएव दिव्यधर्मिणी दिवि भवा दिव्याः देवाः राक्षसा अपि देवयोनित्वात् तेषां धर्मः स्वभावः सोऽस्या अस्तीति धर्मशीलेत्यादिनेनिः अप्सरायमाणा अप्सरा इवा-चरन्ती राक्षसभावङ्गोप्तुमिति भावः उपमानादाचार इत्यधि-कारे कर्त्तुः क्यङ् सलोपश्च ओजसोऽप्सरसो नित्यमिति वच-नात् इह वने स्वतन्त्रा कथमञ्चसि भ्रमसि स्व आत्मा तन्त्रः प्रधानं यस्याः अपराधीनत्वात् अनयोक्त्या राक्षसीत्वं दर्श-यति ॥ २२ ॥ ज० म०

मानुषानित्यादि। त्वं स्वतन्त्रा सती इह वने कथम-ञ्चसि भ्रमसि स्वं तन्त्रं प्रधानं यस्याः सा तथा। तन्त्रः कुटुम्बे दृढे स्यात् कारणेऽपि परिच्छदे। शास्त्रे प्रधाने सिद्धान्ते तन्त्रवाये गदोत्तम इति विश्वः। मनोरपत्यानि मानुषाः मनोः स्वषणाविति परसूत्रेणापत्यार्थे षण् स्वमतेऽभिधानात्

उग्रम्पश्याकुलेऽरण्ये शालीनत्वविवर्जिता ।
कामुकप्रार्थनापट्वी पतिवत्नी कथं न वा ॥ २३ ॥

तानभिलषन्ती कामयमाना क्रमकमेति पचे श्यन् रोचिष्णु-र्दीप्ता भ्राजभूसहेति इष्णुः दिवि भवानां गन्धर्वादीनां यो धर्मस्तद्युक्ता नैकाचाजादितीम् दिव्येति ढघेकादिति भवार्थे यः उदस्युडिति सूत्रस्य पदान्तविषयत्वम् उवर्णे परे वस्य अपदान्तत्वासम्भवात् द्युभ्यामित्यादौ दान्तवत्त्वभीति दान्तत्वादुत्वं नदन्तसाविति पदनिषेधात् अत्र न उत्वम् अप्स-रस इव आचरन्ती धान्ङ्ग्र इति ङ्यः सलोपश्च घोऽज्व्यरे इति दीर्घः ॥ २२ ॥ भ०

उग्रमित्यादि । उग्रम्पश्यन्तीत्युग्रम्पश्याः पापाशयत्वात् शवरादयः उग्रम्पश्येत्यादिना खश् निपात्यते तैराकुले व्याप्ते अरण्ये पतिवत्नी जीवत्पतिः कथं केन प्रकारेण न वा नैवं भवसीत्यर्थः अन्तर्वत्पतिवतोर्नुगित्यत्र पतिर्विद्यते अस्या इति मतुप् सिद्धः जीवत्पत्याम्मतुपो वत्वं निपात्यते नुक्सूत्रेणैव विधीयते ङीपप्रत्ययस्तूगित्वादेव सिद्धः । शालीनत्वविवर्जिता अधृष्टतया वर्जिता शालाप्रवेशमर्हतीति शालीनकौपीने इति खञ् निपात्यते अधृष्टेऽभिधेये प्रवेशशब्दस्य लोपः तस्य भावः शालीनत्वं कामुकः कामशीलः लषपतेत्यादिना उकञ् तस्य प्रार्थनायां पट्वी चतुरा वोतोगुणवचनादिति ङीष् ॥ २३ ॥ ज० म०

उग्रम्पश्याकुले इत्यादि । कथं वा त्वं पतिवत्नी सभ-र्तृका न भवसि पतिसत्त्वे ईदृक्स्वातन्त्र्यासम्भवात् नारीस-खीत्यादिना पतिशब्दात् मतोर्वत्वादेशो निपातितः । शालां प्रवेष्टुमर्हति शालीना अधृष्टा विकारसंघेत्यादिना ईनः

राघवं पर्णशालायामिच्छानुरहसं पतिम् ।
यः स्वामी मम कान्तावानौपकर्णिकलोचनः ॥ २४ ॥

---

शालीनाया भावः शालीनत्वं पुंवत् स्त्र्युक्तपुंस्क इति पुंवत् शालीनत्वविवर्जिता धृष्टेति फलितार्थः। अरण्ये कामुकस्य प्रार्थनायां पत्नी दत्त्वा श्रोत्रस्याभूकमगमेति शुकः। अरण्ये किम्भूते उग्रम्पश्यन्ति उग्रम्पश्याः सिंहव्याघ्रादयः पापाशयत्वात् शवरादयो वा तैराकुले व्याप्ते घटीखारीत्यादिना उग्रशब्दात् दृशः खश् ॥ २३ ॥ भ०

राघवमित्यादि। रामं पर्णशालायामवस्थितम्पतिमिच्छ अनुरहसं विविक्तप्राप्तमनुगतो रह इति विगृह्य अन्ववतप्ताद्रहस इत्यच् यो राघवो ममापि स्वामी प्रभुः स्वामिन्नैश्वर्य्ये इति निपातितं कान्तावान् सभार्य्यः प्रवृत्तसम्भोगोऽसौ नाहमिति दर्शयति तमेव रूपशौर्य्याभ्यां वर्णयन्नाह औपकर्णिकलोचनः कर्णयोः समीपमुपकर्णं समीपार्थे अव्ययीभावः तत्र प्रायभव इति उपजानूपकर्णोपनीवेष्ठक् शेषमपि शब्दद्वयं प्रयोक्ष्यते औपकर्णिके लोचने यस्य कर्णान्तायतलोचन इत्यर्थः ॥ २४ ॥ ज० म०

राघवमित्यादि। पर्णशालायां स्थितं रामं पतिमिच्छ विधिनिमन्त्रणेति आमन्त्रणे गौ। अनुगतं रहो विजनस्थानं रतं वा यस्य तं तप्तान्ववाद्रहस इति अः यो ममापि स्वामी ईश्वरः तस्मिन् सति मद्वरणं न युक्तमिति कान्तावान् एतेन स्त्रीसुखाभिज्ञोऽपि अहन्तु तपस्वीति ध्वनिः कर्णयोः समीपं उपकर्णं तत्र भव इति ढघेकादित्यादिना ष्णिकः तादृशे लोचने यस्य स कर्णायतनेत्र इत्यर्थः एतेन रूपवत्त्वं दर्शितम् ॥ २४ ॥ भ०

वपुश्चान्दनिकं यस्य कार्णवेष्टनिकं मुखम् ।
संग्रामे सर्वकर्मीणौ पाणी यस्यौपजानुकौ ॥ २५ ॥
बद्धो दुर्बलरक्षार्थमसिर्येनौपनीविकः ।
यश्चापमाश्मनप्रख्यं सेषुं धत्तेऽन्यदुर्वहम् ॥ २६ ॥

---

वपुरित्यादि । यस्य राघवस्य वपुः शरीरं चान्दनिकं चन्दनेन सम्पद्यते प्राप्तशोभं भवति मुखञ्च कार्णवेष्टनिकं कर्णवेष्टनाभ्यां कर्णालङ्काराभ्यां कार्णवेष्टनिकं तत् उभयत्र सम्पादिनीति ठक् पाणी हस्तौ संग्रामे युद्धे सर्वकर्मीणौ धनुःखड्गादिव्यापारकर्माणि व्याप्नुतः तत्सर्वादेरिति खः औपजानुकौ आजानुकौ आजानुलम्बावित्यर्थः अत्र ठक् इसुसुक्तान्तात्कः ॥ २५ ॥ ज० म०

वपुरित्यादि । यस्य रामस्य वपुश्चान्दनिकं चन्दनेन राजितम् इति ढघेकादिति ष्णिकः, यस्य मुखं कर्णवेष्टनाभ्यां कुण्डलाभ्यां राजितं इति पूर्ववत् ष्णिकः एतेन विलासित्वं दर्शितम्, यस्य पाणी हस्तौ संग्रामे युद्धे सर्वस्मिन् कर्मणि धनुःखड्गादिव्यापाररूपे कुशलौ विकारसंघेति ईनः सर्वादेः पथ्यङ्गकर्मपत्रपात्रात्तद्व्याप्नोतीत्यर्थे ईनः इति परः तन्मते सर्वकर्माणि व्याप्नुतः इत्यर्थः व्यापनमत्र तत्करणद्वारैव एतेन वीरत्वम् औपजानुकौ उपजानु जानुसमीपे भवौ तावत् प्रलम्बावित्यर्थः एतेन महापुरुषलक्षणं ढघेकादिति कण् तमिच्छेति योजना ॥२५॥ भ०

बद्ध इत्यादि । येन असिः खड्गः औपनीविकः नीवीसमीपे प्रायेण भवतीति स हि नीवीम्प्राप्य वर्त्तमानः पार्श्वयोश्चोर्द्धं निबद्धः किमर्थं दुर्बलरक्षार्थं दुर्बलरक्षायै इदमित्यस्मिन्नर्थे चतुर्थी तदर्थेत्यादिना सः तत्रार्थेन नित्यसमासः सर्वलिङ्गता च यश्चापं धनुर्धत्ते धारयति आश्मनप्रख्यम् अश्मनो

जेता यज्ञद्रुहां संख्ये धर्मसन्तानसूर्वने ।
प्राप्य दारगवानां यं मुनीनामभयं सदा ॥ २७ ॥

---

विकार इत्यण् अश्मिति प्रकृतिभावे प्राप्ते अश्मनो विकार उपसङ्ख्यानमिति टिलोपः पाक्षिकः विभाषाङिश्योरित्यतो मण्डूकप्लुत्या विभाषाग्रहणानुवृत्तेः अन्यत्राश्मन एव भवति आश्मनेन प्रख्या सादृश्यमस्य तदाश्मनप्रख्यमुपघटितमिव सेषु सशरं अन्यदुर्वहं दुःखेनोह्यत इति खल् रामादन्येन दुर्वहमित्यर्थः ॥ २६ ॥ ज० म०

बद्ध इत्यादि। येन रामेण असिर्बद्ध औपनीविकः नीवीसमीपे भवः वामपार्श्वाधोभागस्थायीत्यर्थः। स्त्रीकटीवस्त्रबन्धेऽपि नीवी मूलधनेऽपिचेत्यत्र स्त्रीपदमुपलक्षणं अत्र वा लक्षणा उपनीविशब्दात् ढघेकादिति ष्णिकः तस्यापं धत्ते अश्मैवाश्मनः प्रस्तरः विकारसंघेत्यादिना स्वार्थे णः मन्वर्जेत्यादिना अविकारस्थेऽनन्तस्य नलोपनिषेधः तत्प्रख्यं तत्सदृशं अश्मनि जातं अश्ममयं इति केचित् सेषु शरयुक्तं मन्यदुर्वहं रामादन्येन दुःखेन उह्यते इति ईषद्दुःसोरिति खल्। दुर्बलानां रक्षैव अर्थः प्रयोजनं यस्य खड्गबन्धनस्य चापधारणस्य च तत्तथा तमिच्छेति योजना ॥ २६ ॥ भ०

जेतेत्यादि। यज्ञाय द्रुह्यन्तीति यज्ञद्रुहो राक्षसाः सत्सूद्विषेत्यादिना क्विप् तेषां संग्रामे जेता तृजन्तोऽयम् ततश्च कृत्प्रयोगे कर्मणि षष्ठी धर्मसन्तानसूः पूर्ववत् क्विप् धर्मरत इत्यर्थः वने वर्त्तमानानां मुनीनां वानप्रस्थादीनामित्यर्थः तेषां भार्य्याग्निपरिग्रहात् यानि दारगवानि दाराश्च गावश्चेति दारगवानि अचतुरेत्यादिना निपातितानि दारयन्तीति दाराः दारजारौ कर्त्तरि णिलुक् चेति घञ् तेषाञ्च येनाभयं

ततो वाव्रत्यमानासौ राममशालां न्यविक्षत ।
मामुपायंस्त रामेति वदन्ती सादरं वचः ॥ २८ ॥

---

सदा दत्तमिति योज्यम्, येषामेव प्राप्तिक्रिया तेषामेवाभयमिति समानकर्तृकत्वम् ॥ २७ ॥ ज० म०

जेतेत्यादि। यज्ञाय द्रुह्यन्ति यज्ञद्रुहः राक्षसाः सत्सु-विति क्विप् तेषां जेता संख्ये युद्धे धर्मसन्तानं सूते इति क्विप् यं प्राप्य वने मुनीनां सम्बन्धिनां दारगवादीनां सदा अभयं भयाभावः दाराश्च गावश्च दारगवानि निपातनात् दारय-न्तीति दाराः कभावेऽमी इति कर्त्तरि घञ् पूर्वकाले इति सूत्रे व्याख्यानात् विष्णुं नत्वा स्तौति इत्युदाहरता एककर्तृ-कयोर्धात्वोः प्राक्काले क्त्वाच् भवतीति लब्धम्, अत्र च येषां प्राप्तिस्तेषामेव यद्भयं तदभाव उक्त इति समानकर्तृत्वमस्त्येव ग्रामान्नागच्छतीतिवत् क्रियानिषेधेऽपि अन्तरङ्गस्य क्रियाश्रि-तकार्य्यस्य निवृत्तेः। केचित् तु स्थितानामित्यध्याहरन्ति तमिच्छेति योजना ॥ २७ ॥ भ०

तत इत्यादि। ततो लक्ष्मणवचनानन्तरमसौ राक्षसी वाव्रत्यमाना रामं वृण्वाना वाव्रतु वरणे इति दैवादिकः आत्म-नेपदी रामशालां रामस्य पर्णकुटीरं न्यविक्षत प्रविष्टा विशेः शलइगुपधादनिटः क्स नेर्विश इति तङ् मामुपायंस्त रामेति हे राम ! अहं प्रार्थये भवान् मामुपायंस्त परिणयत्विति वाक्यभेदेन योज्यम्। आशंसायाभूतवच्चेति लुङ् उपाद्यमः स्वीकरणे इति तङ् विभाषोपयमनम इत्यकित्त्वपक्षे रूपम्। इत्येवं वचः सादरं वदन्ती ॥ २८ ॥ ज० म०

तत इत्यादि। ततो लक्ष्मणवचनानन्तरं असौ राक्षसी वाव्रत्यमाना रामं वृण्वती रामस्य शालां गृहं न्यविक्षत

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



अस्त्रीकोऽसावहं स्त्रीमान् स पुष्यतितरां तव ।
पतिरित्यब्रवीद्रामस्तमेव व्रज मा मुचः ॥ २९ ॥

---

विशश्रो प्रवेशे विपराजीति मं तन् हशषोऽनिमिजुङ इति सक् वाहत्यनानेति वाहत्युङ् आशंसायां सम्भुक्तौ वरणे च वाहतधातुः यित्त्वाद्दैवादिकः ङित्त्वादात्मनेपदी । हे राम ! भवान् मां उपायंस्त परिणयतु इति वचः सादरं वदन्ती उपयमो विवाहे इति मं आशंसायां टी अभिधानात् मास्मे न घीव्याविति योगविभागात् अन्यत्रापि घीव्याविति देवोदासचक्रवर्त्ती ॥ २८ ॥ भ०

अस्त्रीत्यादि । असौ लक्ष्मणोऽस्त्रीकः न विद्यते अस्य स्त्रीति नद्यृतश्चेति कप् न कपीति ह्रस्वप्रतिषेधः । अहं पुनः स्त्रीमान् सभार्य्यः प्रशंसायाम्मतुप् स एव लक्ष्मणः पुष्यतितराम् अतीव पुष्यति लक्ष्मणस्तव पतिः तिङश्चेति तरप् किमेदित्याम् । तस्मात्तमेव लक्ष्मणं व्रज गच्छ मा मुचः मा त्याक्षीः मुचेर्लुङ् ऌदित्वादङ् इति एवमब्रवीद्रामः उक्तवान् अदादिकस्य ब्रुञो लङि ब्रुव ईडिति ईटि रूपम् ॥ २९ ॥ ज० भ०

अस्त्रीक इत्यादि । इति रामस्तामब्रवीत् । किन्तदित्याह असौ लक्ष्मणः अस्त्रीकः न विद्यते स्त्री यस्य इति वृतः कः अहं स्त्रीमान् प्रशस्तस्त्रीयुक्तः अतः स एव तव पतिः पुष्यतितरां त्वामित्यर्थात् पुष्यौ ऌपुष्टौ किमेत्याच्चेति उत्कर्षे चतरां भविष्यत्सामीप्ये को अभिधानात् किंवा यावत्पुराभ्यां भव्ये इत्यस्य योगविभागात् तत्र भव्ये इति सामीप्ये सप्तमी । तुष्यतीति क्वचित् पाठः । तस्मात्तमेव लक्ष्मणमेव व्रज मा मुचः मा त्याक्षीः मुच्लृशपर्जो मोचणे ऌदित्वात् शासुलिच्युदिति ङः ॥ २९ ॥ भ०

लक्ष्मणं सा वृषस्यन्ती महोक्षं गौरिवागमत् ।
मन्मथायुधसम्पातव्यथ्यमानमतिः पुनः ॥ ३० ॥

लक्ष्मणमित्यादि । लक्ष्मणं पुनर्भूयोऽगमत् लक्ष्मणं प्रति गता यथा गौर्वृषस्यन्ती मैथुनेच्छावती महोक्षं महावृषं वृषस्यन्तीत्यु-पमानविशेषणमेतत् तेन वृषं लब्धुमिच्छन्तीति क्यच् अश्व-क्षीरेत्यादिना असुक् तच्चाश्ववृषयोर्मैथुनेच्छायामिति तद्वदा-गमनम् । महोक्षमिति अचतुरादिसूत्रेण निपातितम् । मन्मथ-स्यायुधानि शराः आयुध्यन्ते एभिरित्यायुधानि घञर्थे कवि-धानमिति कः तेषां सम्पातः संश्लेषः तस्मात् व्यथ्यमाना पीड्य-माना मतिर्मनो यस्याः ॥ ३० ॥ ज० म०

लक्ष्मणमित्यादि । सा राक्षसी लक्ष्मणं पुनरगमत् यथा गौः महोक्षं महावृषभं गच्छति महांश्चासौ उक्षा चेति जातमहद्-वृद्धादुक्ष्ण इति षः । कीदृशी वृषस्यन्ती वृषोऽत्र शुक्रलवचनः मैथु-नाय वृषं शुक्रलपुरुषं इच्छन्ती कामुकीत्यर्थः गोपक्षे वृषं वृषभं इच्छन्ती क्योश्वराद्यश्वेति क्यः धनोदकाश्वेत्यादिना सन् क्यविधानं स्वेच्छायां सनागमस्तु यापार्थे तेन मैथुन-विषयस्वेच्छावगम्यते केचित्तु प्रकृत्यर्थत्यागेन मैथुनेच्छामात्रे वृषस्य अश्वस्येति क्यवन्तरूपं अतएव विरथहयानश्वस्यन्तीति नैषधप्रयोगः तत्र हि हयान् मैथुनायेच्छन्तीत्यवगम्यते प्रकृ-त्यर्थपुरस्कारे हयशब्दानन्वयापत्तेरित्याहुः, अन्ये तु वृषस्या-श्वस्य इत्यव्युत्पन्नमेव धातुद्वयं मैथुनेच्छायां वर्त्तते इत्याहुः । कुसुमायुधस्य कामस्य सम्पातेन संश्लेषेण व्यथ्यमाना मति-र्मनो यस्याः, सन्ताप इति पाठे कामेन यः सन्ताप इति व्याख्येयम् । मन्मथायुधेति क्वचित् पाठः, आयुध्यन्ते एभिरिति

तस्याः सासद्यमानाया लोलूयावान् रघूत्तमः ।
असिं कौक्षेयमुद्यम्य चकारापनसं मुखम् ॥ ३१ ॥
अहं सूर्पणखा नाम्ना नूनं नाज्ञायिषि त्वया ।

---

कृगॄन्नेति करणे कः क्वो: कभाव इत्युक्तेः मन्यतेऽनयेति करणे क्तिः ॥ ३० ॥ भ०

तस्या इत्यादि । सासद्यमानायाः समीपे गर्हितं सीदन्त्याः प्रविशन्त्याः लुपसदेत्यादिना यङ् रघूत्तमो लक्ष्मणः मुखमपनसमपगतनासिकञ्चकार उपसर्गाच्चेत्यच् नासिका च नसादेशमापद्यते तत्र संज्ञायामिति नानुवर्त्तते । किं कृत्वा कौक्षेयमसिमुद्यम्य उत्क्षिप्य कुक्षौ भव इति दृतिकुक्षीत्यादिना ढञ् कौक्षेयः लोलूयावान् अत्यर्थं लवनक्रियायुक्तः लुनाति लोलूया यङन्तादप्रत्ययादित्यकारः सा विद्यते यस्येति मतुप् ॥ ३१ ॥ ज० म०

तस्या इत्यादि । रघूत्तमो लक्ष्मणः कौक्षेयं कुक्षौ कोषे भवं विद्यमानं तीक्ष्णलोहभवं वा असिं खड्गं उद्यम्य उत्क्षिप्य राक्षस्याः सासद्यमानायाः समीपे गर्हितं सीदन्त्या उपविशन्त्याः मुखं अपनसं अपगतनासिकं चकार लोलूयावान् अतिशयच्छेदनयुक्तः तत्कर्तृत्वात् सूत्रसूत्रेत्यादिना लूञो यञ् द्वित्वं खेर्नुः संस्थादः मोङ्मभ्रूपाद्वतुः गत्यर्थादग्लुर्पित सदेर्गर्हार्थो यङ् ढचेकादिति कुक्षेर्भवार्थे ष्णेयः कुक्षेस्तीक्ष्णलोहार्थाद्विकारे टेयन्निति केचित् । कुक्षिः खड्गपिधानं स्यात् तीक्ष्णलोहे तथोदरे इति कोषः । अपनसं उन्नसमितिवत् ॥ ३१ ॥ भ०

अहमित्यादि । सा राक्षसीत्यब्रवीत् अहं सूर्पणखेति नाम्ना नूनमवश्यं त्वया नाज्ञायिषि न ज्ञातास्मि ज्ञा इत्य-

दण्डोऽयं चैत्रियो येन मय्यपातीति साब्रवीत् ॥ ३२ ॥

---

भावकर्मणि लुङ् स्यसिजित्यादिना अजन्तत्वात् चिणवदिट् आतो युगिति युक् स्वाङ्गाच्चेति ङीषि प्राप्ते नखमुखात् संज्ञायामिति प्रतिषेधः पूर्वपदात् संज्ञायामिति णत्वम्। अज्ञाने कारणमाह येनायं दण्डो नासाच्छेदनलक्षणो मय्यपाति पातितः पातेः कर्मणि लुङ् चिणादेशः अत उपधाया इति वृद्धिः चिणो लुक्। चैत्रियः परक्षेत्रे चिकित्स्यः परक्षेत्रे जन्मान्तरशरीरे यदि शक्यश्चिकित्सितुं तदा नासिकायाः सम्भवात् क्षेत्रिये च परक्षेत्रे चिकित्स्य इति निपातनम् ॥ ३२ ॥ ज० म०

अहमित्यादि। सा रावणं इत्यब्रवीत्। किं तदित्याह नाम्ना सूर्पणखाहं नूनं निश्चितं त्वया नाज्ञायिषि न ज्ञाता कर्मणि टो च्यां सिः हनग्रहदृशच इति मिण् यनञ्णिदिति यन् नाम्नेति भेदके तृतीया सूर्पणखेति नाम्ना उपलक्षितेति केचित् सूर्पवत् नखा यस्याः सा सूर्पणखा पूर्वपदस्थात् षु संज्ञाया णत्वमिति परे स्मरति षु र्णोऽदान्ते इत्यादौ वाशब्दस्य व्यवस्थावाचित्वात् नखमुखान्तात् संज्ञायामीप्निषेध इति परे स्मरति पात्‌शोनादीत्यादिना स्वाङ्गादीण्प्रत्ययो विभाषित ईपोऽभावपक्षे आप् पक्षे तादृशसंज्ञाया अभावात् न ईप् ईपि सति तु वा का क्षतिः तत्र वाशब्दो व्यवस्थावाची वा। अज्ञाने हेतुमाह येनायं दण्डो नासाच्छेदनरूपो मयि त्वया अपाति निपातितः ण्यन्तात् पतेः कर्मणि टो। चैत्रियः जन्मान्तरशरीरे चिकित्स्यः एतज्जन्मनि नासाया अनुत्पत्त्या शरीरान्तर एव तत्सम्भवात् विकारसंघेत्यादिना क्षेत्रशब्दात् जन्मान्तरशरीरे चिकित्स्येऽर्थे इयः क्षेत्रादियः परक्षेत्रे

पर्य्यशाप्सीद्दिविष्ठासौ संदर्श्य भयदं वपुः ।
अपिस्फवच्च बन्धूनां निनङ्क्षुर्विक्रमं मुहुः ॥ ३२ ॥

---

चिकित्स्ये इति परसूत्रं तत्र परच्चेत्रे जन्मान्तरशरीरे ॥ ३२ ॥ भ०

पर्य्यशाप्सीदित्यादि। असौ राक्षसी पर्य्यशाप्सीत् आक्रुष्टवती शपेरनिटः सिचि हलन्तलक्षणा वृद्धिः शप उपालम्भन इति तङ् न भवति, उपालम्भनं हि वाचा शरीरस्पर्शनम्। दिविष्ठा नभसि वर्त्तमाना तत्पुरुषे कृति बहुलमिति सप्तम्या अलुक् अम्बाम्बति षत्वम्। भयदं रौद्रं वपुः शरीरं संदर्श्य दर्शयित्वा बन्धूनां विक्रमं शौर्य्यं मुहुः पुनः पुनः अपिस्फवत् स्फीतीचकार अर्त्तिह्रीत्यादिना णावित्यनुवृत्तौ स्फायो व इति वकारः स्फायतेश्चङि णिलोपः ह्रस्वद्विर्वचनादि अभ्यासस्य खयः शेषः चर्त्वमित्वञ्च सन्वद्भावे निनङ्क्षुः नष्टुमिच्छुरित्यर्थः नशेः सनि मस्जिनशोर्झलीति नुम् ॥ ३२ ॥ ज० म०

पर्य्यशाप्सीदित्यादि । असौ राक्षसी दिविष्ठा सती नभःस्था सती भयदं भयजनकं वपुः संदर्श्य पर्य्यशाप्सीत् आक्रुष्टवती बन्धूनां खरादीनां विक्रमं मुहुर्वारं वारं अपिस्फवच्च वर्द्धयामास च रामादीनां भयार्थं विवर्ध्य कथयामासेत्यर्थः निनङ्क्षुः अन्तर्द्धातुमिच्छुः नशेः सनि नुम् रधोसुचामिति नुम् शश्छ्राजेति षङ् षढोः कः से शपीञ आक्रोशे व्यां सिः अनिम्त्वात् व्रजवदेति व्रिः दिवि तिष्ठतीति हनजनादिति डः सप्तम्या अलुक् षत्वञ्चाभिधानात् संपूर्वात् दृशेर्णन्तात् क्त्वो यप्। अपिस्फवदिति स्फायीङ्वृद्धौ ञिः प्रेरणे पातिस्फायोर्लस्वङो ञाविति वङ् ञिश्रीत्यङ् द्वित्वं खः सन्वत् नङ्रङः स्वः। अपिस्फुरदिति क्वचित् पाठः तत्र प्रका-

खरदूषणयोर्भ्रात्रोः पर्य्यदेविष्ट सा पुरः।
विजिग्राहयिषू रामं दण्डकारण्यवासिनोः॥ ३४॥
कृते सौभागिनेयस्य भरतस्य विवासितौ।
पित्रा दौर्भागिनेयौ यौ पश्यतं चेष्टितं तयोः॥ ३५॥

---

श्रितवतीत्यर्थः अपुष्फुरदिति पाठेऽपि तथा स्फुरथि स्फूर्त्तौ चले क्रीजीङोऽजेति पञ्चे उकारस्यात्वम्॥ ३३॥ भ०

खरेत्यादि। खरदूषणयोर्भ्रात्रोर्दण्डकारण्यवासिनोः पुरः अग्रतः पर्य्यदेविष्ट परिदेवनं कृतवतीति देव्व देवन इत्यस्यात्मनेपदिनः सेटो लुङि रूपम्। परिदेवने कारणमाह विजिग्राहयिषुः रामं विग्राहयितुं योधयितुमिच्छुः ग्रहेर्ण्यन्तस्य सनन्तस्य रूपं रोरीति रेफलोपः ढ्रलोप इति दीर्घत्वम्॥ ३४॥ ज० भ०

खरदूषणयोरित्यादि। रामं विजिग्राहयिषुः विग्राहयितुं खरादिभिः सह योधयितुमिच्छुः सा राक्षसी खरदूषणयोर्भ्रात्रोः पुरोऽग्रतः पर्य्यदेविष्ट क्रन्दितवती देव्वङ् देवने। किम्भूतयोः दण्डकारण्यवासिनोः दण्डकानामारण्ये वसतः इति ग्रहादित्वाणिनि वस्तुं शीलमनयोरित्यन्ये ग्रहेर्ज्यन्तत्वात् सन उः पुर इति पूर्वाधरावरा इति पूर्वशब्दस्य पुरादेशः अतएव अस् तद्योगे समार्थेनेत्यादिना षष्ठी॥ ३४॥ भ०

कृते इत्यादि। किं पर्य्यदेविष्ट इत्याह भरतस्य कृते कार्य्यनिमित्तं राज्ये अभिषेक्तव्यमिति सुभगा कैकेयी तस्या अपत्यं सौभागिनेयः स्त्रीभ्यो ढक् कल्याण्यादीनामिनङ् तत्र सुभगादुर्भगा चेति पठ्यते हृद्भगेत्युभयपदवृद्धिः पित्रा यौ विवासितौ निष्काशितौ दौर्भागिनेयौ कौशल्या सुमित्रा च

मम रावणनाथाया भगिन्या युवयोः पुनः ।
अयं तापसकाद्ध्वंसः क्षमध्वं यदि वः क्षमम् ॥ ३६ ॥

---

दुर्भगे तयोरपत्ये रामलक्ष्मणौ तयोश्चेष्टितं नासाच्छेदनं पश्यतं विधौ प्रार्थनायां वा लोट् थसस्तम् ॥ ३५ ॥ ज० म०

कृते इत्यादि। इति पर्य्यदेविष्ट इति पूर्वेणान्वयः सौभागिनेयस्य सुभगापुत्रस्य भरतस्य कृते निमित्तं यौ दौर्भागिनेयौ दुर्भगापुत्रौ रामलक्ष्मणौ पित्रा दशरथेन विवासितौ राष्ट्रान्निराकृतौ तयोश्चेष्टितं नासाच्छेदनरूपं युवां पश्यतं विधौ गौ कृते इत्यव्ययं निमित्तार्थे वर्त्तते क्विवन्तकृच्छब्दात् चतुर्थ्येके कृच्छब्दात् सप्तम्येके वाहाद्यतोऽत्रग्रावादेरित्यादिना आवन्तत्वात् सुभगादुर्भगाशब्दाभ्याम् अपत्यार्थे ष्णेयः नित्ते त्रिरिति द्विपदे वृद्धिः कल्याणीसुभगेत्यादिना ष्णेयस्य इनेयादेशः ययोर्लोप इत्यालोपः ॥ ३५ ॥ भ०

ममेत्यादि। रावणो नाथः प्रभुर्यस्याः मम विशेषणं युवयोर्भगिन्या अयं तापसकात् कुतापसात् कुतापसात् कुत्सायां कन् ध्वंसः नासिकाविनाशः यदि वः युष्माकं गुरूणां क्षमं युक्तं क्षन्तुमित्यर्थात् युष्मदि गुरावेकेषामिति बहुवचनं तयोर्ज्येष्ठत्वात् तर्हि क्षमध्वम् उपेक्षध्वं रावण एव ज्ञास्यतीति भावः ॥ ३६ ॥ ज० ज०

ममेत्यादि। रावणो नाथो यस्यास्तादृश्या मम युवयोर्भगिन्या युवयोरेव पुरोऽग्रतः अयं तापसकात् क्षुद्रतपस्विनः सकाशात् ध्वंसो नासाच्छेदनरूपो वृत्तः अत्र यदि वः युष्माकं क्षमं क्षन्तुं योग्यं तदा यूयं क्षमध्वं रावण एव ज्ञास्यतीति भावः विकारसङ्घेत्यादिनाल्पार्थे कुत्सार्थे वा कः युष्मदोर्द्वित्वे बहुत्वविवक्षा क्षममिति क्षमायोग्यं सामान्यतः प्रयुक्तम्।

असंस्कृत्रिमसंव्यानावनुप्त्रिमफलाशिनौ।
अभृत्रिमपरीवारौ पर्य्यभूता तथापि माम् ॥ २७ ॥

---

युक्ते योग्ये हिते क्षममिति कोषः। क्षममव्ययमित्यन्ये। पुनरिति पाठे मम पुनरिति ॥ २६ ॥ भ०

असमित्यादि। पुनरप्युत्तेजयितुमाह संस्कारेण वापेन भरणेन च निर्वृत्तं संस्कृत्रिममुप्त्रिमं भृत्रिमञ्च ड्वितः क्त्रिः क्त्रेर्मम् नित्यं संपर्य्युपेभ्य इति सुट् संपूर्वस्य क्वचिदभूषणेऽपीष्यते संस्कृत्रिमं न विद्यते येषामिति नञ्समासः असंस्कृत्रिमाणि संव्यानानि परिधानानि उत्तरीयाणि ययोः वल्कलवाससावित्यर्थः अनुप्त्रिमाणि फलानि अशनमाहारो ययोः तौ वन्यफलाहारौ न शालिभोजनौ परिव्रियतेऽनेनेति घञ् उपसर्गस्य घञीति दीर्घः मृगाणाममनुष्यत्वात् अभृत्रिमः परीवारः अनुजीविलोको ययोस्तौ मृगपरिवारौ तथापि मां पर्य्यभूतां परिभूतवन्तौ लुङि रूपम् ॥ २७ ॥ ज० म०

असंस्कृत्रिमसंव्यानावित्यादि। तौ असंस्कृत्रिमसंव्यानौ तन्वादीनां संस्कारेण जातं संस्कृत्रिमं संपरेः सुमिति सुम् न विद्यते संस्कृत्रिमं संव्यानमुत्तरीयं ययोर्वल्कलमात्रसत्त्वात् वपनेन जातम् उप्त्रिममनुप्त्रिमं वन्यं तादृशं फलमशनमाहारो ययोः अथवा नन्द्यादित्वात् कर्त्तरि अनः। फलाशिनाविति क्वचित् पाठः। भरणेन पोषणेन जातो भृत्रिमः परीवारोऽनुजीविजनो ययोः सर्वत्र ड्वितस्त्क्त्रे त्रिमक् ग्रहस्वपाद्योरिति जिः परिवृणोतीति कर्त्तरि घञ् व्यतीहारे त्रिः पूर्वं इत्यत्र व्यतीहार इति दीर्घनिर्देशात् क्वचित् घञन्ते उपसर्गस्य दीर्घत्वं सूचितं तेनात्र परेरिकारस्य दीर्घत्वम्। तौ यद्यपि ईदृशौ

श्वःश्रेयसमवाप्तासि भ्रातृभ्यां प्रत्यभाणि सा।
प्राणिवस्तव मानार्थं व्रजाश्वसिहि मा रुदः॥ ३८॥
जक्षिमोऽनपराधेऽपि नरान् नक्तन्दिवं वयम्।

---

तथापि मां पर्य्यभूतां परिभूतवन्तौ भूस्थेति सेर्लुक् ॥३७॥ भ०

श्वःश्रेयसमित्यादि। श्वःशब्दः प्रशंसायामाह शोभनं श्रेय इति वाक्ये श्वसो वसीयः श्रेयस इत्यच् मयूरव्यंसकादित्वात् सः श्वःश्रेयसं कल्याणमवाप्तासि प्राप्स्यसि भविष्यदनद्यतने लुट् मारयावस्ताविल्युक्तं भवति ताभ्यां भ्रातृभ्यां प्रत्यभाणि प्रतिभणिता सा कर्मणि लुङ् प्राणिवस्तव मानार्थं तव मानखण्डनं मा भूदिति जीवावः श्वस् प्राणने अनच् अदादिभ्यः सार्वधातुक इति इट् अनित्तेरिति णत्वं तस्माद् व्रज यथास्थानं गच्छ आश्वसिहि उद्वेगं त्यज विधौ प्रार्थनायां वा लोट्। मा रुदः माङि लुङ् इरितो वेत्यङ् यदा स नास्ति तदा मा रोदीरिति भावः॥ ३८॥ ज० म०

श्वःश्रेयसमित्यादि। भ्रातृभ्यां खरदूषणाभ्यां सा राक्षसी प्रत्युत्तरं प्रापिता। किन्तदित्याह श्वःश्रेयसं कल्याणम् अवाप्तासि प्राप्स्यसि शत्रुवधेनेत्यर्थात् श्वा रूपं श्वोभवं श्रेयः श्वःश्रेयसं श्वोऽवसीयस्श्वःश्रेयसेति निपातितम्। तव मानार्थम् आवां प्राणिवः जीवावः अनघ्लु प्राणने रुदभ्यो य इतीम् प्राणवश्च इति पक्षे णत्वम्। तस्माद् व्रज गच्छ स्वस्थानमित्यर्थात् आश्वसिहि आश्वासं लभस्व उद्वेगं त्यज इत्यर्थः प्रार्थनायां गौ रुदादित्वात् पूर्ववदिम्। त्वं मा रुदः मा रोदीः लघिररुदरोदे इरित्त्वात् सास्तुलिद्युदिति पक्षे ङः॥ ३८॥ भ०

जक्षिम इत्यादि। वयम् अनपराधेऽपि नक्तञ्च दिवा च

कुतस्त्वं भीरु ! यत् तेभ्यो द्रुह्यद्भ्योऽपि क्षमामहे ॥ ३९ ॥
तौ चतुर्दशसाहस्रबलौ निर्ययतुस्ततः ।
पारश्वधिकधानुष्कशाक्तिकप्रासिकान्वितौ ॥ ४० ॥

---

नक्तन्दिवम् अचतुरेति निपातितं नरान् जक्षिमो भक्षयामः जक्षभक्षहसनयोरिति भक्षार्थस्य रुदादिभ्य इतीट् अस्मदोर्द्वयोश्चेति द्वित्वे वयमिति बहुवचनं यत एवं हे भीरु ! सम्बुद्धौ गुणो न भवति संज्ञापूर्वको विधिरनित्य इति कुतस्त्वं कुत एतदागतम् अव्ययत्वात् त्यप् अमेहक्कतसित्रेभ्य इति त्यप् तेभ्यः नरेभ्यो द्रुह्यद्भ्योऽपि द्रोहं कुर्वाणेभ्योऽपि क्षमामहे नैवेत्यर्थः क्रुधद्रुहेति सम्प्रदानत्वम् क्षमिर्गम्यमानो नञर्थस्तस्यासूयार्थत्वात् क्षमध्वं यदि वः क्षममित्यस्य प्रतिवचनम् ॥ ३९ ॥ज०म०

जक्षिम इत्यादि। अनपराधे अपराधाभावेऽपि वयं नरान् नक्तन्दिवं रात्रौ च दिवा च जक्षिमः भक्षयामः जक्षच् लुघभक्षहासयोर्घित्त्वात् रुदादिः अस्मदो द्वित्वबहुत्वविवक्षा अन्यराक्षसयोगाद् बहुत्वं नक्तन्दिवमिति अक्षिभ्रुवादित्वात् निपातितं स्वार्थिकष्णान्तेन दिवाशब्देन समाहारद्वन्द्वो वा। हे भीरु ! द्रुह्यद्भ्योऽपि द्रोहं कुर्वद्भ्योऽपि तेभ्यो नरेभ्यो वयं क्षमामहे इति यत्तत् कुतस्त्वं कुत आगतं तत्राद्यचिरेत्यादिना त्यः यदभिप्रेत्य धात्वर्थस्तत्र चतुर्थीति परः स्वमते तादर्थ्यविवक्षयैव भीरु इति तन्वादेर्वेति पक्षे ऊङ् सम्भ्रुदीति ह्रस्वः ह्रस्वकरणान्न गुणः ॥ ३९ ॥ भ०

तावित्यादि। ततो निगदनादुत्तरकालं निर्ययतुः निर्गतवन्तौ चतुर्दशसहस्राणि परिमाणमस्य बलस्य प्रतिवचनमित्यस्मिन् विषये शतमानविंशतिकसहस्रवसनादण् प्राग्वतः सङ्ख्यायाः संवत्सरेत्युत्तरपदवृद्धिः। चतुर्दशसाहस्रं बलं ययोः

अथ सम्पततो भीमान् विशिखैरामलक्ष्मणौ ।
बहुमूर्ध्नो द्विमूर्द्धांश्च त्रिमूर्द्धांश्चाहतां मृधे ॥ ४१ ॥

तौ तथा पारश्वधिकधानुष्कयाष्टिकप्रासिकान्वितौ परश्वधः प्रहरणमेषामिति परश्वधात् ठञ् तथा धनुः प्रहरणमेषां यष्टिः प्रहरणमेषामिति शक्तियष्ट्योरीकक् प्रासः कुन्तः प्रहरणमित्यौत्सर्गिकष्ठक् तत्र धनुषष्ठक् इसुसुक्तान्तात्कः ततः सेनाङ्गत्वात् क्षतैकवद्भावः तेनान्वितावनुगतौ ॥ ४० ॥ ज० म०

ताविल्यादि । ततो वचनानन्तरं तौ खरदूषणौ निर्ययतुः निर्गतौ चतुर्दशसहस्राणि परिमाणमस्य चतुर्दशसाहस्रं विकारसङ्घेत्यादिना तदस्य परिमाणमित्यर्थे ण्णः सुपञ्चालादित्वात् परपदे वृद्धिः चतुर्दशसाहस्रं बलं ययोः तौ तथा परश्वधैः परशुभिर्युध्यन्ते पारश्वधिकाः धनुर्भिर्युध्यन्ते धानुष्काः शक्तिभिर्युध्यन्ते शाक्तिकाः प्रास्यन्ते इति प्रासाः लगुड़ाः कर्माणि घञ् प्रासैर्युध्यन्ते प्रासिकाः एभिरन्वितौ अनुगतौ ढघेकादिति णिकककण्णोकाः ॥ ४० ॥ भ०

अथेत्यादि ! अथैतस्मिन् प्रस्तावे रामलक्ष्मणौ मृधे संग्रामे विशिखैः शरैरहतां हतवन्तौ हन्तिः परस्मैपदी तस्माल्लङि तसस्ताम् तस्य ङित्त्वे अनुदात्तेत्यादिना अनुनासिकलोपः । कान् राक्षसान् विशेषणोपादानात् विशेष्यप्रतिपत्तिः प्रकृतत्वाद्वा सम्पततोऽभिपततः बहुमूर्ध्नो बहुशिरसः तथा द्विमूर्द्धांस्त्रिमूर्द्धांश्च द्वित्रिभ्यां षो मूर्ध्न इति समासान्तः षः अतएव भीमान् भयानकान् त्रिमूर्द्धांश्चेत्यत्र नम्छव्यप्रशानिति रुः पूर्वस्य त्वनुनासिकः विसर्जनीयस्य सः चुत्वम् ॥४१॥ ज० म०

अथेत्यादि । निर्गमानन्तरं सम्पततः सङ्गच्छतः संमुख-

तैर्वृक्णरुग्णसंभुग्नक्षुण्णभिन्नविपन्नकैः।
निमग्नोद्विग्नसंक्षीणैः पप्रे दीनैश्च मेदिनी ॥ ४२ ॥

---

मागच्छतो राक्षसान् अर्थात् रामलक्ष्मणौ मृधे युद्धे विशिखैः बाणैराहतां वनतनाद्यनिमामिति नस्य लोपः बहुमूर्ध्नो बहुमस्तकान् एवं द्विमूर्द्धान् त्रिमूर्द्धान् द्वित्रे मूर्ध्न इति षः न्वोर्लोपो ताविति नस्य लोपः बहुशब्दः विपुलार्थश्चतुष्टादिसंख्यार्थको वा अतएव भीमान् भयङ्करान् ॥ ४१ ॥ भ०

तैरित्यादि। तैः राक्षसैर्मेदिनी पप्रे पूरिता प्रापूरण इत्यस्मात्कर्मणि लिट् वृक्णैः छिन्नैः रुग्णैः भग्नहस्तपादैः संभुग्नैः वक्रीकृतदेहैः क्षुण्णैः सम्पिष्टशरीरैः भिन्नैः विदारितैः विपन्नकैः नष्टैः अनुकम्पायां कन् निमग्नैः परिभूतैः उद्विग्नैर्भीतैः संक्षीणैर्लाञ्जतैः वयमपीदृशीं दशां प्राप्ता इति दीनैः हा मातः हा भ्रातरित्येवं भाषमाणैः तत्र व्रश्चिरुजिभुजिमस्जिविजिभ्यो निष्ठायामोदितश्चेति नत्वम् चोः कुरिति कुः क्षुदिभिदिपदिभ्योरदाभ्यामिति दस्य च नः। संक्षीण इति नुदविदेत्यादिना दीङ् क्षये इत्यस्य खादय ओदित इत्योदितश्चेति नत्वम् ॥ ४२ ॥ ज० म०

तैरित्यादि। तैराक्षसैर्मेदिनी पप्रे पूरिता पृलि पूर्त्तौ कर्मणि ठो। कीदृशैः वृक्णैः छिन्नैः व्रश्चैः कङ् चेति क्तस्य नत्वं कङ् च चस्य वत्वे तन्निमित्तस्य शस्य सत्वे स्यादेः सो लोपः ग्रहस्तपाद्योरिति जिः। रुग्णैर्भग्नहस्तपादैः रुजोशौ भङ्गे ओदित्वात् सूत्वाद्योरिति क्तस्य नः जस्य गत्वविधानं मग्नस्य दोर्भिर्भुवनस्य भारमित्यत्र व्याख्यातम्। संभुग्नैर्वक्रीकृतैः भुजोमौवक्रणे पूर्ववत् क्षुण्णैः संपिष्टदेहैः क्षुदिर संपेषणे दान्तत्वात् सूत्वाद्योरिति क्तस्य दस्य च नः षृ ् र्णोऽदान्त इत्यादिना पूर्वस्य

केचिद् वेपथुमासेदुरन्ये दवथुमुत्तमम् ।
सरक्तं वमथुं केचिद् भ्राजथुं न च केचन ॥ ४२ ॥
मृगयुमिव मृगोऽथ दक्षिणेर्मा
दिग्धमिव दाहवतीं मरावुदन्यन् ।

णत्वे च्छुभिरिति परस्य नस्य णत्वम् । भिन्नैर्विदारितैः विपन्नकैर्मृतैः विपूर्वपदिर्मरणे वर्त्तते स्वार्थे कुत्सायां वा कः । निमग्नैर्भीत्या गुप्तैः रुधिरप्रवाहे मग्नैर्वा उद्विग्नैर्भीतैः ओविजी भयचलनयोः । संक्षीणैः योद्धुमसामर्थ्यात् लज्जितैः ह्रीणैः ह्रीलि लज्जायां ह्रीघ्रालोन्देति क्तस्य नः । दीनैः सुतादिदुःखान्वितैः ओदोङ्य चये ॥ ४२ ॥ भ०

केचिदित्यादि । तेषां मध्ये केचित् वेपथुं कम्पं टुवेपृ कम्पने आसेदुः प्राप्ताः अन्ये दवथुमुपतापमुत्तमं महान्तं टुदु उपतापे केचिद्वमथुं छर्दनं सरक्तं सशोणितं टुवमु उद्गिरणे भ्राजथुं शोभां नैव केचन न केचिदपि टुभ्राजृ दीप्तौ सर्वत्र ट्वितोऽथुच् ॥ ४३ ॥ ज० म०

केचिदित्यादि । तेषां मध्ये केचिद्राक्षसा वेपथुं कम्पं आसेदुः प्रापुः वपढ्वङ् चलने अन्ये दवथुं उपतापं उत्तमं महान्तं आसेदुः टुदु उपतापे केचित् वमथुं रक्तेन सह छर्दिमासेदुः टुवम उद्गिरणे केचन भ्राजथुं दीप्तिं नासेदुः टुभ्राजृङ् दीप्तौ सर्वत्र ट्वितोऽथुर्भावे इति अथुः ॥ ४३ ॥ भ०

मृगयुमित्यादि । अथैतस्मिन् राक्षसविध्वंसनप्रस्तावे त्रिमूर्द्धः त्रिशिरा नाम राक्षसः रघुतनयमुपाययौ उपागतः मृगयुमिव लुब्धकमिव मृगान् यातीति मृगयुः मृगय्वादयश्चेत्यौणादिककुप्रत्ययान्तः दक्षिणेर्मा दक्षिणे ईर्मं व्रणं यस्येति दक्षिणेर्मा लुब्धयोग इत्वमिच् यथा मृगो लुब्धकव्रणितदक्षि-

रघुतनयमुपाययौ त्रिमूर्द्धा
विषभृदिवोग्रमुखं पतत्त्रिराजम् ॥ ४४ ॥
श्रितविशिखनिकृत्तकृत्स्नवक्त्रः
चितिभृदिव चितिकम्पकीर्णशृङ्गः ।

---

णाङ्गः तमेव मरणायोपयाति दिशमिव दाहवतीं यथा दिशं दावाग्नियुतां मरौ निर्जले देशे मृग उदन्यन् उदकपानाभिलाष उपयाति उदकमिच्छति सुप आत्मन इति क्यच् उदकस्योदन्भावः अशनायेत्यादिना निपातितं तदन्तात्लट् शतृप्रत्ययः । विषभृदिव यथा विषधरः सर्पः उग्रमुखं भीषणमुखं पतत्त्रिराजं गरुडमुपयाति तद्वत्तमित्यर्थः । राजाहःसखिभ्यष्टच् ॥ ४४ ॥ ज० म०

मृगयुमित्यादि । अथ रक्षोवधानन्तरं त्रिमूर्द्धस्त्रिशिरा नाम राक्षसो रघुतनयं रामं उपाययौ उपागतः यथा दक्षिणेर्मा व्याधेन व्रणितदक्षिणाङ्गो मृगस्तमेव मृगयुं व्याधं याति तद्वत् मृगं व्याधं यातीति मृगयुर्निपातनात् दक्षिणेऽङ्गे ईर्मं व्याधघातव्रणं यस्य स दक्षिणेर्मा दक्षिणादीर्मादन् व्याधव्रणितदक्षिणाङ्गे मृगे इति परसूत्रं स्वमते ईर्मन्शब्दोऽप्यस्ति किंवा दक्षिणे ईर्मं व्रणं यस्येति धर्मादनित्यस्य योगविभागादन् लुब्धकयोगस्त्वभिधानात् । व्रणोऽस्त्रियामीर्ममरुरित्यमरः । यथा वा उदकपानाभिलाषी मृगो मरौ निर्जलदेशे दाहवतीं दिशं उपयाति उदकं पातुमिच्छतीति धनोदकाशनेति क्ये उनङ् शतृः । यथा वा विषभृत् सर्पः उग्रमुखं भीषणवदनं पतत्त्रिराजं गरुडं उपयाति ॥ ४४ ॥ भ०

श्रितेत्यादि । त्रिमूर्द्धा राक्षसानां भयमुपनिदधे उपनि-

भयमुपनिदधे स राक्षसानाम्
अखिलकुलक्षयपूर्वलिङ्गतुल्यः ॥ ४५ ॥

इति भट्टिकाव्ये चतुर्थः सर्गः ।

---

हितवान् । कीदृशः शितविशिखैस्तीक्ष्णविशिखैः निकृत्तानि छिन्नानि कृत्स्नानि सर्वाणि वक्त्राणि मुखानि यस्य सः क्षितिभृदिव भूधर इव कीदृशः क्षितिकम्पकीर्णशृङ्गः क्षितेर्भूमेः कम्पेन कीर्णानि क्षिप्तानि शृङ्गाणि यस्य क्षितिभृतः अखिलस्य सर्वस्य कुलस्य क्षये विनाशे यत् पूर्वं लिङ्गं तेन तुल्यः असावप्यखिलराक्षसक्षयस्य पूर्वलिङ्गतुल्यः ॥४५॥ ज०म०

इति भट्टिकाव्यटीकायां जयमङ्गलाख्यायां प्रकीर्णकाण्डे रामप्रवासश्चतुर्थः सर्गः ॥ ४ ॥

शितेत्यादि । शितविशिखैस्तीक्ष्णबाणैर्निकृत्तानि छिन्नानि कृत्स्नानि सर्वाणि वक्त्राणि मुखानि यस्य स त्रिमूर्द्धो राक्षसानां भयमुपनिदधे उपनिहितवान् क्षितिभृदिव पर्वत इव क्षितिकम्पात् कीर्णानि विक्षिप्तानि शृङ्गाणि यस्य स तथा। त्रिमूर्द्धः किम्भूतः अखिलकुलक्षयपूर्वलिङ्गतुल्यः अखिलस्य कुलस्य क्षयः तस्य यत् पूर्वलिङ्गं पूर्वचिह्नं भाविक्षयसूचक उत्पातस्तत्तुल्यः। केचित्तु अखिलकुलस्य क्षये पूर्वलिङ्गं आदिचिह्नं त्रिमूर्द्धस्तादृशः पर्वत इत्याहुः ॥ ४५ ॥ भ०

इति सद्वैद्यगौराङ्गमल्लिकात्मजश्रीभरतसेनकृतायां भट्टिटीकायां मुग्धबोधिन्यां प्रकीर्णकाण्डे त्रिमूर्द्धवधो नाम चतुर्थः सर्गः ॥४॥

---

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.

# पञ्चमः सर्गः ।

निराकरिष्णू वर्त्तिष्णू वर्द्धिष्णू परितो रणम् ।
उत्पतिष्णू सहिष्णू च चेरतुः खरदूषणौ ॥ १ ॥
तौ खड्गमुषलप्रासचक्रबाणगदाकरौ ।
अकार्ष्टामायुधच्छायं रजःसन्तमसे रणे ॥ २ ॥

---

निरेत्यादि । खरदूषणौ रणं परितः समन्तात् अभित इत्यादिना द्वितीया चेरतुः भ्रान्तौ निराकरिष्णू शत्रुनिराकरणशीलौ वर्त्तिष्णू अभिमुखं वर्त्तनशीलौ न पलायनशीलौ वर्द्धिष्णू मायया महाप्राणोद्भावनशीलौ उत्पतिष्णू नभस उत्पतनशीलौ सहिष्णू शस्त्रप्रहारसहनशीलौ सर्वत्रालङ्कृञीत्यादिना इष्णुच् ॥ १ ॥ ज० म०

निराकरिष्णू इत्यादि । खरदूषणौ रणं परितः सर्वतश्चेरतुः चर गत्यां ठो धिक् समयेति परितोयोगे द्वितीया । निराकरिष्णू शत्रुनिराकरणशीलौ वर्त्तिष्णू वर्त्तनशीलौ अर्थात् प्रतियोद्धृसंमुखे रणं परित इति वा अनुषञ्जनीयम् । वर्द्धिष्णू मायया वर्द्धनशीलौ उत्पतिष्णू आकाशादुत्पतनशीलौ सहिष्णू प्रतियोद्धृशस्त्रघातादिसहनशीलौ सर्वत्र जिभ्राजभूसहेत्यादिना कर्त्तरीष्णुः शीलार्थता तु ढवेक्रुत्यव्येति सूत्रे शीलार्थे ष्वसित्युक्तं किन्तु ष्णविधायकसूत्रे शीलार्थता नोक्ता अतएव ष्णादयः कतिचित् प्रत्ययाः शीलार्थेऽपि भवन्तीति सूचनात् किंवा अभिधानाच्छीलार्थतानुक्तावपि न क्षतिः निराकुरुतः शत्रूनित्यादिवाक्यं विधेयम् ॥ १ ॥ भ०

ताविल्यादि । रणे रणभूमौ रजःसन्तमसे सङ्गतं तमः सन्तमसं अवसमन्धेभ्यस्तमस इत्यच् रजसा सन्तमसं अस्मिन्

अथ तीक्ष्णायसैर्बाणैरधिमर्म रघूत्तमौ ।
व्याधं व्याधममूढौ तौ यमसाच्चक्रतुर्द्विषौ ॥ ३ ॥

---

इति रजःसन्तमसं तस्मिन् रजसा कृतान्धकारे तौ खरदूषणौ आयुधच्छायमायुधबाहुल्यमकार्ष्टाम् कृतवन्तौ आयुधानां छायेति छायाबाहुल्य इति नपुंसकत्वे कृत्वं खड्गादीनां बाणानां द्वन्द्वैकवद्भावं कृत्वा पश्चात् तेन सहिता गदेति शाकपार्थिवादित्वात् सः अन्यथा समुदायस्य जातिरप्राणिनामित्येकवद्भावेन नपुंसकलिङ्गता स्यात् वाणगदमिति खड्गमुषलप्रासचक्रबाणगदाः करे येषामिति समासे प्रहरणार्थेभ्य इत्यादिना करशब्दस्य परनिपातः ॥ २ ॥ ज० म०

तावित्यादि । खरदूषणौ रणे युद्धे आयुधानां बहूनां छायामकार्ष्टां कृतवन्तौ रणपदं रणभूमिवाचकमित्यन्ये । सम्यक् तमः सन्तमसं समवान्धात्तमस इति अः रजसा सन्तमसं यत्र रणे आयुधानां बाहुल्यात् छायाशब्दस्य नपुंसकत्वमभिधानात् । कीदृशौ खड्गादयः करे ययोस्तौ । अकार्ष्टामिति कृञः व्यां सिः व्रजवदेति व्रिः ॥ २ ॥ भ०

अथेत्यादि । अथैतस्मिन् संग्रामे रघूत्तमौ रामलक्ष्मणौ कर्त्तृभूतौ कर्मभूतौ द्विषाविति सत्सूद्विषेत्यादिना क्विप् यमसाच्चक्रतुः यमाधीनौ कृतवन्तौ तदधीनवचन इति सातिः तीक्ष्णायसैर्बाणैः तीक्ष्णमायसं फलं येषामिति व्याधं व्याधं विद्ध्वा विद्ध्वा आभीक्ष्ण्ये णमुल् तत्र समानकर्त्तृकयोः पूर्वकाल इति वर्त्तते आभीक्ष्ण्ये द्वे भवत इति द्विर्वचनं अधिमर्मेति विभक्त्यर्थेऽव्ययीभावः । अमूढौ सावधानौ रामलक्ष्मणौ । मर्मवेधमेवाह ॥ ३ ॥ ज० म०

अथेत्यादि । तयोर्विक्रमानन्तरं रघूत्तमौ कर्त्तृभूतौ

हतबन्धुर्जगामासौ ततः सूर्पणखा वनात् ।
पारेसमुद्रं लङ्कायां वसन्तं रावणं पतिम् ॥ ४ ॥
संप्राप्य राक्षससभं चक्रन्द क्रोधविह्वला ।

---

तीक्ष्णायसैस्तीक्ष्णफलैर्बाणैरधिमर्म जीवितस्थाने व्याधं व्याधं विद्ध्वा विद्ध्वा तौ द्विषौ खरदूषणौ कर्मभूतौ यमसात् यमाधीनौ चक्रतुः । रघूत्तमौ किम्भूतौ अमूढौ रणपण्डितौ किंवा खरदूषणौ अमूढौ अस्त्रवर्षेऽप्यसंभ्रान्तौ मर्मवेधे सावधानौ वा रणपण्डितावपि वा तीक्ष्णमायसमयोविकारः फलं यत्र मर्म विध्यतीति कारकार्थेऽव्ययीभावः व्यध्यौ ताडे इत्यस्मात् चणम् वाभीक्ष्ण्ये इति चणम् आभीक्ष्ण्ये द्वित्वं लोकतः सिद्धं कात्स्नर्यायत्योः सम्पद्यकादावित्यधीनत्वे चसात् किंवा देये त्राञ्चेति देयेऽर्थे चकारात् चसात् त्रासुसित्यादिना द्विषः क्विप् ॥ ३ ॥ भ०

हतेत्यादि । असौ सूर्पणखा हतबन्धुः व्यापादितभ्रातृद्वया ततो वनाद्दण्डकारण्यात् रावणं पतिं प्रभुं शरणं जगाम गतवती पारेसमुद्रं समुद्रस्य पार इति पारे मध्ये षष्ठ्या वेत्यव्ययीभावः तत्सन्नियोगेन पूर्वपदस्यैकारान्तत्वं पश्चात् सप्तमी नाव्ययीभावादित्यभावः समुद्रस्य पारे स्थितायां लङ्कायां वसन्तं रावणमित्यर्थः ॥ ४ ॥ ज० म०

हतबन्धुरित्यादि । असौ सूर्पणखा हतबन्धुः सती परेण व्यापादितभ्रातृद्वया सती ततो वनात् दण्डकारण्यात् रावणं पतिं प्रभुं जगाम पारेसमुद्रं समुद्रपारे स्थितायां वसन्तं पारेसमुद्रमित्यव्ययीभावः एत्वञ्च निपातनात् चीप्स्योर्वेति सप्तम्यामः प्रतीति पाठे रावणं प्रति लक्षीकृत्य जगाम ॥४॥ भ०

संप्राप्येत्यादि । सा सूर्पणखा राक्षससभं संप्राप्य ढौकित्वा

नामग्राहमरोदीत् सा भ्रातरौ रावणान्तिके ॥ ५ ॥
दण्डकामध्यवात्तां यौ वीर! रक्षःप्रकाण्डकौ।
नृभ्यां संख्येऽक्षषातां तौ सभृत्यौ भूमिवर्द्धनौ ॥ ६ ॥

---

राक्षसानां सभेति सभाराजेत्यादिना नपुंसकता चक्रन्द क्रन्दनं कृतवती क्रोधविह्वला क्रोधविवशा भ्रातरौ खरदूषणावरोदीत् रुदितवती नामग्राहं नाम गृहीत्वा भ्रातरौ खरदूषणाविति नाम्ना दिशिग्रहोरिति णमुल् अत्र नामग्रहणविशिष्टाया रोदनक्रियाया व्याप्तुमिष्टत्वाद्रुदिः सकर्मकः रावणान्तिके रावणसमीपे सप्तम्यधिकरणे चेति चकाराद्दूरान्तिकार्थेभ्य इति सप्तमी। तयोः किं जातमिति रावणेन पृष्टाह ॥५॥ ज० म०

संप्राप्येत्यादि। सा सूर्पणखा राक्षससभं संप्राप्य चक्रन्द राक्षसानां सभा राक्षससभं क्लीवत्वमभिधानात् क्रोधेन विह्वला व्याकुला सती भ्रातरौ खरदूषणौ नामग्राहं नाम गृहीत्वा रावणस्यान्तिके समीपे अरोदीत् रुदेर्घ्यां व्यां रुदायस्विसेरितीम् पूर्वं क्रन्दनमुक्तं अत्र नामग्रहणमुक्तमिति भेदः अश्रुविमोचनमात्रे रुदिः अकर्मकः शब्दयुक्तक्रन्दने तु सकर्मकः इति प्राञ्चः। भ्रातरौ चक्रन्द आजुहाव क्रदि आह्वाने नामग्राहमरोदीदित्यन्वय इति केचित्। नामग्राहमिति नाम्नो ग्रहणमभिधानात् किंवा हा खरदूषणेति नाम्नो ग्राहो ग्रहणं यत्रेति वा रोदनक्रियाया विशेषणम्। ग्राहो घञन्तः ॥५॥ भ०

दण्डकामित्यादि। हे वीर! दण्डकान् दण्डकारण्यसन्निवेशान् अध्यवात्ताम् अध्युषितवन्तौ वस निवासे इत्यस्माल्लुङ् हलन्तलक्षणा वृद्धिः सस्येत्यादिना धातुसकारस्य तत्वम्

झलो झलीति सिचो लोप: रक्ष:प्रकाण्डकौ प्रशस्तौ राक्षसौ प्रशंसावचनैश्चेति स: तत: स्वार्थे कन् स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्त इति नपुंसको न भवति अन्यथा रूढि-शब्दा: प्रशंसावचना आविष्टलिङ्गत्वादन्यलिङ्गेऽपि जातिशब्दे स्वलिङ्गोपादानादेव समानाधिकरणा: स्यु: यथा गोप्रकाण्ड-मिति तौ। नृभ्यां मनुष्याभ्यां संख्ये युद्धे भूमिवर्द्धनावकृषातां कृतौ कर्मणि लुङ् अचिण्वद्भावे रूपम्। वर्द्धेते इति वर्द्धनौ कृत्यल्युटो बहुलमिति कर्त्तरि ल्युट् भूमेर्वर्द्धनाविति स: भस्मी-कृतशरीरस्य भूमौ लीयमानत्वात्। सभृत्यौ नैकाकिनौ ॥६॥

ज० म०

दण्डकामित्यादि। एवंप्रकारेणारोदीदित्यन्वय: वीरेति सोपालम्भसम्बोधनं यौ रक्ष:प्रकाण्डकौ प्रशस्तराक्षसौ दण्ड-कामध्यवात्तां सभृत्यौ तौ नृभ्यां मनुष्याभ्यां संख्ये संग्रामे भूमिवर्द्धनौ अकृषातां कृञ: कर्मणि टौ इगुङ्गुर्मढोति किच्वान्न गुण: शवस्तु चितिवर्द्धन इति त्रिकाण्डशेष:। अरण्ये दण्ड-काशब्द: स्त्रीलिङ्ग: कायोध्याया: पुनरुपगमो दण्डकायां वने व इति भवभूति:। दण्डकानिति पाठे दण्डकारण्यसन्निवेशा-नित्यर्थ:। केचित्तु दण्डकाशब्द: स्त्रीलिङ्गबहुवचनान्त एव इत्युक्ता दण्डका इति शसन्तं पठन्ति। अध्यवात्तामिति अधि-पूर्वाद्वसेष्टीतां च्यां सि: सत्स्यरे इति सस्य त: अनिम्त्वात् त्रि:। रक्षसां मध्ये प्रकाण्डकौ प्रशस्तौ एकार्थत्वात् कर्मधारयो वा समासे विशेषणमपि परं स्यात् प्रशंसावचनैश्चेति परसूत्रं यद्यपि प्रकाण्डमुद्वतल्लजावित्यमरेणोक्तं दृश्यते च गोप्रकाण्ड-मित्यादावजहल्लिङ्गता तथापि कप्रत्यये सति स्वार्थिका: प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्तेऽपीति न्यायात् पुंस्त्वं वस्तुतस्तु पुंलिङ्गोऽपि प्रकाण्डशब्दोऽस्ति निगडाक्रीडनल-

विग्रहस्तव शक्रेण हृतस्पतिपुरोधसा ।
सार्द्धं कुमारसेनान्या शून्यश्वासोति को नयः ॥ ७ ॥
यद्यहं नाथ ! नायास्यं विनसा हतबान्धवा ।
नाज्ञास्यस्त्वमिदं सर्वं प्रमाद्यंश्चारदुर्बलः ॥ ८ ॥

---

प्रकाण्डकाण्डा इति पुंनपुंसकवर्गे हेमचन्द्रः । उद्वप्रकाण्डौ द्वौ प्रशंसायामिति हलायुधः । भूमिं वर्द्धयत इति नन्द्यादित्वादनः ॥ ६ ॥ भ०

विग्रहेत्यादि । बृहस्पतिः पुरोधा मन्त्री यस्य शक्रस्य तेन कार्य्येषु पुरा धीयते इति पुरोधाः पुरःपूर्वाद्धाञः सर्वधातुभ्य असुन् तथा कुमारः कार्त्तिकेयः सेनानीर्यस्य सेनां नयतीति सत्सूद्विषेत्यादिना क्विप् तेन शक्रेण सह सार्द्धं तव विग्रह आसोत् इदानीं कार्य्यनिपुणाभावात्, शून्यश्चासितासस्योर्लोप इति सकारलोपः तस्मात् को नयः नय एव न भवतीत्यर्थः । तदेव दर्शयन्नाह ॥ ७ ॥ ज० भ०

विग्रह इत्यादि । शक्रेण सार्द्धं तव विग्रहो विरोधस्तथापि त्वं शून्यः कार्य्याकार्य्यविचाररहित एवासि इति को नयः न कापि नोतिस्तवेत्यर्थः । किम्भूतेन बृहस्पतिपुरोधसा बृहतां देवानां गुरुत्वात् पतिः बृहस्पतिः मनीषादित्वान्निपातः स पुरोधाः पुरोहितो यस्य कुमारः कार्त्तिकेयः सेनानीः सेनापतिर्यस्य सेनां नयतीति क्विप् कव्याद्यनेका च इति यत्वं लोपोऽस्त्यसोरिति अस्तेः सौ सलोपः ॥ ७ ॥ भ०

यदीत्यादि । विनसा विगता नासा यस्याः नासैव नासिकेति केण इति ह्रस्वत्वे रूपम्, तस्या नसादेशस्य विधीयमानत्वात् अत्र सम्भव एव नास्ति । विनसेति पाठान्तरम् । तत्र विगता चासौ नासिका च विनासिका तत इत्यभूतलक्षणायां हृती·

करिष्यमाणं विज्ञेयं कार्य्यं किन्नु कृतं परैः ।
अपकारे कृतेऽप्यज्ञो विजिगीषुर्न वा भवान् ॥ ९ ॥

---

यायां पद्दन्नोमास इत्यादिना नसादेशः विगतया नासिकयोपलक्षितेत्यर्थः विगता नासिका अस्या इति बहुव्रीहिणा व्याख्याने अञ्नासिकेत्यादिना अच् नसादेशश्च प्राप्नुतः तस्य संज्ञाविषयत्वात् उपसर्गाच्चेत्यसंज्ञायां विधीयमानो न भवति वेर्ग्रो वक्तव्य इति ग्रादेशो बाधकः । हे नाथ ! यद्यहं विनसा हतबान्धवा नायास्यं न याता भविष्यं तदा तदिदं सर्वं भ्रातोर्बधं नासाच्छेदञ्च नाज्ञास्यः न ज्ञातोऽभविष्यः क्रियातिपत्तौ लृङ् । अज्ञाने कारणमाह प्रमाद्यन् विषयेषु प्रमादं गच्छन् चारदुर्बलः चारहीनः । चारा हि चक्षूराज्ञां कार्य्याकार्य्यज्ञानाय लोके चरतीति चरः पचाद्यच् चर एव चारः प्रज्ञादित्वादण् ॥ ८ ॥ ज० म०

यदीत्यादि । हे नाथ ! विनसा हतबान्धवा च सती यद्यहं नायास्यं तदा त्वमिदं सर्वं पूर्वोक्तं नाज्ञास्यः याज्ञाभ्यां ध्वर्थासम्भवे थौ । अज्ञाने हेतुमाह प्रमाद्यन् विषयेषु अनवधानतां गच्छन् यन्योशमादीति शमादित्वाद्दीर्घः प्रमादोऽनवधानता चारेण दुर्बलो हीनः राजा चरैर्जगत् कृत्स्नं प्राप्नुयाल्लोकसम्मतैरिति हि शास्त्रम् । विनसा इति विगता नासा नासिका यस्याः सा विनसा । केचित्तु विगतया नासिकया उपलक्षिता विशेषणे तृतीया पाददन्तेति नसादेश इत्याहुः । बन्धुरेव बान्धवः चर एव चारः स्वार्थे ष्णः ॥ ८ ॥ भ०

करिष्यमाणमित्यादि । परैः शत्रुभिरपचयचिकीर्षया करिष्यमाणं कार्य्यं विज्ञेयं किन्नु कृतमेव यत्तदवश्यमेव विज्ञेयमित्यर्थः त्वं पुनः परैरपकृतोऽपि अज्ञोऽविदितस्वरूपः अतो

हृतस्त्वं पात्रेसमितैः खट्वारूढः प्रमादवान् ।
पानशौण्डः श्रियं नेता नात्यन्तीनत्वमुन्मनाः ॥ १० ॥

विजिगीषुर्न वा भवान् सुप्तो न राज्यं सम्भावयतीत्यर्थः ॥ ९ ॥ ज० म०

करिष्यमाणमित्यादि । परैः शत्रुभिः करिष्यमाणमपि कार्य्यं विज्ञेयं अर्थाज्जिगीषुणा किन्तु कृतं तदवश्यमेव विज्ञेयमित्यर्थः परैः कृतेऽपि अपकारे भवान् अज्ञः अतो भवान् न वा विजिगीषुः जेर्गिः सनव्योरिति गिः जानातीति ज्ञः कृगृज्ञाप्रीति कः उस्येचीत्यादिना आकारलोपः आदन्तात् डेनेष्टसिद्धौ कृगृज्ञा इत्यत्र ज्ञाग्रहणेन हनजनादित्यस्य उपपदस्यैव विषयः कृगृज्ञा इत्यस्य तु उपपदेऽनुपपदे च विषय इति ज्ञापितं वाशब्दः आक्षेपे प्रश्ने वा ॥ ९ ॥ भ०

हृत इत्यादि । अत्यन्तं गामिनीति अवारपारेत्यादिना खः तस्य भावोऽत्यन्तीनत्वं नैवात्यन्तीनामत्यन्तगामिनीं श्रियं नेता न प्रापणशीलः तृन्निति ताच्छीलिकस्तृण् नलोकेति षष्ठीप्रतिषेधः यद्यपि महोदयं राज्यं प्राप्तवानसि तथापि न चिरकालमित्यर्थः यतस्त्वमुन्मनाः भ्रान्तचित्तः यतः पानशौण्डः पाने प्रसक्तः सप्तमी शौण्डैरिति सः अतएव प्रमादवान् अतोऽपि खट्वारूढः उत्पथप्रस्थितः खट्वाक्षेप इति द्वितीयासः तत एव पात्रेसमितैः भोजन एव सन्निहितैः अनुजीविभिर्हृतः पात्रेसमितादयश्चेति क्षेपे सः ॥ १० ॥ ज० म०

हृत इत्यादि । त्वं श्रियं आत्यन्तीनत्वं अत्यन्तगामित्वं न नेता न प्रापयिष्यसि नीञो द्विकर्मकात् तृण् ढघेकत्यव्येत्यादौ शीलार्थे तृण्वर्जनात् न षी अत्यन्तशब्दात् ढघेकादिति तद्गामिन्यर्थे खीनः तत्वे त्वजात्याख्य इति पुंवत् । हेतुमाह

अध्वरेष्वग्निचित्वत्सु सोमसुत्वत्स आश्रमान् ।
अत्तुं महेन्द्रियं भागमैति दुश्च्यवनोऽधुना ॥ ११ ॥

पात्रेसमितैर्भोजनपात्र एव समितैः सन्निहितैः कार्य्यान्तरा-क्षमैरनुजीविभिर्वृतो वेष्टितः अत्राक्षेपे समासो विभक्त्य लोपश्चाभिधानात् । खट्वारूढः विपथप्रस्थितः क्षेन क्षेपे खट्वाया द्वितीया तत्पुरुष इति परे स्वमते समासे सति मण्डपादिवत् स्वभावादर्थान्तरे वृत्तिः । प्रमादवान् अनवधानतायुक्तः यतः पानशौण्डः पाने प्रसक्तः अतएव उन्मना उद्भ्रान्तचित्तः ॥ १० ॥ म०

अध्वरेष्वित्यादि । त्वय्येवम्भूतेऽधुना दुश्च्यवनः इन्द्रः आश्रमानैति आगच्छति आङ्पूर्वस्येणः एत्येधत्यूठ्स्विति वृद्धिः सोमसुत्वतः सोमं सुनोतीति सोमेसुञ इति क्विप् सोमसुतः सन्ति येष्वाश्रमेष्विति मतुप्तसौ मत्वर्थ इति भत्वे तकारस्य जस्त्वं न भवति झय इति मतोर्वत्वम् । किमर्थमैतीत्याह अत्तुं भक्षयितुं महेन्द्रियं भागं महेन्द्रः देवता अस्येति महेन्द्राच्चाणौ चेति घः । क्व अध्वरेषु यज्ञेषु अग्निचित्वत्सु अग्निचितवन्तः अग्निचितः आहिताग्नयः अग्नौ चेरिति क्विप् ते सन्ति येष्विति पूर्ववन्मतुप् ॥ ११ ॥ ज० म०

अध्वरेष्वित्यादि । तवैव प्रमादात् अधुना इदानीं दुश्च्यवनः इन्द्रः अध्वरेषु यज्ञेषु महेन्द्रियं महेन्द्रदैवतं भागं अत्तुं भक्षयितुं आश्रमानैति आगच्छति स भागो राक्षसग्राह्य एवासीदिति भावः । कीदृशेषु अग्निचित्वत्सु अग्निं चितवान् अग्निचिन्मुनिः त्वासुसिति चेः क्विप् स्वस्य तन् पिति ततोऽस्त्यर्थे मोङ्मझपादतुः न दं तसाविति पदत्वनिषेधात् न क्षपेऽवे जव् । कीदृशान् सोमसुत्वतः सोमं सुतवान् सोमसुत्

आमिक्षीयं दधि क्षीरं पुरोडाश्यं तथौषधम् ।
हविर्हैयङ्गवीनञ्च नाप्युपघ्नन्ति राक्षसाः ॥ १२ ॥

---

यजमानः तद्युक्तान् पूर्ववत् क्विवादि सोमलतासवनं सन्धानम्। महेन्द्रो देवता अस्येति विकारसंघेत्यादिना इयः ॥११॥ भ०

आमीत्यादि। दध्ना सहितं शृतं पय आमिक्षा तस्मै हितमामिक्षीयं विभाषाहविरपूपादिभ्य इति छयतौ दधि च क्षीरञ्चेति विभाषा वृक्षेत्यादिना व्यञ्जनत्वादेकवद्भावः पुरोडाशाय हितमौषधं नीवारतण्डुलादि पुरोडाश्यमपूपादित्वाद्यत्। ओषधिरेवौषधम् औषधेरजातावित्यण् तण्डुलानामजातित्वात् स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते इति नपुंसकलिङ्गता हविः हूयते इति हविः अर्चिशुचीत्यौणादिक इस् हैयङ्गवीनं घृतं ह्योगोदोहस्य विकार इत्यर्थे हैयङ्गवीनं संज्ञायामिति निपातनात् खञ् ह्यियंग्वादेशश्च तानि नाप्युपघ्नन्ति राक्षसाः। त्वय्युदासीने सति इदानीं कार्य्यप्रदर्शनेन प्रोत्साहयितुमाह ॥ १२ ॥ ज० म०

आमिक्षीयमित्यादि। अधुना राक्षसा अपि एतानि वस्तूनि न उपघ्नन्ति अपिशब्दः पूर्वापेक्षया कानि आमिक्षायै हितं दधि दुग्धञ्च व्यञ्जनत्वे समाहार इति परः स्वमतेऽभिधानात् आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः। हितार्थे ईयः तथा पुरोडाशाय हितं औषधं नीवारतण्डुलादि पुरो दश्यते इति पुरोडाशोऽन्नविकारः पिष्टकादिः निपातनात् ततो हितार्थे यः ओषधिशब्दात् स्वार्थे ष्णः औषधं क्वचित् स्वार्थिका प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते इति क्लीवत्वं हविर्हव्यञ्च हु दाने वासुसितीम् ह्योगोदोहस्य विकारो

युवजानिर्धनुष्पाणिर्भूमिष्ठः खविचारिणः ।
रामो यज्ञद्रुहो हन्ति कालकल्पशिलीमुखः ॥ १३ ॥

हैयङ्गवीनं निपातनात् । तत्तु हैयङ्गवीनं यत् ह्योगोदोहोद्भवं घृतमित्यमरः ॥ १२ ॥ भ०

युवेत्यादि । युवतिः यौवनवती जाया यस्य युवजानिः जायाया निङ् वलिलोपः स्त्रियाः पुंवदिति पुंवद्भावात् स्त्रीप्रत्ययो निवर्त्तते धनुष्पाणिः पाणौ धनुर्यस्य प्रहरणेत्यादिना परनिपातः । भूमिष्ठः भूमौ तिष्ठतीति भूमिष्ठः नाकाशचरः सुपि स्थ इति कः अम्बाम्बेत्यादिना षत्वम् । कालकल्पशिलीमुखः मृत्यु तुल्यशरः रामः राक्षसान् हन्ति । खविचारिणः आकाशचरणशीलान् सुप्यजाताविति णिनिः ॥ १३ ॥ ज० म०

युवजानिरित्यादि । भूमिष्ठोऽपि रामः खविचारिणोऽपि यज्ञद्रुहो राक्षसान् हन्ति भूमौ तिष्ठतीति हनजनादिति डः षत्वं मनीषादित्वात् । खे आकाशे विचरितुं शीलं येषां ते तथा सुवन्तोपपदे ताच्छील्ये णिन्निति परः स्वमते खे विचरन्तीति ग्रहादित्वाण्णिन् यज्ञाय द्रुह्यन्तीति क्विप् कीदृशो रामो युवजानिः युवती जाया यस्य स तथा बहुव्रीहौ जायाया इज्जानश्चेति परः स्वमते जायासमानार्थो जानिशब्दोऽस्ति । जनी सीमन्तिनीबध्वोरित्यनुशासनात् जनीशब्दस्य स्वार्थिकणन्तस्य जानिरिति रूपं वा पुंवत् स्त्र्यु क्तपुंस्क इति पुंवद्भावः धनुः पाणौ यस्य स तथा षत्वविधानं गवाक्षजालैरित्यत्र व्याख्यातं ईषदूनः कालः कालकल्पो यमतुल्य इत्यर्थः तादृशः शिलीमुखो बाणो यस्य स तथा त्यादेश्चोने इति कल्पः ॥ १३ ॥ भ०

मांसान्योष्ठावलोप्यानि साधनीयानि देवताः।
अश्नन्ति रामाद्रक्षांसि बिभ्यत्यश्नुवते दिशः॥ १४॥
कुरु बुद्धिं कुशाग्रीयामनुकामीनतां त्यज।
लक्ष्मीं परम्परीणां त्वं पुत्रपौत्रीणतां नय॥ १५॥

---

मांसेत्यादि। ओष्ठावलोप्यानि ओष्ठाभ्यां छेदार्हाणि शक्यानि वा अर्हार्थे शक्यार्थे वा कृत्यः कृत्यैरधिकार्थवचन इति सः। साधनीयानि यज्ञस्य साधनाय हितानि तस्मै हितमिति छः। सावनीयानीति पाठान्तरम्। तत्र सवनं स्नानं तद्योगात् स्नातकोऽपि तथोच्यते तत्र भवः सावनो यज्ञः तस्मै हितानीति छः तानि मांसानि देवता अश्नन्ति भुञ्जते न राक्षसा रक्षांसि किन्तु रामात् बिभ्यति वानपुंसकस्येति शतुर्नुमभावपक्षे रूपम्। दिशोऽश्नुवते व्याप्नुवन्ति॥ १४॥ ज० म०

मांसानीत्यादि। इदानीं देवता मांसानि अश्नन्ति रक्षांसि तु रामात् बिभ्यति दिशोऽश्नुवते व्याप्नुवन्ति पलायन्ते इत्यर्थः। कीदृशानि मांसानि ओष्ठावलोप्यानि छेत्तुं शक्यानि लुपॄ छेदने तव्याः शक्यार्हे इति शक्यार्थे घ्यण्। साधनीयानि स्वर्गादेः साधनाय यज्ञाय हितानि सुरसभायाः साधनं घृतादि तेन संस्कृतानि वा अश्नन्तीति अश भोजने श्नाभ्योरित्यालोपः बिभ्यतीति ञिभीलि भीत्यां शत्रः ह्लादेरिद्धिः इः शतुर्नुण्शाविति पक्षे नुणोऽभावः अत्यन्तमिति केचित् तदा अन्तोऽदेरित्यत् अशूङ्ल व्याप्तिसंहत्योः श्नु भ्वोरित्युवमान्तोऽदनतः॥ १४॥ भ०

कुर्वित्यादि। कुशाग्रीयां कुशाग्रमिव सूक्ष्मां कुशाग्राच्छ इति इवार्थे छः स्थूलबुद्धिर्मा भूदित्यर्थः अनुकामीनतां त्यज दरिद्रगामितां त्यज द्वारपारित्यादिना खः परम्परीणां

सहायवन्त उद्युक्ता बहवो निपुणाश्च याम् ।
श्रियमाशासते लोलां तां हस्तेकृत्य मा श्वसीः ॥ १६ ॥

---

परांश्चापरांश्च अनुभवतीत्यर्थे परापरशब्दात् परोवरेत्यादिना खः परादेशश्च तां लक्ष्मीं क्रमायातां त्वं पुत्रपौत्रीणतां नय पुत्रांश्च पौत्रांश्चानुभवतीति खः तस्य भावः पुत्रपौत्रानुगामिनीं कुर्वित्यर्थः ॥ १५ ॥ ज० म०

कर्वित्यादि । त्वं बुद्धिं कुशाग्रीयां कुशाग्रमिव सूक्ष्मां कुरु विकारसंघेति कुशाग्रादिवार्थे ईयः अनुकामीनतां कामस्य अभिलाषस्य अनु पश्चाद्गामितां यथेष्टाचरणं त्यज अनुकामागामिन्यर्थे ढघेकादितीनः परम्परीणां क्रमादायातां लक्ष्मीं पुत्रपौत्रीणतां पुत्रपौत्राधीनतां नय प्रापय परञ्च परतरञ्च इति द्वन्द्वे परम्परादेशो निपातनात् ततस्तदनुभवतीत्यर्थे पूर्वेण ईनः ॥ १५ ॥ भ०

सहेत्यादि । याञ्च श्रियं त्वदीयां शौर्य्योपात्तां सहायवन्तः ससहाया उद्युक्ता उत्साहवन्तो निपुणाः कुशला आशासते इच्छन्ति आङः शासु इच्छायामित्यादादिकस्यात्मनेपदिनो रूपम् आत्मनेपदेष्वनत इत्यदादेशः । तां हस्तेकृत्य स्वीकृत्य मा श्वसीः आश्वासं मा कार्षीः चञ्चलत्वात् यदाह लोलामिति ह्म्यन्तक्षणश्वसजागृणीति वृद्धिप्रतिषेधः इट ईटीति सिचो लोपः नित्यं हस्ते पाणाविति गतिसंज्ञायां समासे ल्यबादेशः । तां लोलतां दर्शयन्नाह ॥ १६ ॥ ज० म०

सहायवन्त इत्यादि । सहायवन्तः प्रशस्तसहाययुक्ता उद्युक्ता उद्योगिनो बहवो निपुणाः कर्मकुशला यां श्रियम् आशासते इच्छन्ति तां श्रियं हस्तेकृत्य स्वीकृत्य मा श्वसीः आश्वासं मा कार्षीः यतो लोलां चञ्चलां आङः शासु इच्छायाम्

लक्ष्मीः पुंयोगमाशंसुः कुलटेव कुतूहलात् ।
अन्तिकेऽपि स्थिता पत्युश्छलेनान्यं निरीक्षते ॥ १७ ॥
योषिद्वृन्दारिका तस्य दयिता हंसनादिनी ।
दूर्वाकाण्डमिव श्यामा न्यग्रोधपरिमण्डला ॥ १८ ॥

---

अदादिरात्मनेपदी हस्तेशब्दः सप्तम्यन्तप्रतिरूपकोऽव्ययः स्वीकारे वर्त्तते हस्ते पाणौ प्राध्वमित्यादिना समासः व्याद-नञः क्तो यप् सी आङः शासध्यां सिः हसादेः सेम इत्यादौ ग्लसवर्जनान्न त्रिः ॥ १६ ॥ भ०

लक्ष्मीरित्यादि । त्वयैवं न मन्तव्यम् अन्यैः प्रार्थ्यमानापि न मां परित्यजतीति यतः छलेन व्याजेन अन्यन्निरीक्षते किमर्थं पुंयोगमाशंसुः अभिलषन्ती सनाशंसभिक्ष उः । कुतूहलात कोऽस्य विशेष इति स्नेहादन्तिके अदूरेऽपि स्थिता पत्युः दूरान्तिकार्थैरित्यादिना षष्ठी कुलटेव बन्धकीव शकन्ध्वादिषु दर्शनात्पररूपम् युवजानिरित्युक्तं तद्योषित्प्रलोभनायाह ॥ १७ ॥ ज० म०

लक्ष्मीरित्यादि । लोलतां दर्शयति लक्ष्मीः पत्युरन्तिके स्थितापि सुतरां दूरस्था कुतूहलात अन्यं पुरुषं छलेन व्याजेन निरीक्षते केनापि छिद्रेण गन्तुमित्यर्थः यतः पुंयोगमाशंसुः अभिलषन्ती एकेन पुंसा तृप्तिर्नास्तीत्यर्थः अतएव कुलटा इव असतीव कुलान्यटति पचादित्वादच् मनीषादित्वादकारलोपः सनूभिक्षाशंस उरिति आङ्पूर्वशंसेरुः ॥ १७ ॥ भ०

योषिदित्यादि । योषिच्चासौ वृन्दारिका चेति वृन्दारकेत्यादिना सः रूपेण प्रियेत्याह दयिता प्रिया प्रशस्तत्वे कारणमाह हंस इव गन्तुं शीलं यस्याः कर्त्तर्य्युपमान इति णिनिः

नास्य पश्यति यस्तस्या निंस्ते दन्तच्छदं न वा।

दूर्वाकाण्डमिव श्यामा दूर्वास्तम्बं तदिव श्यामा न्यग्रोधपरिमण्डला उपमानानित्यादिना सः॥ १८॥ ज० म०

योषिद्वृन्दारिकेत्यादि। प्रलोभनार्थमिदमुच्यते तस्य रामस्य दयिता प्रिया योषिद्वृन्दारिका योषितां स्त्रीणां मध्ये वृन्दारिका रूपवती हंसवन्नदतीति हंसनादिनो कर्त्तर्य्युपपदात्सिनिरिति परः स्वमते ग्रहादित्वात् हंसनादिनीशब्दः पारिभाषिकोऽप्यस्ति। यथा "गत्या नितम्बिनी या तु हंसशीलानुगामिनी। मत्तकोकिलसंशब्दा सा ज्ञेया हंसनादिनी॥" दूर्वाकाण्डमिव तत्तुल्या कृशाङ्गीत्यर्थः दूर्वाकाण्डवत् श्यामवर्णेति व्याख्यानं पुराणविरुद्धं तत्र गौरत्वकथनात् श्यामान्यग्रोधपरिमण्डलाशब्दौ रूढौ। यथा शीते सुखोष्णसर्वाङ्गी ग्रीष्मे तु सुखशीतला। तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कथ्यते। स्तनौ सुकठिनौ यस्या नितम्बे च विशालता। मध्ये क्षीणा भवेद्या सा न्यग्रोधपरिमण्डला।" अग्निपुराणे स्त्रीपुरुषलक्षणाध्याये न्यग्रोधपरिमण्डललक्षणमुक्तम्। यथा "प्रसारितभुजस्येह मध्यभागद्वयान्तरम्। उच्छ्रायेण समं यस्य न्यग्रोधपरिमण्डलः।" इति। केचित् तु दूर्वाकाण्डमिव न्यग्रोधपरिमण्डला न्यग्रुणद्धीति न्यग्रोधं अधः प्रसूतं परितो मण्डलं नितम्बमण्डलरूपं यस्याः दूर्वाकाण्डमपि अधः प्रसरति नोपरिष्टादित्याहुः। अन्ये तु न्यग्रोधस्य वटस्य इव परिमण्डलं परिणाहो नितम्बभागे यस्याः एकदेशधर्मेणापि समुदायोपमानतादर्शनादित्याहुः। श्यामा अप्रसूतेति केचित् "अप्रसूताङ्गनायाञ्च श्यामा सोमलतौषधी।" त्रिवृताशारिवागुन्द्रानिशाकृष्णाप्रियङ्गुष्विति विश्वः॥ १९॥ भ०

संशृणोति न चोक्तानि मिथ्याऽसौ विहितेन्द्रियः ॥ १९॥
सारोऽसाविन्द्रियार्थानां यस्यासौ तस्य नन्दथुः ।
तल्पे कान्तान्तरैः सार्द्धं मन्येऽहं धिङ्निमज्जथुम् ॥ २०॥

---

नास्यमित्यादि । तस्या आस्यं मुखं यो न पश्यति दन्तच्छदम् ओष्ठं छाद्यते अनेनेति घः छादेर्घेत्युपसर्गस्येति ह्रस्वः दन्तानां छदं न वा निंस्ते न चुम्बति णिसि चुम्बन इत्यादादिक आत्मनेपदी इदितो नुम् धातोः उक्तानि उदितानि न संशृणोति समोगमित्यादिना तङ् न भवति अकर्मकादित्यधिकारात् मिथ्यासौ विहितेन्द्रियः वृथैव तस्य वेधसा विहितानि इन्द्रियाणि चक्षुरादीनि ॥ १९ ॥ ज० म०

नास्यमित्यादि । यस्तस्या आस्यं मुखं न पश्यति न वा दन्तच्छदम् ओष्ठं निंस्ते चुम्बति णिसिलङ् चुम्बने न वा तस्या उक्तानि भाषितानि संशृणोति असौ पुरुषः विहितेन्द्रियो विधात्रा कृतेन्द्रियो मिथ्या प्रयोजनाभावात् तस्य चक्षुरादीनि मिथ्येति भावः । वृथेति क्वचित् पाठः वृथाविहितानि इन्द्रियाणि यस्य स तथा दन्ताश्छाद्यन्तेऽनेनेति छादेस्त्वमन् क्वीसघेस्व इति ह्रस्वः घेस्व इत्युक्तेर्नाम्न्यन्येति क्वेति संज्ञायां घप्रत्ययो बोध्यः । ओष्ठाधरौ तु रदनच्छदावित्यमरः ॥१९॥ भ०

सार इत्यादि । इन्द्रियार्थानां मध्ये सारोऽसौ दयिता इन्द्रियार्थः रूपाद्यतिशययोगात् यस्यासौ सम्पद्यते तस्य नन्दथुः आनन्दश्चेतसः तल्पे शयनीये यस्य कान्तान्तरैरन्यस्त्रीभिः सार्द्धं निमज्जथुं शयनं सर्वत्र ट्वितोऽथुच् तस्य धिक् कुत्सितमहं मन्ये उभयत्र सर्वतसोरित्यादिना धिग्योगे द्वितीया । तया सार्द्धं शोभनमित्यर्थादुक्तं भवति ॥२०॥ ज०म०

सार इत्यादि । इन्द्रियस्य अर्था विषयाः स्रक्चन्दन-

न तं पश्यामि यस्यासौ भवेन्नोद्वेजया मतेः ।
त्रैलोक्येनापि विन्दस्त्वं तां क्रीत्वा सुकृती भव ॥२१॥

---

निताद्यस्तेषां मध्ये असौ सीतैव सारः श्रेष्ठा यस्य असौ सीता विद्यते तस्यैव नन्दथुरानन्दः कान्तान्तरैः सार्द्धं तल्पे शय्यायां निमज्जथुं निमज्जनं शयनं धिक् तयैव सार्द्धं युज्यते इत्यहं मन्ये उभयत्र ट्वितोऽथुर्भावे धिक्समयेति द्वितीया ॥ २० ॥ भ०

नतमित्यादि । सर्वथा न तं पश्यामि जानामि जगति यस्य सम्बन्धिन्याः मतेश्चेतसः उद्वेजया उत्कम्पिकासौ न भवेत् चित्तक्षोभजनिकेत्यर्थः उद्वेजयतीति अनुपसर्गाल्लि-म्पेति कर्त्तरि शः कृद्योगे कर्मणि षष्ठी तस्मात् त्रैलोक्येनापि त्रयश्चैते लोकाश्चेति त्रिलोकाः त एव त्रैलोक्यं चातुर्वर्ण्यादि-त्वात् स्वार्थे ष्यञ् स्वार्थिका अतिवर्त्तन्ते इति नपुंसकत्वं तेनापि तां क्रीत्वा लब्धा विन्दस्त्वं सुकृती भव पण्डितो भव आढ्यो वा भव पाण्डित्यमस्य त्रैलोक्यमात्रेणापि स्त्रीरत्नं क्रीत्वा लब्धमिति विन्दतीति तेनैव सूत्रेण शः । अन्या अपि स्त्रियः सन्तीति चेदाह ॥ २१ ॥ ज० म०

न तमित्यादि । असौ सीता यस्य मतेरुद्वेजया क्षोभज-निका न भवेत् तं पुरुषं नाहं पश्यामि त्रैलोक्येनापि तां क्रीत्वा त्वं विन्दो लाभवान् सुकृती च भव सुकृती पुण्यवान् शोभनः कृती पण्डितो वा तत्क्रयणादेव तव लाभवत्त्वं पुण्य-वत्त्वं पाण्डित्यञ्च सफलम् अन्यथा निष्फलमिति भावः एजृ कम्पे एजेरुदः श इति परः स्नसते साहिसातीत्यादिना अगे-रित्यस्य नञा निर्दिष्टस्य व्यभिचारात् शः विदशपञ्चौ लाभे पूर्वेण शः मुचादित्वात् नुण् त्रिलोक्येव त्रैलोक्यं स्वार्थे ष्णः

नैवेन्द्राणी न रुद्राणी न मनावी न रोहिणी ।
वरुणानी न चाग्नायी तस्याः सीमन्तिनी समा ॥२२॥

---

स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्तेऽपीति वाक्यात् क्लीवत्वम् ॥ २१ ॥ भ०

नैवेत्यादि। तस्यास्तु सीतायाः तुल्यार्थैरतुलोपमाभ्यामिति षष्ठी न काचित् सीमन्तिनी स्त्री तुल्या समा सीमन्तः केशेष्विति पररूपत्वम् अन्यत्र सीमान्तः स विद्यते यस्य इति इनिः इन्द्राणी इन्द्रभार्य्या न सम्यक् किं पुनरन्या तथा रुद्राणी रुद्रभार्य्या वरुणानी वरुणभार्य्या इन्द्रवरुणेत्यादिना आनुक् मनावी मनुभार्य्या मनोरौवेत्यौकारः अग्नायी अग्निभार्य्या वृषाकप्यग्निकुसितकुसिदेत्यादिना ऐरिति सर्वत्र पुंयोगादाख्यायामिति ङीष् रोहिणी चन्द्रभार्य्या रोहितशब्दात् वर्णादनुदात्तेत्यादिना ङीप् नकारश्च वरुणानी न अग्नायीत्यत्र प्रतिषेधः एकः पूर्वेण योज्यः द्वितीयः परेणेति न चाग्नायीति पाठान्तरम् ॥ २२ ॥ ज० म०

नैवेत्यादि। काऽपि सीमन्तिनी स्त्री तस्याः सीतायाः समा तुल्या न सर्वत्र नञ् सम्बन्धादिह नञ्सम्बन्ध उपपद्यते इन्द्राणी इन्द्रस्य पत्नी तस्याः समा न एव निश्चये ब्रह्मरुद्रभवेत्यादिना पत्न्या ईप् आनङ् च रुद्राणी रुद्रस्य पत्नी पार्वती समा न पूर्ववत् ईप् आनङ् च मनावी मनोः पत्नी शतरूपा न समा नारीसखीत्यादिना निपातः रोहिणी चन्द्रस्य भार्य्या न समा पूर्वेण निपातः वरुणानी वरुणस्य पत्नी न समा ब्रह्मरुद्रेतीप् आनङ् च अग्नायी अग्नेः पत्नी न समा वृषाकप्यग्नीतीप् ऐङ् च। केचित्तु इन्द्राणी न समा कीदृशी प्रशस्तसीमन्तयुक्ता एवं रुद्राण्यादावित्याहुः। सीमन्तः कथ्यते स्त्रीणां

प्रत्यूचे राक्षसेन्द्रस्तामाश्वसिहि बिभेषि किम् ।
त्यज नक्तञ्चरि ! क्षोभं वाचाटे ! रावणो ह्यहम् ॥२३॥
मामुपास्त दिदृक्षावान् याष्टीकव्याहृतो हरिः ।

---

केशमध्ये च पद्धतिरिति हलायुधः । मनीषादित्वात् साधुः । तस्या इति समार्थेनेत्यादिना षष्ठी ॥ २२ ॥ भ०

प्रत्यूचे इत्यादि । राक्षसेन्द्रो रावणः राक्षसीं प्रत्यूचे प्रतिवचनमुक्तवान् आश्वसिहि खेदं त्यज रुदादीत्यादिना इट् बिभेषि किं किमर्थं तापसकात् हे नक्तञ्चरि ! मद्विषये क्षोभं रोषं त्यज वाचाटे ! बहुभाषिणि आलजाटचौ बहुभाषिणि ! यस्माद्रावणोऽहम् अनेनात्मोत्कर्षमावेदयति । तमेव स्फुटयन्नाह ॥ २३ ॥ ज० म०

प्रत्यूचे इत्यादि । स राक्षसेन्द्रोरावणः तां सूर्पणखां प्रत्यूचे प्रत्युत्तरमाह स्म आश्वसिहि खेदं त्यज रुद्रायेथ इति इम् किं बिभेषि तापसकात् हे नक्तञ्चरि ! क्षोभं दुःखं मयि रोषं वा त्यज हे वाचाटे ! बहुनिन्द्यभाषणशीले ! हि यस्मात् अहं रावणः प्रसिद्धनामानुवादात् उत्कर्षः सूचितः वाचोऽस्त्यर्थे वाग्मिवाचाटवाचाला इति निपातः वाचाटो बहुगर्ह्यवागित्यमरः । रावणस्य विश्रवसोऽपत्यं रावणः विश्रवसः अपत्यार्थे ण इति परः स्रमते सर्वभूतानि रावयति आक्रन्दयति रावणः नन्द्यादित्वादनः किंवा हिंसनधर्मत्वात् रावणः हिंसार्थरुधातोरनटि रवणं ततः अस्य शीलं इत्यर्थे विकारसंघेत्यादिना णः अत्रापि वा नन्द्यादित्वादनः ततः स्वार्थे णः रुलध्वनौ रुङ् बधे गत्याम् ॥ २३ । भ०

मामित्यादि । मामुपास्त सेवितवान् हरिरिन्द्रः दिदृक्षावान् द्रष्टुमिच्छावान् आत्मदर्शनेच्छावानित्यर्थः दूरादेव

आज्ञालाभोन्मुखो दूरात् काक्षेणानादरेक्षितः ॥२४॥
विरुग्णोदग्रधाराग्रः कुलिशो मम वक्षसि ।

---

याष्टिकैः वेत्रग्राहिभिर्व्याहतोऽपसारितः कर्त्तृकरणे कृतेति सः यष्टिः प्रहरणमेषामिति शक्तियष्ट्योरीकक् आज्ञालाभि किमभिधास्यतीत्युत्सुकः उन्मुखः तत्परः सप्तमीति योगविभागात् सः अनादरेक्षितः अवज्ञाविलोकितः काक्षेण कुदृष्ट्या कापथ्यक्षयोरिति कुशब्दस्य कादेशः यदि तत्पुरुष इत्यनुवर्त्तते तदा कुत्सितमक्षमिति विग्रहः अक्षशब्दस्येन्द्रियसामान्याभिधायित्वेऽपि ईक्षितशब्दोपपदत्वाच्चक्षुषि वर्त्तते अथ तत्पुरुष इति नानुवर्त्तते सामान्येनादेशस्तदा कुत्सितमक्षि यस्येति बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् काक्षेण मयेत्यर्थः ॥ २४ ॥ ज० म०

मामित्यादि । हरिरिन्द्रो मामुपास्त सेवितवान् आसेर्लुङ्रूपं, यष्ट्या प्रहरतीति याष्टीकः द्वारि नियुक्तः यष्टिप्रहारकपुरुषः ढक्कादिति ष्णीकः तेन व्याहतस्ताडितोऽपि दिदृक्षावान् द्रष्टुं इच्छावान् मदाज्ञाया लाभनिमित्तं उन्मुखः ऊर्द्ध्वमुखः दूरात् समीपगमनायोग्यत्वात् मया तु काक्षेण कुदृष्ट्या अनादरेणावज्ञया ईक्षितः अवलोकितः कुत्सितमक्षं काक्षं इन्द्रियसामान्यवाचिनोऽक्षशब्दस्यात्र प्रकरणाच्चक्षुरेवेत्यर्थः कुत्सितमक्षि यस्येति वा सक्थ्यक्ष्णः षः स्वाङ्गे इति षः काक्षि इति कोः कादेशः तत्र अक्ष इति इन्द्रियवाचकस्यादन्तस्य कृतसमासान्तस्य अक्षिशब्दस्य च ग्रहणं ईषदक्षं काक्षं इति वररुचिः तदा कटाक्षे तात्पर्य्यं कोरीषदर्थे इति कादेशः ॥ २४ ॥ भ०

विरुग्णेत्यादि । विरुग्णानि अवसन्नानि कुण्ठितानि

अभिन्नं शतधात्मानं मन्यते बलिनं बली ॥२५॥
कृत्वा लङ्काद्रुमालानमहमैरावतं गजम्।
बन्धनेऽनुपयोगित्वान्नतं तृणवदत्यजम् ॥ २६ ॥

---

उदग्राणि महान्ति धाराग्राणि यस्य स कुलिशो वज्रः मम वक्षसि पतितः सन् बली आत्मानमभिन्नं शतधा शतप्रकारं सङ्ख्याया विधार्थे धा बलिनं मन्यते अहो बलवानहं न येन शतधा भग्न इति तस्य देवतारूपत्वात् बलमस्त्येव आत्मानं बलिनं मन्यते इवेत्युत्प्रेक्षा ॥ २५ ॥ ज० म०

विरुग्णेत्यादि। कुलिशो वज्र आत्मानं बलिनं मन्यते कुत इत्याह मम वक्षसि शतधा शतप्रकारेण अभिन्नं केवलं विरुग्णानि भग्नानि उदग्राणि महान्ति धाराग्राणि यस्य तादृशः बली वस्तुतो बलवानपि मद्बलस्य भङ्गादेव बलं जानाति असुरसमूहविदारणादपीदमेव तस्याधिकमुत्कर्ष-स्थानमित्यर्थः तस्य देवतारूपत्वान्मननमस्त्येव उत्प्रेक्षामात्रं वा मन्यते इव इत्यर्थः संख्याया धाच् प्रकारे ॥ २५ ॥ भ०

कृत्वेत्यादि। एष्वालीयते इत्यालानं अधिकरणे ल्युट् विभाषा लीयत इत्यात्वम् लङ्काद्रुमा आलानानि यस्यैरावता-ख्यस्य गजस्य नतं कृत्वा नतं नम्रमुखन्तृणमिव मत्वा सोऽह-मत्यजम् त्यक्तवान् बन्धनेऽनुपयोगित्वात् प्रयोजनाभावात् ॥ २६ ॥ ज० म०

कृत्वेत्यादि। लङ्काद्रुम एवालानं बन्धनस्तम्भो यस्य तथा-भूतं ऐरावतं गजं कृत्वा नतं नम्रं तम् अहं तृणवत् अत्यजम् अथवा तं गजं तृणवत् न अत्यजं अपितु अत्यजमेवेति शिरश्चा-लने नञ्। कुत इत्याह बन्धनेऽनुपयोगित्वात् स्वयमेव वशी-भूतत्वात् अनुपादेयत्वाद्वा आलीयतेऽस्मिन्नित्यालानं आधारे-

आहोपुरुषिकां पश्य मम सद्रत्नकान्तिभिः ।
ध्वस्तान्धकारेऽपि पुरे पूर्णेन्दोः सन्निधिः सदा ॥२७॥
हृतरत्नश्चुतोद्योगो रत्नोभ्यः करदो दिवि ।
पूतक्रतायीमभ्येति सत्रपः किं नु गोत्रभित् ॥ २८॥

ऽनट् मिथ्येर्यवर्णौङाऽखलिलिलयस्तु वा इति पचे ङा इरावान् समुद्रः तत्र जात इति ढघेकादिति षणः ॥ २६ ॥ भ०

आहो इत्यादि। अहोपुरुषस्य भावः मनोज्ञादित्वात् वुञ् आहोपुरुषिका कार्य्यसिद्धावपि तत्साधने शक्तिः तां मम सूर्पणखे! पश्य सद्रत्नकान्तिभिः ध्वस्तान्धकारेऽपि पुरे पूर्णेन्दोः पूर्णचन्द्रस्य सन्निधिः सदा सान्निधानं न पुनस्तेन कृत्यं रत्नप्रभाभिरेव तत्कृत्यस्य कृतत्वात् ॥ २७ ॥ ज० म०

अहो इत्यादि। ममाहोपुरुषिकां पश्य सद्रत्नकान्तिभिः सद्रत्नानां प्रभाभिर्ध्वस्तान्धकारे नाशितध्वान्तेऽपि मत्पुरे सदा पूर्णेन्दोः सन्निधिः एतेन प्रयोजनाभावेऽपि भीत्या पूर्णीभूत्वा चन्द्रस्तिष्ठति देवैरपि भीत्या नासौ पीयते चन्द्रप्रभाणि च रत्नानि मम सन्तीति सूचितम्। अहमेव पुरुषो यत्रेति सम्भावनायामाहोपुरुषिका निपातनात्। आहोपुरुषिकादर्पाद्या स्यात् सम्भावनात्मनीत्यमरः। अहोपुरुषस्य भावः आहोपुरुषिका इति केचित् तदा विकारसंघेति भावे कप् स्त्रीत्वमभिधानात् काम्यनाम्नीरक इति अत इत्वं सदेति कुतः कक्रुहेत्यादिना निपातितम् ॥ २७ ॥ भ०

हृतेत्यादि। हृतोच्चैःश्रवआदिरत्नो गोत्रभिदिन्द्रः अत एव च्युतोद्योगः दिवि वर्त्तमानोऽपि रत्नोभ्यः करदः रावणाद्यं वित्तं प्रयच्छन् पूतक्रतायीं शचीं पूतक्रतोरैचङीष् पुंयो-

अतुल्यमहसा सार्द्धं रामेण मम विग्रहः।
त्वपाकरस्तथाप्येष यतिष्ये तद्विनिग्रहे॥ २९॥
उत्पत्य खं दशग्रीवो मनोयायी शिताश्वभृत्।

---

पादाश्यायामिति सत्रपः सव्रीडः स्वां नाभ्येति न ढौकते ॥ २८॥ ज० म०

इतेत्यादि। गोत्रभित् इन्द्रो दिवि वर्त्तमानोऽपि सत्रपः सलज्जः सन् पूतक्रतायीं स्वभार्य्यामपि नाभ्येति नाभिमुख्येन गच्छति अपितु तथैव सत्रपत्वे हेतुमाह मया हृतरत्नः हृतं रत्नं यस्य स तथा गलितोद्योगः राक्षसेभ्यः करदः करं राजग्राह्यभागं ददातीति डः पूतक्रतोरिन्द्रस्य पत्नी पूतक्रतायी वृषाकप्यग्नि इत्यादिना ङीप् ऐङ् च गोत्रान् पर्वतान् यो भिनत्ति सोऽतिबलीयान् इति साभिप्रायं पदम्॥ २८॥ भ०

अतुल्येत्यादि। तदेवंविधस्य मम अतुल्यमहसा अतुल्यतेजसा रामेण सह विग्रहस्त्वपाकरः कृञो हेत्वित्यादिना टः तथापि त्वत्प्रार्थनया एष च यतिष्ये तद्विनिग्रहे विविधनिग्रहविषये तस्य यतिष्ये यत्नं करिष्यामि वर्त्तमानसामीप्ये वर्त्तमानवद्वेति विकल्पेन लटो विधानात् लृडुदाहृतः ॥ २९॥ ज० म०

अतुल्येत्यादि। यद्यपि अतुल्यमहसा असदृशतेजसा रामेण सार्द्धं मम विग्रहस्त्वपाकरः तथापि तस्य विविधनिग्रहे एषोऽहं यतिष्ये यत्नं करिष्ये त्वत्प्रार्थनयेति शेषः त्रपां लज्जां करोतीति त्वकुष्टः निग्रह इति विषयसप्तमी निमित्तमात्रेऽपि सप्तमी लोकोपचारादित्यन्ये॥ २९॥ भ०

उत्पत्येत्यादि। उक्त्वैवं खमाकाशमुत्पत्य मारीचं प्रति चक्रमे यत्र मारीचो राक्षसस्तत्र गत इत्यर्थः अनुपसर्गाद्वेति

समुद्रसविधावासं मारीचं प्रति चक्रमे ॥ ३० ॥
सम्पत्य तत्सनीडेऽसौ तं वृत्तान्तमशिश्रवत् ।
वसुनाथ श्रुतार्थेन तेनागादि दशाननः ॥ ३१ ॥

---

क्रमिस्तङ् मनोवदाशु यातु शीलमस्येति कर्त्तर्य्युपमान इति णिनिः शितास्त्रभृत् गृहीततीक्ष्णचन्द्रहासः समुद्रस्य सविधे समीपे आवासो यस्य मारीचस्य सह विधेन सविधमिति व्युत्पत्तिमात्रं शब्दस्तत्समीपवाची ॥ ३० ॥ ज० म०

उत्पत्येत्यादि। एवमुक्त्वा दशग्रीवो रावणः खमाकाशं उत्पत्य मारीचं प्रति लक्षीकृत्य चक्रमे गतः वागैरिति मं द्वितीयानिमित्तकस्य प्रतिशब्दस्य गित्त्वाभावात् मन इव शीघ्रं यातीति मनोयायीति कर्त्तर्य्युपमाने उपपदे णिन्निति परः खमते गोत्वादित्वाश्विन् व्याघ्रश्चासौ श्वा चेति वाक्यं कुर्वता क्वाचिदुपमानव्यञ्जकशब्दाभावेऽप्युपमानं गम्यते इति सूचितं तेन मन इव यायीत्यर्थो गम्यते शितं तीक्ष्णमस्त्रं बिभर्त्तीति क्विप् समुद्रस्य सविधे समीपे आवासो यस्य तं सदेशाऽभ्यास-सविधसमर्य्यादसवेशवदित्यमरः ॥ ३० ॥ भ०

सम्पत्येत्यादि। असौ दशग्रीवः तत्सनीडे मारीचस्य समीपे सत्रापि सह नीडेनेति व्युत्पत्तिमात्रं समेत्य यात्वा तं वृत्तान्तं शूर्पणखाकथितमशिश्रवत् श्रावितवान् शृणोतेर्ण्यन्तस्य लुङि रूपं तेन मारीचेन श्रुतार्थेन वसुना वसनशीलेन दशाननः अगादि उक्तः कर्मणि लुङ् ॥ ३१ ॥ ज० म०

सम्पत्येत्यादि। असौ रावणः तस्य सनीडे समीपे सम्पत्य संगत्य तं मारीचं वृत्तान्तं सूर्पणखोक्तं अशिश्रवत् श्रावितवान्। समीपे निकटासन्नसन्निकृष्टसनीडवदित्यमरः। अथ

अन्तर्द्धत्स्व रघुव्याघ्रात्तस्मात्त्वं राक्षसेश्वर ! ।
यो रणे दुरुपस्थानो हस्तरोधं दधद्धनुः ॥ ३२ ॥

---

अनन्तरं श्रुतार्थेन तेन मारीचेन वक्त्रुना भीतेन दशाननोऽ-गादि उक्तः कर्मणि ठौ ॥ ३१ ॥ भ०

अन्तरित्यादि । हे राक्षसेश्वर ! त्वं तस्माद्रघुव्याघ्रादन्त-र्द्धत्स्व अन्तर्हितो भव व्यवहितो भवेति यावत् दधातेर्लोटि श्नाभ्यस्तयोरित्याकारलोपः अभ्यासस्य दधस्तथोश्चेति भष्भावः अन्तर्द्धौ येनेत्यपादानसंज्ञा यस्मात् स रामः रणे दुरुपस्थानः दुःखेन उपस्थीयते उपगम्यत इति आतो युचेति युच् यतो हस्तरोधं दधद्धनुः हस्तेन रुद्ध्वा सदैव यो धनुर्धत्ते स कथं दुरु-पस्थानो न भवति हस्तशब्दे तृतीयान्त उपपदे सप्तम्याञ्चोप-पीडरुधकर्ष इति णमुल् चकारेण तृतीयायाः समुच्चितत्वात् तृतीयाप्रभृतीन्यन्यतरस्यामिति सः । तदेव दुरुपस्थानत्वं स्फुट-यन्नाह ॥ ३२ ॥ ज० म०

अन्तरित्यादि । हे राक्षसेश्वर ! तस्माद्रघुव्याघ्रात् त्वं अन्तर्द्धत्स्व स यथा न पश्यति तथा व्यवहितो भव अन्तःपूर्व-धाञो गीस्वः ह्रादीरेद्धिः झभखथेत्यादिना खेर्द्धस्वः धस्य दश्च झभान्तस्येति दस्य धः श्नाद्योरालोप्य इत्यालोपः झपझसो-रिति धस्य तः यतोऽपायेत्यादिना अन्तर्द्धौ पञ्चमी । हेतुमाह यो रामो दुरुपस्थानः दुःखेनोपस्थीयते उपगम्यते शत्रुभिः समीपगमनमेवाशक्यं किं पुनर्युद्धमिति भावः अतोनोऽदरिद्र इति अनः यतो हस्तरोधं सदा धनुर्दधाति हस्तेन रुद्ध्वा हस्त-रोधं आसत्तौ तृतीयान्ताद्रुधो णम् इति परः तेन सदा स्थिर-तरं धनुर्दधातीत्यर्थः । केचित्तु हस्तं रुद्ध्वेत्यर्थे स्वाङ्गात् रुधेर्णम्

भवन्तं कार्त्तवीर्य्यो यो हीनसन्धिमचीकरत्।
जिगाय तस्य हन्तारं स रामः सार्वलौकिकः॥ २३॥

---

तेनान्यकर्मनिवृत्तिर्हस्तस्य गम्यत इत्याहुः खमते हस्तं रुणद्धि कार्य्यान्तरात् व्यावर्त्तयतीति ढात् षष् धनुर्विशेषणम्॥२२॥भ०

भवेत्यादि। यः कार्त्तवीर्य्यः कृतवीर्य्यस्यापत्यं सहस्रबाहुः भवन्तं हीनसन्धिमचोकरत् हीनेन दुर्बलेन यः सन्धिः तं भवन्तं कारितवान् तेन हीनत्वं बलान्निर्जित्य कारित इति दुरुपस्थानमुक्तं हृक्रोरन्यतरस्यामिति द्विकर्मकता तस्य कार्त्तवीर्य्यस्य यो हन्ता परशुरामः कृत्प्रयोगि कर्मणि षष्ठी तेन हि तस्याग्निहोत्रधेनुमपहृत्य गच्छतः परशुना बाहुसहस्रं छिन्नं तस्य हन्तारं स रामो जिगाय जितवान् जयतेर्लिटि धातुजकारस्य संलिटोर्जेरिति कुत्वम्। सार्वलौकिकं सर्वलोके विदितं लोकसर्वलोकाभ्यां ठञ् अनुशतिकादित्वादुभयपदवृद्धिः। सार्वलौकिक इति पाठान्तरम्। अत्र राम इति योज्यम् ॥ २३ ॥ ज० म०

भवेत्यादि। दुरुपस्थानत्वं स्फुटीकुर्वन्नाह यः कार्त्तवीर्य्योऽर्जुनो भवन्तं हीनसन्धिं भग्नसन्धिं अचोकरत् कृतवान् कृञः स्वार्थे णिः चुर्य्यो णिर्वा इत्यस्य योगविभागात् कचिच्चुरादेरन्यस्मादपि स्वार्थे णिर्वा भवतीति बोध्यं तेन रामो राज्यमकारयदित्यादिप्रयोगाः यद्वा हीनजनेन सह सन्धिं सन्धानं मिलनं कारयामास यद्भयात् भवता हीनजनोऽप्याश्रित इत्यर्थः घोऽजेर्णौरिति प्रयोज्यकर्त्तुः कर्मता कृतवीरस्यापत्यं कार्त्तवीर्य्यः गर्गादित्वात् ष्यञः तस्य कार्त्तवीर्य्यस्य हन्तारं परशुरामं स रामो जिगाय जेर्गिः सन्ल्योः सार्वलौकिकं सकलक्षत्रियनाशेन सर्वलोकविदितम् प्रथमान्तपाठे रामविशेषणं तत्र विदित

यमास्यदृश्वरी तस्य ताड़का वेत्ति विक्रमम्।
शूरम्मन्यो रणाच्चाहं निरस्तः सिंहनर्दिना॥ ३४॥
न त्वं तेनान्वभाविष्ठा नान्वभावि त्वयाऽप्यसौ।

---

इत्यर्थे ढघेकादिति ष्णिकः णित्तेव्रिरिति सुभगादित्वात् उभयपदे वृद्धिः॥ ३३॥ भ०

यमेत्यादि। तस्य रामस्य विक्रमं ताडका वेत्ति ज्ञातवती वर्त्तमानसामीप्य इति भूते लट्। कीदृशी यमास्यदृश्वरी तच्छरताडिता यमसुखं दृष्टवती मृतेत्यर्थः दृशेः क्वनिप् वनोरचेति ङीव्रेफौ अहमपि शूरम्मन्यः शूरमात्मानम्मन्यमानः आत्ममाने खश्च सिंहनर्दिना रामेण सिंह इव नर्दतीति कर्त्तर्य्युपमान इति णिनिः रणान्निरस्तः वहिष्कृत इत्यर्थः॥ ३४॥ ज० म०

यमास्येत्यादि। तस्य रामस्य विक्रमं ताडका वेत्ति जानाति अहञ्च वेद्मि। सा किम्भूता यमास्यदृश्वरी यमसुखं दृष्टवती मृतेति यावत् त्वासुसिति दृशेः क्वनिप् नचखसाद्दन इति ङीप् रङ् च। अहं किम्भूतः शूरम्मन्यः आत्मानं शूरं मन्यमानः मन्यात् स्वार्थे इति खश् श्वित्त्वात् रत्वे दिवस्तुदेत्यादिना यन् तेन सिंहनर्दिना रणात् निरस्तः निराकृतः सिंह इव नर्दतीति मनोयायीतिवत् वेत्तीति लोकान्तरस्था ताडका इदानीमपि जानातीत्यभिप्रायेण वर्त्तमाने की वर्त्तमानसामीप्ये भूतेऽपि कीत्यन्ये। रणादिति हेतौ पञ्चमी रणभूमेः सकाशात् वहिष्कृत इति वा॥ ३४॥ भ०

न त्वमित्यादि। तेन रामेण त्वं नान्वभाविष्ठाः त्वमनेन नानुभूतः कर्मणि लुङ् थासि स्यसिजित्यादिना चिण्वदिट्‌ त्वं नान्वभावि त्वयाऽप्यसौ नानुभूतः येनैव सुच्यते अत्र

अनुभूतो मया चासौ तेन चान्वभविष्यहम् ॥ ३५ ॥
अध्यङ् शस्त्रभृतां रामो न्यङ्ङस्तं प्राप्य मद्विधाः ।
सकन्याशुल्कमभनङ्मिथिलायां मखे धनुः ॥ ३६ ॥

---

चिण् भावकर्मणोरिति चिण् अनुभूतो मया चासौ चशब्दः पुनरित्यर्थे मया पुनरसावनुभूतः न शक्यो जेतुमिति तेन रामेण चान्वभविष्यहमनुभूतोऽहं तेन सह योद्धुमक्षम इति अत्र चिण्वद्भावो न कृतः किन्तु लुङि उत्तमपुरुषैकवचने वसादिलक्षण इट् तेन वृद्ध्यभावात् गुण एवेति ॥ ३५॥ ज० म०

न त्वमित्यादि। त्वद्वचने को ग्रहः मत्प्रसिद्धैरेव स दूरीभविष्यति इत्याशङ्कायामिदमुत्तरं तेन रामेण त्वं न अन्वभाविष्ठा न अनुभूतः कथं त्वत्तोऽस्य भयं स्यात् अनुपूर्वो भूधातुः सकर्मकः कर्मणि थास् हनग्रहदृशश्च इति पक्षे मिण त्वयापि असौ रामो न अन्वभावि न अनुभूतः तेन तवावज्ञा न युक्ता कर्मणि टी तन् असौ मया अनुभूतः तवापि तत्त्वज्ञोऽहमिति मद्वचनं गृहाणेति भावः तेनाप्यहमन्वभविषि अनुभूतः तेन मद्गमनं व्यर्थं पराजितस्य मम दर्शनेन तस्याव-ज्ञाप्रसङ्गात् कर्मणि टी इणमिणोरभावपक्षे इम् ॥ ३५ ॥ भ०

अध्यङित्यादि। शस्त्रभृतां मध्ये रामोऽध्यङ् अधिकः अध्यन्त्याधिक्ये वर्त्तत इति ऋत्विगित्यादिना क्विन् तस्मिन् लुप्ते अनुनासिकलोपे उगिदचामिति नुम् तस्यानुस्वारपर-सवर्णत्वे कृते च हल्ङ्यादिसंयोगान्तलोपौ नकारस्य क्विन्-प्रत्ययस्य कुरिति कुत्वेन ङकारः तं तादृशं प्राप्य मद्विधा न्यञ्चो हीनाः निशब्दोऽत्राधोभावे वर्त्तते न्यञ्च इति पूर्ववत् क्विन् अनुनासिकलोपः नुम् हल्लोपो नास्ति अहल्त्वात् कुत्वञ्च नास्ति अपदसंज्ञत्वात् यो मिथिलायां महद्धनुरभनक् भञ्ज-

संवित्तः सह युध्वानौ तच्छक्तिं खरदूषणौ ।
यज्वानश्च सुत्वानो यानगोपीन्मखेषु सः ॥ ३७ ॥

---

वान् सोऽस्मादपि कारणात् शस्त्रभृतामध्यङ् भञ्जेर्लङि आव-लोपः हल्ङ्यादिलोपः कुत्वञ्च कन्याशुल्कं कन्यामूल्यं तद्धि यो रौद्रं धनुरारोपितगुणं करोति अस्मै कन्या दीयत इति मूल्यीकृत्य स्थापितम् ॥ ३६ ॥ ज० म०

अध्यङित्यादि । शस्त्रभृतां मध्ये रामो अध्यङ् आधि-क्येन पूजितः कर्मणि क्विप् हसुङ्लोपोऽणाविति प्राप्तनलो-पस्य नेदित्पूजार्थाञ्चोरिति प्रतिषेधः विच्प्रत्ययो वा चूङिति अञ्चोः पृथक् ग्रहणात् लुप् प्राक्कङ्ञोर्नुः जपेञ्जसनोः स्यान्तस्य लुप् अध्यङ् अधिको वा अधिपूर्वोऽञ्चतिराधिक्ये वर्त्तते तं प्राप्य मांद्दधा मत्प्रकारकाः पुरुषाः न्यञ्चः निशब्दो-ऽधोभागे न्यञ्चन्ति अधो गच्छन्तीति न्यञ्चो हीनाः इत्यर्थः । कुत इत्याह स रामो मिथिलायां मखे यज्ञे धनुरभनक् भग्नवान् भञ्जेर्घ्यां रुधादित्वात् नम् नणो नलोपः हसङ्ग्रां दिसेरिति दिलोपः चूङिति काङ् । कन्याशुल्कं कन्यापणं धनुरारोपे सति कन्या देयेति मूल्येन स्थापितम् ॥ ३६ ॥ भ०

संवित्त इत्यादि । नाहमेव रामशक्तिसवैमि अपितु खर-दूषणावपि संवित्तः ज्ञातवन्तौ वर्त्तमानसामीप्य इति भूते लट् सकर्मकत्वात् समोगमीत्यादिना तङ् न भवति तत्रा-कर्मकादिति वर्त्तते सह युध्वानौ सह तेन युद्धवन्तौ सहे चेति युधेः क्वनिप् यज्वानश्चाहिताग्नयः सुत्वानः सोमयाजिस-हिताः सुयजोर्ङ्वनिप् संविदन्तीति वचनविपरिणामेन योज्यम् यानगोपीत् अरक्षीत् मखेषु रामः लुङि रूपं तथा

सुखजातः सुरापीतो नृजग्धो माल्यधारयः ।
अधिलङ्कं स्त्रियो दीव्यमारब्धा बलिविग्रहम् ॥ ३८ ॥

---

मखद्रुहो राक्षसाः यतो रामस्य शक्तिं ज्ञातवन्तः ॥ ३७ ॥ ज० म०

संविन्त इत्यादि । न केवलमहमेव वेद्मि खरदूषणावपि तस्य शक्तिं संविन्तः ज्ञातवन्तौ ताड़का वेत्तीतिवत् को सह-युध्वानौ तेन सह युद्धवन्तौ त्वासुसिति क्वनिप् यज्वानश्चाहि-ताग्नयश्च विदन्ति पूर्वेण क्वनिप् बाहुल्यान्न जिः मसुत्वानः सुत्वभिः कृतसोमयानेः सहिताः पूर्वेण क्वनिप् स्वस्य तन् पितीलि तान् तेषां ज्ञाने हेतुमाह मखेषु यज्ञेषु स यानगोपीत् अरक्षीत् तेषां यज्ञे राक्षसहननात् तेऽपि जानन्तोत्यर्थः गुपू रक्षणे वारे इति आयोऽभावः पक्षे स्यां सिः वेसूदिति पक्षे इम् ॥ ३७ ॥ भ०

सुखेत्यादि । यत एवं दुरुपस्थानः स तस्माद्बलिना रामेण विग्रहं मारब्धाः मा कार्षीः रभेराङ्पूर्वात् माङि लुङ् थास् झलो झलीति सिज्लोपः झषस्तथोर्धो धः झलाञ्जश्झशि किञ्चार्य्यमित्याह अधिलङ्कं लङ्कायामधि विभक्त्यर्थेऽव्ययोभावः स्त्रियो दीव्य क्रीड लोटि रूपं दिवः कर्म चेति कर्मसंज्ञायां वाम्शसोरितीयङ् । कीदृशः सुखजातः जातं सुखमस्येति बहु-व्रीहिः कृतासवपानत्वात् यदाह सुरापीतः पीतमदिरः नृजग्धः भुक्तमानुषः निष्ठायामदो जग्धिः पूर्ववद्बत्वम् एषु वाहि-ताग्न्यादिदर्शनात् परनिपातः माल्यं धारयतीति माल्यधा-रयः अनुपसर्गात् लिम्पेत्यादिना शः ॥ ३८ ॥ ज० म०

सुखेत्यादि । रामो दुरुपस्थान एव अतस्तेन बलिना सह विग्रहं युद्धं मारब्धाः मा कार्षीः आङ्रभेष्टीथास् झस-

तं भीतङ्कारमाक्रुश्य रावणः प्रत्यभाषत ।
यातयामं विजितवान् स रामं यदि किन्ततः ॥ ३९ ॥

त्वादिति सिलोपः ढभात्तथोरिति थस्य धः अधिलङ्कं लङ्कायामधिकृत्य स्त्रियो दीव्य स्त्रीभिः क्रीड़ कारकार्थेऽव्ययीभावः दिवसुतुदेत्यादिना दिवः श्यन् व्यंन्च्तयीति घं: ह्वेर्लोपः दिवो धेवेति करणे द्वितीया। कीदृशः सुखं आतमस्य सुरा पीता येन ना मनुष्यो जग्धो भक्षितो येन न तथा एषु अत्याहिताादित्वात् क्तान्तस्य परनिपातः इति परः स्वमते पूर्वपरनियातयोर्विवक्षाधीनत्वं देक्यं सोऽन्वय इत्युक्ते जग्धोदीयपिचेति जग्धादेशः मात्यानि धारयतीति साहिसातीति शः ॥ ३८ ॥ भ०

तमित्यादि। तं मारीचं पूर्वोक्तं निराकुर्वन् रावणः प्रत्यभाषत प्रत्युक्तवान् लङि रूपम्। भीतङ्कारमाक्रुश्य भीतं कृत्वा भीतोऽसीति कर्मण्याक्रोशे कृञः खमुञ यातयामं गतवयसं यदि विजितवान् रामो दाशरथिः किं ततः किं तापसः शूरः ॥ ३९ ॥ ज० म०

तमित्यादि। भीतङ्कारं त्वं भीतोऽसीत्युक्त्वा आक्रुश्य तं मारीचं रावणः प्रत्यभाषत प्रत्यूचे भीतङ्कारमिति कर्मणि आक्रोशे कृञो भाषणार्थे क्त्वा चणम् स्विदश्चेति परः स्वमते तमाक्रुश्य प्रत्यभाषत तं किम्भूतं भीतं भययुक्तं पुनः किम्भूतं कारं यो रणे दुरुपस्थान इत्यादेर्विज्ञापयितारं कृकङ् विज्ञाने इत्यस्मात् अरन्तात् क्रभावेऽमोति कर्त्तरि घञ् किंवा चणस्वेत्यस्य योगविभागात् आक्रोशे चणम् मनीषादित्वात् पूर्वपदस्य द्वोक्तान्तत्वं किं प्रत्यभाषतेत्याह स राघवो यातयामं वृद्धं रामं जामदग्न्यं विजितवान् ततः किं न हि वृद्धजये न

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



अघानि ताड़का तेन लज्जाभयविभूषणा ।
स्त्रीजने यदि तच्छ्लाघ्यं धिग्लोकं क्षुद्रमानसम् ॥ ४० ॥
यज्ञे हैनर्दिनमसौ शरैर्भीरुमभाययत् ।
कुब्रह्मयज्ञके रामो भवन्तं पौरुषं न तत् ॥ ४१ ॥

---

शौर्य्यं त्रायते । यातयामस्तु जीर्णे स्यात् परित्यक्तोज्झितेऽपि चेति विश्वः ॥ ३८ ॥ भ०

अघानीत्यादि । तेन रामेण ताड़का अघानि व्यापादिता हन्तेः कर्मणि लुङ् लज्जा च भयं च विभूषणं यस्याः स्त्रीत्वान्न शौर्य्यम् एवंविधाया अनेन रामेण यदि गर्ह्यमपि हननं स्त्रीजने श्लाघ्यं श्लाघनीयं कृत्यानां कर्त्तरि वेति तृतीया तं धिक् तं लोकं क्षुद्रमानसं हीनमानसम् ॥ ४० ॥ ज० म०

अघानीत्यादि । लज्जा भयञ्च विभूषणं यस्याः सा ताडका तेन रामेण अघानि मारिता हन्तेः कर्मणि टो रतनोर्यगिणौ खेर्ह्रो घोञ्जिति चेति घत्वं स्त्रीजने तत् कर्म यदि श्लाघनीयं तदा क्षुद्रमानसं हीनचित्तं लोकं धिक् धिक् समयेति द्वी ॥४०॥ भ०

यज्ञ इत्यादि । असौ रामो यज्ञवन्तं भीरुं शरैरभाययत् भायितवान् षुगात्मनेपदे न भवतः भयहेतोरभावात् अत्र हि शरेभ्यो भयं न तु रामात् तत् किम्पौरुषकारः किमसौ युवादित्वादण् गैहेनर्दिनं गेह एव नर्दिनं पात्रेसमितादित्वात्सः कुब्रह्मयज्ञके कुत्सिता ब्रह्माणः कुब्रह्माः कुः पापार्थं इति सः कुमहद्भ्यामन्यतरस्यामिति समासान्तष्टच् तेषां कुत्सितो यज्ञः तस्मिन् सति कुत्सायाङ्कन् तेन शूरम्मन्योऽहं रणात्तेन निरस्तः इत्यपुष्कलमुक्तम् ॥ ४१ ॥ ज० म०

यज्ञ इत्यादि । असौ रामः कुब्रह्मयज्ञके यज्ञवन्तं शरै-

चिरकालोषितं जीर्णं कीटनिष्कुषितं धनुः ।
किं चित्रं यदि रामेण भग्नं क्षत्रियकान्तिके ॥ ४२ ॥

---

भाययत् अत्रासयत् तदपि न पौरुषं कथमित्याह भीरुं भयशीलं अतएव गेहेनर्दिनं स्वगृह एव नर्दतीति ग्रहादित्वाखिन् पात्रेसमितादित्वात् चेपे समासो विभक्त्यलोपश्चेति परः अभाययदिति भियो णयन्तात् घौ स्मिभ्योर्घाङ्वर्थे णौ मश्चेत्यस्य भोर्भीष् वेत्यस्य च नात्र विषयः यतः शरेभ्य एवात्र भयं विवचितं न तु प्रयोजकात्कर्तुः कुत्सितो ब्रह्मा ब्राह्मणः कुब्रह्मः देशात् ब्रह्मणः कुमहद्भ्यान्तुवेति पचे षः तस्य कुत्सितो यज्ञ इति निन्दायां विकारसंघेत्यादिना कः अतएव प्रयोजनाभावात्तत्र समर्था राक्षसा न गच्छन्ति पुरुषस्य भावः कर्म वेति पूर्वेण णः ॥ ४१ ॥ भ०

चिरेत्यादि । यदि रामेण क्षत्रियकान्तिके कुत्सितक्षत्रियसमीपे भग्नं धनुः किं तच्चित्रमाश्चर्य्यं क्षत्रिया जनकादयः तस्य कुत्सायाङ्कन् क्षत्रियकस्यान्तिके दूरान्तिकार्थयोगे षष्ठीसमासं विधाय पश्चात् सप्तम्यधिकरणे चेति चकारात् दूरान्तिकार्थेभ्यश्चेति सप्तमी किमिति न चित्रमित्याह चिरकालमुषितमिति कालाध्वनोरिति द्वितीयां विधाय अत्यन्तसंयोगे चेति द्वितीयायाः समासः जीर्णश्चिरकालोषितत्वात् जॄष्वयोहानौ निष्ठा ऋतईद्धातोः इको हलि चेति दीर्घः रदाभ्यामिति निष्ठानत्वम् । कीटैर्घुणैर्निष्कुषितं खादितं निरः कुषः इत्यनुवर्त्तमाने इण् निष्ठायामितीट् ॥ ४२ ॥ ज० म०

चिरेत्यादि । क्षत्रियकान्तिके कुत्सितानां क्षत्रियाणां जनकादीनां निकटे यदि रामेण धनुर्भग्नं तदपि किं चित्रं कथं न चित्रमित्याह चिरकालोषितं चिरकालं व्याप्य स्थितं

वनतापसके वीरौ विपक्षे गलितादरौ ।
किं चित्रं यदि सावज्ञौ मम्रतुः खरदूषणौ ॥ ४३ ॥
त्वञ्च भीरुः सुदुर्बुद्धे ! नित्यञ्च रणकाम्यसि ।
गुणांश्चापह्नुषेऽस्माकं स्तौषि प्रत्रूंश्च नः सदा ॥ ४४ ॥

---

सद्दाध्वादिव्याप्ताविति द्वितीयासमासः ततएव जीर्णं स जरायां हानौ क्तः ऋदिरणावितीर् र्व्यनच्तयीति दीर्घः सुत्वा-श्चोदिति नकारः । कीटैर्घुणैर्निष्कुषितं अन्तः खादितं नेमडी-व्यादौ निष्कुषवर्जनात् इम् षत्वविधानं गवाक्षजालैरभिनिष्-तन्त्य इत्यत्र व्याख्यातम् ईदृग्धनुर्भङ्गश्लाघयैव क्षत्रियाणां कुत्सा ॥ ४२ ॥ भ०

वनेत्यादि। वने तापसो वनतापसः कुत्सायां कन् तस्मिन् वनतापसके रामे सावज्ञत्वाद्गलितादरौ विपक्षे किमयं करिष्यतीत्यश्रद्धयैव योधितवन्तौ खरदूषणौ वीरौ यदि मम्रतुः मृतौ को दोषः किञ्चित्रं म्रियतेर्लुङ्लिङोश्चेति नियमात् लिट्यात्मनेपदं न भवति ॥ ४३ ॥ ज० म०

वनेत्यादि। खरदूषणौ यदि मम्रतुः तदापि किञ्चित्रं नैवाश्चर्य्यमित्यर्थः तपःशीलस्तापसः कुत्सितस्तापसो वनता-पसको रामस्तस्मिन् विपक्षे किमयं करिष्यतीति मत्वा गलि-तादरौ वीरावपि सावज्ञौ विपक्षादराभावात् युद्धेऽपि साव-हेलौ मृङ्स्टोव्येममिति नियमात् नवग्नः पमे इति जितोऽन्य-त्वात् व्याः परस्मैपदम् ॥ ४३ ॥ भ०

त्वञ्चेत्यादि। हे सुदुर्बुद्धे ! त्वं पुनः भीरुश्च भवसि नित्यञ्च रणकाम्यसि आत्मनोऽनिशं रणमिच्छसि आत्मेच्छायाङ्काम्यच् अस्माकञ्च सतो गुणानपह्नुषे अपनयसि ह्नुङ अपनये सदा-

शीर्षच्छेद्यमतोऽहं त्वां करोमि क्षितिवर्द्धनम्।
कारयिष्यामि वा कृत्यं विजिघृक्षुर्वनौकसौ॥ ४५॥

दिकः छित्वात्तङ् शत्रूंश्च नोऽस्माकं स्तौषि स्तौतिः उतो वृद्धि-र्लुकि हलि॥ ४४॥ ज० म०

त्वञ्चेत्यादि। हे सुदुर्बुद्धे! मारीच! त्वं भीरुश्च भवसि रणकाम्यसि च आत्मनो रणमिच्छसि च लेः काम्यक् स्वेच्छायां भीरोर्युद्धेच्छाऽनुचितैव युद्धे पराजयोऽवश्यम् एवमस्माकं गुणां-श्चापह्नुषे शौर्य्यादीन् अपनयसि ह्नुङ्ल चौर्य्ये सदा नोऽस्माकं शत्रून् स्तौषि ष्टुञ्लृ स्तुतौ रपिद्वस्तुतोऽदेर्ज्ञिः॥ ४४॥ भ०

शीर्षेत्यादि। यत एवंविधस्त्वं दुष्टः अतोऽहं त्वामौ द्विती-याया इत्याष्टमिकलक्षणेन त्वादेशः शीर्षच्छेद्यं शीर्षच्छेदार्हं शीर्षच्छेदाद्यत् क्षितिवर्द्धनं करोमि शिरश्छित्त्वा व्यापादया-मीत्यर्थः अथवा कृत्यं करणीयं विभाषा कृवृषोरिति क्यप् कारयिष्यामि हृक्रोरिति द्विकर्मकता विजिघृक्षुः विग्रहीतु-मिच्छुः सनि ग्रहगुहोश्चेतीट्प्रतिषेधः रुदविदेत्यादिना सनः कित्त्वे ग्रहिज्येत्यादिना सम्प्रसारणं हो ढः एकाचो वशो भष् षढोः कः सि वनौकसौ रामलक्ष्मणौ वनमोको गृहं ययोः नलोकेति कर्मणि षष्ठ्याः प्रतिषेधः॥ ४५॥ ज० म०

शीर्षेत्यादि। अतः कारणात् अस्मद्गुणापह्नवात् शत्रुस्त-वनाच्च शीर्षच्छेद्यं शीर्षच्छेदार्हं त्वां क्षितिवर्द्धनं मृतं करोमि शिरश्छित्वा मारयामीत्यर्थः शीर्षच्छेदमर्हतीत्यर्थे ढघेकादिति यः किंवा छिदो घ्यण् शीर्षे छेद्यः शीर्षं छेद्यं यस्येति वा विग्रहः अथवा कृत्यं कार्य्यं त्वां कारयिष्यामि यदि जीवने-च्छास्ति तदा मत्कृत्यं कुर्विति भावः कृवृषमृजेति पक्षे क्यप घोऽभौजेरिति प्रयोज्यकर्त्तुः पक्षे कर्मत्वं वनमेव आको

तमुद्यतनिशातासिं प्रत्युवाच जिजीविषुः ।
मारीचोऽनुनयंस्त्रासादभ्यमित्र्यो भवामि ते ॥ ४६ ॥
हरामि रामसौमित्री मृगो भूत्वा मृगयुवौ ।
उद्योगमभ्यमित्रीणो यथेष्टं त्वञ्च सन्तनु ॥ ४७ ॥

---

ययोस्तौ रामलक्ष्मणौ विग्रहीतुं योधयितुं अभिभवितुं वा इच्छुरहं ग्रहेः सन् नेसुमुहेग्रह इति इम्निषेधः ग्रहस्तपप्रच्छां जिः ॥ ४५ ॥ भ०

तमित्यादि । तं रावणं एवमुक्तवन्तं निशात इति शाच्छो-रन्यतरस्यामितीत्वाभावपक्षे रूपं उद्यतः उत्थापितः निशा-तस्तीक्ष्णोऽसिर्येन तं मारीचस्त्रासात् प्रत्युवाच वचनमुक्तवान् अभ्यमित्र्यो भवामि ते अमित्रस्याभिमुखमभ्यमित्रमाभिमु-ख्येऽव्ययीभावः अभ्यमित्रमलङ्गामीत्यस्मिन्नर्थे अभ्यमित्राच्छ चेति चकाराद्यत् खौ चेति यत् त्वदमित्राभिमुखं गच्छामी-त्यर्थः अनुनयन् अनुकूलयन् किमर्थं जिजीविषुः जीवितु-मिच्छुः ॥ ४६ ॥ ज० म०

तमित्यादि । मारीचो जिजीविषुर्जीवितुमिच्छुः सन् त्रासात् अनुनयन् तं रावणं प्रत्युवाच । त्रासहेतुमाह उद्यत उत्थापितो निशातस्तीक्ष्णोऽसिर्येन तं निशातेति छाशोर्वेति श्यतेः पक्षे न इत्वं । किं प्रत्युवाचेत्याह अहं ते तव अभ्यमित्र्यः शत्रुभिमु-खगामी भवामि अमित्रस्य अभिमुखं अभ्यमित्रं आभि-मुख्येऽव्ययीभावः अभ्यमित्रशब्दादिदं गच्छतीत्यर्थे विकार-संघेति यः ॥ ४६ ॥ भ०

हरेत्यादि । अहं मृगो भूत्वा रामसौमित्री हरामि देशा-न्तरं प्रापयामि अखेटकाभिरतत्वात् यदाह मृगयुवौ मृगै-र्दीव्यत इति क्विप् क्वौ: शूडनुनासिके चेति चकारात् क्वौ च

ततश्चित्रीयमाणोऽसौ हेमरत्नमयो मृगः ।
यथामुखीनः सीतायाः पुप्लुवे बहु लोभयन् ॥ ४८ ॥

---

ऊट् यणादेशः उवङ् । मृगद्युताविति पाठान्तरम् । तत्र द्यु अभिगमने मृगान् द्यौति अभिगच्छतीति क्विप् । त्वञ्च यथेष्टं यथारुचि तमुद्योगं सन्तनु विस्तारं कुर्वित्यर्थः तनोतेर्लोटि उतश्चेति हेर्लुक् अभ्यमित्रीणः अमित्राभिमुखमलङ्गामी अभ्यमित्राच्छचेति चकाराद्यत् खौ चेति खः ॥ ४७ ॥ ज० म०

हरेत्यादि । उपायं दर्शयन्नाह अहं मृगो भूत्वा रामसौमित्री हरामि अन्यत्र नयामि यतस्तौ मृगद्युवौ मृगयारसिकौ मृगैर्दीव्यत इति क्विपि च्छ्वोः शूटाविति तस्योट् धोरियुवचि मृगद्युताविति पाठे द्यु लभिसर्पणे इत्यस्मात् क्विपि सस्य तन् पितीति तन् मृगाभिगामिनावित्यर्थः ततस्त्वमपि अभ्यमित्रीणो यथेष्टमुद्योगं सन्तनु तनदुञ् विस्तारे हेर्लोपोऽस्योपन्नेश्चेति हिलोपः अभ्यमित्रीण इति अभ्यमित्रवस् ॥ ४७ ॥ भ०

तत इत्यादि । उक्तानन्तरमसौ मारीचो मायामृगो भूतः सन् हेमरत्नमयः रत्नञ्च हेम चेति विगृह्य मयट् वैतयोर्भाषायामिति विकारे मयट् निर्मलत्वात् सीताया अग्रतो यथामुखीनः प्रतिविम्बाश्रय इव भूत्वा पुप्लुवे भ्रमति स्म इवशब्दलोपो द्रष्टव्यः यथामुखदर्शनमिति यथामुखसम्मुखस्य दर्शनः खः । बहु लोभयन् सुष्ठु स्पृहां जनयन् यतश्चित्रीयमाणः आश्चर्यं भवन् हेमरत्न मयत्वात् नमोवरिव इत्यादिना क्यच् चित्रङ् आश्चर्ये ङकारस्यात्मनेपदार्थत्वात् शानच् अवयवकृतं लिङ्गं समुदायस्य भवतीति । ४८ । ज० म०

तत इत्यादि । ततो वचनानन्तरम् असौ मारीचो मायया

तेनादुद्यूषयद्रामं मृगेण मृगलोचना ।
मैथिली विपुलोरस्कं प्रवुवूर्षुर्मृगाजिनम् ॥ ४९ ॥

---

हेमरत्नमयो मृगः सन् सीताया यथामुखीनोऽग्रतः स्थायी भूत्वा बहु लोभयन् चक्षुःस्पृहां जनयन् पुप्लुवे भ्रमति स्म प्लुङ् गतौ ठी चित्रं करोतीति चित्रीयमाणः चित्रङ् आश्चर्ये कण्ड्वादित्वात् क्यः ङित्त्वादात्मनेपदं हेम रत्नञ्च प्रस्तुतं यत्रेति प्रस्तुतार्थे मयट् बाहुल्यात् विकार इत्येके मुखस्य सदृशं यथासुखं दर्पणादिस्थप्रतिविम्बमुच्यते साहश्येऽव्ययीभावः मृगस्य रत्नमयत्वेन स्वच्छतया यथा मुखं दृश्यतेऽत्रेति विकारसंघेत्यादिना तदत्र दृश्यते इत्यर्थे ईनः वस्तुतस्तु उपचारात् यथामुखीनशब्दोऽभिमुखमात्रेऽपि वर्त्तते सीताभिमुखो भूत्वेत्यर्थः ॥ ४८ ॥ भ०

तेनेत्यादि । तेन मृगेण मैथिली सीता राममदुद्यूषयत् क्रीड़ितुमिच्छन्तं प्रयुक्तवती गृह्यतामयमिति इवन्तस्य दिवेः सनीवन्तेत्यादिना यदा नेट् तदा च्छ्वोः शूट् द्विर्वचनम् तस्मात् सनन्तण्यन्तात् लङि रूपम् । मृगलोचना मृगस्य लोचने इव लोचने यस्याः मध्यपदलोपी सः विपुलोरस्कं विस्तीर्णवक्षःस्थलम् उरःप्रभृतिभ्यः कप् किमर्थमदुद्यूषयत् मृगाजिनं मृगचर्म प्रावुवूर्षुः प्रावरीतुमिच्छुः प्राङ्पूर्वस्य वृङ इट् सनि वेत्यनिट्पक्षे अज्झनगमां सनीति दीर्घः उदोष्ठ्यपूर्वस्येत्युत्वम् रपरत्वं र्वोरुपधाया दीर्घ इकः द्विर्वचनम् इण्कोरिति षत्वम् रेफस्येण्ग्रहणेन ग्रहणाद्दन्त्योष्ठ्योऽपि वकार ओष्ठ्यग्रहणेन गृह्यते ॥ ४९ ॥ ज० म०

तेनेत्यादि । मैथिली मृगाजिनं मृगस्य प्रावुवूर्षुः चर्म प्रावरीतुं परिधातुमिच्छुः सती तेन मृगेण रामम् अदुद्यूषयत्

योगक्षेमकरं कृत्वा सीतया लक्ष्मणं ततः ।
मृगस्यानुपदी रामो जगाम गजविक्रमः ॥ ५० ॥

---

क्रीड़ितुमिच्छामकारयत् दिवेः सन् भ्रस्जश्रिस्वृयूर्णुभरदरिद्रे-त्यादिना पक्षेऽनिम् णूर्नानिमीति गुणाभावे क्वोः शूटाविति वस्य ऊत्वं ततो द्वित्वं ञिः प्रेरणे दिवेरकर्मकत्वात् घोञौजे-रिति प्रयोज्यकर्त्तुः कर्मत्वम् । सा कीदृशी मृगस्येव लोचने यस्याः सा तथा रामं कीदृशं विपुलं प्रकीर्णमुरो वक्षःस्थलं यस्य तम् उरःप्रभृतितः को बहुव्रीहाविति परः स्वमते स्वार्थे कः प्रावृवूर्षुरिति वृञ् वरणे सन् घोंऽज्झनिङ्गमां स्वाद्यृदृवुरिति पक्षेऽनिम् दन्त्योष्ठस्याप्योष्ठकार्य्यत्वात् ऋदिरणावूर्ल्यो-ष्ठ्यादिति उर् व्यंनच्तयीति घंः ॥ ४९ ॥ भ०

योगेत्यादि । ततो दुद्यूषानन्तरं रामो जगाम योगक्षेमौ शरीरस्थितिपालने करोतीति कृञो हेत्वित्यादिना हेतौ टः ग्रहणवता तदन्तविधेरभावात् क्षेमप्रियमद्रेऽण् चेत्यण्खचौ न भवतः सीतायाः स्थितिपालनहेतुभूतं लक्ष्मणङ्कृत्वा रामः मृगस्यानुपदी अन्वेष्टा अनुपद्यन्वेष्टेति निपातनात् साधुः गजविक्रमः गजगमनमिव गमनं यस्येत्यर्थः ॥ ५० ॥ ज० म०

योगेत्यादि । ततोऽनन्तरं लक्ष्मणं जानक्या योगक्षेमकरं कृत्वा गजविक्रमो हस्तिपराक्रमो हस्तिगमनतुल्यगमनो वा रामो मृगस्यानुपदी सन् जगाम फलपुष्पादेरलब्धस्य साधनं योगः शरीरादेर्लब्धस्य पालनं क्षेमः तौ करोतीति स्वकृष्टः अनुपदं यातीति बाहुल्यात् इन् अनुपदमनुगमनं विद्यतेऽस्येति नैकाज़ादिति इन् अन्वेष्टर्य्यनुपदादिनिति परसूत्रम् ॥ ५० ॥ भ०

स्थायं स्थायं क्वचिद् यान्तं क्रान्त्वा क्रान्त्वा स्थितं क्वचित् ।
वीक्षमाणो मृगं रामश्चित्रवृत्तिं विसिष्मिये ॥ ५१ ॥
चिरं क्लिशित्वा मर्माविद्रामो विलुभितप्लवम् ।
शब्दायमानमव्याक्षीत् भयदं चण्डाचरम् ॥ ५२ ॥

---

स्थायमित्यादि । मृगश्चित्रवृत्तिमङ्गतशरीरचेष्टं वीक्षमाणो रामो विसिष्मिये विस्मितः षिङो ङित्वादात्मनेपदं षोपदेशत्वाच्चाभ्यासे षः परस्य सस्य षः । चित्रवृत्तितां दर्शयन्नाह स्थायं स्थायं स्थित्वा स्थित्वा क्वचित् प्रदेशे यान्तं क्रान्त्वा क्रान्त्वा क्वचित् प्रदेशे उत्प्लुत्योत्प्लुत्य स्थितम् आभीक्ष्ण्ये णमुलि क्त्वाच्‌णमुलौ द्विर्वचनञ्च ॥ ५१ ॥ ज० म०

स्थायमित्यादि । मृगं वीक्षमाणो रामो विसिष्मिये विस्मितः षिङश्चरां रूपं षोपदेशत्वात् खेरिलात् षत्वं शृध्वांरितीयः । विस्मये हेतुमाह चित्रवृत्तिम् आश्चर्य्यचेष्टं चित्रवृत्तित्वं दर्शयति स्थित्वा स्थित्वा क्वचित् गच्छन्तं चणम् वाभीक्ष्ण्ये पूर्वकाले इति चणम् आभीक्ष्ण्ये द्वित्वं लोकतः सिद्धमिति स्मारं स्मारं नमसीत्युदाहरणेन ज्ञापितं क्वचित् क्रान्त्वा क्रान्त्वा उत्प्लुत्य उत्प्लुत्य स्थितं क्रमो र्चौ वेति पचे दीर्घः ॥ ५१ ॥ भ०

चिरमित्यादि । रामः चण्डाचरं मारीचमव्याक्षीत् विद्धवान् व्यधेर्लुङि हलन्तलक्षणा वृद्धिः मर्माविद्रामः मर्माणि विध्यतीति क्विप् नहिवृतीत्यादिना पूर्वपदस्य दीर्घत्वं चिरं क्लिशित्वा महान्तं कालमायस्य अत्यन्तसंयोगे द्वितीया क्लिशः क्त्वानिष्ठयोरिति विकल्पेनेट् तत्र रलोव्युपधादिति कित्त्वविकल्पे मृडमृदेत्यादिना कित्त्वं विलुभितप्लवं व्याकुलितगमनं लुभो विमोहन इतीट् विमोहनं व्याकुलीकरणं शब्दाय-

श्रुत्वा विस्फूर्जथुप्रख्यं निनादं परिदेविनी ।
मत्वा कष्टश्रितं रामं सौमित्रिं गन्तुमैजिहत् ॥ ५३ ॥

मानं शब्दं कुर्वाणं शब्दवैरेति क्वङ् भयदं निशाचरं शब्दविशेषणं वा ॥ ५२ ॥ ज० म०

चिरमित्यादि। रामश्चिरकालं क्लिशित्वा श्रान्तो भूत्वा भयदं भयदायकं क्षणदाचरं तं राक्षसं अव्यात्सीत् व्यध्यौ ताडि टौ पूङ्क्लिशूदित इम् इति क्लिशः पक्षे इम् सेमत्त्वधेत्यादौ क्लिश-वर्जनात् न गुणः मर्माणि विध्यतीति क्विप् जिः वौरुहो घञ्-क्वाविति दीर्घनिर्देशात् क्वचित् क्विवन्ते पूर्वपददीर्घत्वं स्यादिति सूचितं आङ्पूर्वस्य रूपं वा मर्मावित् मर्मज्ञो वा वेत्तेरूपं विलुभितप्लवं मर्मताडनात् व्याकुलगतिं लुभश्च विमो-हने विमोहनं व्याकुलीकरणं क्षुधवसपूजेत्यादिना इम् शब्दाय-मानं शब्दं कुर्वाणं शब्दसुखकष्टादेरिति ङ्यः भयदमिति मृगस्य शब्दक्रियाया वा विशेषणम् ॥ ५२ ॥ भ०

श्रुत्वेत्यादि। विस्फूर्जथुप्रख्यं वज्रनिर्घोषतुल्यं टुओस्फू-र्जाविज्ञनिर्घोषे ट्वितोऽथुच् निनादं शब्दं नीगदनदेति विकल्प-नात् पक्षे घञ् श्रुत्वा मैथिली कष्टश्रितं कृच्छ्रं प्राप्तं रामं द्वितीयाश्रितेत्यादिना सः मत्वा बुद्ध्वा कृच्छ्रप्राप्तेन रामेण मृतमिति परिदेवनी परिदेवनशीला शङ्कमाना सम्पृचानु-रुधेत्यादिना घिनुण् सौमित्रिङ्गन्तुमैजिहत् ईहाञ्चारितवती ईहेर्ण्यन्तात् लुङि द्विर्वचनेऽचीति स्थानिवद्भावादजादेर्द्वितीय-स्येति हिशब्दस्य द्विर्वचनम् अभ्यासकार्य्यञ्च ॥ ५३ ॥

श्रुत्वेत्यादि। विस्फूर्जथुप्रख्यं वज्रनिर्घोषतुल्यं निनादं श्रुत्वा कष्टश्रितं कष्टं प्राप्तं रामं मत्वा परिदेविनी परिदेवन-शीला अर्थात् सीता सौमित्रिं गन्तुं ऐजिहत् चेष्टामकारयत्

एष प्रावृषिजाम्भोदनादी भ्राता विरौति ते ।
ज्ञातेयं कुरु सौमित्रे ! भयात्त्रायस्व राघवम् ॥ ५४ ॥
रामसंघुषितं नैतन्मृगस्येव विवञ्चिषोः ।
रामस्वनितसङ्काशः स्वान इत्यवदत्स ताम् ॥ ५५ ॥

---

ईहङ् चेष्टायां ञिः प्रेरणे अङि होर्द्वित्वं टौ स्फूर्जावश्च-निर्घोषि दीर्घवानित्येके द्वितोऽथुर्भावे ॥ ५३ ॥ भ०

एष इत्यादि । एष ते भ्राता रौति उतो वृद्धिरित्यौकारः प्रावृषि जातः प्रावृषिजः सप्तम्यां जनेर्डः प्रावृडित्यादिना सप्तम्या अलुक् स चाम्भोदश्चेति विशेषणमिति सः तद्वन्नदतीति कर्त्तर्युपमाने णिनिः तस्मात् सौमित्रे ! ज्ञातेयं ज्ञातिभावं तत्कर्म वा कुरु कपिज्ञात्योर्ढक् तेन भयात्त्रायस्व राघवम् ॥ ५४ ॥ ज० म०

एष इत्यादि । हे सौमित्रे ! एष ते तव भ्राता विरौति शब्दायते रुण ध्वनौ रपिद्धस्युतोऽद्धेर्व्रिः प्रावृषि वर्षाकाले जातः प्रावृषिजः हनजनादिति डः सरसिजमित्युदाहरता क्वचित् समासे विभक्तेरलुगिति सूचितम् । अम्भो ददातीति अम्भोदः पूर्ववत् डः प्रावृषिजश्चासौ अम्भोदो मेघश्चेति स इव नदतीति ग्रहादित्वाण्णिन् त्वं ज्ञातेयं ज्ञातिकर्म कुरु । किन्त-दित्याह भयाद्राघवं त्रायस्व विकारसंघेत्यादिना कर्मण्यर्थे ज्ञातेः ष्णेयः ॥ ५४ ॥ भ०

रामेत्यादि । रामसंघुषितं रामशब्दितमितन्न भवति घुषिरविशब्दार्थः तस्य निष्ठायां रुष्यमत्वरेत्यादिना विकल्पे नेट् मृगस्य विवञ्चिषोः छलयितुमिच्छोः वञ्चु गतौ भौवादिकः तस्यानेकार्थत्वात् प्रलम्भन इति चौरादिकस्याण्यन्तस्य वा प्रयोगः येषामनित्यण्यन्ताश्चुरादयइति दर्शनं तेषां मते-

आप्यानस्कन्धकाण्ठांसं रुषितुं सहितुं रणे।
प्रोर्णुवन्तं दिशो बाणैः काकुत्स्थं भीरु! कः क्षमः ॥५६॥

---

नात्रापि सिध्यति एष स्वानो ध्वानः स्वनहसोर्वेति पक्षे घञ् कीदृशः रामस्वनितसङ्काशः रामशब्दानुकारीति तां सीतां एवमवदत् उक्तवान् स लक्ष्मणः ॥ ५५ ॥ ज० म०

रामेत्यादि। स लक्ष्मणस्तां सीतां इति अवदत्। किन्तदित्याह एतन्न रामसंघुषितं घुषरते विवक्षिषोर्वञ्चयितुं छलयितुमिच्छोर्मृगस्यैव एष स्वानः शब्दः रामस्वनिततुल्यः वञ्चकङ्वञ्चने कित्त्वात् चौरादिकः वञ्चनं प्रलम्भनं चुर्य्यो णिर्वेति ण्यभावपक्षे रूपमिदं केचित्तु वञ्चगत्यां चौरादिकधातोरनेकार्थत्वात् प्रलम्भनेऽपि वर्त्तते इत्याहुः स्वनशब्दे भावे क्ते स्वनितं घञि स्वानः ॥ ५५ ॥ भ०

अप्येत्यादि। प्यैङ् वृद्धौ अस्मादाङ्पूर्वात् संयोगादेरातो धातोर्यण्वत इति निष्ठातो नः ओप्यायीवृद्धावित्यस्य वा रूपम् ओदितश्चेति निष्ठानत्वं पीभावस्तु आङ्पूर्वस्य त्वन्धूधसोरिति वचनात् इह न भवति आप्यानस्कन्ध इति आप्यानं स्थूलं स्कन्धकाण्ठांसं यस्य काकुत्स्थस्य बाहुशिरोंऽसः तस्य पश्चिमो भागः स्कन्धः तं रुषितं क्रुद्धं रणे संग्रामे सहितुं हे भीरु! कातरे! कः क्षमः शक्तः अपितु न कोऽपीत्यर्थः क्षमिः शक्त्यर्थत्वात् तदुपपदे शकधृषेत्यादिना तुमुन् तीषसहेत्यादिना वेट् ककुत्स्थस्यापत्यं काकुत्स्थः शिवादिभ्योऽण्। कस्मान्न क्षम इत्याह प्रोर्णुवन्तं दिशो बाणैः यतः सर्वाः दिशः बाणैः छादयन्तं ऊर्णोतिः शतरि उवङ्। क्षमते इति क्षमः पचाद्यच् ॥ ५६ ॥ ज० म०

आप्यानेत्यादि। हे भीरु! कातरस्वभावे! रणे रुषितं

देहं विभ्रक्षुरस्त्राग्नौ मृगः प्राणैर्दिदेविषन् ।
ज्याघृष्टकठिनाङ्गुष्ठं राममायान्मुमूर्षया ॥ ५७ ॥

क्रुध्यन्तं काकुत्स्थं रामं सहितुम् अभिभवितुं कः क्षमः शक्तः न कोऽपीत्यर्थः वेमसहलुभ इत्यादिना उभयत्र पक्षे इम् क्षमेः पचादित्वादच् ककुत्स्थस्यापत्यं इति शिवादित्वात् ण्वः आप्यानं स्थूलं स्कन्धकण्ठांसं यस्य तम् ओप्यायीङ् वृद्धौ ओदित्त्वात् सूत्वाद्योदिति क्तस्य नकारः यूर्लोपो व्यस्य ये इति यलोपः आङोऽन्धूधसोरिति नियमात् न प्यादेशः प्यैङ् वृद्धावित्यस्य रूपं वा अंसो भुजशिरः बाणैर्दिशः प्रोर्णुवन्तम् आच्छादयन्तम् ॥ ५६ ॥ भ०

देहमित्यादि । एष मृगो राममायात् आगतवान् यातेर्लङि रूपम् किमर्थं वदेहं शरीरं अस्त्राग्नौ अस्त्रे अग्नाविव विभ्रक्षुः भ्रष्टुमिच्छुः भ्रस्जेः सनीवन्तर्द्धेत्यत्वेडभावपक्षे स्कोः संयोगाद्योरित्यनेन सलोपे षत्वकुत्वयोश्च रूपम् । प्राणैर्दिदेविषन् क्रीडितुमिच्छन् दिवः कर्म चेति चकारात् करणसंज्ञा सनीवन्तेतीट्पक्षे रूपम् ज्यया गुणेन घृष्टौ निघृष्टौ अतएव कठिनौ अङ्गुष्ठौ सव्यापसव्यकर्षणाद्यस्य क्षुषिर विशब्दन इति निष्ठायामनिट् । मुमूर्षया मर्त्तुमिच्छया मृङ् सनि उदोष्ठ्यपूर्वस्येत्युत्वम् अः प्रत्ययात् ॥ ५७ ॥ ज० म०

देहमित्यादि । एष मृगो मुमूर्षया मर्त्तुमिच्छया राममायात् आगच्छत् याप्रापणे घो मृङः सनि घोऽज्झनिङ्गमामिति दीर्घे ऋदिरणाविति उर् रामस्य अस्त्रमग्निरिव तत्र स्वदेहं भ्रष्टुमिच्छुः भ्रस्जः सनि भ्रस्जश्रिस्वृयूर्णुभर इति इमोऽभावपक्षे स्वादेः सो लोपः प्रच्छ्राजिति षङ षढोः कः से प्राणैर्दिदेविषन् क्रीडितुमिच्छन् इवन्तत्वात् पूर्वेण पक्षे

अत्रून् भीषयमाणं तं रामं विस्मापयेत कः ।
मास्म भैषीस्त्वयाद्यैव कृतार्थो द्रक्ष्यते पतिः ॥ ५८ ॥
यायास्त्वमिति कामो मे गन्तुमुत्सहसे न च ।
इच्छुः कामयितुं त्वं मामित्यसौ जगदे तया ॥ ५९ ॥

---

इम् इत्याघुष्टो धनुर्गुणनिष्पिष्टः कठिनाङ्गुष्ठो यस्य तं रामं घुष शब्दे क्षुब्धवाढेत्यादिना निपातः निपातात् निष्पेषणार्थोऽपि गम्यते गुणनिष्पेषेऽङ्गुष्ठकाठिन्यं युक्तं निपातोऽपि शब्दार्थं एव इति चेत् त्वया घुष्टः शब्दितः सुप्रसिद्धः कठिनाङ्गुष्ठो यस्येति ॥ ५७ ॥ भ०

अत्रूनित्यादि । तं रामं अत्रून् भीषयमाणं भीतान् कुर्वाणं भियो हेतुभये षुक् भीस्म्योर्हेतुभय इति तङ् विस्मापयेत कः क्षुभितचित्तं कुर्य्यात् नैवेत्यर्थः नित्यं स्मयतेरिति णावात्वम् ऋतीत्यादिना पुक् निमन्त्रणे नियोगे वा लिङ् पूर्ववदात्मनेपदं तस्मात्स्मास्म भैषीः मा भूर्भीता स्मोत्तरे लङ् चेति चकारात् लुङ् सिचि वृद्धिः त्वया अद्यैव कृतार्थः पूर्णमनोरथः पतिर्द्रक्ष्यते दृशः कर्मणि लृट् ॥ ५८ ॥ ज० म०

अत्रूनित्यादि । अत्रून् भीषयमाणं भीतान् कुर्वाणं रामं को विस्मापयेत क्षुभितहृदयं कुर्य्यात् न कोऽपीत्यर्थः स्मिभ्यो-र्णावर्थे मत्वेति स्मिधातोरिकार आ मत्व भीर्भीस् वेति भियः पक्षे भीषादेशः तस्मात् त्वं मा भैषीः भयं न कुरु मास्मेन घोत्यावविति टौ व्रजवदेति वृः मायोगे अमागमाभावः । त्वया अद्यैव कृतार्थः कृतकृत्यः पतिर्द्रक्ष्यते दृशः कर्मणि तौ वद्रोऽकिज्भस इति रेफः ॥ ५८ ॥ भ०

याया इत्यादि । तदन्वेषणाय यायास्त्वमिति कामो-ऽभिलाषः काम प्रवेदनेऽकच्चितीति इत्यकच्चित्युपपदे लिङ् । न

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



मृषोद्यं प्रवदन्तीं तां सत्यवद्यो रघूत्तमः ।
निरगात् शत्रुहस्तं त्वं यास्यसीति शपन् वशी ॥ ६० ॥

---

च गन्तुमुत्सहसे शकधृषेति तुमुन् तस्मान्नूनं माङ्कामयितुमिच्छुः एषणशीलः समानकर्त्तृकेषु तुमुन् विन्दुरिच्छुरिति निपातनात् साधुः । इत्येवमसौ लक्ष्मणो जगदे गदितस्तया सीतया ॥ ५९ ॥ ज० म०

याया इत्यादि । त्वं रामान्वेषणाय याया इति मे मम कामोऽभिलाषः कामोक्तोऽकच्चितीति खो न तु गन्तुं उत्सहसे तस्मात्त्वं मां कामयितुं इच्छुः इच्छतीति इच्छुः विन्दिच्छू इति निपातः कमऋतोगुपूधूपेति कर्मणिङ् इत्यसौ लक्ष्मणस्तया सीतया जगदे कर्मणि ठी ॥ ५९ ॥ भ०

मृषोद्यमित्यादि । माङ्कामयितुमिच्छुरित्येतन्मृषोद्यं मृषावादं राजसूयेत्यादिना भावे क्यप् यजादित्वात् सम्प्रसारणं प्रवदन्तीं तां सीतां रघूत्तमो लक्ष्मणः शपन् शत्रुहस्तं त्वं यास्यसीति शापं प्रयच्छन् भौवादिकोऽत्र शपिर्न दैवादिकः निरगात् निर्गतः तस्मादुटजादित्यर्थात् कथं मृषोद्यमित्याह वशी वशनं वशः इन्द्रियसंयमनं वशिरण्योरुपसंख्यानमित्यप् स यस्यास्ति स वशी जितेन्द्रियः अतएव सत्यवद्यः अवितथवादी सत्रुहस्तं यास्यसीति सत्यं वदतीति कृत्यल्युटो बहुलमिति कर्त्तरि यत् वदः सुपि क्यप् चेति चकाराद्यत् भावे वा यतं विधायाच् अर्शआदित्वात् ॥ ६० ॥ ज० म०

मृषोद्यमित्यादि । त्वं शत्रुहस्तं यास्यसीति तां सीतां शपन् शापं प्रयच्छन् रघूत्तमो लक्ष्मणो निरगात् निर्गतः इण् गतौ गा त्वां भूस्थेति सेर्लुक् इच्छुः कामयितुं मामिति मृषोद्यं मिथ्यावादं प्रवदन्तीं मृषोपपदवदेर्नित्यं क्यप् लेर्वदः

गते तस्मिन् जलशुचिः शुद्धदन् रावणः शिखी ।
जञ्जपूकोऽचमालावान् धारयो मृदलावुनः ॥६१॥
कुलकम् ।

---

क्यप्याविल्यनन्तरं मृषोद्यं नित्यमित्युक्तं ग्रहस्त्रपाद्योरिति जिः सत्यं वदतीति कृतोः कभाव इत्युक्तेः कर्त्तरि यः सत्यवद्यः लेर्वदः क्यप्याविति भावे ये सत्यं वद्यं विद्यते अस्येति अर्श-आदित्वादद्वा सत्यं वद्यं अस्येति बहुव्रीहिर्वा यद्वा वदनं वत् वदस्थैर्य्ये क्विप् विकारसंघेत्यादिना तत्र साधावर्थे यः सत्यस्य करणे साधुरित्यर्थः वशी जितेन्द्रियः वश इन्द्रियसंयमः सोऽस्या-स्तीति नैकाजादिति इन् अतएव सत्यवद्यः ॥ ६० ॥ भ०

गते इत्यादि । तस्मिन् लक्ष्मणे गते सति रावणः सीता-मूचे इति वक्ष्यमाणेन सम्बन्धः । कीदृशः जलशुचिः स्नात इत्यर्थः शुद्धदन् निर्मलदशनः शुद्धा दन्ता यस्य अग्रान्तेत्यादिना दन्तस्य ददादेशः । शिखा अस्यास्तीति शिखी परिव्राजकः व्रीह्यादित्वादिनिः जञ्जपूकः पापाशयत्वात् गर्हितञ्जपतीति लुपसदेति यङ् जपजभेत्यभ्यासस्य नुक् यजजपदशां यङ् इत्यूकः । अक्षमालावान् अक्षसूत्रयुक्तः संसर्गे मतुप् धारयतीति धारयः अनुपसर्गादिति शः कस्य मृदलावुनः नञिलम्बेर्न-लोपश्चेत्यौणादिक ऊकारे प्रत्यये अलावूः तस्य विकारः फल-मिति ओरञ् तस्य फले लुक् नपुंसकह्रस्वत्वम् मृत्पूर्णमलावु इति मध्यपदलोपी सः क्तप्रयोगे कर्मणि षष्ठी इकोऽचि विभक्ताविति नुम् ॥ ६१ ॥ अ० स०

गते इत्यादि । तस्मिन् लक्ष्मणे गते सति रावणः समागम्य सीतामूचे इति चतुर्थश्लोकेनान्वयः । कीदृशः जलशुचिः जलेन शुचिः स्नातत्वात् शुद्धा निर्मला दन्ता यस्येति शुद्धदन् निपा-

कमण्डलुकपालेन शिरसा च मृजावता ।
संवस्य लाक्षिके वस्त्रे मात्राः संभाण्ड्य दण्डवान् ॥६२॥

तनात् । शिखी शिखायुक्तः नैकाजादिति इन् पापाश्रयत्वात् गर्हितं जपतीति जप्जपूकः गत्यर्थात् गृलुपेत्यादिना यङ् जम-जपजभेति खेर्नुण् जागृयङन्तयजजपेति ऊकः यङो लुक् । अक्षमालावान् अक्षसूत्रयुक्तः सृदलाबुनो धारयः धारयतीति साहिसातिवेतीति शः ढे षी मृच्च अलाबुश्च इति समाहार-द्वन्द्वे चर्गैक्यवं क्लीवं मृत्पूर्णमलाबु वा । भवेदलाबुरालाबु-रालाबु स्यादलाबु चेति शब्दभेदः । अलाबुस्तुम्बीफलं मृत् तीर्थमृत्तिका ॥ ६१ ॥ भ०

कमित्यादि । कमण्डलुना कपालेन च जातिरप्राणिना-मिति द्वन्द्वे कवद्भावः मृजावता निर्मलेन शिरसा च उपलक्षित इत्थम्भूते तृतीया संवस्य परिधाय वस्त्रात्समाच्छादन इति सुण्डमिश्रेत्यादिना णिच् लाक्षिके वस्त्रे लाक्षया रक्ते लाक्षा-रोचनेत्यादिना ठक् मात्राः कमण्डल्वादिकान् संभाण्ड्य समाचित्य राशीकृत्येत्यर्थः भाण्डात् समाचयन इति पुच्छ-भाण्डेत्यादिना णिङ् । दण्डवान् गृहीतत्रिदण्डः संसर्गे मतुप् ॥ ६२ ॥ ज० म०

कमित्यादि । कमण्डलुश्च कपालो भिक्षापात्रश्चेति समा-हारद्वन्द्वः तेन उपलक्षितः । केचित्तु कं जलं पालयतीति कपालः कमण्डलुश्चासौ कपालश्चेति कर्मधारयः तेन उप-लक्षितः परिव्राजको हि दक्षिणकरे सजलं पात्रं धारयतीति भाव इत्याहुः । मृजावता मार्जनायुक्तेन शिरसा उपलक्षितः मृजलूषश्च्ली षित्वात् भीषिचिन्तीत्यादिना ङः स्त्रीलिङ्गत्वञ्च विशेषणे तृतीया । लाक्षिके वस्त्रे संवस्य परिधाय त्रिः कृत्वा-

अधीयन्नात्मविद्विद्यां धारयन्मस्करिव्रतम्।
वदन् बह्वङ्गुलिस्फोटं भ्रूक्षेपञ्च विलोकयन्॥ ६३॥

---

ईरिति वस्त्रात् समाच्छादने परिधाने च ञिः संपूर्वस्यैव तदभिधानशक्तिः प्रकृत्यर्थपरित्यागस्तु धातोः स्वभावात्। यदुक्तं "विशेषकर्मसम्बन्धात् प्रकृतिस्तु गतार्थता" इति। लाक्षया रक्ते लाक्षिके विकारसंघेत्यादिना तेन रक्तोऽर्थे ष्णिकः मात्रां परिच्छदं कमण्डलुप्रभृतिं संभाण्डय समाचित्य युगपद्वहनार्थं राशीकृत्य भाण्डानि संचिनोतीत्यर्थे पूर्ववत् ञिः प्रकृत्यर्थत्यागः संपूर्वतानियमश्च मात्रा कर्णविभूषणे। अक्षरावयवे वृत्ते मानेऽल्पे च परिच्छदे इति विश्वः। दण्डवान् गृहीतदण्डः॥ ६२॥ भ०

अधीत्यादि। मा कुरुत कर्माणि शान्तिर्वः श्रेयसीत्येवङ्घोषयन्ति ये ते मस्करिणः परिव्राजकाः तेषां प्रेतमकृच्छ्रमसौ धारयन् मस्करमस्करिणाविति परिव्राजके सुट् आत्मविदां योगिनां विद्यामुपनिषदमधीयन् जपन् ईङ्धार्य्योरिति ईङो धारेश्च अकृच्छ्रवति कर्त्तरि शतृप्रत्ययः अन्तरा बहु प्रभूतं वदन् अङ्गुलिस्फोटम्पुनः स्फोटिकान्दत्त्वा भ्रूक्षेपञ्च विलोकयन् भ्रुवावुत्क्षिप्योत्क्षिप्य विलोकयन् उभयत्रापि स्वाङ्गे भ्रुव इति णमुल॥ ६३॥ ज० म०

अधीत्यादि। आत्मविदां योगिनां विद्यामुपनिषदं अधीयन् पठन् धारीङोरकृच्छ्रे शतरिति परसूत्रं स्वमते क्वचिदभिधानात् आत्मनेपरस्मैपदिनोः परस्मैपदात्मनेपदिता मस्करिणः परिव्राजकस्य व्रतं धारयन् अङ्गुलिस्फोटं अङ्गुलिं स्फोटयित्वा बहु वदन् मितभाषितया बहु हस्तसंज्ञयैव वदतीति भावः भ्रूक्षेपं भ्रुवमुत्क्षिप्य विलोकयन् ऋजुतया कटाक्षाद्य-

सन्दिदर्शयिषुः साम निजुह्नुषुः क्षपाटताम् ।
चङ्क्रमावान् समागत्य सीतामूचे सुखाभव ॥ ६४ ॥

---

भाव इत्याशयः उभयत्र पीड्यमानात् स्वाङ्गात्समुत् इति परः बहु अङ्गुलेः स्फोटो यत्र वदनक्रियायां भ्रुवोः क्षेपो यत्र विलोकनक्रियायां स्फोटक्षेपौ यजन्तौ ॥ ६३ ॥ भ०

सन्दीत्यादि। इह भयम्मा भूदिति साम सान्त्वं सन्दिदर्शयिषुः सन्दर्शयितुमिच्छुः वदन् बह्वङ्गुलिस्फोटमिति योज्यं दृशेर्ण्यन्तसनन्तत्वे रूपं क्षपाटतां राक्षसत्वन्निजुह्नुषुर्निह्नोतुमिच्छुः धारयन्मस्करिव्रतमिति योज्यम् ह्नोतेरज्झनगमां सनीति दीर्घः कुटिलं क्रमणञ्चङ्क्रमा क्रमेर्नित्यङ्कौटिल्ये गताविति यङ् नुगत इत्यभ्यासस्य नुक् अः प्रत्ययादित्यकारः अतो लोपः यस्य हलः टाप् सा यस्यास्ति चङ्क्रमावान् कुटिलगतिमानित्यर्थः समागत्य ढौकित्वा सीतामूचे। किमित्याह सुखाभवेति अनुकूला भवेत्यर्थः यदहम्प्रार्थये तत्र प्रतिकूला न भवेति भावः सुखप्रियादानुलोम्य इति कृभ्वस्तियोगे डाच् ॥ ६४ ॥ ज० म०

सन्दीत्यादि। साम सान्त्वं सन्दिदर्शयिषुः दृशेर्ण्यन्तात् सन् क्षपाटतां राक्षसभावं निह्नोतुमिच्छुः ह्नुङ् अपचौर्य्ये सनि धोऽज्झनिङ्गमामिति घः चङ्क्रमावान् कुटिलगतियुक्तः अमेध्यादिस्थलपरिजिहीर्षया चित्तकृत्यं वा कौटिल्यं इत्यर्थादिगृलुपेति यङ् जमजपेति खेर्नुण् यङो लुक् शंस्यादः ततो वतुः ईट्टशः सन् समागम्य सुखाभव यदहं याचे तत्रानुकूला भवेति सीतामूचे सपत्रनिष्पत्रेत्यादिना सुखादानुकूल्ये डाच्। यद्यप्यत्र तोयसम्बवीजेत्यादिसूत्रात् कृञीत्यनुवर्त्तते तथापि मण्डूकप्लुताधिकारात् च्विः कृभ्वस्त्वभूततद्भाव इति

सायन्तनीं तिथिप्रण्यः पङ्कजानां दिवातनीम्।
कान्तिं कान्त्या सदातन्या ह्रेपयन्ती शुचिस्मिता॥ ६५॥

---

सूत्रात् क्रम्बस्त्वित्यस्यानुवर्त्तनं बोध्यं प्रयोगदर्शनात् वृत्तौ क्रमीति लिपिकरप्रमादात् बाहुल्यार्थं वा किंवा सुखं विद्यते यस्या इत्यर्शआदित्वात् अः तत आप्॥ ६४॥ भ०

सायमित्यादि। का त्वमिति वक्ष्यमाणेन सम्बन्धः साय-न्दिनावसानं तत्र भवां कान्तिम् यदा षोऽन्तकर्मणीत्य-तस्मात् घञ्प्रत्ययान्तः तदा सायञ्चिरेति ट्युट्युलौ तुट् च मकारान्तत्वञ्च निपात्यते यदा सायंशब्दो मकारान्तः तदा-प्यव्ययत्वादेव प्रत्ययागमौ स्यातां कस्येत्यपेक्षायां तिथिप्रण्यः चन्द्रमसः पञ्चदश कलाः तासां वृद्धिह्रासाभ्यां पञ्चदशतिथीः प्रणयति प्रवर्त्तयति सत्सूद्विषेति क्विप् उपसर्गादसमासेति णत्वम् एरनेकाच इति यणादेशः पङ्कजानाञ्च कान्तिङ्कीदृशीं-दिवातनीन्दिवाभवां कान्त्या त्वदीयया सदातन्या सदाभवया ह्रेपयन्ती लज्जयन्ती दिवातन्याः सायन्तन्याश्च सदाभवत्वात् जिह्रेतेरर्तीत्यादिना णौ पुक् शुचिस्मिता शुभ्रहासा॥ ६५॥ ज० म०

सायमित्यादि। का त्वमेकाकिनीति द्वितीयश्लोकेन सम्बन्धः तिथिप्रणीश्चन्द्रस्य सायन्तनीं दिनावसानभवां कान्तिं तथा पङ्कजानां पद्मानां दिवातनीं दिनभवां कान्तिं स्वकान्त्या ह्रेपयन्ती लज्जयन्ती। कीदृश्या सदातन्या सर्वकालस्थितया चन्द्रपद्मयोस्तु प्रभा न सदा तिष्ठतीति लज्जाहेतुः पञ्चदश-तिथीः प्रणयति प्रवर्त्तयतीति तिथिप्रणीश्चन्द्रः यस्य ह्रास-वृद्धिभ्यामेव ज्योतिःशास्त्रे तिथिनिरूपणात् तास्विति क्विप् प्राग्वतो ण इति णत्वं कव्याद्यनेकाच इति यत्वं तिथिप्रणीर्द-

का त्वमेकाकिनी भीरु ! निरन्वयजने वने ।
क्षुध्यन्तोऽप्यघसन् व्यालास्त्वामपालां कथं न वा ॥ ६६ ॥

र्थविपन्निघ्नामणिश्चित्तनेत्रचूडामणिर्त्तनेत्रभूरित्यमरः । मत्स्यर्थेनार्पिता छाया सैव कान्तिरिति स्मृतेति परिभाषिता कान्तिः सोतायाः चन्द्रचक्ष्मयोस्तु शोभामात्रं कान्तिरिति बोध्यं त्वत्राद्यचिरदच्चिणेत्यादिना सायंदिवासदाशब्देभ्यस्तनट् भवार्थे शुचिस्मिता शुद्धहासा स्मितन्त्वदृष्टदशने हासे इति वैजयन्ती ॥ ६५ ॥ भ०

का त्वमित्यादि । का त्वं देवी मानुषी राक्षसी वेति एकाकिनी असहाया एकादाकिनिच्चासहाय इति आकिनिच् भीरु ! इत्यामन्त्रणं भयप्रकृतित्वात् स्त्रीणाम् निरन्वया निरनुगमा जना यस्मिन् वने यत्र न कथञ्चिन्मनुष्याणां सम्भवः क्षुध्यन्तोऽपि बुभुक्षमाणा अपि दिगादित्वात् यत् व्याला हिंस्रा व्याघ्रादयः कथं वा त्वां नाघसन् न भक्षितवन्तः अदेः लुङ्सनोर्घस्लृ ल्टदित्वाच्लेरङ् । क्षुध्यन्तो नाघसन्निति पाठान्तरम् । तत्र कथं न वा अपरिचितानेवाघसन् इति योज्यम् । अपालां सतीं अविद्यमानः पालो यस्या इति पालरक्षण इति चौरादिकः पालयतीति पालः पचाद्यच् यदा प्रयोजकविवक्षा तदा पातेर्लुगागमो णौ वक्तव्य इति लुक् ततः पचाद्यच् ॥ ६६ ॥ ज० म०

का त्वमित्यादि । हे भीरु ! वने एकाकिनी का त्वं देवी मानुषी अन्या वा । वने किम्भूते निरन्वयजने निरन्वया निःसम्बन्धा जना यत्र । भीरु इति सम्बोधनं भयप्रकृतित्वान्नारीणां जातिभेदस्य प्रत्यक्षत्वाद्वा एकादाकिन्नसहायेऽभिधानात् । क्षुध्यन्तो बुभुक्षमाणा व्याला व्याघ्रादयो हिंस्राः अपालां

हृदयङ्गममूर्त्तिस्त्वं सुभगम्भावुकं वनम् ।
कुर्वाणा भीममप्येतद्वदाभ्यैः केन हेतुना ॥ ६७ ॥
सुकृतं प्रियकारी त्वं कं रहस्युपतिष्ठसे ।

---

पालकारक्षितां त्वां कथं नाघसन् न भक्षितवन्तः वस्त्वदः-सन्व्यल्घसीति अदथ्यां घसत्वदनुबन्धात् शासलिद्युदिति ङः क्षुधबुभुक्षायां दिवादिः पालरक्षणे चौरादिकः पचादित्वा-दन्। व्यालो दुष्टगजे सर्पे श्वापदे नान्यवत्सल इति मेदिनी ॥ ६६ ॥ भ०

हृदयमित्यादि। केन हेतुना इदं वनमभ्यैः अभिगतासि वद कथय अभिपूर्वादिणो लङ् मध्यमपुरुषैकवचनम् आडजा-दीनाम् आटश्चेति वृद्धिः हृदयङ्गच्छति या मूर्त्तिः शरीरमत्य-न्तसौन्दर्य्यात् गमेश्चेति खच् सा एवंविधा मूर्त्तिर्यस्याः सा त्वं भीममप्येतद्वनं सुभगम्भावुकं सर्वस्यैवाप्रियं प्रियङ्कुर्वाणा असुभगं भूत्वा सुभगं भवतीति कर्त्तरि भुव इति खुकञ् ॥ ६७ ॥ ज० म०

हृदयेत्यादि। केन हेतुना त्वं एतद्वनम् अभ्यैः अभिगता इति वद अभिपूर्वादिणो घ्याः सिप् लुगङ्गयोऽपः घीटीयोष्विति अम् आदिगीचोरिति णुः भूयोऽम् चरादयोऽर्थैकत्तेरिति तृतीया हृदयङ्गमा मूर्त्तिर्यस्याः सा तथा लावण्यातिशयात् हृदयं गच्छतीति तृम्भृवृट इत्यादिना खः नाम्नोत्यस्य व्यभि-चारो बाहुल्यात् भीममप्येतद्वनं सुभगम्भावुकं कुर्वाणा प्राग-प्रियं प्रियं भवतीति भुवो घे खिष्णुखुकञाविति खुकञ् ॥ ६७ ॥ म०

सुकृतमित्यादि। सुकृतं पुण्यकारिणं शोभनं कृतवानिति सुकर्मपापेत्यादिना क्विप् कं रहसि विजने त्वमुपतिष्ठसे उप-

पुण्यकृच्चाटुकारस्ते किङ्करः सुरतेषु कः ॥ ६८ ॥
परिपर्य्युदधेरूपमाद्युलोकाच्च दुर्लभम्।
भावत्कं दृष्टवत्स्वेतदस्मास्वधि सुजीवितम् ॥ ६९ ॥

---

स्त्रियसि सङ्गतकरणे तङ् प्रियकारी अनुकूलवर्त्तिनी सती प्रियमनुकूलङ्करोतीति चेमप्रियमद्रे णचेति अण् टिड्ढाणञि-त्यादिना ङीप् पुण्यकृत् कृतपुण्यः तस्य पूर्ववत् क्विप् चाटु-कारः प्रियवाक्यकरः नशब्दश्लोकेत्यादिना टे प्रतिषिद्धेऽणेव भवति ईदृशस्ते किङ्करः दासः दिवा बिभेति टः किं यत्तदस्तु कृञोञ्विधानमिति तत्स्त्रीविषये द्रष्टव्यम् सुरतेषु शोभन-रतेषु नपुंसके भावे क्तः अनुदात्तेत्यादिनानुनासिकलोपः अने-नोभयरुचिराख्याता ॥ ६८ ॥ ज० म०

सुकृतमित्यादि। त्वं प्रियकारी अनुकूलवर्त्तिनी सती कं सुकृतं पुण्यकारिणं पुरुषं रहसि विजने उपतिष्ठसे सङ्गच्छसि मैत्राध्वसङ्गराध इति सङ्गे सं शोभनं करोतीति व्रासुसिति क्विप् प्रियं करोतीति चेमप्रियमद्रात् कुर्वा इति स्वाभावपचे ढात् षण् कः पुण्यकृत् ते तव सुरतेषु शोभनरतेषु किङ्करो दासः सन् चाटुकारः प्रियवाक्यकारी पुण्यं करोतीति क्विप् रमे-र्भावे क्तः वनतनाद्यनिसामिति मलोपः चाटु करोतीति क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति न्यायात् स्वकुष्ट इति टविषयेऽपि ढात् षण् किमित्यव्ययं तस्मात् कप्रष्टः ॥ ६८ ॥ भ०

परीत्यादि। एतद्रूपम्भावत्कम्भवत्या इदमिति भवतष्ठक्-च्छसाविति ठक्च्छसौ ठक्च्छसोश्चोपसंख्यानमिति पुंवद्भावः इसुसुक्तान्तात्कः दुर्लभं परिपर्य्युदधेः अपपरी वर्जने इति कर्म-प्रवचनीयसंज्ञायां द्वितीयायां प्राप्तायां पञ्चम्यपाङ्परिभिः

रिति पञ्चमी अपपरिवहिरञ्चवः पञ्चम्या इति विभाषासमासश्च असमासपक्षे परेर्वर्जने इति द्विर्वचनम् उदधिं वर्जयित्वा चतुरुदधिमेखलायाम्भुवि दुर्लभमाद्युलोकाच्च स्वर्गलोकान्तञ्च यावत् दुर्लभमत्रापि पूर्ववत् पञ्चमी तादृशं दृष्टवत्स्वस्मासु अधि सुजीवितमस्मद्विषये आधिक्येन सुजीवितम् अहो वा सुजीवितमिति अहो शब्दार्थे अधिशब्दो वर्त्तते ॥६९॥ ज०म०

परीत्यादि । एतत् भावत्कं भवदीयं रूपं दृष्टवत्सु अस्मासु अधि सुजीवितं अधिकं शोभनं जीवनं विषये सप्तमी यद्वा अधिकेश्वरार्थोपाधिभ्यामिति स्वाम्यर्थेनाधिना च योगे सप्तमी तेनास्मत्स्वामिकं सुजीवितमित्यर्थः त्वामपश्यतस्तु जनस्य तन्नास्तीति भावः भवत्या इदमित्यर्थे विकारसंघेति कण् पुंवत्स्त्र्युक्तपुंस्कः स्त्रियामित्यादौ त्वतशसन्ततरादावित्यस्य तद्धितसंज्ञके त्वपर्य्यन्तप्रत्यये शसन्तरादौ चेति देवीदासचक्रवर्त्ति व्याख्यानात् पुंवत् ये तु त्वतौ भाव इत्यनेन कृतयोस्त्वत्वयोरेवमित्याहुस्तन्मतेऽभिधानात् योगविभागात् किंवा पुंवत् स्वेरिति पुंवत् भवच्छब्दस्य स्त्रिसंज्ञायां पठितत्वात् पुंवत् स्वेरित्यत्र क्लेर्लुक्त्ये चेत्यस्माच्च चेत्यनुवर्त्तते वृत्तौ त्ये चेति यन्न दृश्यते तल्लिपिकरप्रमादात् ग्रन्थगौरवाद्वा न लिखितं तदनुवृत्तेर्दुर्निवारत्वेन स्पष्टत्वात् पुंवत् सर्वनाम्नो वृत्तिमात्रे तसादौ चेति परसूत्रम् । कीदृशं रूपं उदधेः परि॰ परि उदधिं वर्जयित्वा दुर्लभं दुष्प्रापं उदधिपरिच्छिन्नायां पृथिव्यां दुर्लभमित्यर्थः समुद्रे लक्ष्म्या उत्पत्तिः तत्रैव तत्सम्भवो नान्यत्रेति भावः आद्युलोकाच्च स्वर्गलोकपर्य्यन्तञ्च दुर्लभं उभयत्र अन्यारभ्येत्यादिना पञ्चमी पर्य्याङ्गौ त्यागसीमार्थौ आङ् व्याप्तिसीम्नोस्त्यागेऽन्याविल्युक्तेः वर्जनार्थपरेर्विभाषया द्वित्वमभिधानात् । ६९ ॥ भ०

प्रपीतमधुका भृङ्गैः सुदिवेवारविन्दिनी।
सत्परिमललक्ष्मीका नापुंस्कासीति मे मतिः ॥ ७० ॥

---

आपीत्यादि। परि सर्वतो मार्जनमिति परिमलः कलव-पश्चेत्यधिकृत्य मृजेष्टिलोपश्चेति कलप्रत्यय औणादिकः इह सुरतोपभोगविमर्दः परिमलोऽभिप्रेतः तस्य लक्ष्मीः तत्कृतत्वात् सती विद्यमाना परिमलशोभा यस्याः उरःप्रभृतिभ्यः कप् सा त्वमपुंस्का अविद्यमानभर्त्तृका नासीति मे मतिः पूर्ववत्कप्। किमिव सुदिवेवारविन्दिनी पद्मिनी शोभनन्दिवा नीहाराद्यभावाद्दिवा दिवसं यस्याः सुप्रातेत्यादिना अच् आपीतमधुका भृङ्गैः आपीतम्मधु यस्याः शेषाद्विभाषेति कप् यथेयं सत्परिमललक्ष्मीका तथा त्वमपीति ॥ ७० ॥ ज० म०

प्रपीत्यादि। त्वं न अपुंस्कासि किन्तु विद्यमानभर्तृकासीति मे मम मतिः यतः सती परिमलस्य लक्ष्मीर्यस्यास्तादृशी। विमर्दोत्थे परिमलो गन्धे जनमनोहर इत्यमरः। सुरते भोगविमर्द एव परिमल इति जयमङ्गला। पुंलक्ष्मीभ्यामेकवचनान्ताभ्यां को बहुव्रीहाविति परः स्वमते लक्ष्मीशब्दात् ऋतः क इति कः अपुंस्केति पुंवत्स्त्र्यु त्नपुंस्क इति ज्ञापकात् ऋतः कः इत्यस्य योगविभागेन क्वचिदन्यत्रापि क इति बोध्यं स्वार्थे को वा यथा भृङ्गैः प्रपीतं मधु यस्यास्तादृशी सुदिवा अरविन्दिनी पद्मिनी तथा त्वमपि सत्परिमललक्ष्मीका शोभनं नीहारादिरहितं दिवा दिनं यस्याः सुपूर्वात् दिवाशब्दाद्बहुव्रीहौ अदिति परः स्वमते दिवाशब्दात् स्वार्थे ष्णः तस्यानित्त्वविवक्षया न ङीप् वृद्धिश्च यद्वा शोभने दिवसे इति सप्तम्यन्तं रूपम्। दिवाशब्दोऽयमव्ययः ॥ ७० ॥ भ०

मिथ्यैव श्रीः श्रियम्मन्या श्रीमन्मन्यो मृषा हरिः ।
साक्षात्कृत्याभिमन्येऽहं त्वां हरन्तीं श्रियं श्रियः ॥ ७१॥
नोदकण्ठिष्यतात्यर्थं त्वामैक्षिष्यत चेत् स्मरः ।
खेलायन्ननिशं नापि सजूःकृत्य रतिं वसेत् ॥ ७२ ॥

---

मिथ्यैवेत्यादि। श्रियः श्रियं रूपसम्पदं हरन्तीमभिभवन्तीं त्वां साक्षात्कृत्य प्रत्यक्षीकृत्य विभाषा कृञीत्यनुवर्त्तमाने साक्षात्प्रभृतीनि चेति गतिसंज्ञा गतिसमासे ल्यबादेशः। अहमभिमन्ये किं मिथ्या श्रीः श्रियम्मन्या अहमेव श्रीर्नान्येति मन्यमाना श्रीर्मिथ्या नैव श्रीः किन्तु त्वमेवेति आत्ममाने खश् दिवादित्वात् श्यन् इच एकाचोऽम्प्रत्ययवच्चेत्यम्भावः तस्यामः प्रत्ययत्वान्मलोपाभावः न विभक्तौतुस्मा इति वचनात् अचीतीयङादेशः क्विवन्ताधातुत्वन्न जहतीति क्विवचोत्यादिना श्रयतेरौणादिकः क्विप् हरिश्चात्मानं श्रीमन्तं मन्यमानो मृषा न श्रीमान् यस्य त्वं स एव श्रीमानित्यहमभिमन्ये ॥ ७१ ॥ ज० म०

मिथ्यैवेत्यादि श्रिया लक्ष्म्याः श्रियं शोभां हरन्तीं जयन्तीं वा त्वां साक्षात्कृत्य अहमेवमभिमन्ये श्रीर्लक्ष्मीर्मिथ्यैवात्मानं श्रियं मन्यते हरिरपि मृषा आत्मानं श्रीमन्तं मन्यते त्वमेव श्रीस्त्वदीयशोभाहरणात् त्वत्पतिरेव त्वद्योगात् श्रीमानिति भावः मन्यात् स्वार्थ इति खश् शित्वात् दिवसुतुदेति यन् खित्यव्याजरुष इति एकाजिजन्तत्वात् श्रीशब्दस्य ह्रीकान्तत्वं हस्तेपाणौप्राध्वमित्यादिना समासपक्षे व्यादनञः क्त्वो ल्यप् साक्षादादेरभूततद्भावे कृञः क्त्वो यप् वेति परः ॥ ७१ ॥ भ०

नोदेत्यादि। स्मरभार्य्या रतिः सापि रूपेण निकृष्टेति दर्शयति चेत् यदि स्मरः त्वामैक्षिष्यत दृष्टवानभविष्यत् तदा अत्यर्थं नोदकण्ठिष्यत रतिम्प्रति भृशमुत्कण्ठितो नाभविष्यत्

वल्गूयन्तीं विलोक्य त्वां स्त्री न मन्तूयतीह का ।
कान्तिं नाभिमनायेत को वा स्थाणुसमोऽपि ते ॥७३॥

ईर्ष्यदर्शने इति कठिशोक इति भौवादिकात् क्रियातिपत्तौ लृङ् नापि रतिं स्वभार्य्यां सजूःकृत्य सहायीकृत्य वसेत् अपितु परित्यजेत्। अत्र क्रियातिपत्तिर्न विवक्षिता किन्तु हेतुहेतुमद्भावः नापि रतिं सजूःकृत्य वसेत् यदि त्वामीक्षेतेति हेतुपदमभ्यूह्य हेतुमद्भावदर्शनात् ऊर्य्यादिषु सजूः सहार्थ इति वचनात् गतिसंज्ञा खेलायन् अनिशं क्रीडन् सर्वदा खेलाशब्दात् कण्ड्वादित्वात् यक् ॥ ७२ ॥ ज० म०

नोदेत्यादि। रतिरपि न ते तुल्येति दर्शयन्नाह स्वयं कामश्चेत् यदि त्वां ऐक्षिष्यत तदा अत्यर्थं न उदकण्ठिष्यत रतिं प्रति भृशमुत्कण्ठितो नाभविष्यत ईर्ष्यदर्शने कठिङ् आध्याने उभयत्र ध्वर्थासम्भवे लृ नापि रतिं स्वभार्य्यां सजूःकृत्य सहायीकृत्य अनिशं निरन्तरं खेलायन् क्रीडयन् वसेत् तां परित्यजेदेव यदि त्वां पश्येत् इति हेतुपदमत्र बोध्यं भव्ये वा फलहोत्वोरित्यस्य योगविभागाल्लृतेऽपि खौ भव्येऽपि न क्षतिः विलासार्थात् खेलाशब्दात् कण्ड्वादित्वात् करोत्यर्थे क्यः सजुःशब्दोऽयमव्ययः सहार्थे वर्त्तते साक्षादादित्वात् हस्तेपाणौ प्राध्वं इत्यादिना समासः ॥ ७२ ॥ भ०

वल्ग्वित्यादि । त्वां वल्गूयन्तीं शोभमानां विलोक्य न मन्तूयति स्त्रीह का इह जगति का स्त्री न मन्तूयेत् न कुप्येत् सर्वदा कुप्यत्येव ईर्ष्यायुक्तत्वात् स्त्रीणामसम्भावने लिङ् वल्गुमन्तुशब्दाभ्यां कण्ड्वादित्वाद्यक् को वा को नाम स्थाणुसमोऽपि काष्ठतुल्योऽपि गुणदोषानभिज्ञत्वात्ते तव कान्तिं

दुःखायते जनः सर्वः स एवैकः सुखायते।
यस्योत्सुकायमाना त्वं न प्रतीपायसेऽन्तिके ॥ ७४ ॥

---

विलोक्य नाभिमनायेत पूर्वमदृष्टत्वादनभिमनाः सन् अभिमनाः सचेता भवेत् पूर्ववल्लिङ् अभिमनसो भृशादित्वात् क्यङ् सलोपश्च महादेवतुल्यो वा आस्तामन्यः सोऽपि तावदभिमनायते ॥ ७३ ॥ ज० म०

वल्ग्वित्यादि। इह जगति का स्त्री वल्गूयन्तीं शोभमानां त्वां विलोक्य न मन्तूयति न ईर्ष्यति स्वपतिवैराग्यशङ्कया सर्वैव कुप्यतीत्यर्थः वल्गुमन्तुभ्यां कण्ड्वादित्वात् क्यः घोऽज्यरे को वा स्थाणुसमोऽपि महादेववज्जितेन्द्रियोऽपि काष्ठवन्नीरसोऽपि वा तव कान्तिं विलोक्य न अभिमनायेत प्रीतमना न भवेत् अपितु सर्व एवाभिमनायेत भृशादेश्च्व्यर्थे वेति पाक्षिको ङ्यः सलोपश्च घोऽज्यरे प्रोक्त्यासम्भावने इति ल्ङौ ॥ ७३ ॥ भ०

दुःखेत्यादि। स एवैको जनः सुखायते सुखं वेदयते यस्यान्तिके समीपे न त्वम्प्रतीपायसि न प्रतिकूलवर्त्तिनी भवसि उत्सुकायमाना उत्कायमाना सती यस्य पुनरन्तिके उत्सुकायमाना प्रतीपायसि स सर्वो जनः दुःखायते दुःखं वेदयते सुखदुःखशब्दाभ्यां सुखादिभ्यः कर्त्तृवेदनायामिति क्यङ् उत्सुकप्रतीपशब्दाभ्यां भृशादित्वात् ॥ ७४ ॥ ज० म०

दुःखेत्यादि। यस्यान्तिके समीपे त्वं उत्सुकायमाना उत्सुकीभवन्ती न प्रतीपायसे न प्रतिकूलीभवसि स एवैको जनो जगति सुखायते सुखमनुभवति अन्यः सर्वो जनो दुःखायते दुःखमनुभवति सुखदुःखशब्दाभ्यां शब्दसुखकष्टादेरिति वेदे ङ्यः केचित् तु सुखदुःखयोस्तदाश्रयेऽपि वर्त्तमानत्वात् असुखः

कः पण्डितायमानस्त्वामादायामिषसन्निभाम् ।
त्रसन् वैरायमाणेभ्यः शून्यमन्ववसद्वनम् ॥ ७५ ॥
ओजायमाना तस्यार्घ्यं प्रणीय जनकात्मजा ।
उवाच दशमूर्द्धानं सादरा गद्गदं वचः ॥ ७६ ॥

---

सुखो भवति अदुःखो दुःखो भवति इत्यर्थे डाच् लोहितादिः पञ्चेति क्यमाहुः उत्सुकप्रतीपाभ्यां भृशादित्वात् च्व्यर्थे क्यः। केचित्तु प्रतीपशब्दात् धान्क्यक्षीत्यादिना आचारे क्यमाहुः ॥ ७४ ॥ भ०

कः पण्डीत्यादि। पण्डितायमानः अपण्डितः कथमपि पण्डितो भवन् भृशादित्वात् क्यङ् त्वामामिषसन्निभां सर्वजनप्रार्थनीयत्वात् आदाय गृहीत्वा कः शून्यं वनमन्ववसत् शून्ये वने अवसदित्यर्थः उपान्वध्याङ् वस इति कर्मसंज्ञा। कीदृशः त्रसन् बिभ्यत् वैरायमाणेभ्यः वैरं कुर्वाणेभ्यः शब्दवैरेत्यादिना क्यङ् भीत्रार्थानामित्यपादानसंज्ञा ॥ ७५ ॥ ज० म०

क इत्यादि। कः पण्डितायमानः अपण्डितः पण्डितोभवन् आमिषसन्निभां लोभ्यद्रव्यतुल्यां त्वाम् आदाय गृहीत्वा शून्यं वनम् अन्ववसत् वसति स्म कर्मक्रियेत्यादिना डे ढं पण्डितात् भृशादित्वात् ङ्गः वैरायमाणेभ्यः वैरं कुर्वाणेभ्यः त्रसन् शत्रुभयाभावे एवं कर्त्तुमनुचितमिति भावः वैरात् शब्दादित्वात् शब्दसुखकष्टादेरिति क्ती क्यः यतोऽपायभीति अपादानसंज्ञा। आमिषं पलले लोभ्ये सम्भोगोत्कारयोरपि। आमिषं सुन्दराकारे रूपादिविषयेऽपि चेति विश्वः ॥ ७५ ॥ भ०

ओजेत्यादि। एवमुक्तवति रावणे जनकसुता दशमूर्द्धानमुवाच दश मूर्द्धानः शिरांसि यस्य तस्यार्घ्यम्प्रणीय दत्त्वा

महाकुलीन ऐक्ष्वाके वंशे दाशरथिर्मम ।
पितुः प्रियङ्करो भर्त्ता क्षेमकारस्तपस्विनाम् ॥ ७७ ॥

अतिथिरयमिति सम्प्रदानस्य शेषत्वेन विवक्षितत्वात् षष्ठी । ओजायमाना ओज इवाचरन्ती कर्त्तुः क्यङ् सलोपश्च ओजसोऽप्सरसो नित्यमिति वचनात् किञ्चिल्लज्जापरित्यागात् तेजस्विनी भवन्तीत्यर्थः किमुवाच वचो वक्ष्यमाणं सादरा सती परिव्राजक इति गद्गदमनभिव्यक्तमसंस्कृतत्वात् ॥७६॥ ज० म०

ओजेत्यादि । जनकात्मजा सादरा सती तस्य कपटपरिव्राजकस्य अर्घ्यं प्रणीय अतिथिबुद्ध्या दत्त्वा दशमूर्द्धानं दश मूर्द्धानो यस्य तं रावणं गद्गदं लज्जया अन्तर्भिया वा सम्यगनभिव्यक्तं वचो वक्ष्यमाणम् उवाच ओजायमाना किञ्चिल्लज्जापरित्यागात् ओजस्विनीवाचरन्ती ओजःशब्दात् धर्मिप्रधानात् धान्ध्यक्तीति क्यः सलोपश्च भृशादित्वात् च्व्यर्थे वा क्यः तस्य इति सम्प्रदानस्य सम्बन्धविवक्षायां षष्ठी प्रणीयेत्यस्य समीपे स्थापयित्वा इति वार्थः मूल्ये पूजाविधावर्घः अर्घाय इदमित्यर्थे विकारसङ्घे ति यः ॥ ७६ ॥ भ०

महेत्यादि । यदुक्तं तेन कं रहस्युपतिष्ठसे इति अस्य प्रतिवचनम् । मम भर्त्ता महाकुलीनः महाकुलस्यापत्यमिति महाकुलादञ्खञाविति खञ् किमादित्यवंशसम्भवः किं सोमवंशसम्भवो वा महाकुलस्यापत्यमित्याह ऐक्ष्वाके वंशे इक्ष्वाकूणामयमैक्ष्वाकः दाण्डिनायनेत्यादिना टिलोपनिपातनम् । अन्ये तत्र सन्तीत्याह दाशरथिः दशरथस्यापत्यं यः स मम भर्त्ता महाकुलीनः । कीदृशः पितुः प्रियङ्करः अनुकूलकारी तपस्विनाञ्च क्षेमकारः क्षेमप्रियमद्रेऽणिति चकारात् खच् ॥ ७७ ॥ ज० म०

महेत्यादि । कं रहस्युपतिष्ठसे इति रावणप्रश्ने उत्तर-

निहन्ता वैरकाराणां सतां बहुकरः सदा ।
पारश्वधिकरामस्य शक्तेरन्तकरो रणे ॥ ७८ ॥

---

मिदम् । मम भर्त्ता दाशरथिः प्राधान्यात् विशेषेण महिम्ना च ज्येष्ठ एव गम्यते दशरथस्यापत्यं वाह्वाद्यत इति अदन्तत्वात् णिः णित्ते त्रिः ऐक्ष्वाके वंशे महाकुलीनः इक्ष्वाकुनामा कश्चित् सूर्य्यवंशसम्भवः तस्यापत्यमिति तद्भवे वंशे इत्यर्थाद्गम्यते शिवादित्वात् ष्णः ओर्लोपोऽकद्रुपाण्ड्वोरिये इत्यत्र एयस्य अस्येति समासात् उकारलोपः ये तु केवलष्णेयप्रत्यय इति व्याचक्षते तन्मते योगविभागात् महाकुले विद्यमानः ढघेकादिति णीनः महाकुलीन इति पाठे अनित्त्वविवक्षया न त्रिः महाकुलस्यापत्यमिति केचित् पितुः प्रियङ्करः प्रियं करोतीति क्षेमप्रियामद्राल्क्वेति खः तस्य विकल्पपक्षे तपस्विनां क्षेमकारः कुशलकर्त्ता ढात् षण् ॥ ७७ ॥ भ०

निहेत्यादि । वैरकाराणां शत्रूणां वैरपूर्वात् कञो नशब्दश्लोकेत्यादिना टे प्रतिषिद्धे अणेव भवति निहन्तेति तृजन्तस्य प्रयोगः तत्र कर्मणि षष्ठी सतां धर्मे स्थितानां बहुकरः बहुकार्य्यं करोतीति दिवाविभेति टः स्त्रीविवक्षायान्तु किं यत्तद्बहुष्विति करोतेरच् आङ्परयोः खनिसृभ्यामिङ्क्षेत्यौणादिकः कुः परशुशब्दः तत्पर्य्याय एवाव्युत्पन्नः परश्वधशब्दः सः प्रहरणं यस्य परश्वधात् ठञ्च तस्य परशुरामस्य सम्बन्धिन्याः शक्तेः सामर्थ्यस्यान्तकरो विनाशयिता अन्तं करोतीति पूर्ववट्टः रणे संग्रामे तत्र भवः । ७८ ॥ ज० म०

निहेत्यादि । तथा वैरकाराणां निहन्ता ढात् षण् कर्मणि षष्ठी सतां साधूनां सदा सर्वदा बहूनि कार्य्याणि करोतीति उत्कृष्टः रणे पारश्वधिकरामस्य जामदग्न्यस्य शक्तेः

अध्वरेष्विष्टिनां पाता पूर्त्ती कर्मसु सर्वदा।
पितुर्नियोगाद्राजत्वं हित्वा योऽभ्यागमद्वनम्॥ ७९॥

सामर्थ्यस्य अन्तकरो नाशयिता परश्वधेन परशुना प्रहरतीति ष्ठिकः परान् श्यति खण्डयतीति परशुः परश्वधस्वेति निपातनात्॥ ७८॥ भ०

अध्वेत्यादि। इष्टमेभिरिति इष्टिनो यज्वानः इष्टादिभ्यश्चेतीनिः। किमिष्टवन्तः अध्वरान् कर्माणि तत्र क्तस्येन्विषयस्येति कर्मणि सप्तमी अध्वरेष्विष्टिनामिति कर्मणि षष्ठी क्तयोगे पाता रक्षिता पूर्त्ती कर्मसु सर्वदा पृणोतेर्निष्ठायामुदोष्ठ्यपूर्वस्येत्युत्वम् न ध्याख्येत्यादिना निष्ठानत्वप्रतिषेधः पूर्त्तमनेनेति पूर्ववदिनिः किं पूर्त्तमिति सर्वदा श्राद्धादिकर्मणि पूर्ववत् सप्तमी स राजत्वं राज्यम् हित्वा त्यक्त्वा वनमभ्यागमत् आभिमुख्येन आगतवान् लुङ् च्लेरङि रूपम् पितुर्नियोगात् नायोग्यत्वात् स मे भर्त्तेति योज्यम्॥ ७९॥ ज० म०

अध्वर इत्यादि। तथा अध्वरेषु इष्टिनां यज्वनां पाता रक्षिता पालरक्षणे इष्टं यजनं भावे क्तः ढघेक्तीति कर्मणि षष्ठी सर्वदा कर्मसु पुर्त्ती पूर्त्तं पूरणं भावे क्तः सूत्वाद्योदित्वादौ पूर्वजनान्न क्तस्य नः वृदुश्रिजूर्णोरिति इम्निषेधः कर्मोपादानेऽपि भावे क्तः अध्वरान् इष्टमेभिः कर्माणि पूर्त्तमनेन्न चेत्यर्थे इष्टादेरिष्टमनेनेत्यादावर्थे कर्त्तरि वाच्ये इन्प्रत्ययो भवेदिति परः स्वमते क्तेनाढे इति ज्ञापकात् क्तान्तात् कर्त्तरि इन् तद्योगे कर्मणि सप्तमी किंवा इष्टपूर्त्ताभ्यां भावक्तान्ताभ्यां नैकाजादिति अस्त्यर्थे इन् अध्वरकर्मभ्यां विषये सप्तमी। केचित्तु अध्वरा इष्टा एभिः कर्माणि पूर्त्तान्यनेन चेति कर्म-

पतत्रिक्रोष्टुजुष्टानि रक्षांसि भयदे वने ।
यस्य बाणनिकृत्तानि श्रेणीभूतानि शेरते ॥ ८० ॥
दीव्यमानं शितान् बाणानस्यमानं महागदाः ।
निघ्नानं शात्रवान्नामं कथं त्वं नावगच्छसि ॥ ८१ ॥

---

क्तादिन् कर्त्तरीत्याहुः । यः पितुराज्ञया राजत्वं हित्वा त्यक्ता वनमभ्यागमत् स मे भर्त्तेति योज्यम् ॥ ७९ ॥ भ०

पतेत्यादि । यस्य बाणैर्निकृत्तानि छिन्नानि रक्षांसि भयदे वने दीर्घनिद्रया शेरते स मम भर्त्तेति योज्यम् शेरते इति शीङोरुट् कोष्टशानि अश्रेणयः श्रेणयो भूतानि ऊर्यादिच्विडाचश्चेति च्व्यन्तानां कुगतिप्रादय इति सः च्वौ चेति दीर्घः च्व्यर्थानान्तु श्रेण्यादयः कृतादिभिरित्ययं विषयः पतत्रिभिः क्रोष्टुभिश्च जुष्टानि परिवृतानि ॥ ८० ॥ ज० म०

पततीत्यादि । वसन् वैरायमाणेभ्य इति वाक्ये तस्य त्रासो नास्तीत्युत्तरमिदं यस्य बाणैः शरैर्निकृत्तानि खण्डितानि रक्षांसि भयदे वने शेरते पतितानि सन्तीत्यर्थः स मे भर्त्तेति सम्बन्धः शीङः की अन्ते शीङो रे णुः मान्तोरम् मान्तोऽदन्तः अश्रेणयः श्रेणयोभूतानि श्रेणिभूतानि च्विः कृभ्वस्त्वभूततद्भाव इति च्विः दीर्घश्च त्वोवमान्तो लोप्य इति च्विलोपः । पतत्रिभिः मृगादिभिः क्रोष्टुभिः शृगालैश्च जुष्टानि परिवृतानि जुषमुदिसेवे ॥ ८० ॥ भ०

दीव्येत्यादि । शितांस्तीक्ष्णान् बाणान् दीव्यमानं क्षेप्तुं शक्तन्तच्छीलं वा अनेकार्थत्वाद्धातूनान्दिवेस्ताच्छील्यवयोवचनेत्यादिना चानश् दिवादिभ्यः श्यन् महागदाः अस्यमानं क्षेप्तुं शक्तन्तच्छीलं वा पूर्ववच्चानश् शात्रवान् शत्रून् प्रज्ञादित्वादण् निघ्नानं हन्तुं शक्तन्तच्छीलं वा पूर्ववत् प्रत्ययः

भ्रातरि न्यस्य यातो मां मृगाविन्मृगयामसौ ।
एषितुं प्रेषितो यातो मया तस्यानुजो वनम् ॥ ८२ ॥

---

हन्तेर्गमहनेत्युपधालोपः होहन्तेरिति कुत्वम् एवंविधं रामं कथं नावगच्छसि तेन कर्मणा सर्वलोकविदितत्वादिति भावः ॥ ८१ ॥ ज० म०

दीव्येत्यादि । कथं त्वं राममपि नावगच्छसि न जानासि सर्वलोकप्रसिद्धकर्मत्वात् । तथाहि शितान् बाणान् दीव्यमानं तीक्ष्णैः शरैः क्रीडाशीलं विजिगीषाशीलं वा दिव्युजिगीषेच्छा-पणद्यूती क्रीड़ागत्योः दिवोधेवेति करणे द्वितीया मद्दतोर्गदा क्षस्यमानं क्षेप्तुं शक्तं उत्क्षेपणयोग्ये वयसि वर्त्तमानं वा क्षेप्तुं शीलं यस्येति वा भ्रातृवान् निघ्नानं निहन्तुं शक्तं सर्वत्र शक्तिवयस्ताच्छील्ये शतुः शानः हन्तेर्हन्गमित्यु ङ्लोपे हनोघ्नोघ्नः शतुरेव भ्रातृवः स्वार्थे ष्णः ॥ ८१ ॥ भ०

भ्रातरीत्यादि । यद्येवं क्वासावित्याह । असौ रामो मां भ्रातरि न्यस्य अर्पयित्वा मृगयामाखेटकं यातः मृगेः स्वार्थि-को णिच् अदन्तत्वाच्च गुणो न भवति तदन्तात् कृञ् शचेति अधिकृत्य परिचर्य्या परिसर्य्या मृगयाव्याख्यानासुपसङ्ख्यान-मिति भावे शप्रत्ययः यक् अल्लोपाभावश्च टाप् मृगान्विध्य-तीति मृगावित् क्वासौ भ्रातेति चेदाह तस्यानुजः कनिष्ठो मया प्रेषितः सन् यातो वनम् अनु पश्चाज्जायत इति अन्ये-ष्वोऽपि दृश्यते इति डः अनौ कर्मण्युक्तमकर्मण्यपि भवति किमर्थम् एषितुम् तमेव ज्ञातुम् इषुगताविव्यस्य रूपम् ज्ञानार्थत्वात् प्रेषित इति तस्यैव रूपम् ॥ ८२ ॥ ज० म०

भ्रातरीत्यादि । तथापि त्वामेकाकिनीं हित्वा त्यक्त्वा कुतो गत इत्याह असौ रामो मां भ्रातरि न्यस्य समर्प्य मृगयां

अथायस्यन् कषायाक्षः स्यन्नस्वेदकणोल्बणः ।
सन्दर्शितान्तराकूतस्तामवादीद्दशाननः ॥ ८३ ॥
कृते कानिष्ठिनेयस्य ज्यैष्ठिनेयं विवासितम् ।
को नग्नमुषितप्रख्यं बहु मन्येत राघवम् ॥ ८४ ॥

---

यातो गतः मृगान् विध्यतीति मृगावित् स क्वेत्याह तस्यानुजोऽपि मया प्रेषितः प्रस्थापितः सन् एषितुं ज्ञातुं अर्थाद्रामं वनं गतः सर्वे गत्यर्था ज्ञानार्था इति वचनात् इषगतावित्यस्य ज्ञानार्थत्वम् । अनुजातोऽनुजः जनजनादिति डः ॥ ८२ ॥ भ०

अथेत्यादि । अथैवमुक्तो जानक्या दशाननस्तामवादीत् उक्तवान् आयस्यन् क्रोधाविष्टत्वात् शरीरं खेदयन् यसुप्रयत्न इति दैवादिकः परस्मैपदी क्रोधादेव कषायाक्षः बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् स्यन्नैः स्रुतैः स्वेदकणैरुल्बणः उद्भटः व्याप्त इत्यर्थः स्यन्देर्निष्ठायां रूपम् संदर्शितमान्तरमन्तर्गतमाकूतमभिप्रायो येन स एवंविधः ॥ ८३ ॥ ज० म०

अथेत्यादि । अथ तयैवमुक्तो दशाननस्तां सीतामवादीत् व्रजवदेति व्रिः कीदृशः आयस्यन् तद्वाक्यैः क्रोधवशात् शरीरं खेदयन् कषायाक्षः क्रोधेन कषाये अक्षिणी यस्य स तथा सक्थ्यक्ष्णः षः स्वाङ्गे स्यन्नैः स्रुतैः स्वेदकणैरुल्बणः उद्भटः व्याप्त इत्यर्थः स्यन्दूङ्‌स्रुतौ ऊदित्त्वादिम्त्वे नेमडोक्षोदित्यादिना इमनिषेधः हसुङ्नलोपोऽणाविति नस्य लोपः सूत्वाद्योदिति क्तस्य दस्य च नः सन्दर्शितं प्रकटीकृतं आन्तरं अन्तर्गतं आकूतमभिप्रायो येन स तथा ॥ ८३ ॥ भ०

कृते इत्यादि । कनिष्ठाया अपत्यं ज्येष्ठाया अपत्यमिति स्त्रीभ्यो ढक् कल्याण्यादीनामिनङ् तयोः कल्याण्यादिषु पठितत्वात् कनिष्ठासुतस्य भरतस्य कृते निमित्ते ज्येष्ठायाः सुतः

राक्षसान् वटुयज्ञेषु पिण्डीशूरान्निरस्तवान् ।
यद्यसौ कूपमाण्डूकि ! तवैतावति कः स्मयः ॥ ८५ ॥

निरुपयोगितया विवासितः विसर्जितः विपूर्वस्य वसतेर्हेतुमण्ण्यन्तस्य निष्ठायां रूपम् तन्नग्नमुषितप्रख्यं यथा कश्चिन्मुषितो नग्नो भवति तद्वद्भूतं पूर्वकालेति सः तस्याः पूर्वापरकालत्वात् राजदन्तादित्वात्परनिपातः ईदृशं राघवं को बहु मन्येत श्लाघेत नैवेत्यर्थः ॥ ८४ ॥ ज० म०

कृते इत्यादि । को जनो राघवं बहु मन्येत श्लाघेत न कोऽपीत्यर्थः किम्भूतं कानिष्ठिनेयस्य कनिष्ठाया अपत्यस्य भरतस्य कृते निमित्तं ज्यैष्ठिनेयं ज्येष्ठाया अपत्यमपि विवासितं पित्रा परित्यक्तं राज्याद्बहिष्कृतं वसेर्ण्यिन्तात्तस्य रूपं ततएव नग्नमुषितप्रख्यं यः कश्चित् प्रथमं मुषितो निराकृतः पश्चान्नग्नो लज्जितो दिगम्बरीकृतो वा भवति तत्तुल्यं पूर्वकालस्यापरकालेनेति कर्मधारयार्थं परसूत्रं स्वमते पूर्वकालसम्बन्धात् य एव मुषितः परकालसम्बन्धात् स एव नग्न इत्येकार्थतास्त्येव अभिधानात् पूर्वकालीनस्य परनिपातः राजदन्तादित्वादिति परः ज्येष्ठाकनिष्ठाभ्यामावन्तत्वात् वाह्वाद्यतोऽवग्रावादेरिति कृतस्य ण्येयस्य कल्याणीसुभगेत्यादिना इनेयः लग्नेति ओलजडीक्रियि ओदित्त्वात् सूत्वाद्योदिति क्तस्य नकारः मग्नवज्जस्य गत्वं केचित्तु नस्जेर्नस्य निपातनात् तवर्गपञ्चम इत्याहुः ॥ ८४ ॥ भ०

राक्षेत्यादि । अध्वरेष्विष्टिनामित्यस्योत्तरमाह यद्यसौ राक्षसान् पिण्डीशूरान् पिण्डामेव शूरान् भोजने एव शूरान् पात्रेसमितादयश्चेति सः वटुयज्ञेषु कुब्राह्मणयज्ञेषु निरस्तवान् तिरस्कृतवान् हे कूपमाण्डूकि ! कूपे माण्डूकीव पूर्ववत् सः

मत्पराक्रमसंक्षिप्तराज्यभोगपरिच्छदः ।
युक्तं ममैव किं वक्तुं दरिद्राति यथा हरिः ॥ ८६ ॥

---

ढक्मण्डूकादिति चकारादण्वापत्ये एतावति स्वल्पे वस्तुनि तत्र कः स्मयः नैव युज्यते मत्पराक्रमे तु युक्तः तत्रापि मम न युक्तं वक्तुमित्याह ॥ ८५ ॥ ज० म०

राक्षसानित्यादि। अध्वरेष्विष्टिनां पातेत्यस्योत्तरमिदं वटवो ब्राह्मणास्तेषां यज्ञेषु यदि असौ रामः पिण्डीशूरान् पिण्ड्यां भोजने एव शूरान् कार्य्यान्तराक्षमान् राक्षसान् निरस्तवान् तदा एतावति अल्पेऽपि कार्य्ये हे कूपमाण्डूकि! तव कः स्मयो गर्वः विस्मयो वा मण्डूकस्य भेकस्यस्त्र्यपत्यमिति शिवादित्वात् णः कूपे माण्डूकी इव एतेनाल्पदृश्वत्वादन्ये वीरास्त्वया न दृष्टा इति ते स्मय इति सूचितं कूपमण्डूकीति पाठे जातेरत इतीप् कूपमाण्डूकीत्यत्र पिण्डीशूरान् इत्यत्र च पात्रेसमितादित्वात् चेपे तत्पुरुष इति परः स्वमते अर्थवशात् चेपो गम्यते ॥ ८५ ॥ भ०

मत्परेत्यादि। राज्यभोगादयः परिच्छदो हस्त्यश्वादिः स मत्पराक्रमेण संक्षिप्तोऽपहृतो यस्य हरेरिन्द्रस्य स यथा दरिद्राति निरर्थको भवति तन्ममैव किं वक्तुं युक्तमात्मगुणवादस्य लज्जाकरत्वात् दरिद्रातेरादादिकत्वाच्छपो लुक् ॥ ८६ ॥ ज० म०

मदित्यादि। मत्पराक्रमेण संक्षिप्तोऽपहृतो राज्यभोगपरिच्छदो हस्त्यश्वादिर्यस्य तादृशो हरिरिन्द्रो यथा यदि दरिद्राति दुर्गतो भवति तदा किं ममैव वक्तुं युक्तं अपि तु नैवेत्यर्थः आत्मगुणानुवादस्य लज्जाकरत्वात् दरिद्राच्छलु दुर्गत्याम ॥ ८६ ॥ भ०

निर्लङ्को विमदः स्वामी धनानां हृतपुष्पकः ।
अध्यास्तेऽन्तर्गिरं यस्मात् कस्तन्नावैति कारणम् ॥ ८७ ॥
भिन्ननौक इव ध्यायन् मत्तो बिभ्यद्यमः स्वयम् ।

---

निर्लङ्क इत्यादि । यस्मात् कारणात् धनानां स्वामी धनदः अन्तर्गिरमध्यास्ते अध्यासितवान् गिरेः कैलासस्यान्तर्मध्ये विभक्त्यर्थेऽव्ययीभावः गिरेश्च सेनकस्येति टच् अधिशीङ्स्थासामिति कर्मसंज्ञा तेन तृतीयासप्तम्योर्बहुलमित्यम्भावो न भवति नाव्ययीभावादित्यमेव भवति तत्कारणम्मम पराक्रमम्मां वा को नावैति न जानाति कीदृशः निर्लङ्कः लङ्कातो निष्क्रान्तः निरादयः क्रान्ताद्यर्थे पञ्चम्येति सः एकविभक्तिचेत्युपसर्जनसंज्ञायां ह्रस्वत्वम् । हृतपुष्पकः हृतं आच्छिन्नम्पुष्पकाख्यं विमानं यस्य अतएव विमदोऽपि तदर्थः लङ्का पुष्पकञ्च धनदस्यासीत् तच्छित्वा अनेन गृहीतमिति भावः ॥८७॥ ज० म०

निर्लङ्क इत्यादि । धनानां स्वामी कुवेरः यस्मात् कारणात् अन्तर्गिरं गिरेः कैलासस्यान्तर्मध्यमध्यास्तेऽधिवसति तत्कारणं मत्पराक्रमरूपं को जनो नावैति अपितु सर्वएव जानाति । कीदृशः कुवेरः निर्लङ्कः लङ्काया निष्क्रान्तः पञ्चमीतत्पुरुषः व्यंपूर्वमिति निरः पूर्वनिपातः निर्गता लङ्का यस्येति वा विमदः विगतो मदो दर्पो यस्य हृतपुष्पकः हृतं पुष्पकं विमानं यस्य ईदृशोऽपि मत्पराक्रमादेवेति भावः अन्तर्गिरमिति सप्तम्यर्थेऽव्ययीभावः झप् नदीपौर्णमास्याग्रहायणीगिरेर्वेति पक्षे अः कर्मक्रियेत्यादिना आधारस्य कर्मत्वम् ॥ ८७ ॥ भ०

भिन्नेत्यादि । स्वयं श्लाघ्यात्मत्तो बिभ्यत् त्रस्यन् यमो वैल-

क्षिमानं दधानेन मुखेनास्ते निरुद्यतिः ॥ ८८ ॥
समुद्रोपत्यका हैमी पर्वताधित्यका पुरी ।

---

खस्मात् मुखेन क्षिमानङ्कृष्णवर्णत्वं वर्णादृढादिभ्यः ष्यञ् चेति चकारादिमनिच् दधानेन धारयता इत्थम्भूते तृतीया निरुद्यतिः निरुद्यमः आस्ते उत्पूर्वाद्यमेः स्त्रियां क्तिन् अनुनासिकलोपः । कीदृशः ध्यायन् चिन्तयन् किमसमापद्यदहमनेन हृतसर्वस्व इति भिन्ननौक इव विपन्नपोतवणिगिव उरःप्रभृतिभ्यः कप् ॥ ८८ ॥ ज० म०

भिन्नेत्यादि । यमः मत्तो विभ्यत् त्रस्यन् स्वयं ध्यायन् चिन्तयन् निरुद्यतिर्निरुद्यम आस्ते स्वयमिति स्वयमेवात्मनोऽसामर्थ्यं जानाति न त्वन्येन बोधित इत्यर्थः क्षिमानं कृष्णत्वं दधानेन मुखेन उपलक्षितः विशेषणे तृतीया गुणादिमन् भावे । भिन्ना विदारिता नौर्यस्य तादृशो वणिक् यथा ध्यायति तथा ध्यायन् एकवचनान्तेन नौशब्देन बहुव्रीहौ क इति परः स्वमते स्वार्थे पुंवत्स्त्र्युक्तपुंस्क इति ज्ञापकात् तस् क्तेरिति अस्मदः पञ्चम्यास्तस् युष्मदस्मदोस्त्वाहाविल्यादिना मदादेशः गणोक्तकार्य्यस्य बाहुल्यात् त्यदां टेः क्ताविति अनिषेधः ञिभीलिभीत्यां शतृ ह्वादीरिदिः अर्हेरित्य,क्तौ र्न नुम् निरुत्पूर्वात् यमः क्तौ कनतनाद्यनिमामिति मलोपः एतेन दिक्पतीनां जयादहमेव सुप्रसिद्धो ननु तथेत्यु,क्तम् ॥८८॥ भ०

एवं स्वपौरुषमप्रदर्श्य स्वीकर्त्तुमाह समुद्रेत्यादि । हे मैथिलि ! लङ्केति नाम्ना मम पुरी कीदृशी समुद्र एवोपत्यका आसन्नो यस्याः सा समुद्रोपत्यका समुद्रस्य पर्वतोपत्यकात्वात् समुद्रोपत्यकेति समासे साधुत्वं न भवति यतः संज्ञाधिकारात्

रत्नपारायणं नाम्ना लङ्केति मम मैथिलि ! ॥ ८९ ॥

---

पर्वतस्यासन्ने अधिरूढ़े उपाधिभ्यां त्यकन्प्रत्ययान्तयोरुपत्यकाधित्यकाशब्दयोः साधुत्वमुक्तम् प्रतिषेधे त्यकन् उपसंख्यानमिति प्रत्ययस्थादितीकारो न भवति । हैमी हेमविकारा प्राणिरजतादिभ्योऽञ् पर्वताधित्यका त्रिकूटपर्वतस्योपरि स्थिता रत्नपारायणं यत्र रत्नानां पारमवसानमयन्ते बुध्यन्ते तत्परीक्षकाः सर्वरत्नस्थानमित्यर्थः । दुर्गावस्थित्यानभिभवनीयतां रत्नोपचयात् समृद्धतां कथयन् प्रलोभयति ॥ ८९ ॥ ज० म०

समुद्रेत्यादि । सम्प्रति सीताप्रलोभनं क्रियते । हे मैथिलि ! लङ्केति नाम्ना ख्याता मम पुरी कीदृशी समुद्रोपत्यका समुद्रस्य उपत्यका समीपे भूमिः पर्वतस्य त्रिकूटस्य अधित्यका उपरि स्थिता अध्युपाभ्यां त्यचादित्वात् त्यबाद्यचिरेत्यादिना भवादित्वात् ऊर्द्ध्वासन्नयोस्त्यः ततः स्वार्थे कः स्त्रियामाप् काप्यनाशीरक इत्यादिना क्षिपादित्वात् न इत्वम् उपत्यकाद्रेरासन्ना भूमिरूर्द्ध्वमधित्यका इत्यमरकोषे अद्रेरित्युपलक्षणं समुद्र उपत्यका पर्वतासन्नभूमिर्यस्या इति केचित् एतेन दुर्गमत्वं सूचितं हैमी हेम्नो विकारः विकारसंघेति णः मन्वर्जेत्यादौ विकारणावर्जनात् नलोपनिषेधाभावात् न्वोर्लोपौताविति नस्य लोपः रत्नानां पारमवसानम् अयन्ते बुध्यन्ते तत्परीक्षका अत्रेति रत्नपारायणं घञलनटोघे इति आधारे अनट् स्वभावादजहल्लिङ्गता सर्वरत्नस्थानमित्यर्थः । यदाह हलायुधः "साकल्यवचनं प्राज्ञैः पारायणमुदाहृतम्" इति ।८९॥भ०

आवासे सिक्तसंमृष्टे गन्धैस्त्वं लिप्तवासिता ।
अर्पितोरुसुगन्धिस्रक् तस्यां वस मया सह ॥ ९० ॥
सङ्गच्छ पौंस्नि ! स्त्रैणं मां युवानं तरुणी शुभे ! ।

आवासे इत्यादि। तस्यां पुर्य्यां आवासे गृहे आवसन्त्यस्मिन्निति अधिकरणे घञ् मया सह त्वं वस प्रार्थनायां लोट् सिक्तसंमृष्टे पूर्वं सिक्ते पश्चात् संमृष्टे गन्धैर्लिप्तवासिता सती पूर्वं लिप्ता चन्दनादिभिर्गन्धैः पश्चाद्वासिता धूपिता संमृष्टादिभिः पूर्वकालेत्यादिना सः अर्पिता न्यस्ता उर्वी महती सुगन्धिस्रक् सुरभिमाला यस्यां सा त्वं किमिति त्वया सह वसामीति चेदाह ॥ ९० ॥ ज० म०

आवासे इत्यादि। तस्यां पुर्य्यां आवासे गृहे मया सह त्वं वस प्रार्थनायां गी पूर्वं सिक्ते पश्चात् संमृष्टे शोधिते सिक्तसंमृष्टे गन्धैश्चन्दनादिभिर्लिप्तवासिता पूर्वं लिप्ता पश्चाद्वासिता धूपैः उभयत्र पूर्वपरकालसम्बन्धादेकार्थत्वेन कर्मधारयः गन्धयतीति गन्धश्चन्दनादिः वासिता करिणी नार्य्योर्वासितं सुरभीकृते। ज्ञातमात्रे खगारावे वासितं वस्त्रवेष्टित इति विश्वः। अर्पिता न्यस्ता उर्वी महती सुगन्धिः सुरभिः स्रक् माला यस्यां तादृशी च सती स्वत्सुरभिपूतेरित्यादिना गन्धादिप्रत्ययः ॥ ९० ॥ भ०

सङ्गेत्यादि। हे पौंस्नि ! पुमांसमर्हतीति तद्धिताय वा अर्हार्थे हितार्थे वा स्त्रीपुंसाभ्यां नञ्स्नञौ स्त्रीप्रत्यये नञस्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानमिति मां युवानन्तरुणं सङ्गच्छ सङ्गीकुरु गमेः प्रार्थनायां लोट् इषुगमीत्यादिना छत्वं समयसृच्छेत्यादिना तङ् न भवति सकर्मकत्वात् विशेषतः स्त्रैणं स्त्रियै हितमर्हन्तं वा पूर्ववत् प्रत्ययः तरुणी युवती

राघवः प्रोष्यपापीयान् जहीहि तमकिञ्चनम् ॥ ८१ ॥

सती शुभे ! कल्याणि ! शोभते इति इगुपधलक्षणः कः । ममापि तादृशो भर्त्तास्तीति चेदाह राघवः प्रोष्यपापीयानिति पापशब्दाद्विन्मतोर्लुगिति ईयसुन् लुक् च: मतुपः प्रोष्यपापीयानिति मयूरव्यंसकादित्वात् सः देशान्तरं यात्वा पापवत्तर अत एतमकिञ्चनन्दरिद्रं न विद्यते किञ्चन यस्येति सर्वनामाव्ययसंज्ञाया उपसर्जनप्रतिषेध इति वचनान्नाव्ययसंज्ञा तेन न विभक्तिलोपः जहीहि त्यज ईत्वस्य जहातेश्चेति वा वचनाद्विकल्पः ॥ ८१ ॥ ज० म०

सङ्गेत्यादि । हे पौंस्नि ! हे पुरुषयोग्ये ! पुरुषहिते ! वा हे शुभे ! कल्याणि ! तरुणी त्वं स्त्रैणं स्त्रीयोग्यं स्त्रीहितं वा युवानं मां सङ्गच्छ अङ्गीकुरु विधिनिमन्त्रणेत्यादिना प्रार्थनायां लो सदृशयोरावयोर्योग उचित इति भावः स्त्रीपुंसाभ्यां विकारसंघेत्यादिना ष्णः नञ् पुंस्त्रियोः तरुणशब्दान्नदादित्वादीप् शोभते इति शुभा इगुङ्त्वात् क्रगृज्ञाप्रीज्ञुङ इति कः ममापि ईदृशो भर्त्तेति चेत् आह राघवः प्रोष्यपापीयान् देशान्तरं गत्वा पापवत्तरः पापवत् शब्दात् गुणाद्वेष्ठेयसू इति ईयसुः लुङ्मदद्विनामिति वतोर्लुक् ओमंश्च डिदिति डित्त्वात् टेर्लोपः मयूरव्यंसकादित्वादत्र समास इति परः स्वमते गमकत्वात् असमासत्वेऽपि न क्षतिः तमकिञ्चनं दरिद्रं जहीहि त्यज किञ्चनेत्यव्ययेनापि समासे मयूरव्यंसकादित्वे न निपातनात् वाच्यलिङ्गतेति परः नञ् तत्पुरुषादर्शआदित्वादद्विलन्ये न विद्यते किञ्चनमस्येति बहुव्रीहौ नाव्ययकार्य्यमिति केचित् स्वमते द्रविणे किञ्चनं क्लीव इति कोषादनव्ययेन किञ्चनशब्देन समासः वस्तुनोऽप्येवमकिञ्चनशब्दो निर्धनवाची

अश्नीतपिबतीयन्ती प्रसिता स्मरकर्मणि।
वशेकृत्य दशग्रीवं मोदस्व वरमन्दिरे ॥ ९२ ॥

---

वाच्यलिङ्गः तथाच कोषः निःस्वाकिञ्चनदुर्विधा इति श्रायो-रित्यादिना ह्राक इत्वम् ॥ ९१ ॥ भ०

अश्नीत्यादि। अश्नीत पिबतेति मयूरव्यंसकादित्वात् सः तत्र ह्याख्यातमाख्यातेन क्रियासातत्य इति पठ्यते सततमश्नीत पिबतेत्येवम्भृत्यजनानादेष्टुमिच्छतीति सुप आत्मनः क्यच् अश्नीतपिवतीयन्ती प्रसिता स्मरकर्मणि आधिक्येन प्रवृत्ता कामव्यापारे प्रसितोत्सुकाभ्यां तृतीया चेति चकारात् सप्तमी वशेकृत्यानुवर्त्तिनन्दशग्रीवङ्कृत्वा साचात्प्रभृतित्वाद्गति-संज्ञा मोदस्व हर्षं जनय वरमन्दिरे श्रेष्ठगृहे स्थिता ॥ ९२। ज० म०

अश्नीत्यादि। दशग्रीवं वशेकृत्य आयतीकृत्य वरमन्दिरे श्रेष्ठगृहे त्वं मोदस्व हर्षं जनय वशे इति सप्तम्यन्तप्रतिरूपकोऽव्ययः हस्तेपाणावित्यादिना साचादादित्वात् समासः कीदृशी अश्नीतपिबतेति भृत्यजनानादेष्टुमिच्छन्ती अश्नीत-पिबतेति सततं नियोगो यस्यां क्रियायां सा अश्नीतपिबता दैक्य सोऽन्वय इति समासः तत्र हि सामान्यत्वात् पदमावस्यैव ग्रहणं तेन क्वचित् स्याद्यन्तस्य क्वचित् त्याद्यन्तस्य क्वचिदुभयस्य चैक्यमिति लब्धं त्याद्यन्तस्यान्यप्रत्ययान्तत्वाभावेऽपि समासे अन्यपदार्थत्वाल्लिङ्गत्वं तेनात्र क्रियाया विशेषणार्थत्वात् स्त्रियामत आप् सोर्लुक्त्येचेत्यत्र स्यादित्तेरेव ग्रहणमभिधानात् तेन त्यादिस्तेर्न लुक् निपाताद्रूपसिद्धिरिति परं अश्नीतपिबतामिच्छतीति क्यः स्मरकर्मणि कामचेष्टायां प्रसिता

मास्म भूर्ग्राहिणी भीरु! गन्तुमुत्साहिनी भव।
उल्लासिनी च भूत्वा मे वक्षःसम्मर्दिनी भव॥ ९३॥
तां प्रातिकूलिकीं मत्वा जिहीर्षुर्भीमविग्रहः।
बाहूपपीडमाश्लिष्य जगाहे द्यां निशाचरः॥ ९४॥

---

तत्परा प्रसितोत्सुकाभ्यां तात्पर्य्ये तृतीयासप्तम्याविति परः स्मरते विषयविवक्षा षिञबन्धने क्तः॥ ९२॥ भ०

मास्मेत्यादि। हे भीरु! मास्म भूर्ग्राहिणी प्रतिकूला मा भूर्न यास्यामीत्यमुमर्थं गृह्णामीति कृत्वा स्मोत्तरे लङ् चेति चकारात् लुङ् गन्तुमुत्साहिनी उद्युक्ता भव शकधृषेत्यादिना तुमुन् उत्साहिनीति सहोपपदत्वात् ततश्चालङ्कृतशरीरत्वादुल्लासिनी शोभमाना भूत्वा नोऽस्माकं वक्षःसम्मर्दिनी स्तनाभ्यामुरःस्थलस्य पीडिका भव ग्रहोत्साहोल्लाससम्मर्दानां ग्रहादिषु पठितत्वात् कर्त्तरि णिनिः ऋन्नेभ्यो ङीप्॥ ९३॥ ज०म०

मास्मेत्यादि। हे भीरु! ग्राहिणी प्रतिकूलार्थग्राहिणी त्वं मास्म भूः न भव गन्तुमुत्साहिनी उद्युक्ता भव उल्लासिनी गत्वालङ्कारादिभिः शोभमाना भूत्वा नोऽस्माकं वक्षःसम्मर्दिनी स्तनाभ्यामुरःस्थलस्य पीडिका भव सर्वत्र ग्रहादित्वाण्णिन् चकारः समुच्चये अस्मद एकत्वे बहुत्वमभिधानात् गौरवव्यञ्जकम्॥ ९३॥ भ०

तामित्यादि। यदैवमभिधीयमाना न प्रतिपन्ना तदा तांप्रातिकूलिकीम्प्रतिकूलवर्त्तिनीं मत्वा ज्ञात्वा श्रोजःसहाम्भसा वर्त्तते इत्यधिकृत्य प्रतिकूलं वर्त्तते इत्यस्मिन्नर्थे तत्प्रत्यनुपूर्वेत्यादिना ठक् जिहीर्षुः हर्त्तुमिच्छुः भीमविग्रहः भीषणशरीरः दृष्टराक्षसशरीररूपः सुखेन क्रियते इति बाहूपपीडमाश्लिष्य बाहुभिरुपपीड्य सप्तम्याञ्चोपपीड इति चकारात्

त्रस्यन्तीं तां समादाय यातो रात्रिञ्चरालयम्।
तूष्णीम्भूय भयादासाञ्चक्रिरे मृगपक्षिणः ॥ ९५ ॥

---

तृतीयान्त उपपदे णमुल् जगाहे रथेनोत्पत्य द्यामाकाशं निशाचरो गाहते स्म दिवशब्दसमानार्थो द्योशब्द औणादिकः गमेर्डो इत्यत्र द्युतेश्चेति वचनात् औतोऽम्शसोरित्यात्वं कालापैस्तु दिव्शब्दादेव व्युत्पादयितुं सूत्रमवधीयते वाम्येति दिवः अमि विकल्पेनाकारादेश इति ॥ ९४ ॥ ज० म०

तामित्यादि। उक्तवाक्यानङ्गीकारात् तां सीतां प्रातिकूलिकीं प्रतिकूलवर्त्तिनीं मत्वा जिहीर्षुर्हर्त्तुमिच्छुर्निशाचरो रावणो भीमविग्रहो भयङ्करमूर्त्तिः सन् बाहूपपीडं बाहुभिरुपपीड्य आश्लिष्य तां गृहीत्वा द्यामाकाशं जगाहे गाङ्ङ्विलोड़े गतवानित्यर्थः तृतीयान्तादुपपीडोणमिति परः स्वमतं बाहुभ्यामुपपीड़ः पीड़नं यत्रेत्याश्लेषक्रियाविशेषणं उपपीडो घजन्तः द्यामिति द्योशब्दस्य दिव्शब्दस्य वा अमि रूपं प्रतिकूलं यथा स्यात्तथा वर्त्तते इति क्रियाविशेषणस्य कर्मत्वात् ढघेकादिति ष्णिकः ॥ ९४ ॥ भ०

त्रस्येत्यादि। त्रस्यन्तीं च तां तद्रूपदर्शनात् समादाय गृहीत्वा यातो गच्छतो रावणात् यातेः शतरि पञ्चम्यां रूपम्। किं यातो रात्रिञ्चरालयं लङ्कां रात्रौ चरतीति चरेष्टः रात्रेः कृति विभाषेति मुम् तस्माद्रावणाद्यत् भयन्ततो भयात् तूष्णीभूय तूष्णीमिति भुव इति क्त्वाचेति समासे ल्यवादेशः आसाञ्चक्रिरे आसिताः दयायासश्चेत्याम् मृगपक्षिणः मृगाश्च पक्षिणश्च समानजातीयानामिति वचनादेकवद्भावोऽत्र न भवति ॥ ९५ ॥ ज० म०

त्रस्यन्तीमित्यादि। त्रस्यन्तीं बिभ्यतीं तां सीतां समा-

उच्चैरारस्यमानां तां कृपणां रामलक्ष्मणौ ।
जटायुः प्राप पक्षीन्द्रः परुषं रावणं वदन् ॥ ९६ ॥

एते प्रकीर्णकाः ।

अतः परं टाधिकारः ।

द्विषन् वनेचराग्र्याणां त्वमादायचरो वने ।

---

दाय गृहीत्वा रात्रिञ्चरस्यालयं लङ्कां यातो गच्छतो रावणाद्भयात् मृगाश्च पक्षिणश्च तूष्णीम्भूय मौनिनो भूत्वा आसाञ्चक्रिरे स्थितवन्तः आसङ् उपवेशे विंजादीत्याम् स्वस्कृन्वामः यात इति श्रवन्तं रात्रौ चरतीति पचादित्वादन् रात्रेर्मन् वाक्षति तूष्णीमित्यव्ययं मौनार्थे वर्त्तते व्यस्त्यनुकार इत्वादिना ऊर्य्यादित्वात् समासे क्वोयप् ॥ ९५ ॥ भ०

उच्चैरित्यादि । तां सीतां जटायुः पक्षीन्द्रः रावणं परुषं निष्ठुरं वदन् प्राप प्राप्तवान् । कीदृशीं उच्चैरारस्यमानां हा राम ! हा लक्ष्मण ! इति शब्दौ द्वौ उच्चैर्महता ध्वनिना पुनः पुनारसन्तीमित्यर्थः रसेः शब्दकर्मकत्वात् क्रियासमभिहारे यङ् कृपणां दीनाम् । इति प्रकीर्णकाण्डः प्रथमः समाप्तः ॥ ९६ ॥ ज० म०

उच्चैरित्यादि । उच्चैर्यथा स्यात्तथा रामलक्ष्मणौ रारस्यमानां हा राम ! हा लक्ष्मण ! इति पुनः पुनराह्वयमानां कृपणां दीनां सीतां जटायुः पक्षिराजः प्राप रावणं परुषं निष्ठुरं वदन् वदिर्द्विकर्मकः रसशब्दे मूत्रसूत्रेत्यादिना यङ् । इति गौराङ्गमल्लीकपुत्रो भरतमल्लिकः प्रकीर्णकाण्डव्याख्यानं मुग्धबोधमतेऽकरोत् ॥ ९६ ॥ भ०

इतः परमधिकारकाण्डमुच्यते यत्र प्राधान्येनैकैकमधिकृत्य लक्षणं प्रदर्शितं तदधिकारकाण्डं शेषलक्षणेषु प्रकी

अग्रेसरो जघन्यानां मा भूः पूर्वसरो मम ॥ ९७ ॥

र्णकमेव द्रष्टव्यम् एवञ्च कृत्वा अन्तरान्तरा तत्सूचनार्थं प्रकीर्णकश्लोकाभिधानमत्र च काण्डे निर्दिष्टसंज्ञकाश्चत्वारः परिच्छेदाः। तत्र प्रथमे आद्यं टप्रत्ययमधिकृत्योच्यते। सर्गार्थस्य विवक्षितस्यापरिसमाप्तत्वात् तमेवाभिसन्धायाह। द्विषन्नित्यादि। एवञ्च कृत्वा मिश्रक उच्यते द्वयोरप्यत्र प्राधान्येन विवक्षितत्वात् परुषं वदन् कीदृशं च्चे द्विषन्! मा भूः पूर्वसरो ममेति ममाग्रतो भूत्वा मा गा इत्यर्थः पूर्वं सरतीति पूर्वे कर्त्तरीति टः यतस्त्वमग्रेसरो जघन्यानामग्रे सरतीति पुरोऽग्रत इत्यादिना टः जघन्य इति शाखादिभ्यो य इति वार्थ यः। पापानां प्रथमस्त्वम् कुतः आदायचरो वने आदाय चरतीति भिक्षासेनेत्यादिना वने चरन्तीति वनेचराः अधिकरणे चरेष्टः तेषामग्र्याः प्रधाना ऋषयः तानादय चरसि भक्षयसि कर्मणि षष्ठी॥ ९७ ॥ ज० म०

इतः प्रभृत्यधिकारकाण्डमुच्यते एकैकं विषयमाश्रित्य लक्षणप्रदर्शनं यत्र तदधिकारकाण्डं तत्रापि लक्षणान्तर सम्बन्धात् प्रकीर्णतास्तीति सूचनार्थं मध्ये मध्ये प्रकीर्णश्लोकाभिधानं विवक्षितस्य सर्गार्थस्यापरिसमाप्तत्वात् सर्गमध्ये काण्डान्तरारम्भो न दोषाय एवञ्चायं सर्गो मिश्रक उच्यते द्वयोरप्यत्र प्राधान्येन विवक्षितत्वात्। अथ टाधिकारः। द्विषन्नित्यादि परुषं वदन्निति यदुक्तं तत् किमित्याह हे वनेचराग्र्याणां मुनीनां द्विषन्! शत्रो! त्वं मम पूर्वसरोऽग्रयायी मा भूः यतस्त्वं जघन्यानां नीचानां अग्रेसरः प्रथमः वने आदाय गृहीत्वा अर्थात् सीतां चरसि गच्छसीति आदायचरः द्विषन्निति द्विषः शत्रौ शतुरिति परः स्मते द्विषच्छब्दः अनुवा-

यशस्करसमाचारं ख्यातं भुवि दयाकरम्।
पितुर्वाक्यकरं रामं धिक्त्वां दुन्वन्तमत्रपम्॥ ९८॥

---

चित्वं रूढ एव विशेषार्थे तु कौपमवदिति शब्दः उभयथा सम्बन्धे षष्ठी वने चरतीति पचादित्वादन् अभिधानात् सप्तम्यलुक् अग्रे भवोऽग्रः श्रेष्ठ उच्यते रेफान्तपाठेऽग्रशब्द एव श्रेष्ठार्थः। तथाच "अग्रमालम्बने व्राते परिमाणे पलस्य च। प्रान्ते समन्तादधिके प्रधाने प्रथमार्द्धयोः।" इति विश्वः। दामागैहागित्यादौ यव्वर्जनात् न दात्र इत्वं चरैः पूर्ववदन् गमकत्वात् दत्तार्घाः सिद्धसंघैरितिवत् क्रियायाः कारकापेक्षायामपि यवन्तेन समासः अविवक्षितकर्मत्वात् सापेक्षत्वाभावेन वा समासः असमासेऽपि न क्षतिः मयूरव्यंसकादित्वात् सापेक्षत्वेऽपि समास इति परः अग्रे इत्येकवचनान्तमव्ययं सुकुष्ट इति टः जघनं पश्चाद्भागः तत्तुल्यो जघन्यः विकारसंघेत्यादिना तुल्यार्थे ण्यः॥ ९७॥ भ०

यशेत्यादि। रामं दुन्वन्तमुपतापयन्तमत्रपन्निर्लज्जं धिक् त्वां गर्ह्यं टुदुउपतापे इत्यस्य सौवादिकस्य शतरि हुश्नुवोः सार्वधातुक इति यणादेशे रूपम्। कीदृशं रामं यशस्करसमाचारं समाचरणं समाचारः चरितं भावे घञ् यशस्करोतीति यशस्करः कृञो हेत्वित्यादिना टः विसर्जनीयस्य सः यशस्करणहेतुभूतः समाचारो यस्य ख्यातं भुवि प्रसिद्धं दयाकरं करुणाकरणशीलं ताच्छील्ये टः पितुर्वाक्यकरं पितुर्वचनानुष्ठाने अनुकूलम् आनुलोम्ये टः॥ ९८॥ ज० म०

यशस्केत्यादि। रामं दुन्वन्तम् उपतापयन्तम् अत्रपं परस्त्रीहरणेन निर्लज्जं त्वां धिक् धिक्समयेत्यादिना द्वौ टुदुउपतापे स्वादित्वात् शतरि नुः श्नुध्वोरिति वः। रामं कीदृशं यश-

अहमन्तकरो नूनं ध्वान्तस्येव दिवाकरः ।
तव राक्षस ! रामस्य नेयः कर्मकरोपमः ॥ ९९ ॥

स्कारः समाचारो यस्य तं यशः करोतीति स्वकुष्ट इति टः अत्र ढात् षष्ठिति सूत्रात् टादित्यनुवर्त्तते सेतुकखेति वेः सः क्षणो हेत्वादावर्थे ट इति परः स्वमते यशस्करी विद्येति निर्दिश्यता विद्याया यशःकरणे हेतुत्वात् हेत्वाद्यर्थः सूचितः अन्यथा विद्येति ग्रहणस्य वैयर्थ्यं स्यात् हेत्वाद्यर्थानुक्तावपि न क्षतिः सम्यगाचरणं समाचारश्चेष्टा घञ्ऽलनटोऽपे इति घञ् भुरि ख्यातं दयाकरणशीलं पूर्ववट्टः परमते ताच्छील्यार्थेऽपि पितुर्वाक्यानुष्ठानेऽनुकूलं पूर्ववट्टः परमतेऽनुकूलार्थेऽपि वाक्यशब्देनात्र तदभिधेयमुच्यते । ९८ । भ०

अहमित्यादि । हे राक्षस ! अहं तव नूनमवश्यमन्तकरः विनाशयिता । कीदृशः रामस्य नेयो वश्यः अचो यत् कर्मकरोपमः भृतकतुल्यः कर्मणि भृताविति टः ध्वान्तस्येव दिवाकरः यथान्धकारस्यान्तकरो दिवाकरः सूर्यः तथा अन्तकरदिवाकरौ दिवाविभेति टप्रत्ययान्तौ एवमुक्त्वा खं पपातेति सम्बन्धः ॥ ९९ । ज० म०

अहमित्यादि । हे राक्षस ! नूनं निश्चितम् अहं तव अन्तकरः नाशयिता अन्तं करोतीति टः यथा दिवाकरः सूर्यो ध्वान्तस्य अन्धकारस्य अन्तकरः दिवाशब्दोऽयमाधाररूपदिनवचनोऽव्ययः तेन दिवा दिवसे प्राणिनश्चेष्टायुक्तान् करोतीति निशादित्वाट्ट इति परः स्वमते दिवाशब्दोऽयमव्ययः सप्तम्यन्तं प्रायिकं तेन दिवा दिनं करोतीति पूर्ववट्टः बाहुल्याद्वा दिवा दिवसे करो रश्मिर्यस्य इति केचित् ध्वान्तमिति ध्वनेस्तमसि क्ते क्षुब्धवाढ इत्यादिना निपातः। अहं कीदृशः रामस्य नेयः वश्यः ।

सतामरुष्करं पक्षी वैरकारं नराशिनम् ।
हन्तुं कलहकारोऽसौ शब्दकारः पपात खम् ॥ १०० ॥

इति टाधिकारः ।

अतः परं प्रकीर्णकाः ।

---

वश्यः प्रणयो निभृत इत्यमरः । कर्मकरोपमः भृतकतुल्यः कर्म करोतीति टः कर्मशब्दाद् भृतौ ट इति परः ॥ ९९ ॥ भ०

सतामित्यादि । एवमुक्त्वा असौ जटायुः पक्षी खमाकाशं पपात पतितः किमर्थं नराशिनं राक्षसं हन्तुं हनिष्यामीति कीदृशं राक्षसं सतामरुष्करं धर्मे स्थितानां पीडाकरम् अरुःशब्दः पीडोपलक्षणपरः दिवाविभेति टः वैरकारं वैरकरणशीलं कलहकारः पक्षी कलहयितुमनुकूलः अनयोर्नशब्दश्लोकेति टे प्रतिषिद्धेऽणेव भवति कर्मण्यणः प्राप्तिरस्तीति टाधिकार उदाहृतः । कियत् खं पपात यावति दूरे शब्दपातस्तावत् खम् इति टाधिकारः समाप्तः ॥ १०० ॥ ज० म०

सतामित्यादि । एवमुक्त्वा असौ पक्षी जटायुर्नराशिनं राक्षसं हन्तुं खमाकाशं पपात जगाम । कीदृशं राक्षसं सतां साधूनाम् अरुष्करं व्रणकरं पीडाकरमित्यर्थः पूर्ववट्टः निष्पतञ्च इतिवत् षत्वं वैरं विरोधं करोतीति वैरकारस्तं ढात् षस्थित्यस्य कुम्भकार इत्युदाहरणेन कुम्भादेः कृञः षण् अन्यस्मात् टकृष्ट इत्यस्य विषय इति सूचितं तेनात्र कुम्भादित्वात् षण् । पक्षी कीदृशः कलहकारः कलहं करोतीति पूर्ववत् षण् एवं शब्दकारः शब्दपातमिति पाठे शब्दस्य पातो यत्रेति खविशेषणं यावद्दूरं शब्दगमनं तावद्दूरमित्यर्थः शब्दस्येव पातो गतिर्यत्रेति पतनक्रियाविशेषणं वा एतेन यथा शब्दस्य शीघ्रगमनं तथास्येति ध्वनितम् । इति टाधिकारः ॥ १०० ॥ भ०

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



धुन्वन् सर्वपथीनं खे वितानं पक्षयोरसौ।
मांसशोणितसन्दर्शं तुण्डघातमयुध्यत ॥ १०१ ॥

---

इतः प्रकीर्णकश्लोकानाह। धुन्वन्नित्यादि। असौ पक्षी अयुध्यत युध्यते स्म युधेर्दैवादिकस्य लङि रूपम् तुण्डघातमिति क्रियाविशेषणं तुण्डेन चञ्चा घातो हननं यस्मिन् युद्ध इति करणे हन इति न णमुल् कषादिषु यथाविध्यनुप्रयोगात् अहिंसार्थत्वाच्च तदारम्भस्य यथा पादघातं भूमिं हन्तीति हिंसार्थानाच्च समानकर्मकाणामित्यनेनापि न भवति समानकर्मकताभावात् अकर्मकत्वाद्युधेः तेन भावे घञ् धुन्वन् कम्पयन् खे आकाशे पक्षयोर्वितानं सर्वपथीनं सर्वः पन्था इति पूर्वकालेत्यादिना सः ऋक्पूरीति समासान्तोऽकारः सर्वपथाम् व्याप्नोतीति तत्सर्वादेरित्यादिना खः मांसशोणितसन्दर्शङ्कात् स्नेन मांसं शोणितञ्च दृष्ट्वा कर्मणि दृशिविदोः साकल्य इति णमुल् अमैवाव्ययेनेति सः ॥ १०१ ॥ ज० म०

अथ प्रकीर्णकाः। धुन्वन्नित्यादि। असौ जटायुः खे आकाशे पक्षयोर्वितानं विस्तारं धुन्वन् कम्पयन् मांसशोणितसन्दर्शं यथा स्यात् तुण्डघातं यथा स्यात् तथा अयुध्यत युध्यौङ् युद्धे मांसरक्तयोरर्थाद्रावणस्य सम्यग्दर्शो दर्शनं यत्र चेति युद्धक्रियाविशेषणं दर्शघातौ घञन्तौ परे तु साकल्येन तुण्डस्याघातो यत्र मांसं शोणितञ्च दृष्ट्वा रावणस्येत्यर्थात् दृशो णम् साकल्ये एवं तुण्डेन हत्वा तुण्डघातं तृतीयान्तादासक्तौ णम् तुण्डघातेन हृद्दसम्भवादासक्तिरत्र गम्यते इत्याहुः। वितानं कीदृशं सर्वश्चासौ पन्थाश्चेति सर्वपथः पथ्यप्पुरः से इति अः सर्वपथं व्याप्नोतीति ढघेकादिति इनः ॥ १०१ ॥ भ०

न विभाय न जिह्राय न चक्लाम न विव्यथे।
आघ्नानो विध्यमानोऽपि रणान्निववृते न च ॥ १०२ ॥
पिशाचमुखधौरेयं सच्छन्नकवचं रथम्।
युधि कद्रथवद्भीमं बभञ्ज ध्वजशालिनम् ॥ १०३ ॥

एते प्रकीर्णकाः।

---

न वीत्यादि। आघ्नानः पक्षी प्रहरन् आङो यमहन इति तङ् न विभाय न भीतः तस्मान्न जिह्राय न लज्जितः सम्यक् मया न हत इति न चक्लाम न क्लान्तः न विव्यथे व्यथो लिटीति सम्प्रसारणम् जितश्रमत्वात् विध्यमानो वा वाशब्द-श्चार्थे परेण हन्यमानश्च न विव्यथे न पीड़ां भेजे सत्वाधिक-त्वात् रणाच्च न निववृते न निवृत्तः अभग्नोत्साहत्वात् ॥ १०२ ॥ ज० म०

न वीत्यादि। असौ पक्षी आघ्नानः प्रहरन् न विभाय न भीतः मया ताड़ितोऽपि न मृत इति न जिह्राय न लज्जते स्म न चक्लाम नासमर्थो बभूव न विव्यथे न पीड़ितो भवति स्म विध्यमानः परेण ताड्यमानोऽपि रणात् न निववृते न निवृत्तः अभग्नोत्साहत्वात् सर्वत्र ठी व्यथेस्तु व्यथग्रहेति जिः आघ्नान इति आत्माङ्गढादढाच्चाहनयम इति मं किंवा आघ्नानः अनुहिंसनशक्तः शक्तिवयस्ताच्छील्ये इति शानः ॥ १०२ ॥ भ०

पिचाचेत्यादि। युधि सङ्ग्रामे पक्षी रथं बभञ्ज भग्नवान् तस्य पुष्पकादन्यत्वात् तथाहि कद्रथवत् कुत्सितरथमिव रथ-वदयोश्चेति कदादेशः धुरं वहन्ति धौरेया अश्वाः धुरो यड्ढञौ पिशाचस्येव मुखं येषान्ते धौरेया यत्र रथे तम्पिशाचमुख-धौरेयं सच्छोभनं शस्त्रङ्कवचञ्च यस्मिन् तम्भीमम्भयानकन्तथा

अतः परं श्रमधिकारः ।

सन्त्रासयाञ्चकारारिं सुरान् पिप्राय पश्यतः ।
संत्याजयाञ्चकाराथ सीतां विंशतिबाहुना ॥ १०४ ॥

धुर्य्यत्वात् ध्वजशालिनं ध्वनवन्तं शालिन्च्छब्दः किन्प्रत्यया-न्तस्तदन्तमाह अन्यस्त्वाह ध्वजेन शालितुं श्लाघयितुं शील-मस्येति णिनिः अनेकार्थत्वाद्धातूनामिति। एते प्रकीर्णकाः ॥१०३॥ ज०म०

पिशाचेत्यादि। जटायुः युधि संग्रामे रावणस्य रथं बभञ्ज कद्रथवत् कुत्सितरथमिव कत्त्रच्त्रिरथवद इति कुशब्दस्य कदादेशः। कीदृशः पिशाचस्येव मुखं येषां तेऽश्वा धौरेया यत्र धुरं वहतीत्यर्थे ढग्वेकादिति णेयः सत् शोभनं विद्यमानं वा क्षत्रं कवचं वा यस्मिन् छत्रकवचाभ्यां सह रथं बभञ्जेत्यर्थो वा भीमं भयानकं ध्वजशालिनं ध्वजयुक्तं शालिन्च्छब्दस्त-द्वत्तायां अस्त्यर्थे शालिन्प्रत्यय इति वृद्धाः। ध्वजेन शालते शोभते श्लाघादित्वाण्णिन् धातूनामनेकार्थत्वात्। शालिरत्र दीप्त्यर्थ इति केचित्। ध्वजेन शालयितुं शीलं यस्येति डल-योरैक्यमिति स्मरणात्। शाडृ श्लाघायामित्यस्य रूपमित्यपरे। शलङ्कश्लाघ इत्यस्मात् ङशाल्ककथने इत्यस्माद्वा णेर्णिन्निति केचित्। इति प्रकीर्णकाः ॥ १०३ ॥ भ०

इतः प्रभृत्याममधिकृत्याह सन्त्रेत्यादि। अथैतस्मिन् युद्धप्रस्तावे स पक्षी सीतां विंशतिबाहुना रावणेन त्याजयाञ्च-कार त्याजितवान् गत्यादिषु त्यजेरसंग्रहात् तृतीयैव भवति कस्मात्त्याजितवानित्याह सन्त्रासयाञ्चकारारिं यस्मादरिं राव-णन्त्रासितवान् अकर्मकत्वात् त्रासेर्ण्यन्तावस्थायामरेः कर्म-त्वम् आभ्यां हेतुमण्ण्यन्ताभ्याम् कास्प्रत्ययादित्यादिना आम्

असीतो रावणः कासाञ्चक्रे शस्त्रैर्निराकुलः।
भूयस्तं बेभिदाञ्चक्रे नखतुण्डायुधः खगः॥ १०५॥

आमोऽमित्वमव्यदन्तत्वात् आम इति लेलुंक् अयामन्तेत्यादिना अयादेशः आमकारान्तस्य कृत्संज्ञायाम्प्रातिपदिकत्वे प्रथमैकवचनम् तस्मायादिति लुक् स्वरादिषु आम आमिति पठितत्वादव्ययत्वम् मन्तस्यानभिव्यक्तपदार्थत्वात् कृञ्चानुप्रयुज्यत इत्यादिना लिट् परस्य कृञोऽनुप्रयोगः कर्त्रभिप्रायाभावाभावेऽनुप्रयोगे तङ् न भवति सुरांश्च पश्यतो युद्धं जटायुः पिप्राय प्रीणितवान् शत्रुत्रासनं सीतात्याजनञ्च देवानां प्रीतिः कारणम्॥ १०४॥ ज० म०

अथामधिकारः। सन्त्वेत्यादि। स पक्षी अरिं रावणं सम्यक् त्रासयाञ्चकार अतएव पश्यतो युद्धमवलोकयतः सुरान् देवान् पिप्राय प्रीणितवान्। अथ त्रासानन्तरं विंशतिबाहुना रावणेन सीतां संत्याजयाञ्चकार त्यजेर्घोऽञौजेरित्यस्य विषयाभावात् प्रयोज्यकर्त्तरि तृतीया त्यजेरकर्मकत्वात् प्रयोज्यकर्त्तुः कर्मत्वं उभयत्र प्रत्ययान्तत्वात् विंजादीत्याम् भ्वस्कृन्वाम इति कृञोऽनुप्रयोगः म्नोर्नुरित्यनुस्वारः ञपेञमनोरिति ञः। अत्र विरामस्वीकारात् अनुस्वारस्य वर्गान्तो वा भवतीति कालापाः। पिप्रायेति अनेकाचधातोराम् न त्वेकाच इत्युपन्यस्तं विंशतिबाहुना इति साभिप्रायपदेन रावणस्य त्रासाधिक्यं जटायोर्वीर्य्याधिक्यञ्च सूचितम्॥ १०४॥ भ०

असीत इत्यादि। असीतः परित्यक्तसीतो रावणः आकाशस्थः कासाञ्चक्रे कुत्सितमभिहितवान् एह्येहीति विहगाधिपेति कासृशब्दकुत्सायामित्यनुदात्तेत्कासित्यादिना आम् शस्त्रैः इत्थम्भूते तृतीया निराकुलः पूर्वम्बाहुभिः सीताग्रहणे

हन्तुं क्रोधवशादीहाञ्चक्राते तौ परस्परम्।
न वा पलायाञ्चक्रे विदयाञ्चक्रे न राक्षसः॥ १०६

---

व्याकुलत्वात् भूयः पुनरपि खगः पक्षी डप्रकरणे अन्येष्वपि दृश्यत इति वचनात् गमेर्डः तन्निशाचरं वेभिदाञ्चक्रे अत्यर्थम्भिन्नवान् वेभिद्यतेर्यङन्तादाम् नखतुण्डान्येवायुधानि यस्य स॥ १०५॥ ज० म०

असीत इत्यादि। असीतस्त्यक्तसीतो रावणः आकुलः सन् शस्त्रैः कासाञ्चक्रे शुशुभे कासृ शब्दे धातूनामनेकार्थत्वात् अत्र दीप्त्यर्थः दीप्त्यर्थोऽपि दन्त्यान्तकासृधातुरस्तीति केचित् यद्वा पक्षिणं प्रति एहि एहि खगाधम! त्रास्यसीत्यादि कुत्सितशब्दं कृतवान् अस्मिन् पक्षे शस्त्रैरिति विशेषणे तृतीया दरिद्राकाशकासेति पक्षे आम् पूर्वं सीताग्रहणे व्याकुलः सम्प्रत्यनाकुलः भूयः पुनरपि खगः पक्षी तं रावणं वेभिदाञ्चक्रे अत्यर्थं भिनत्ति स्म। कीदृशः नखतुण्डप्रहरणः भिदेर्मूर्धसूत्रशूचाटेत्यादिना यङ्प्रत्ययान्तत्वात् विंजादीत्यादिना आम् यङो लुक् यङ्लुक्यल्लोपे अरे नणव्री इति निषेधात् न गुणः विंजादीत्यादौ स्यामिति विषये सप्तमी तेन यङ्लुकि परस्मैपदविषये कृञ उभयपदित्वात् भवात्मनेपदवदनुप्रयोगः खे गच्छतीति हमजनादिति डः॥ १०५॥ भ०

हन्तुमित्यादि। तौ पक्षिरावणौ क्रोधवशात् क्रोधाधीनतया परस्परमन्योन्यं हन्तुमीहाञ्चक्राते चेष्टां कृतवन्तौ इजादेरित्यादिना आम् विः पक्षी जनिघसिभ्यामित्यधिकृत्य वेञो डिच्चेत्यौणादिक इक् न वा नैव वाशब्द एवार्थे पलायाञ्चक्रे पलायितः उपसर्गस्यायताविति लत्वम्। राक्षस न

उपासाञ्चक्रिरे द्रष्टुं देवगन्धर्वकिन्नराः ।
छलेन पक्षी लोलूयाञ्चक्रे क्रव्यात् पतत्रिणः ॥ १०७ ॥

---

दयाञ्चक्रे न दयते स्म पक्षिणं खल्वहं कथं व्यापादयामीति उभत्रापि दयायासश्चेत्याम् ॥ १०६ ॥ ज० म०

हन्तुमित्यादि । तौ पक्षिरावणौ क्रोधवशात् क्रोधाधीनतया परस्परमन्योन्यं हन्तुमीहाञ्चक्राते ईहाञ्चक्रे चेष्टे परस्परं व्यतिलुनन्तीत्युदाहरता व्यतीहारे परस्परशब्दो मनीषादित्वान्निपातित इति सूचितम् । विः पक्षी न पलायते स्म राक्षसोऽपि हन्तुं न दयां कृतवान् सर्वत्र विंजादीत्याम् पलायाञ्चक्रे इति परापूर्वस्यायधातो रूपं रेफस्य लत्वं मनीषादित्वात् मामाङ्नञ् नहिनो नवा इत्येते प्रतिषेधार्थाः एवार्थे अत्र वाशब्द इत्यन्ये ॥ १०६ ॥ भ०

उपेत्यादि । देवगन्धर्वकिन्नरा द्रष्टुं युद्धं द्रक्ष्याम इति उपासाञ्चक्रिरे उपगताः पूर्ववदाम् क्रव्यात् रावणः क्रव्यं मांसमत्तीति क्राव्यत् अदोनन्न इति विट् पतत्रिणः पक्षिणः पक्षौ लोलूयाञ्चक्रे अत्यर्थं लूनवान् यङ्प्रत्ययान्तत्वादाम् छलेन मायया प्रसह्य जेतुं न शक्यत इति भल्लेनेति पाठान्तरम् ॥ १०७ ॥ ज० म०

उपेत्यादि । देवा गन्धर्वाः किन्नराश्च द्रष्टुम् अर्थात् युद्धम् उपासाञ्चक्रिरे उपगताः आसङ उपवेशे विंजादीत्याम् दीव्यतीति देवः पचादित्वादन् गानं धर्मोऽस्येति गन्धर्वो मनीषादिः नराकृतित्वात् कुत्सितो नरः किन्नरः ईषदर्थे किंशब्द इत्यन्ये क्रव्याद्रावणः छलेन कपटेन पतत्रिणः पक्षिणः पक्षौ लोलूयाञ्चक्रे अत्यर्थं चिच्छेद त्यान्तत्वादाम् । क्रव्यं मांसमत्तीति क्विप् ॥ १०७ ॥ भ०

प्रलुठितमवनौ विलोक्य कृत्त
दशवदनः खचरोत्तमं प्रहृष्यन् ।
रथवरमधिरुह्य भीमधुर्य्यं
स्वपुरमगात् परिगृह्य रामकान्ताम् ॥ १०८ ॥

इति भट्टिकाव्ये पञ्चमः सर्गः ।

---

प्रलुठितमित्यादि । खचरा पक्षिणः खे चरन्तीति अधिकरणे चरिष्टः तेषामुत्तमं जटायुं कृत्तं छिन्नं लूनपक्षत्वात् अवनौ भुवि प्रलुठितं विलोक्य प्रहृष्यन् हर्षं प्राप्नुवन् निवृत्तो विघ्नकारीति दशाननो रथवरं स्मरणात् प्राप्तं पुष्पकाख्यमारुह्य भीमधुर्य्यं रामकान्तां सीतां तथैव परिगृह्य स्वपुरमगात् गतवान् ॥ १०८ ॥ ज० म०

इति जयमङ्गलाख्यायां पञ्चमः सर्गः ।

विलुठितमित्यादि । कृत्तं छिन्नं लूनपक्षत्वात् अवनौ भूमौ विलुठितं पतितं खचरोत्तमं जटायुं विलोक्य प्रहृष्यन् हृष्टोभवन् रावणो रथवरम् अधिरुह्य रामकान्तां सीतां परिगृह्य स्वपुरं लङ्काम् अगात् गतः रथानां वरः श्रेष्ठः पुष्पकाख्यः स्मरणादुपागतः । तं कीदृशं भीमा धूर्य्या अश्वा यत्र धुरं वहतीति ढघेकादिति यः ॥ १०८ ॥ भ०

इति गौराङ्गमल्लिकात्मजश्रीभरतमल्लिकविरचितायां
मुग्धबोधिन्यां भट्टिटीकायां सीताहरणो नाम
मिश्रकःपञ्चमः सर्गः ।

---

# षष्ठः सर्गः ।

ओषाञ्चकार कामाग्निर्दशवक्त्रमहर्निशम् ।
विदाञ्चकार वैदेहीं रामादन्यनिरुत्सुकाम् ॥ १ ॥
प्रजागराञ्चकारारेरीहास्वनिशमादरात् ।

---

अत्राधिकारस्यापरिसमाप्तत्वात्तमेव विहत्याह । ओषाञ्चकारेत्यादि । अथशब्दो वक्ष्यमाणद्वितीयश्लोके यः सोऽत्र द्रष्टव्यः । अथ तस्मिन् सीतापरिग्रहे जाते कामाग्निः कामोऽग्निरिव दशवक्त्रं दशाननमोषाञ्चकार ददाह उषदाहे उषविदेत्याम् अहर्निशम् अहश्च निशा च सर्वो द्वन्द्वो विभाषैकवद्भवतीत्येकवद्भावादत्यन्तसंयोगे द्वितीया अह्नो नकारस्य रोऽसुपीति रत्वम् । कस्मादिदाह इत्याह रावणो वैदेहीमन्यनिरुत्सुकां रामादन्यस्मिन् सर्वत्र निरभिलाषां विदाञ्चकार अगुणत्वं विदेस्तथेति विदेरगुणत्वात् गुणाभावः ॥ १ ॥ ज०म०

ओषामित्यादि । अत्रापि स एवाधिकारः अपरिसमाप्तत्वात् । कामोऽग्निरिव दशवक्त्रं रावणम् अहर्निशम् ओषाञ्चकार उषदाहे दरिद्राकासकाशेति पक्षे आम् अहश्च निशा च इति समाहारद्वन्द्वः सदाध्वादीति ह्नी । दशवक्त्रपदन्यासेन विंशत्या नेत्रैरेकदैव सीतासौन्दर्य्यातिशयविलोकनात् कामपीड़ानिर्भरत्वं द्योत्यते । वैदेहीं रामादन्यस्मिन् सर्वत्र निरुत्सुकां निरभिलाषां विदाञ्चकार ज्ञातवान् ङाम् वात्यामिति वेत्तेर्ङाम् ङित्वान्न गुणः ॥ १ ॥ भ०

प्रजागराञ्चकारेत्यादि । अरे रामस्य ईहासु चेष्टासु गुरोश्च इत्यकारः आदरादादरेण प्रजागराञ्चकार जागरितवान् शत्रुचिकीर्षितज्ञानपरो बभूवेत्यर्थः पूर्ववदाम् अनिशमिति निशा-

प्रविभयाञ्चकारासौ काकुत्स्थादभिशङ्कितः ॥ २ ॥
न जिह्रयाञ्चकाराथ सीतामभ्यर्थ्य तर्जितः ।
नाप्यूर्जां बिभरामास वैदेह्यां प्रसितो भृशम् ॥ ३ ॥

---

क्रियाविच्छेदो नास्ति यस्मिन् प्रजागरणे इति निशेति क्रियाविच्छेदोपलक्षणं प्रायेण हि निशायामपि क्रियाणां प्रवर्त्तनं किमिति जागरितवानित्याह काकुत्स्थादसौ प्रविभयाञ्चकार प्रभीतवान् भीह्रीत्यादिनाम् श्लुवत् कार्य्यं धातोर्गुणायादेशौ अभिशङ्कितः किमयं करिष्यतीति ॥ २ ॥ ज० म०

प्रजेत्यादि। असौ रावणोऽरिः रामस्य ईहासु चेष्टितेषु अनिशं निरन्तरं प्रजागराञ्चकार सावधानो बभूव आदरात् आदरं कृत्वा यवर्थे पञ्चमी हेतौ वा। काकुत्स्थात् प्रविभयाञ्चकार अतिभीतः ञिभीलि भीत्यां पक्षाम् वा भीह्रीति पक्षाम् श्लित्वाद्द्वित्वे ह्रादीरेद्भिः णुर्घूङ इति गुणः भवस्कृन्वाम इति कृञनुप्रयोगः। अतिशङ्कितः किमयं करिष्यतीति नानाविकल्पव्याकुलः ॥ २ ॥ भ०

न जिह्रयाञ्चकारेत्यादि। सीतामभ्यर्थ्य याचित्वा न जिह्रयाञ्चकार न लज्जितः तर्जितः भर्त्सितोऽपि तयैवेत्यर्थात् नाप्यूर्जां बलं बिभरामास धारितवान् कृञिति प्रत्याहारग्रहणादस्तेरप्यनुप्रयोगः ह्रीधातोर्गुणायादेशौ डुभृञ्-धारणपोषणयोः उभयत्रापि पूर्ववदाम् श्लुवच्च कथं न धारितवान् इत्याह वैदेह्यां प्रसितः प्रसक्तः भृशमत्यर्थम् । ३ ॥ ज० म०

न जीत्यादि। अथ सीताया अन्यनिरुत्सुकत्वज्ञानानन्तरं सीतामभ्यर्थ्य बहुधा अनुनीय तया तर्जितो भर्त्सितोऽपि रावणो न जिह्रयाञ्चकार ह्रीलिलज्जे ऊर्जां बलमपि न बिभरामास भृलिभृतिपुष्ट्योः उभयत्र पूर्ववत्पक्षाम् पृभ्रादेर्डिः

विदाङ्कुर्वन्तु रामस्य वृत्तमित्यवदत् स्वकान् ।
रक्षांसि रक्षितुं सीतामाशिषच्च प्रयत्नवान् ॥ ४ ॥

---

खेरे इति भूधातोः खेङिः आमोऽनुप्रयोगः अस्तेर्भूर्न भवतीति परः स्वमते भ्वस्कृन्वाम इत्यत्र असत्त्वषार्थे इत्यस्य ग्रहणं न लस्तेः यद्वा व्याकरणान्तरसंवादात् अस्तेरेवानुप्रयोगः कृतभ्वादेशस्यास्तेरनुप्रयोगस्य वैयर्थ्यं भुवोऽनुप्रयोगस्योक्तत्वात् तेनामोऽनुप्रयोगे भूररे इत्यस्य न विषय इति बोध्यं ऊर्जैः सेमृक्तात् सरोरिति अप्रत्ययः स्त्रीत्वञ्च ऊर्जमिति पाठे क्विप् । कुत इत्याह वैदेह्यां प्रसित आसक्तः तच्चिन्तया बलक्षयात् ॥ ३ ॥ भ०

विदाङ्कुर्वन्त्वित्यादि । स्वकानात्मीयान् शुकसारणादीन् अवददुक्तवान् । किमित्याह । रामस्य वृत्तमनुष्ठितं किन्तस्येहागन्तुमुद्यमोऽस्ति न वेति विदाङ्कुर्वन्तु विदाङ्कुर्वन्त्वित्यन्यतरस्यामिति निपातितम् । सीतां रक्षितुं रक्षांसि आशिषदादिष्टवान् शासेः सर्त्तीत्यङ् शास इदङ्हलोरिति शासेरुपधाया इत्वं शसिवसीति षत्वम् । प्रयत्नवान् प्रयत्नपरः । आमधिकारो गतः ॥ ४ ॥ ज० म०

विदामित्यादि । रामस्य वृत्तं चेष्टितं भवन्तो विदाङ्कुर्वन्तु जानन्तु इति स्वकान् आत्मीयान् दूतान् रावणोऽवदत् ङां वा व्यां ग्यान्तुक्रान्विति वेत्तेर्ङाम् ग्यां क्रञनुप्रयोग एव । प्रयत्नवान् सन् सीतां रक्षांसि आशिषत् आदिष्टवान् चकारः समुच्चये शासु अनुशिष्टौ शासुलिप्युदिति ङः शासुङिद्वसङे इति इत्वं क्विलात् क्रत इति षत्वम् । इत्यामधिकारः । ४ ॥ भ०

अथ प्रकीर्णकाः ।

रामोऽपि हतमारीचो निवर्त्स्यन् खरनादिनः ।
क्रोष्टून् समशृणोत् क्रूरान्रसतोऽशुभशंसिनः ॥ ५ ॥

---

अथ प्रकीर्णश्लोकानाह । राम इत्यादि । हतमारीचो रामोऽपि निवर्त्स्यन् प्रत्यागमिष्यन् बलादिलक्षण इटि प्राप्ते न वृद्भ्य इतीण्निषेधः । क्रोष्टून् शृगालान् रसतः शब्दायमानान् अशृणोत् संश्रुतवान् सकर्मकत्वात् समोगमीत्यात्मनेपदं न भवति लङि रूपं क्रूरान् भीषणान् यतः खरनादिनः खरवन्नदन्ति कर्त्तरीति णिनिः अशुभशंसिनः अनिष्टसूचनशीलान् ॥ ५ ॥ ज० म०

अथ प्रकीर्णकाः । राम इत्यादि । हतो मारीचो येन स रामोऽपि निवर्त्स्यन् प्रत्यागमिष्यन् रसतः शब्दं कुर्वतः क्रोष्टून् शृगालान् समशृणोत् क्रोष्टूनां शब्दं शृणोति स्मेत्यर्थः रसत इति तद्विशेषणात् तथाचोक्तं सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे इति यद्यपि शब्द एव श्रूयते न तु शृगालः तथापि शृगालस्यायं शब्द इति ज्ञाने शृगालोऽपि विषय इति तस्यापि ज्ञानकर्मत्वमविवादं औपचारिकोऽयं प्रयोग इत्यन्ये अनेकार्थत्वात् शृणोतिरिह दर्शनार्थ इति केचित् वृद्भ्यो नेम् पे स्यसनोरिति वृतेरिम् निषेधः पे तत एव पं खरनादिनो गर्दभवत् नदतः ग्रहादित्वात् णिन् कर्त्तर्युपमान उपपदे णिन्निति परः अतएवाशुभशंसिनः अशुभं शंसितुं सूचयितुं शीलं येषामिति ताच्छील्ये णिन्निति परः स्मृते ग्रहादित्वात् अतएव क्रूरान् भयदान् । अपि सम्भावनाप्रश्नशब्दगर्हासमुच्चये । तथा युक्तपदार्थेषु कामचारक्रियासु चेति विश्वः ॥ ५ ॥ भ०

आशङ्कमानो वैदेहीं खादितां निहतां मृताम् ।
स शत्रुघ्नस्य सोदर्य्यं दूरादायान्तमैक्षत ॥ ६ ॥
सीतां सौमित्रिणा त्यक्तां सध्रीचीं वस्नुमेकिकाम् ।
विज्ञायामंस्त काकुत्स्थः क्षये क्षेमं सुदुर्लभम् ॥ ७ ॥
एते प्रकीर्णकाः ।

---

आशङ्कमान इत्यादि । तथाविधाशुभश्रवणादाशङ्कमानो वितर्कयन् वैदेहीं किं खादितां निशाचरादिना ततः निहतां त्यक्तप्राणां अहो स्वयमेवायुःक्षयान्मृतां वा स रामः शत्रुघ्नस्य सोदर्य्यं भ्रातरं सोदराद्यः आयान्तमागच्छन्तमारादैक्षत दृष्टवान् ईक्षेर्लुङि ॥ ६ ॥ ज० म०

आशङ्केत्यादि । अमङ्गलश्रवणात् वैदेहीं राक्षसादिभिर्भक्षितां शृगालादिभिर्वा निहतां स्वयमेवायुःक्षयात् मृतां वा आशङ्कमानस्तर्कयन् रामः शत्रुघ्नस्य सोदर्य्यं लक्ष्मणं आयान्तं आराद्दूरादैक्षत ईक्षेर्लुङि समाने उदरे स्थितः सोदर्य्यः ढघेकादिति यः रूपनामगोत्रेत्यादिना पक्षे समानस्य सः कनिष्ठभ्रातृसम्बन्धोक्तत्वेन लक्ष्मणस्यापकर्षः सूचितः स्त्रीवचनेन त्यक्तधैर्य्यत्वात् । आरात् दूर समीपयोः ॥ ६ ॥ भ०

सीतामित्यादि । सौमित्रेरेकाकिनो दृष्टत्वान्नियतमनेन त्यक्तेति तां विज्ञाय ज्ञात्वा काकुत्स्थो रामः क्षये गृहे क्षीयतेऽस्मिन्निति अधिकरणेऽच् क्षेमं कल्याणं सुदुर्लभं सुदुःखेन लभ्यते इति ईषदित्यादिना खल् अमंस्त ज्ञातवान् । कथं क्षये क्षेमं सुदुर्लभमिति आह सध्रीचीं सहचारिणीं न क्वचिदेकाकिनीं तिष्ठन्तीं सहाञ्चतीति ऋत्विगादिना क्विन् सहस्य सध्रिरित्यञ्चतौ वप्रत्यये सहस्य सध्र्यादेशः अञ्चतेश्चोपसंख्यानमिति ङीप् अच इत्यकारलोपः चाविति दीर्घः । वुतः वस्नं वसनशीलां

अतः परं दुहादिः ।

सोऽपृच्छल्लक्ष्मणं सीतां याचमानः शिवं सुरान् ।
रामं यथास्थितं सर्वं भ्राता ब्रूते स्म विह्वलः ॥ ८ ॥

---

क्रियाशब्दत्वादूङ् न भवति एकिकां लक्ष्मणेन त्यक्तत्वात् एकादाकिनिच् चासहाये इति चकारात्कन् प्रत्ययस्यादितीत्वम् । एते प्रकीर्णकाः ॥ ७ ॥ ज० म०

सीतामित्यादि । सौमित्रिणा त्यक्तां अतएव एकिकां सीतां विज्ञाय काकुत्स्थः क्षये निवासे क्षेमं कुशलं सुदुर्लभं अमंस्त एकाकिनो लक्ष्मणस्यागमनात् तद्योगक्षानेऽपि कुतः क्षेमं सुदुर्लभमित्याह त्रस्नुमिति तां कीदृशीं त्रस्नुं त्रासशीलां क्षिपत्रसेति क्नुः तथाच त्रासान्मृतेति सम्भाव्यते अतएव सध्रीचीं सदा सहचरीं न क्वचिदेकाकिनीं तिष्ठन्तीं सहाञ्चतीति ऋत्विगपि सहसन्तिरःसध्रिसमितिरीति सहस्य सध्रिः । अत्राञ्चतेर्गत्यर्थत्वात् नेदित्यूजार्थाञ्चोरित्यस्य विषयाभावात् हसुङ्नलोपोऽणाविति नकारलोपः ष्टिन्न्वञ्चाह इति ईप् अचोऽल्लोपो घंस्वेति अकारलोपे निमित्ताभावात् यत्वनिवृत्तौ इकारस्य दीर्घः एकादाकिन्चासहाये इति परः स्वमते विकारसंघेत्यादिना असहाये स्वार्थे वा कः स्त्रियामाप् काप्यनाशोरके इति इत्वं क्षीयतेऽस्मिन्निति अन् क्षि निवासगत्योः क्षयेऽपचयकाले इत्यर्थो वा । क्षयो रोगान्तरे वेश्मकल्पान्तापचयेष्वपीति विश्वः । एते प्रकीर्णकाः ॥ ७ ॥ भ०

अतो द्विकर्माधिकारः । सोऽपृच्छदित्यादि अकथितं चेत्यत्र दुहियाचीत्यादिश्लोकस्थान् धातून् प्रयुङ्क्ते कविः तत्र रामोऽपृच्छत् सीतामिति प्रधानं कर्म लक्ष्मणमित्यकथितं कर्म । याचमानः प्रार्थयमानः शिवं कल्याणं अर्थात् सीतायाः

संदृश्य शरणं शून्यं भिक्षमाणो वनं प्रियाम् ।
प्राणान् दुहन्निवात्मानं शोकं चित्तमवारुधत् ॥ ९ ॥

---

शिवं प्रधानं कर्म सुरान् देवान् इत्यकथितं कर्म। भ्राता लक्ष्मणः सर्वं यथावत् स्थितं ब्रूते स्म उक्तवान् सर्वमिति प्रधानं कर्म राममित्यकथितम् ॥ ८ ॥ ज० म०

अथ द्विकर्मकप्रकरणम्। स इत्यादि। स रामः सीतां लक्ष्मणं अपृच्छत् दुहादेः कर्म हेतुः कर्मेति परः स्वमते याच्नार्थेत्यादिना स्वभावाद्द्विकर्मकत्वमुक्तं कर्मद्वयन्तु तात्पर्य्यलभ्यमेव सीतामिति प्रधानं कर्म लक्ष्मणस्य हेतुत्वमर्थाल्लभ्यते एव तेनात्र न लक्ष्मणमिति। कीदृशो रामः सुरान् शिवं याचमानः दातुं प्रेरयन् अर्थात् सीतायाः शिवमिति प्रधानं कर्म। भ्राता लक्ष्मणो विक्लवो विह्वलः सन् सर्वं यथास्थितं सीताप्रेरणादिकं रामं उक्तवान् वचनेन बोधितवान् राममिति हेतुकर्म ॥ ८ ॥ भ०

संदृश्येत्यादि। रामः शरणं गृहं शून्यं संदृश्य दृष्ट्वा शोकं चित्तमवारुधत् चित्तं शोकं प्रावेशयत्। कीदृशः प्रियां जानकीं वनं भिक्षमाणः प्राणान् दुहन्निव त्यजन्निव प्राणानिति प्रधानं कर्म आत्मानमित्यकथितम् आत्मनः प्राणान् त्यजन्निव ॥ ९ ॥ ज० म०

संदृश्येत्यादि। रामः शरणं गृहं शून्यं संदृश्य शोकं चित्तमवारुधत् शोकमन्तः स्थापयित्वा चित्तमपावृणोत् शोकं प्रावेशयदिति वार्थः रुधिरौञ् आवृतौ इरित्वात् शासुलिद्युदिति पक्षे ङः। कीदृशः प्रियां सीतां वनं भिक्षमाणः दातुं प्रेरयन् प्रियामिति प्रधानं कर्म आत्मानं प्राणान् दुहन्निव मोचयन्निव आत्मानमिति कर्म हेतुः ॥ ९ ॥ भ०

गता स्यादवचिन्वाना कुसुमान्याश्रमद्रुमान्।
आ यत्र तापसान् धर्मं सुतीक्ष्णः शास्ति तत्र सा॥ १०॥

इति दुहादिद्विकर्मकः।

अतः परं प्रकीर्णकाः।

आः कष्टं वत ह्री चित्रं हूं मातर्दैवतानि धिक्।

---

गतेत्यादि। यत्र यस्मिंस्तपोवने सुतीक्ष्णो नाम ऋषिः धर्मं शास्ति शिक्षयति धर्ममिति प्रधानं कर्म तापसानित्यकथितं तत्र तपोवने गता स्यात् सम्भावने लिङ् आकारो निपातः स्मरणे किं कुर्वती कुसुमान्यवचिन्वाना कुसुमानीति प्रधानं कर्म आश्रमद्रुमानित्यकथितम् अवचिन्वानेति चिनोतेः कर्त्रभिप्राये तङ्। दुह्यादिदण्डको गतः॥ १०॥ ज० म०

गतेत्यादि। बह्वेवं विललाप स इति वक्ष्यमाणश्लोकेनान्वयः यत्र सुतीक्ष्णो मुनिस्तापसान् धर्मं शास्ति तत्र सा गता स्यात् सम्भावने श्नसोरल्लोप इति अस्तेरकारलोपः। किं कुर्वती आश्रमद्रुमान् कुसुमानि अवचिन्वाना द्रुमान् विघट्टयन्ती पुष्पाण्याददाना आ इत्यव्ययशब्दः स्मरणार्थे प्रयुज्यते। यदुक्तं "मर्यादायामभिविधौ क्रियायोगेषदर्थयोः। य आकारः स ङित् प्रोक्तो वाक्यस्मरणयोरङित्॥" इति। आमिति क्वचित् पाठः सोऽपि स्मरणार्थ एव। इति द्विकर्मकाः॥ १०॥ भ०

प्रकीर्णकानाह। आः कष्टमित्यादि। शोकेनाक्रान्तमना विलपन्नाह आः पीड़ायां पितृवियोगपीड़ितः आः इत्याह अस्मद्वियोगेन पिता प्राणांस्त्यक्तवानित्यभिप्रायः। कष्टमित्याह कष्टं कृच्छ्रं भर्तृमरणादस्मद्वियोगाच्च मातुः कावस्थेत्यभिप्रायेणाह वत इति वतशब्दः खेदे सौमित्रिरपि तया सीतया अन्याहृश

हा पितः ! क्वासि हे सुभ्रु ! बह्वेवं विललाप सः ॥ ११ ॥

सम्भावित इति विस्मितो हीत्याह हिशब्दो विस्मये यदि नाम स्त्रिया मूर्खतया तथाभिहितं सौमित्रिणा विदुषा कथं तादृशः शापो दत्त इत्यभिप्रायेणाह चित्रमिति चित्रमाश्चर्यं यदेवंविधोऽपि स्खलतीति सर्वमेव दुर्जातं कैकेयीप्रभवमिति क्रुध्यन् हुं मातरित्याह हुंशब्दः क्रोधे अथवा सर्वमेतत् दैवचेष्टितं न ममानुष्ठितमित्यभिप्रायेणाह धिग्दैवतानीति धिक् कुत्सायां अविज्ञाय चक्षुषा प्राणांस्त्यक्तवन्तं पितरं पुनरहं द्रष्टास्मीत्यभिप्रायेणाह हा पितः ! अत्र द्रष्टव्योऽसीति हा शोके हे सीते ! क्व गतासीति भ्रूशब्दादप्राणिजातेरित्यादिनोङ् उवर्णान्तमात्रस्य विधानात् बहुव्रीहिः उपसर्जनत्वञ्च पुनः स्त्रियामूङ् अन्तादिवच्चेति पूर्वं प्रत्यन्तवत्त्वात् प्रातिपदिकत्वं अतः सम्बुद्धौ ह्रस्वत्वम् । विललाप स एवं कृत्वा बह्वनेकप्रकारं विलापं कृतवान् ॥ ११ ॥ ज० म०

अथ प्रकीर्णकाः । आ इत्यादि । सीतावियोगेन पूर्वदुःखस्मरणात् पितृवियोगपीड़ितः प्राह आ इति आस्तु स्यात् कोपपीड़योः । मद्वियोगेन पिता प्राणान् जहावित्यभिप्रायेणाह कष्टमिति कष्टं कृच्छ्रं पतिमरणान्मद्वियोगाच्च मातुः कावस्था इत्यत आह वतेति खेदद्योतकोऽयं वतशब्दः लक्ष्मणोऽपि सीतया अन्यथा सम्भावित इति विस्मितः प्राह हीति ही विस्मयविषादयोः यद्यपि स्त्रीत्वान्मौर्ख्येण तया तथाभिहितं तथापि लक्ष्मणेन तादृशः शापो दातुमनुचित इत्यभिप्रायेणाह चित्रमिति चित्रमाश्चर्यं सर्वमिदं कैकयीप्रभवमिति रोषादाह हुं मातरिति हुंशब्दः क्रोधे भर्त्सने वा तथाविधाया मातुरपीदृशोऽकस्मात् मतिविपर्ययो दैवकृत एवेत्यत

इहासिष्टाशयिष्टेह सा सखेलमितोऽगमत् ।
अग्लासीत् संस्मरन्नित्थं मैथिल्या भरताग्रजः ॥ १२ ॥

आह दैवतानि धिगिति धिक्शब्दो निन्दाभर्त्सनयोः अविशेषज्ञत्वादिति भावः पितुर्वाक्यादीदृशं दुःखमनुभवन्नहं पित्रा न ज्ञायते न वा पितृदर्शनेन विना ममैतद्दुःखं व्यपगमिष्यतीत्याह हा पितरिति हा विषादशुगार्त्तिषु धिक् समयेत्यादिसूत्रस्य षष्ठ्यपवादत्वात् नात्र तद्विषयः सामान्येन हाशब्दं प्रयुज्य पश्चात् पितृसम्बोधनमतो न द्वितीयेति दुर्गः वस्तुतस्तु हाशब्दवाच्यं दुःखं स्वविषयमेव पितृशब्देन तस्य सम्बन्धाभावः कथं द्वितीयाया भवितव्यम् एतत् सकलदुःखं यत्सङ्गत्या विस्मर्त्तव्यं सापि नास्तीत्याशयेनाह हे सुभ्रु ! क्वासीति कोपेऽपि भ्रूपारुष्यं नास्तीति सुभ्रुपदस्याभिप्रायः । एवं स्मृत्वा स रामो बहुप्रकारं विलापं कृतवान् । शोभने भ्रुवौ यस्याः तस्याः सम्बोधनं सुभ्रू दीर्घरजिति ह्रस्वः ॥११॥भ०

इहेत्यादि । इह प्रदेशे आसिष्ट उपविष्टा इदमो हः इदम इश् इह अशयिष्ट शयितवती आसेः शीङश्च लुङ् सखेलं सलीलम् इतः प्रदेशादगमत् गतवती इत्थमेवंप्रकारं मैथिल्याः स्मरन् अधीगर्थेति कर्मणि षष्ठी भरताग्रजो रामोऽग्लासीत् ग्लानिं गतः ग्लायतेर्लुङ् यमरमेति सगिटौ ॥ १२ ॥ ज० म०

इहेत्यादि । अत्र प्रदेशे सा सीता आसिष्ट ञिलासङ् उपवेशे अत्राशयिष्ट उभयत्र टीमं इतः सकाशात् सखेलं सलीलम् अगमत् लृदित्त्वात् ङः इत्थमेवंप्रकारेण मैथिल्याः संस्मरन् भरताग्रजो रामोऽग्लासीत् यमरमेति इम्सनौ मैथिल्या इति ढे च षीति कर्मणि षष्ठी ढवेक्तीत्यादिना शतुर्योगे षष्ठ्याः प्रतिषेधेऽपि नञा निर्दिष्टस्यानित्यत्वाद्वा कर्मणि षष्ठी

इदं नक्तन्तनं दाम पौष्पमेतद्दिवातनम्।
शुचेवोद्बध्य शाखायां प्रग्लायति तया विना॥ १३॥
ऐक्षिष्महि मुहुः सुप्तां यां मृताशङ्कया वयम्।
अकाले दुर्मरमहो यज्जीवामस्तया विना॥ १४॥

---

सम्बन्धविवक्षया स्मृत्यर्थयोगे कर्मणि वा षष्ठीति परः इह इत्यत्र कुतः क कुहेत्यादिना निपातितम्॥ १२॥ म०

इदमित्यादि। नक्तन्तनं निशाभवम् इदं दाम पुष्पमाला पुनर्दिवातनं दिवसभवं सायमित्यादिना व्युव्युली तुट् च पौष्पं पुष्पाणामिति तस्येदमित्यण् शुचेव शोकेनेव सम्पदादिः शाखायामुद्बध्य आत्मानमित्यर्थात् प्रग्लायति ग्लानिं गच्छति ग्लायतेः शित्यायादेशः शाखायां प्रलम्बमानं ग्लानिं गच्छन्तं वीक्ष्येदमुत्प्रेक्षितं कुतः शोकात्तया विना सीताविच्छेदेन॥ १३॥ ज० म०

इदमित्यादि। इदं नक्तन्तनं रात्रिभवं पौष्पं पुष्पसम्बन्धि दाम माला इदञ्च दिवाभवं दाम तया विना शुचा शोकेन शाखायाम् उद्बध्य अर्थादात्मानं प्रग्लायति ग्लानिं प्रयाति शाखास्थितां ग्लानमालां वीक्ष्येदमुत्प्रेक्षितम् इत्येवं विललापेति व्यवहितश्लोकेनान्वयः स्मरन्नेवं मुमोह स इति वक्ष्यमाणनवमश्लोकेन वा एवमुत्तरेष्वपि बोध्यं त्यताद्यचिरत्यादिना नक्तंदिवाशब्दाभ्याम् अव्ययाभ्यां तनट्॥ १३॥ भ०

ऐक्षिष्महीत्यादि। यां वयमैक्षिष्महि ईक्षितवन्तः ईक्षेः सेटो लुङ् मुहुः सुप्ताम् अविच्छिन्ननिद्रत्वात् मृताशङ्कयेति अनिष्टशंसित्वात् प्रियजनहृदयस्य इदानीं तया विना अहो वयं यज्जीवामस्तदकाले दुर्मरमिति विललाप जीवितस्यापूर्णकाले दुःखेन मरणमिति खल्॥ १४॥ ज० म०

अक्षेमः परिहासोऽयं परीक्षां मा कृथा मम ।
मत्तो मान्तर्द्धिथाः सीते ! मा रंस्था जीवितेन नः ॥१५॥
एते प्रकीर्णकाः ।

---

ऐक्षीत्यादि। वयं सुप्तां यां प्रियां मृतां न वेत्याशङ्कया मुहुर्वारं वारम् ऐक्षिष्महि ईक्षेष्यामहि अनिष्टाशंसीनि बन्धुहृदयानीति मृताशङ्कित्वं एतेनानुरागातिशयः सूचितः अहो आश्चर्य्यं यत्तया विनापि वयं जीवामस्तदस्मादकाले जीवनस्यापूर्णकाले दुःखेन म्रियते ईषद्दुःसोरिति भावे खल्॥ १४ ॥ भ०

अक्षेम इत्यादि। परिहसनं परिहासः क्रीड़ा अयमक्षेमो न कल्याणकरः मम परीक्षां किं मामपश्यन् दुःखमस्ति न वेति मा कृथाः उश्चेति कित्त्वात् गुणाभावः झलादिति सिचो लोपः तस्माद्धेतोः सीते! मान्तर्द्धिथाः अन्तर्हिता मा भूः अन्तर्द्धावित्यपादानसंज्ञायां पञ्चम्यास्तसिः प्रत्ययोत्तरपदयोश्चेति मदादेशः लुङि स्थाध्वोरिच्चेति सिचः कित्त्वमित्त्वञ्च झलादिति सिचो लोपः नोऽस्माकं जीवितेन मा रंस्थाः क्रीड़ां मा कार्षीः रमेरात्मनेपदित्वात्तङ्। एते प्रकीर्णकाः ॥ १५ ॥ ज० म०

अक्षेम इत्यादि। कदाचित् परिहासेनान्तर्हिता सा भवेदित्याशङ्क्योत्तरमिदं अयमन्तर्द्धानरूपः परिहासोऽक्षेमः अशुभः तवादर्शनेन मम दुःखमस्ति न वेत्येवं मत्परीक्षां त्वं मा कृथाः कृञस्थासि इगुङ्र्मढीस्यनिमिति सेः कित्त्वान्न गुणः झसस्थादिति सिलोपः मत्तः सकाशात् मा अन्तर्द्धिथाः मत्कर्तृकदर्शनाभावेच्छया व्यवहिता मा भूः धाञस्थासि स्थादीङ्रिति ङिरगुणत्वञ्च पूर्ववत्सिलोपः यतोऽमायेति यतोऽन्त-

अतः परं सिजधिकारः ।

अहं न्यवधिषं भीमं राक्षसं क्रूरविक्रमम् ।
मा घुक्षः पत्युरात्मानं मा न श्लिक्षः प्रियं प्रिये ! ॥ १६॥

---

र्द्विस्तदपादानं सर्वत्र हेतुमाह हे सीते ! नोऽस्माकं जीवितेन मा रंस्थाः क्रीड़ां न कुरु तवादर्शनेन प्राणा यास्यन्तीति भावः, इति प्रकीर्णकाः ॥ १५ ॥ भ०

सिचं सापवादमधिकृत्याह । अहमित्यादि । यतोऽहं राक्षसं मारीचं क्रूरविक्रमं भीमं भयानकं न्यवधिषं निहतवानस्मि हन्तेर्लुङि चेति बधादेशः अदन्तत्वात् वृद्ध्यभावः तस्मान्मा घुक्षः न गोपय पत्युरात्मानं अन्तर्द्धावित्यपादानत्वं व्यत्यात्यरस्येत्युत्वं गुहेः सल इगुपधादनिटः क्सः होढः भष्भावकत्वषत्वानि सिपश्च विसर्जनीयः मा न श्लिक्षः मा न परिरब्धाः अपितु श्लिष्य मां हे प्रिये ! श्लिष आलिङ्गने क्सः ॥१६॥ ज० म०

अथ सापवादसिजधिकारः । स्वमते स्यधिकारः । अहमित्यादि । भीमं भीषणमूर्त्तिं क्रूरविक्रममसह्यपराक्रमं राक्षसं मारीचं अहं न्यवधिषं हतवान् हनलौ गतौ वधे अमित्यां सिः हनबधश्चीति बधादेशः हसादेः सेम् इत्यादौ बधवर्जनात् सेम्त्वसूचनात् प्रकृत्यन्तरत्वाद्वा इम् । पत्युर्मत्तः सकाशात् आत्मानं त्वं मा घुक्षः न गोपय गुहञ संवृत्तौ उदित्वाद्वेसूदिति इमोऽभावपक्षे हसषोऽनिमिजुङ इति सक् हो ढः झभान्तस्येति घः षढोः कः क्विलादिति षः । हे प्रिये ! प्रियं मां मा न श्लिक्षः अपितु अवश्यमेव प्रियमालिङ्गय द्वौ निषेधौ सातिशयं प्रकृत्यर्थं गमयत इति न्यायात् श्लिषी श्लेषे आलिङ्गनेऽर्थे पूर्वेण सक् ॥ १६ ॥ भ०

मास्म द्राचीर्मृषा दोषं भक्तं मां मातिचिक्लिशः।
शैलं न्वशिश्रियद्वा मा नदीं नु प्रत्यदुद्रुवत्॥ १७॥
ऐ वाचं देहि धैर्य्यं नस्तव हेतोरसुस्रुवत्।

---

मास्मेत्यादि। मृषा दोषं व्यलीकं दोषं मा द्राचीः मयोत्यर्थात् स्मोत्तरे लङ् चेति चकाराल्लुङ् सल इगुपधेति क्सस्य न दृश इति निषेधः इरितो वेत्यङ् भावे सिच् सृजिदृशोरित्यम् हलन्तलक्षणा वृद्धिः व्रश्चेत्यादिना षत्वं यतोऽहं भक्तस्ततो मां भक्तं मातिचिक्लिशः नातिक्लेशय क्लिशेर्ण्यन्तात् सिपि णिश्रीत्यादिना चङ् वा णिलोपः द्विर्वचनादिः। पुनर्विकल्पयन्नाह मयि दोषदर्शनात् मत्प्रतिकूलवर्त्तिनी सती शैलं नु पर्वतं किमप्यशिश्रियदाश्रिता ततो नदीं प्रत्यदुद्रुवत् प्रतिगतेत्यर्थः नुशब्दो वितर्के चङ्॥ १७॥ ज० म०

मास्म इत्यादि। मृषा दोषं मास्म द्राचीः अर्थान्मयि दोषदर्शनाद्वा अन्तर्हितेत्याशङ्क्य इदमुक्तं दृश प्रेक्षे मास्मेन घौव्याविति टो सन्विधौ दृशेर्वर्जनात् इरित्त्वात् ङः विकल्पपक्षे च्लां सिः वर्द्रोऽकिदिति रत्वम् अनिम्त्वाद्व्रजवदेति व्रिः शच्छ्राजेति षङ्। भक्तम् अनुरक्तं मां त्वं मातिचिक्लिशः नातिपीडय क्लिशेर्जिः प्रेरणे जिश्रीत्यङ् द्वित्वं गुणः जरङुङः स्वः जेर्लोपः निकटे ;यदि तिष्ठेत्तदा मद्वचनादागच्छेदित्यतोऽन्यद्विकल्पयन्नाह वामेति मय्यपि दोषदर्शनात् प्रतिकूला सती शैलं किम् अशिश्रियत् आश्रिता उत नदीं प्रत्यदुद्रुवत् प्रतिगता श्रिञ सेवने द्रुगतौ अनयोरङि श्रुध्वोरिति इयुवौ। नुशब्दो वितर्के॥ १७॥ भ०

ऐ वाचमित्यादि। ऐशब्दो निपातोऽभिमुखीकरणे वर्त्तते वाचं देहि प्रार्थनायां लोट् ध्वसोरेद्धावित्येत्वम्। किमिति

त्वं नो मतिमिवाधासीर्नष्टा प्राणानिवादधः ॥ १८ ॥
रुदतोऽशिश्रियच्चक्षुरास्यं हेतोस्तवाश्वयीत् ।
म्रियेऽहं मां निरास्थश्चेन्मा न वोचश्चिकीर्षितम् ॥ १९ ॥

---

चेदाह धैर्य्यं नोऽस्माकं धीरता तव हेतोरसुस्रुवत् गलितं नष्टा अदर्शनं गता सती त्वन्नोऽस्माकं मतिं बुद्धिमधासीरिव बुद्धेरपाटवात् विभाषाधेट्श्वयोरिति यदा न चङ् तदा यमरमेति सगिटौ प्राणानदधः पीतवती कायस्याचेष्टत्वात् चङि रूपमाल्लोपः ॥ १८ ॥ ज० म०

ऐ वाचमित्यादि । ऐ सीते ! वाचं देहि प्रार्थनायां गौ ष्योर्दाधोर्दधेद्वौ तव हेतोः नोऽस्माकं धैर्य्यम् असुस्रुवत् स्रुतं पूर्ववत् अङ् । त्वं नोऽस्माकं मतिं बुद्धिम् अधासीरिव पीतवतीव बुद्धेरपाटवात् कार्य्यान्तरासंक्रमाच्चोत्प्रेक्षेयं नष्टा अदर्शनं गता सती प्राणानपि त्वम् अदध इव पीतवतीव देहस्य निश्चेष्टत्वात् धेट्पाने पूर्वेण विभाषितोऽङ् एचोऽशित्या उश्चेचीत्यालोपः अङोऽभावपक्षे व्यां सिः यमरमेति इम्सनौ भस-स्याञ्झसीम इति सेर्लोपः भूस्थापिबदेन इति सेर्लुकि प्राप्ते धेशाच्छासाभ्र इति पक्षे तदभावः नश अदर्शने क्तः नुणरधो सुचां नश इति क्तस्य नस्य हसुङ् नलोपोऽणावित्यनेन लोपः शच्छ्राजेति षङ् । ऐशब्दोऽयमव्ययोऽभिमुखीकरणे आह्वाने वा । एऐशब्दौ तु हेहैवत् स्मृत्यामन्त्रणह्वतिस्विति विश्वः ॥ १८ ॥ भ०

रुदत इत्यादि । तवार्थे त्वां पश्यामीति रुदतो मम चक्षुरशिश्रियत् उच्छूनम् आस्यं मुखं चाश्वयीत् विभाषाधेट्श्वयोरिति चङ् सिचौ चङीयङ् ह्यन्तेति न वृद्धिः इट् इट ईटीति सिचो लोपः गुणायादेशौ मां निरास्थश्चेद्यदि मम

लक्ष्मणाचक्ष्व यद्याख्यत् सा किञ्चित् कोपकारणम् ।
दोषे प्रतिसमाधानमज्ञाते क्रियतां कथम् ॥ २० ॥

दर्शनं निरस्तवती त्वं तदा म्रियेऽहं म्रियतेर्लुङ् लिङोश्चेति चकाराच्छित्यात्मनेपदं रिङ् शयगिति रिङ् अतो यत्त्वया चिकीर्षितं कर्त्तुमिष्टं तन्मा न वोचः मा मा भाषिष्ठाः अपितु ब्रूहि अस्यतिवक्तीत्यङ् वच उम् ॥ १९ ॥ ज० म०

रुदेत्यादि । तवादर्शनाद्रुदतो मम चक्षुरश्विश्वियत् उच्छूनमतिरोदनात् आस्यमपि अश्वयीत् जिश्वीत्यादिना श्वेर्विभाषितो ऽङ् अङोऽभावपक्षे स्यां सिः नेमिकाजादित्यादौ अश्विजागुरित्युक्तोर्गुणः । त्वं चेत् यदि मां निरास्थः अदर्शनेन निरस्तवती तदा अहं म्रिये भविष्यत्सामीप्ये वर्त्तमानत्वविवक्षा मृङ् प्राणत्यागे तुदादित्वात् शः मृङष्टोर्थ्ये मं ऋद्रिः शयग्ढोपे स्नुभ्वोरितीयः अस्तु क्षेपणे वक्त्यस्येति ङः वच्यस्यभिपतामिति अस्थः चिकीर्षितं कर्त्तुमिष्टं त्वं मा न वोचः अवश्यं ब्रूहि वचेर्ब्रुजो वा वचोऽरे इति वचादेशः पूर्ववत् ङः वोचादेशश्च ॥ १९ ॥ भ०

लक्ष्मणेत्यादि । हे लक्ष्मण ! यदि सा किञ्चित्कोपकारणमाख्यदुक्तवती इदन्तेनाप्रियमाचरितं पूर्ववदङ् तदाचक्ष्व कथय अज्ञाते दोषे प्रतिसमाधानं कथं क्रियतां नैवेति भावकर्मणि लोट् रिङित्यादिना रिङ् ॥ २० ॥ ज० म०

लक्ष्मेत्यादि । हे लक्ष्मण ! यदि सा सीता किञ्चित्कोपकारणं आख्यत् कथितवती तदा त्वम् आचक्ष्व कथय चक्षिङः प्रार्थनायां गीस्वः अदादित्वात् शपो लुक् स्यादेः सो लोप इति ककारलोपः षढोः कः से क्षिलादिति षः ख्या प्रकथने चक्षिङः ख्याञ् वा वक्त्यस्येति ङः उस्य चीत्यालोपः अज्ञाते दोषे

इह सा व्यलिपद्गन्धैः स्नान्तीहाभ्यषिचज्जलैः ।
इहाह्वं द्रष्टुमाह्वं तां स्मरन्नेवं मुमोह सः ॥ २१ ॥
तस्यालिपत शोकाग्निः स्वान्तं काष्ठमिव ज्वलन् ।

---

प्रतिसमाधानं तदपमार्जनार्थं कर्म कथं मया क्रियतां कर्त्तव्यं रतनोर्यगिणाविति यकि क्ङिति घोऽज्य्यरे इति सामान्यविधिं बाधित्वा ऋद्दृशः शयगढोपे इति विशेषविधिः रित्वेऽपि पूर्वबाधितत्वात् विक्ङतत्वाद्वा न तेन दोषः किंवा यङ्ङरक्येचद्रीरित्यत्र दीर्घकरणेन ऋद्दृः शयगढोप इत्यनेन क्ङतरेर्दीर्घो न स्यादिति ज्ञापितं यङ्ङरक्ये घोऽज्य्यरे इत्यनेन चौ अस्तावीर्घाविल्यनेन चेष्टसिद्धेः ॥ २० ॥ भ०

इहेत्यादि । इह प्रदेशे सा सीता गन्धैर्व्यलिपत् समालिप्तवती मामात्मानञ्चेत्यर्थात् इह स्नान्ती क्रीडापूर्वकमभ्यषिचत् हस्तयन्त्रमुक्तसलिलेन मामभिमुखं सिक्तवतीत्यर्थः षत्वं इह द्रष्टुं तामाह्वं आह्वतवान् लिपिसिचिह्वश्चेति चूरङ् । एवं स्मरन् मुमोह मोहं गतवान् ॥ २१ ॥ ज० म०

इहेत्यादि । इह स्थाने सा सीता गन्धैर्व्यलिपत् मामात्मानञ्चेत्यर्थात् गन्धयन्तीति गन्धाश्चन्दनादयः भिलिपीशलेपे इह स्नान्ती सती सा जलैः क्रीडापूर्वकं अभ्यषिचत् अर्थान्मां षिच्पशीञ् चरणे गीकः स्तुस्तुभेत्यादिना अम्व्यवधानेऽपि षत्वम् । इह द्रष्टुं तामहम् आह्वम् आह्वतवान् ह्वे ञे स्पर्द्धे सर्वत्र वक्तव्यस्येत्यादिना ङः । स राम एवं स्मरन् मुमोह मोहं गतः स्नान्तीति आदीपोरिति विभाषितनुण् ॥ २१ ॥ भ०

तस्येत्यादि । तस्य रामस्य स्वान्तं मनः क्षुब्धस्वान्तेत्यादिना निपातितं शोकाग्निः शोकोऽग्निरिव अलिपत दीपित-

अलिप्तेवानिलः शीतो वने तं न त्वजिह्लदत् ॥ २२ ॥
स्नानभ्यषिचताम्भोऽसौ रुदन् दयितया विना ।
तथाभ्यषिक्त वारीणि पितृभ्यः शोकमूर्च्छितः ॥ २३ ॥

---

वान् परस्मैपदेषु लिपीत्यादिना नित्ये प्राप्ते आत्मनेपदेष्वन्यतरस्यामिति विकल्पेनाङ् स्वरितञित इति क्रियाफलविवक्षायामात्मनेपदं काष्ठमिव स्वान्तं ज्वलन् अतिवर्त्तमानः अनिलो वायुः शीतोऽपि सन् वने तं राममलिप्तेव दीपितवानिव अङ्भावपक्षे झलो झलीति सिचो लोपः नतु नैवाजिह्लदत् ह्लादितवान् शोकाग्नेरुद्धतत्वात् ह्लदेर्ण्यन्तासिश्चीति चङ् ॥ २२ ॥ ज० म०

तस्येत्यादि । शोक एवाग्निर्ज्वलन् वर्द्धमानः तस्य रामस्य स्वान्तं मनः काष्ठमिव चिन्तया नीरसत्वात् अलिपत ददाह यद्यपि लेपश्चन्दनादिनोपदेहस्तथाप्यग्निना लेपो दाह एव पर्य्यवस्यति धातूनामनेकार्थत्वाद्वा । शीतोऽपि अनिलः वने तं रामं अलिप्तेव स्पृष्टवानिव मान्द्येन सम्यगस्पर्शनात् किंवा वह्निना अलिप्त ददाह अतएव न अजिह्लदत् नानन्दयत् शोकाग्नेर्वर्द्धमानत्वात् वक्तव्यस्येत्यादिना आत्मनेपदे लिपादेर्ङो विभाषितः पक्षे च्यां सिः भसस्वादिति सिलोपः ह्लादीङ् मोदने अरङुङः स्वः खेः सन्वत् ॥ २२ ॥ भ०

स्नानित्यादि । असौ रामो दयितया विना शोकमूर्च्छितः शोकेन मोहं नीतः स्नातुमारब्धः मूर्च्छेर्हेतुमण्ण्यन्तस्य रूपं स्नाशौचे शतृप्रत्ययः । रुदन्नम्भः सलिलं अभ्यषिचत क्षिप्तवान् शिरस्यञ्जलिना । अथ स्नातः पितृभ्यो वारीणि अभ्यषिक्त दत्तवान् सिचेः पूर्ववद्विभाषाऽङ् सिचिरत्रोत्सर्गे वर्त्तते ततश्चार्थान्तरवृत्तित्वाज्जलस्य कर्मत्वम् ॥ २३ ॥ ज० म०

तथार्त्तोऽपि क्रियां धर्म्यां स कालेनामुचत् क्वचित् ।
महतां हि क्रिया नित्या छिद्रे नैवावसीदति ॥ २४ ॥
आह्वास्त स मुहुः शूरान् मुहुराह्वत राक्षसान् ।

---

स्नानित्यादि। दयितया विना शोकेन मूर्च्छितोऽपि असौ रामो रुदन् स्नान् स्नानं कुर्वन् अभ्रोऽभ्यषिञ्चत मन्त्रैः संस्कृतवान् स्वशिरसि अञ्जलिना क्षिप्तवानित्यर्थौ वा। तथा स्नातः पितृभ्यो वारीणि अभ्यषिञ्च दत्तवान् पित्रर्थं क्षिप्तवान् वा धातूनामनेकार्थत्वात् सिचेः संस्कारक्षेपदानवाचकत्वं तेन जलस्य कर्मत्वं अभ्युक्षणे करणत्वं यथा जलेन सिञ्च-तीति पूर्ववत् ङः गीक इति षत्वं मूर्च्छा संमोहे उच्छ्रये जग्लात् क्तः केवलात् तु क्तक्तवत्वोरादित इम् न स्यात् मूर्च्छा जाताऽस्येति इतोऽस्य जात इति इतो वा ॥ २३ ॥ भ०

तथेत्यादि। स रामस्तेन प्रकारेणार्त्तोऽपि क्वचिदपि धर्म्यां क्रियां काले नामुचत् न त्यक्तवान् अस्मादेव यतो महतां सत्यपि कृच्छ्रे व्यसने नित्या क्रिया नावसीदति आङ्पूर्वा-दर्त्तेर्ऋणोतेर्वा निष्ठायां ऋतिधातौ वृद्धिः मुचेः ऌदनुबन्धत्वा-दङ् क्ञ: शच् रिङि यङौ ॥ २४ ॥ ज० म०

तथेत्यादि। तथा तेन प्रकारेण आर्त्तोऽपि व्याकुलोऽपि स रामः क्वचिदपि काले धर्म्यां धर्मादनपेतां क्रियां नामुचत् न त्यक्तवान् मुच्ऌशपञ्जी मोक्षे ऌदित्वात् ङः आङ्पूर्वादर्त्तेः क्तः गेर्धोरनेधिन इति त्रिः। हि यस्मात् महतां छिद्रे व्यसने सत्यपि नित्या क्रिया नैवावसीदति नापगच्छति क्रियते कृः शश्चेति शः स्त्रीत्वञ्च ऋद्रिः श्रु ध्वोरितीयः। यदकरणे प्रत्यवायः सा नित्या ॥ २४ ॥ भ०

आह्वास्तेत्यादि। पुनः पुनरभिभवितुं शूरानाह्वास्त

एत सीताद्रुहः संख्ये प्रत्यर्थयत राघवम् ॥ २५ ॥
स्वपोषमपुषत् युष्मान् या पक्षिमृगशावकाः !।
अद्युतच्चेन्दुना सार्द्धं तां प्रब्रूत गता यतः ॥ २६ ॥

---

आहृतवान्। तथा राक्षसानाह्वत पूर्ववत् विकल्पः स्पर्द्धायमाङ इत्यात्मनेपदम्। कथमाहृतवानित्याह हे सीताद्रुहः ! सीताहिंसकाः ! शूराः ! राक्षसाः ! वा एत आगच्छत आङ्पूर्वादिणो लोट् संख्ये संग्रामे राघवं प्रत्यर्थयत प्रत्यर्थिनं कुरुत प्रत्यर्थिन्शब्दात्तत्करोतीत्यर्थे णिच् तदन्ताल्लोटः परस्मैपदम् अर्थयाञ्चीयामित्यस्य तु स्वार्थिकण्यन्तस्य सर्वदात्मनेपदित्वात् प्रत्यर्थयध्वमिति वा स्यात् ॥ २५ ॥ ज० म०

आह्वेत्यादि। स रामो मुहुर्वारं वारं शूरान् आह्वास्त अर्थात् युद्धाय राक्षसानपि आह्वत स्पर्द्धायामाङ् इति सं पूर्ववत् ङसी। कथमाह्वत इत्याह हे सीताद्रुहः ! सीताहिंसकाः ! यूयम् एत आगच्छत आङ्पूर्वादिणो गी संख्ये युद्धे राघवं प्रत्यर्थयत प्रत्यर्थिनं कुरुत प्रत्यर्थिशब्दात् लेः क्रत्याख्याने णिरिति क्वतौ ञिः ञीमंश्चेति ङित्त्वे टेर्लोपः अर्थकङ् याचन इत्यस्य वा रूपं क्वचिदात्मनेपदिनोऽपि परस्मैपदितेति न्यायात् केचित् तु चुर्भ्वौ ञिर्वेति ञेरभावपक्षे ङित्त्वान्मं ञौ तूभयपदमेवेत्याहुः ॥ २५ ॥ भ०

स्वपोषमित्यादि। हे मृगपक्षिणां शावकाः ! पोताः ! या सीता युष्मान् स्वपोषमपुषत् पुष्टवती स्वे पुष इति णमुल् यथाविध्यनुप्रयोगः तां प्रब्रूत कथयत यतो यत्र आद्यादित्वात् तसिः गता सत्यद्युतत् द्योतते स्म सार्द्धमिन्दुना चन्द्रमसा तुल्यत्वात् ॥ २६ ॥ ज० म०

स्वपोषमित्यादि। एवंप्रकारेण मृगादीनप्याह्वास्तेति

गिरिमन्वसृपद्रामो लिप्सुर्जनकसम्भवाम् ।
तस्मिन्नायोधनं वृत्तं लक्ष्मणायाशिषन्महत् ॥ २७ ॥

सम्बन्धः हे पक्षिणां मृगाणाञ्च शावकाः ! शिशवः ! या सीता गुणान् स्वपोषम् अपुषत् स्वेन आत्मना धनेन वा पुष्टवती अभिधानात् स्वपूर्वात् पुषेर्णम् तदनुप्रयोगश्च । या इन्दुना सार्द्धम् अद्युतत् तस्या द्योतनेन इन्दोः स्वभावेन गुणीभूतत्वात् ततोऽप्युत्कर्षः सूच्यते सार्द्धंशब्देन समानत्वं वा लक्ष्यते । उभयत्र शासुलिद्द्युतपुषादेरिति ङः पे ङविधानादेव द्युतेः पम् उक्तञ्च अतएव पं तां प्रब्रूत वदत त्वत्स्त्रियास्त्वय्येव कथनं किमर्थम् इत्याशङ्कायामाह गतेति । यस्माद्गता अन्यत्र मां त्यक्त्वेत्यर्थात् । केचित्तु यतो यत्र गता तं देशञ्च ब्रूतेत्यध्याहरन्ति । केचित् तु या यतो यत्नात् अपुषत् इन्दुना सार्द्धं साम्यं गता या अद्युतच्च यतीङ् यत्ने इत्यस्य क्विपीत्याहुः । केचित् तु हे पक्षिमृगशावकाः ! गतायतः सन्तः तां प्रब्रूत गतं गमनं भावे क्तः न यतन्ते इति अयतः कर्त्तरि क्विप् गताय अयतोऽयत्नवन्तः स्थिराः सन्त इत्यर्थं इत्याहुः । गताय नास्ति यत् यत्नो येषां तादृशाः सन्त इत्यन्ये ॥ २६ ॥ भ०

गिरिमित्यादि । गिरिं लक्षीकृत्य गतः लृदित्वादङ् । किमर्थं लब्धुमिच्छुः सनिमीमेत्यादिना इस् अत्र लोप इत्यभ्यासलोपः खरिचेति चर्त्वं जनकसम्भवां सम्भवत्यस्मादिति सम्भवः ऋदोरप् जनकः सम्भवो यस्यास्तां सीताम् अस्मिन् गिरौ आयोधनं युद्धं महदतिशयत्वात् वृत्तं लक्ष्मणायाशिषत् कथितवान् क्रियायोगे चतुर्थी सर्त्तीत्यादिनाऽङ् शास इदङ्हलोरितीत्वं शासिवसीति षत्वम् । कथमकथयदित्याह ॥ २७ ॥ ज० म०

सीतां जिघांसू सौमित्रे ! राक्षसावारतां ध्रुवम् ।
इदं शोणितमभ्यग्रं संप्रहारेऽच्युततयोः ॥ २८ ॥

गिरीत्यादि । जनकसम्भवां सीतां लब्धुमिच्छूरामो-गिरिमनु लक्षीकृत्य असृपत् सृप्लृ गतौ लृदित्त्वात् ङः लभेः सनिमिमीमादेत्यादिना अकारस्य इस् खिलोपश्च स्यादेः सो-लोपश्च भष्भसेरिति पः । सम्भवत्यस्मात् सम्भवः जनकः सम्भवो यस्याः जनकात् सम्भवनं यस्या इति वा तस्मिन् गिरौ वृत्तं महदायोधनं युद्धं लक्ष्मणायाशिषत् उक्तवान् तादर्थ्ये चतुर्थी यदभिप्रेत्य धात्वर्थस्तत्र चतुर्थीति परः शासु अनुशिष्टौ शासु-लिद्द्युदिति ङः शासुङिद्धसुङे इति इत्वं क्विलादिति षत्वम् ॥ २७ ॥ भ०

सीतामित्यादि । इत्येवं लक्ष्मणायाशिषदिति श्लोक-चतुष्टयं यावत् सम्बध्यते । हे सौमित्रे ! सीतां हन्तुमिच्छन्तौ राक्षसावारतामागताविति ध्रुवं निश्चितं उत्प्रेक्षायामित्यन्ये आङ्पूर्वादर्त्तेरादादिकादेवाङ् पुषादिसूत्रे शास्तिसाहच-र्य्येण तस्यैव ग्रहणात् अट्शीङीति गुणः आङ्विनाप्यडागमे कृते रूपमिदं हन्तेः सनि अज्झनगमांसनीति दीर्घः अभ्यासा-च्चेति घत्वम् । कुतो ज्ञातमित्याह इदमभ्यग्रं शोणितं तयोः संप्रहारे युद्धे अच्युतत् गलितं च्यु तिरक्षरणे अकर्मकोऽत्र इर-नुबन्धत्वादिरितो वेत्यङ् सीतां भक्षयितुं तयोरेव विवादो वृत्त इति भावः ॥ २८ ॥ ज० म०

सीतामित्यादि । इत्येवं लक्ष्मणायाशिषदिति श्लोक-चतुष्टयेषु सम्बध्यते । हे सौमित्रे ! ध्रुवं निश्चितं उत्प्रेक्षे वा सीतां हन्तुमिच्छूराक्षसावारतां आङ्पूर्वात् ऋसिगत्यां इत्य-स्मात् ऋप्रापणे चेत्यस्माद्वा वक्तव्यस्येत्यादिना पक्षे ङः इश्नोर्गु-

इदं कवचमच्योतीत् साश्वोऽयं चूर्णितो रथः।
एह्यमुं गिरिमन्वेष्टुमवगाहावहे द्रुतम् ॥ २९ ॥
मन्युर्मन्ये ममास्तम्भीद् विषादोऽस्तभदुद्यतिम्।
अजारीदिव च प्रज्ञा बलं शोकात्तथाजरत् ॥ ३० ॥

---

रिति गुणः आङ्‌ विनापि रूपमेतत् हन्तेः सनि घोऽक्षनिङ्ग-मामिति दीर्घः खेर्ह्रो घः। कुतो ज्ञातमित्याह तयोरेव संप्रहारे युद्धे इदं अभ्यग्रं अभिनवं शोणितं अच्युतत् गलितं च्युति-रत्र णेऽकर्मकः इरित्त्वात् शासुलिदद्युदित्यादिना पक्षे ङः। सीतामन्तु तयोरेव विरोधो जात इति भावः ॥२८॥ भ०

इदमित्यादि। इदं कवचमच्योतीत् भ्रष्टं आङभावे सिजेव भवति अयं रथः साश्वश्चूर्णित आस्ते यतश्चैवं तस्मा-देहि आगच्छ द्रुतं किं पश्चाद्विलम्बसे अमुं गिरिमवगाहावहे विलोडयावः किमर्थं अन्वेष्टुं सीतामित्यर्थात् एतत्सर्वं पर्वतस-मीपे कथ्यते ॥ २९ ॥ ज० म०

इदमित्यादि। कवचमिदं अच्योतीत् भ्रष्टं इरित्त्वात् ङाभावपक्षे व्यां सिः अश्वेन सह चूर्णितोऽयं रथश्चास्ते यत एवं तस्मात् द्रुतं शीघ्रं एहि आगच्छ आङ्पूर्वस्य णो ह्रौ रूपं अन्वे-ष्टुमर्थात् सीतां अमुं गिरिं आवां अवगाहावहे सर्वतः पर्य्य-टावः ॥ २९ ॥ भ०

मन्युरित्यादि। मन्युर्मम शोकः मन्ये इत्यहं सशोकः सुहृज्जनेऽस्तम्भीत् स्तब्धवान् विषाद उद्यतिमस्तभत् अत्र पक्षे अनुनासिकलोपः प्रज्ञा च तत्र विवेकिनी बुद्धिः अजा-रीत् विवेकवैकल्यात् जीर्णेव तथाशब्दः समुच्चये बलं शोका-दजरत् जीर्णं स्वकार्य्याकरणात् ऋदृशो ङीति गुणः जृस्तम्-भ्वित्यादिना सिजङौ ॥ ३० ॥ ज० म०

गृध्रस्येहाश्वतां पक्षौ क्षत्तौ वीक्षस्व लक्ष्मण ! ।
जिघांसोर्नूनमापादि ध्वंसोऽयं तां निशाचरात् ॥ ३१ ॥

---

मन्युरित्यादिना । हे सौमित्रे ! मन्युः शोको मम मन्ये स्कन्धमूर्त्तिशिराद्वयमस्तम्भीत् शोकजन्यवायुना मन्यास्तम्भो नाम व्याधिर्जात इत्यर्थः मन्युशोकौ तु शुक् स्त्रियां, पश्चाद्ग्रीवाशिरा मन्येति चामरः । विषाद उत्साहविपर्य्यय उद्यतिं उद्यममस्तभत् स्तन्भुधातुः सौत्रिकः शासलिद्युदिति वाङ् हसुनङ्लोपः ङाभावपक्षे व्यां सिः उत्पूर्वाद्यमेः क्तो वनतनाद्यनिमामिति मलोपः । मम प्रज्ञा बुद्धिस्त्वाजारीत् कर्त्तव्यमूढत्वाज्जीर्णेव तथा मम बलं शोकात् अजरत् कार्य्याक्षमत्वाज्जीर्णमिव पूर्ववद्वाङ् हश्योर्णुरिति गुणः पक्षे सिः व्रजवदेति व्रिः । तथेति समुच्चयाभ्युपगमसाहश्येष्विति वृद्धाः ॥ ३० ॥ भ०

गृध्रस्येत्यादि । हे लक्ष्मण ! इह प्रदेशे गृध्रस्य पक्षौ क्षत्तौ छिन्नौ अश्वतां शूनौ पूर्ववदङि श्वयतेरः इति वीक्षस्व नूनमवश्यं सीतां जिघत्सोरत्तुमिच्छोर्गृध्रस्य अदेर्लुङ्सनोर्घस्लृः निशाचरादयं ध्वंसः पक्षच्छेद आपादि उत्पन्नः कर्त्तरि लुङ् चिण्तेपद इति च्लेश्चिणादेशः तशब्दस्य चिणो लुक् ॥ ३१ ॥ ज० म०

गृध्रेत्यादि । हे लक्ष्मण ! इह स्थाने गृध्रस्य क्षत्तौ छिन्नौ पक्षौ अश्वतां वायुना मांसादिपरिणामेन वा वृद्धिं गतौ इति वीक्षस्व पश्य टु ओश्वि गतिवृद्ध्योः पूर्ववा वा ङः वच्यस्यश्वपतामिति श्वः नूनं निश्चितं तां सीतां जिघांसोर्गृध्रस्य अयं ध्वंसः पक्षच्छेदः निशाचरादापादि उत्पन्नः पदस्तनीण् घे

क्रुद्धोऽदीपि रघुव्याघ्रो रक्तनेत्रोऽजनि क्षणात् ।
अबोधि दुःस्थं त्रैलोक्यं दीप्तैरापूरि भानुवत् ॥ ३२ ॥
अतायस्योत्तमं सत्वमप्यायि कृतकृत्यवत् ।

---

इति कर्त्तरि इण् इणस्तन्लोपः । जिघत्सोरिति पाठे अत्तुं भोक्तुमिच्छोः घस्लृदः सनिति अदेर्घस्लृः सत्यरे ॥३१॥ भ०

क्रुद्ध इत्यादि । तदेवं रघुव्याघ्रो रामः क्रुद्धोऽदीपि दीप्तवान् क्षणाच्च रक्तनेत्रोऽजनि जातः जनिवध्योश्चेति न वृद्धिः त्रैलोक्यं निहन्मि यस्मिन् हन्यमानेऽपि सीताद्रुहोऽपि नश्यन्ति इत्यभिप्रायेण दुःस्थमबोधि बुध्यते स्म किंवा रामस्य दारा ह्रियन्ते तदान्येषु का कथा इति दुःस्थं त्रैलोक्यमबोधि दीप्तैस्तेजोभिर्हेतुभिरापूरि वर्द्धते स्म भानुवदादित्यवत् दीप्तैरिति भावे निष्ठा सर्वत्र कर्त्तरि लुङ् दीपजनेत्यादिना चिण् ॥ ३२ ॥ ज० म०

क्रुद्ध इत्यादि । लक्ष्मणायैवमुक्त्वा रघुव्याघ्रो रामः क्रुद्धः सन् अदीपि जज्वाल क्षणाच्च रक्तनेत्रोऽजनि जातः त्रैलोक्यमेवं दुःस्थम् अबोधि ज्ञातवान् मनुमलब्ध्वा तन्नाशाय त्रैलोक्यमपि नाशयिष्यामीत्याशयः येनाहमपि दुःस्थः कृतस्तेन सुतरां जगद्दुःस्थमिति वा दीप्तैस्तेजोभिर्हेतुभिरापूरि वर्द्धते स्म भानुरिव दीपेर्भावे क्तः सर्वत्र पदस्तनीण् घे इत्यादिना कर्त्तरि पाक्षिक इण् इणस्तन्लोपः जनवधः सेम इत्यादिना जनेकृत्सः ॥ ३२ ॥ भ०

अतायीत्यादि । अस्य रामस्य उत्तमं सत्वमभिप्रायः शोकव्यसनयोरविकारत्वात् अतायि सन्ततं नान्तरा विच्छिद्यते स्म अप्यायि वृंहितं कृतकृत्यवत् समाप्तक्रियवत् हस्ततलस्थं मनुबधं मन्यमानस्य उभयत्रापि पूर्ववाच्चण् तस्य

उपाचायिष्ट सामर्थ्यं तस्य संरम्भिणो महत् ॥ २३ ॥
अदोहीव विषादोऽस्य समरुद्धेव विक्रमः ।
समभावि च कोपेन न्यश्वसीच्चायतं मुहुः ॥ २४ ॥

---

रामस्य संरम्भिणः शत्रुविषये क्षुभितचित्तस्य सामर्थ्यं बलमुपाचायिष्ट स्वयमेवोपचीयते स्म चिनोतेरचः कर्मकर्मरीति चिण् पक्षे चिण्वदिट् चेति ॥ २३ ॥ ज० म०

अतेत्यादि। अस्य रामस्य सत्वं व्यवसायः स्वभावो वा अतायि सन्ततं बभूव नान्तरा विहन्यते स्म उत्तमं व्यसनेऽपि अविकृतं तायृङ् पातनसन्तत्योः अप्यायि वर्द्धते स्म कृतकृत्यवत् समासक्तिय इव क्रोधोत्साहाधिक्यात् विहितो वैरिवध इत्यध्यवसायात् प्यायीङ् वृद्धौ उभयत्र पूर्ववद्वा इण् संरम्भिणः शत्रुविषये क्रुद्धस्य तस्य रामस्य सामर्थ्यं महदुपाचायिष्ट स्वयमेवोपचीयते स्म हनग्रहदृश च इति चिनोतेः सेर्मिण् कर्मकर्त्तरि चायृङ् निशानेऽर्चे इत्यस्यानेकार्थत्वात् कर्त्तर्य्येवेदं रूपमित्यन्ये। सत्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः। आत्मनि व्यवसाये च चित्ते प्राणिषु जन्तुष्विति विश्वः॥ २३ ॥ भ०

अदोहीत्यादि। अस्य रामस्य विषादः प्रागुत्पन्नोऽदोहीव स्वयं क्षरित इव अथवा अदोहीव प्रपूर्य्यते स्मेव विक्रमः पुरुषकारः समरुद्धेव संरुध्यते स्म इव कर्मवदित्यादिना कर्मवद्भावेन प्राप्तस्य चिणो न रुध इति निषेधः तेन सिजेव भवति झलोझलीति सिचो लोपः झषस्तथोर्धोऽधः झलाञ्जश्झशीति धत्वजत्वे कोपेन च समभावि सम्भूतं चिण् भावकर्मणोरिति भावे चिण् त्रैलोक्यदौस्थ्यावबोधाज्जातखेदः सन् आयतं दीर्घं

अम्प्रकरणं कथ्यते ।

अथावलम्ब्य धनूरामो जगर्ज गजविक्रमः ।
रुणध्मि सवितुर्मार्गं भिनद्मि कुलपर्वतान् ॥ २५ ॥

---

न्यश्वसीत् निश्वसितवान् ह्यन्तेति वृद्धिर्न भवति मुहुरिति सर्वत्र योज्यम् ॥ २४ ॥ ज० म०

अदोहीत्यादि । अस्य रामस्य प्रागुत्पन्नो विषादः स्वयमेवादोहि इव क्रोधातिशयात् स्वयं चरित इव पूर्य्यते स्रवेत्यन्ये वेत्त्यजदुह इति कर्मकर्त्तरि वा इण् विक्रमोऽपि समन्तदेव स्वयमेवान्तः प्रविष्ट इव न तपदुधसढेति कर्मकर्त्तरि इण्निषेधः झसस्वादिति सिलोपः अस्य कोपेन समभावि सम्भूतं रतनोर्यगिणाविति भावे इण् कोपात् मुहुर्वारंवारं आयतं दीर्घं यथा स्यात्तथा रामो न्यश्वसीत् ह्मसादेः सेम इत्यादौ श्वसवर्जनात् न वृद्धिः । इति सिजधिकारः ॥२४॥ भ०

इतः प्रभृति अम्प्रकरणमधिकृत्याह । अथेत्यादि । अथानन्तरं रामो धनुरालम्ब्य गृहीत्वा जगर्ज विस्फुर्जितवान् धनूराम इति द्रलोप इति दीर्घः । गजगतिः सवितुः सूर्य्यस्य मार्गं पन्थानं रुणध्मि आवृणोमि शरैरित्यर्थात् तथा भिनद्मि विदारयामि कुलपर्वतान् ॥ २५ ॥ ज० म०

अथ नशब्दाधिकारः । स च स्वमते अण् । अथेत्यादि । अनन्तरं गजपराक्रमो रामो धनुरालम्ब्य गृहीत्वा जगर्ज सिंहनादं चकार । किं कृत्वा जगर्जेत्याह अहं सवितुः सूर्य्यस्य मार्गं पन्थानं रुणध्मि आवृणोमि अर्थात् शरैः मृदत्वादेव ममेदृशं कर्म संवृत्तं इदानीं महतां दण्डभयादन्योऽपि सीतां दास्यति न च पुनरेवं कोऽपि करिष्यतीति भावः अतएव न दृणेद्मीति लोकोऽयमिति वक्ष्यति कुलपर्वतान् पृथिव्या अवस्तम्भकान्

रिणच्मि जलधेस्तोयं विविनच्मि दिवः सुरान्।
चुणद्मि सर्पान् पाताले छिनद्मि क्षणदाचरान् ॥ २६ ॥

---

पर्वतानपि अहं भिनद्मि विदारयामि रुधिरौज आवृतौ जधौ: भिदिर्भिदि दिवसुतुदरुधेति अणेव श्नमादिवत् प्रकृतिप्रत्ययोः साहाय्यकारित्वान्न शप् दिवसुतुदरुधक्रादेरिति षष्ठेकवचनान्तं पदं तेन दिवादिप्रभृतीनां सम्बन्धे श्यनादयो रे परेनिर्दिष्टा इत्यर्थः ते कुत्र भवन्तीत्याशङ्क्य वृत्तावुक्तं एभ्य इति तेन सूत्रे षष्ठीनिर्देशात् रुधादेः श्नम् णित्वादन्त्याच उत्तरः एभ्य इति वृत्तौ पञ्चमीनिर्देशादन्ये प्रकृतेरुत्तर इति बोध्यं न च सूत्रे पञ्चमीनिर्देशेऽपि णित्वात् श्नम् रुधादेरन्त्यादचः परे भवितुमर्हति णमित इत्यस्य षष्ठ्यन्त एव विषयत्वात् शासुलिद्युतपुषादेरिति पञ्चम्यन्तत्वात् प्रकृतेः परो ङः न तु ङित्वादन्त्यस्य स्थाने इत्यादिदर्शनात् षष्ठीनिर्देशेऽपि पञ्चम्यर्थो गम्यते। तथाहि "अनडुत्पुंपयोलक्ष्मीनावामिकत्ववाचिनाम्। नित्यं कः स्याद् बहुव्रीहौ वा स्याद् द्वित्वबहुत्वयोः ॥" इति। अन्यत्रापि "नित्यात्वतां स्वरान्तानां सृजिदृश्योश्च वेट्थलि। क्वचि नित्यानिटः स्युश्च वृव्येऽदां नित्यमिट्थलि ॥" इति ॥ २५ ॥ भ०

रिणच्मीत्यादि। जलधेस्तोयं रिणच्मि रिक्तीकरोमि रिचिर विरेचने दिवः सर्गात् सुरान् विविनच्मि पृथक्करोमि विचिर पृथग्भावे चुणद्मि चूर्णयामि सर्पान् पाताले चुदिर पेषणे अट् कुप्वाङिति णत्वं छिनद्मि क्षणदाचरान् राक्षसान् द्विधा करोमि छिदिर द्वैधीकरणे ॥ २६ ॥ ज० म०

रिणच्मीत्यादि। जलधेः समुद्रस्य तोयं रिणच्मि रिक्तीकरोमि रिचिर्जधौ विरेके रेफात् अणो णत्वं सुरान् दिवः

यमं युनज्मि कालेन समिन्धानोऽस्त्रकौशलम्।
शुष्कपेषं पिनष्म्युर्वीमखिन्दानः स्वतेजसा ॥ ३७ ॥

---

स्वर्गात् विविनच्मि पृथक्करोमि विचिर्लिंधौञ् पृथक्त्वे विपूर्वः सुरायोगात् सुराः अर्श आदित्वादः। तदुक्तं "सुरापरिग्रहाद्देवाः सुरा इत्यभिविश्रुताः" इति। किंवा सुरन्ति भान्ति ईशते वा इति सुराः सुरश्भैश्वर्ययोरित्यस्मात् कृगॄज्ञाप्रीजुष इति कः। पाताले सर्पान् क्षुणद्मि चूर्णयामि ञधौक्षुदिर्चुदि क्षुत्सम्पेषणे षकाराभावत्वं पतन्ति लोका अस्मिन्निति पातालं निपातनात् क्षणदाचरान् छिनद्मि द्वैधीकरोमि छिदिधौञ् छेदे ॥ ३६ ॥ भ०

यममित्यादि। यममपि कालेन तदधीनेन मृत्युना युनज्मि सम्बध्नामि अस्त्रकौशलं समिन्धानः संवर्द्धयन् ञि इन्धी दीप्तौ आत्मनेपदिनो लटः शानच् श्नान्नलोपः श्नसोरल्लोपः उर्वीं शुष्कां कृत्वा चूर्णयामि पिष्लृ संचूर्णने शुष्कचूर्णरुक्षेषुपिष इति णमुल् अखिन्दानः स्वतेजसा दैन्यमभजन् अपरिश्राम्यन् खिद दैन्ये पूर्ववत्लोपः ॥ ३७ ॥ ज० म०

यममित्यादि। यममपि कालेन मृत्युना अहं युनज्मि हन्मीत्यर्थः युजिर्धाञ्युतौ अस्त्रकौशलं समिन्धानः वर्द्धयन् इन्धीञ् धञ्दिद्युतौ शानः नशोनलोप्य इत्युङ्लोपः नशोन्रेऽणाविति नस्य अकाररहितत्वम्। उर्वीं शुष्कपेषं पिनष्मि चूर्णयामि धौपिषल्ट चूर्णने शुष्कचूर्णरुक्षात् पिषो णम् गतार्थत्वे तदनुप्रयोगश्चेति परः स्वमते चणं वेत्वस्य योगविभागात् चैशुष्पचो मकव इति शुषेः तस्य कः। स्वतेजसा अखिन्दानः दैन्यमभजन् अपरिश्राम्यन् वा खिदङ्ध्यौ दैन्यके नशोन्रेऽणौ ॥ ३७ ॥ भ०

भूतिं तृणह्मि यक्षाणां हिनस्मीन्द्रस्य विक्रमम् ।
भनज्मि सर्वमर्य्यादास्तनच्मि व्योम विस्तृतम् ॥ ३८ ॥
न तृणेह्मीति लोकोऽयं मां विन्ते निष्पराक्रमम् ।
एवं वदन् दाशरथिरपृणग्धनुषा शरम् ॥ ३९ ॥

---

भूतिमित्यादि । यक्षाणां भूतिं सम्पदं तृणह्मि उत्साद-यामि उतृदिरहिंसानादरयोः इन्द्रस्य विक्रमं हिनस्मि अप-नयामि हिसि हिंसायां इदितो नुम् तस्य श्नान्नलोपः सर्वमर्य्यादाश्च व्यवस्थाः सर्वेषां भनज्मि मर्दयामि भञ्जो आमर्दने श्नान्नलोपः तनच्मि व्योम विस्तृतं सङ्कोचयामि स्तृञ आच्छादने क्तान्तेन चौरादिकस्य रूपं तञ्चूसङ्कोचे श्नान्नलोपः । कस्मादेवं प्रवृत्तस्त्वमिति चेदाह ॥ ३८ ॥ ज० म०

भूतिमित्यादि । यक्षाणां भूतिं सम्पदं तृणह्मि नाश-यामि तृहज् धिर्नादरे च चकाराद्धिंसायां इन्द्रस्य विक्रमं हिनस्मि अपनयामि हिसधिकि हिंसे नशोनलोप्य इति इदि-त्वात् क्ततनुणो लोपः सर्वेषां मर्य्यादा व्यवस्था भनज्मि निव-र्त्तयामि भन्जोधौ मोटने व्योम्न आकाशस्य विस्तृतं विस्तारं तनच्मि सङ्कोचयामि तञ्चुधसंकुचि तनज्मीति पाठे तन्जुध-सङ्कोचे स्तृनञ्स्तृतावित्यस्माद्भावे क्तः व्योमविशेषणे विस्तृत-मिति निरर्थकं स्यात् ॥ ३८ ॥ भ०

न तृणेह्मीत्यादि । न तृणेह्मि न मारयामि इति कृत्वा तृहिहिसि हिंसायां श्नम् तृणह इम् अयं लोको मां निष्परा-क्रमं निर्वीर्य्यं विन्ते विचारयति विदविचारण इत्यस्मादात्मने-पदिनः श्नम् श्नल्लोपः एवमुक्तेन प्रकारेण वदन् दाशरथिः धनुषा शरम् अपृणक् पृणक्ति स्म पृचीसम्पर्के लङि श्नम हल-

अथ प्रकीर्णकाः।

न्यवर्त्तयत् सुमित्राभूस्तं चिकीर्षुं जगत्क्षयम्।
ऐक्षेतामाश्रमादाराद्गिरिकल्पं पतत्रिणम्॥ ४०॥

---

सादिलोपः कुत्वम् इति श्रम् विकरणनिदर्शनम्॥ ३९॥ ज० म०

न हणेद्मीत्यादि। कथमेवं प्रवृत्तिरित्याह अहं न हणेद्मि न हन्मि इति कृत्वा मनसीत्यर्थात् अयं लोकः मां निष्पराक्रमं विन्ते विचारयति तेन मे पत्नपहारो वृत्त इति भावः धीविदङ् मीमांसे नणोनृऽणी व्हध हिंसे व्हह इण् पिइसे इति नण इण् ऋकारात् णत्वं दाशरथीराम एवं वदन् धनुषा शरम् अपृणक् युनक्ति स्म पृच्धीच् सम्पर्के हसङ्ग्रां दिसेरिति दिलोपः चुङिति कङ् ऋतो णत्वं शृणाति हिनस्तीति शरोऽनन्तः तालव्यादिः दन्त्यादिरप्यस्ति। चित्रपुङ्खः शरः सर इति त्रिकाण्डशेषः। इति नशब्दाधिकारः॥ ३९॥ भ०

इतः प्रकीर्णकश्लोकानाह। न्यवर्त्तयदित्यादि। तं रामं जगत्क्षयं चिकीर्षुं कर्त्तुमिच्छुं सुमित्राभूर्लक्ष्मणो न्यवर्त्तयत् निवर्त्तितवान्। भ्रातः! अलं कोपेन त्वया सार्द्धं कः संग्रामे युद्धं दातुं समर्थः यदत्र युक्तं तत्प्रतिविधीयतामिति भवनं भूः सम्पदादित्वात् क्विप् सुमित्रायां भूर्यस्य ऐक्षेतां रामलक्ष्मणौ दृष्टवन्तौ लङि रूपं पक्षिणं गिरिकल्पं महाप्राणित्वात् आश्रमादारात् समीपे दूरान्तिकार्थैरिति पञ्चमी॥४०॥ ज० म०

अथ प्रकीर्णकाः। न्यवेत्यादि। इत्थं जगतः क्षयं कर्त्तुमिच्छन्तं तं रामं सुमित्राभूर्लक्ष्मणः न्यवर्त्तयत् निवारयामास अन्यापराधेनान्यदण्डानौचित्यात् सुमित्रा भूरुत्पत्तिस्थानं यस्य सुमित्रायां भूर्भवनं यस्येति या सुमित्राया भवतीति वा।

तं सीताघातिनं मत्वा हन्तुं रामोऽभ्यधावत ।
मा वधिष्ठा जटायुं मां सीतां रामाहमैक्षिषि ॥ ४१ ॥

---

क्षिवन्तमिदं रूपम् । अथ रामलक्ष्मणौ आश्रमादारात् समीपे गिरिकल्पं पर्वततुल्यं पतत्रिणं पक्षिणं ऐक्षेतां दृष्टवन्तौ अन्यारभ्यार्थारादिति पञ्चमी ॥ ४० ॥ भ०

तमित्यादि । तं सीताघातिनं सीता हतानेनेति मत्वा रामो हनिष्यामीत्यधावत धावुगतिशुद्ध्योरित्यस्माल्लङि स्वरितेत्वादात्मनेपदं तं हन्तुमुद्यतं रामं जटायुराह मा वधिष्ठा इति हे राम ! मां जटायुं मा वधिष्ठाः मा वधीः वधबन्धने इत्यस्मादनेकार्थत्वादात्मनेपदिनः सेटो लुङि रूपं न हन्तेः सत्याङि आङो यमहन इत्यात्मनेपदं नास्ति अकर्मकादित्यनुवृत्तेः स्वनामपरिकीर्त्तनं तव पितुरहं सखेति ख्यापनार्थं सीतामैक्षिषि दृष्टवानहं लुङुत्तमैकवचने अतो मां मा वधिष्ठाः ॥ ४१ ॥ ज० म०

तमित्यादि । तं पक्षिणं सीताघातिनं सीतामयं हतवान् इति मत्वा हन्तुं रामोऽभ्यधावत वेगेन अभिमुखं गतवान् धावुञ्जवे स्वजि उपास्थितैवमुक्ते तमिति वक्ष्यमाणश्लोकेनान्वयाद् मा वधिष्ठा इत्यादिपद्यार्द्धं हन्तुमुद्यतं रामं प्रति जटायुवाक्यमिति मस्यते । हे राम! जटायुं मां त्वं मा वधिष्ठा न मारय हन्तेः स्यासव्यां सिः हनवधष्टीव्यलीति वधादेशः धात्वन्तरत्वात् वसोरस्येतीम् आत्मनेपदमिच्छन्ति परस्मैपदिनां क्वचिदिति परवाक्यात् स्वमते बाहुल्यात् आत्मनेपदं किंवा आङ्पूर्वहन्तेः आत्माङ्गढादद्धाच्चाहनयम इति मं आत्माङ्गढादित्यस्य क्वचिद्व्यभिचारात् । तथाच "गाण्डीवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षः" इति

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



उपाश्चितैवमुक्तो तं सखायं राघवः पितुः ।
पप्रच्छ जानकीवार्त्तां संग्रामञ्च पतत्त्रिणम् ।
ततो रावणमाख्याय द्विषन्तं पततां वरः ॥ ४२ ॥

किंवा जटायुमिति नामकीर्त्तनेन तव पितुः सखा अहमिति ज्ञापितं तेन च तव पितुः सख्यदार्ढ्येनाहं तव स्वाङ्गमिव मम हिंसया तव स्वाङ्गहिंसा व्यथेति आरोपितात्माङ्गत्वादा-त्माङ्गढादित्यात्मनेपदं किंवा आत्माङ्गढ़ादित्यत्र आत्मशब्देना-त्मीयोऽपि लक्ष्यते किंवा धातूनामनेकार्थत्वाद् बधङ् निन्देच इत्यस्य रूपं कित्तिजगुप इत्यादौ निन्दाबधेः सन्विधानादत्र न सन् जटा आयुर्यस्येति व्युत्पत्त्या तस्य च प्रवयसो जटायुषः स्वर्गिणः किमनुशोच्यतेऽधुनेति दर्शनाच्च जटायुमिति चिन्त्य-मिति भ्रान्ता वदन्ति यतो बाहुल्यादिणधातोरुण्प्रत्यये आयुशब्दोऽयमुदन्तोऽपि दृश्यते । यथा "वायुना जगदायुनेति जटायुश्च जटायुः" इति शब्दभेदः । "पौलस्त्यस्य जटायुषा विघ-टितः कार्ष्णायसोऽयं रथः पश्यैते पुरतः पिशाचवदनाः कङ्का-लशेषाः कृताः । खड्गच्छिन्नजटायुपक्षतिरितः सीतां चलन्तीं वहन्नन्तर्व्याकुलविद्युदम्बुद इव द्यामभ्युदस्थादरिः॥" इत्येतत्-पद्यमुनादिवृत्तावुज्ज्वलदत्तेन जटायुशब्दस्य सन्तोदन्तत्वे न हेरू-प्यशापनायोदाहृतम् । अहं सीतामैक्षिषि दृष्टवान् त्वां सि-द्धम् अतोऽपि मा बधिष्ठा इति भावः ॥ ४१ ॥ भ०

उपास्थित इत्यादि । पक्षिणैवमुक्ते सति राघवस्तं रण-भङ्गानुष्ठानेन उपास्थित परिचितवान् सङ्गतकरण आत्मनेपदं स्थाघ्वोरिच्चेतीत्वं ह्रस्वादङ्गादिति सिचो लोपः । पितुः सखाय-मिति कृत्वा सखिशब्दाद्द्वितीयैकवचने रूपं सख्युरसम्बुद्धा-विति णिल्वाद्वृद्धिरायादेशः पप्रच्छ पृष्टवान् तं पक्षिणं जटायुं

व्रणवेदनया ग्लायन्ममार गिरिकन्दरे ।
तस्याग्न्यम्बुक्रियां कृत्वा प्रतस्थाते पुनर्वनम् ॥ ४३ ॥
सत्वानजस्रं घोरेण बलापकर्षमश्नता ।

---

किं जानकीवार्त्तां संग्रामञ्च तत उपस्थानानन्तरं रावणं द्विषन्तं शत्रुम् आख्याय कथयित्वा रावणेन हृता सीतेति पततां पक्षिणां वरो जटायुर्ममारेति परेणान्वयः ॥ ४२ ॥ ज० म०

उपेत्यादि । पक्षिणा एवमुक्ते सति राघवस्तं पितुः सखायं उपास्थित आराधितवान् मैवाध्वसङ्ग इति मं स्यादेङिष्टौमे इति ङिर्गुणाभावश्च झस्स्वादिति सिलोपः । तत उपस्थानानन्तरं द्विषन्तं शत्रुं रावणमाख्याय सीता तेन हृतेति कथयित्वा पततां पक्षिणां वरः श्रेष्ठो जटायुर्ममारेति वक्ष्यमाणश्लोकेन सम्बन्धः ॥ ४२ ॥ भ०

व्रणेत्यादि । व्रणकृता वेदना पीडा मध्यपदलोपी समासः तया ग्लायन् ग्लानिं गच्छन् शतर्य्यायादेशः ममार मृतः क्व गिरिकन्दरे यं गिरिमन्वसृपत् तस्य निम्नप्रदेशे कन्दं रातीति व्युत्पत्तिमात्रं तस्य जटायोरग्न्यम्बुक्रियां दाहमुदकदानञ्च कृत्वा पुनर्भूयो वनमरण्यं प्रतस्थाते प्रस्थितौ समवप्रविभ्य इत्यात्मनेपदम् ॥ ४३ ॥ ज० म०

व्रणेत्यादि । व्रणेन या वेदना तया ग्लायन् ग्लानिं गच्छन् ममार अथ गिरिकन्दरे यं गिरिमन्वसृपद्रामस्तस्य निम्नप्रदेशे गुहायां वा अग्निक्रियां दाहं अम्बुक्रियां तर्पणं च कृत्वा पुनर्वनं प्रतस्थाते अर्थाद्रामलक्ष्मणौ प्रातश्चानिर्णयेत्यादिना प्रश्नो मं सृङष्टीव्येममिति नियमात् ठीपम् । अथालम्बा धनूराम इत्यादिपद्याद्यदनन्तरं सीताविरहदुःखार्त्तः कोपसं-

क्षुध्यता जगृहाते तौ रक्षसा दीर्घबाहुना ॥ ४४ ॥
भुजौ चक्रततुस्तस्य निस्त्रिंशाभ्यां रघूत्तमौ ।

---

रक्तलोचन इति यमं युनज्मि कालेनेत्यादिपद्यार्द्धादनन्तरं विनज्मि धाम सर्वेषां द्रक्ष्येऽहं सकलं जगदिति एवं वदन् दाशरथिरित्यादि पद्यार्द्धादनन्तरं जगन्नाशाय सन्नद्धस्तृणवत् स्वेन तेजसेति न्यवर्त्तयत् सुमित्राभूरित्यादिपद्यार्द्धादनन्तरं तेजःक्षात्रं विभ्राणं दिधक्षन्तमिवानलमिति तं सीताघातिनं मत्वेत्यादिपद्यार्द्धादनन्तरं प्रोवाच स तदा पक्षी भयाद्रामेण तर्जित इति उपास्थितैवमुक्तो तमित्यादिपद्यार्द्धादनन्तरं प्रपच्छ जानकीवार्त्तां संग्रामञ्च पतत्रिणमिति तस्यान्त्यसुक्रियां कृत्वेत्यादिपद्यार्द्धादनन्तरं विराधमीयिवांसौ तां विचिन्वानावितस्तत इति पद्यार्द्धं केनचित् क्वचित् पुस्तके प्रक्षिप्तं सर्वमिदं प्राचीनैरुपेक्षितत्वादमूलमेव तत्राप्यथालम्बत धनूराम इत्यादिपद्यार्द्धादनन्तरं सीताविरहदुःखार्त्तः कोपसंरक्तलोचन इति पद्यार्द्धमतीवायुक्तं नशब्दाधिकारे नशब्दाभावात् ॥ ४३ ॥ भ०

सत्वानित्यादि। तौ रामलक्ष्मणौ रक्षसा राक्षसेन जगृहाते गृहीतौ कर्मणि लिट् किं नाम्ना दीर्घबाहुना अन्वर्था चेयं संज्ञा एक एकेन बाहुना द्वितीयो द्वितीयेन क्षुध्यता बुभुक्षमाणेन घोरेण भीमेन सत्वान् अजस्रं सदा नञ्पूर्वाज्जसो नमि कम्पीति रः अश्नता भुञ्जानेन किं कृत्वा बलापकर्षं बलादाकृष्यैव पाकादिकमनपेक्ष्य अपादाने परीप्सायामिति णमुल् ॥ ४४ ॥ ज० म०

सत्वानित्यादि। तौ रामलक्ष्मणौ दीर्घबाहुनाम्ना रक्षसा जगृहाते गृहीतौ कर्मणि ठी क्षुध्यता बुभुक्षुणा दिवादित्वात्

स छिन्नबाहुरपतद् विह्वलो ह्वलयन् भुवम् ॥ ४५ ॥

इति प्रकीर्णकाः ।

अथ कृत्याधिकारः ।

घ्नन् बलापकर्षं सत्वान् प्राणिनोऽजस्रं निरन्तरम् अश्नता भक्षयता बलादपकृष्य त्वरया परिष्कारादिकमकृत्वैव पञ्चम्यन्तात्त्वरायां णमिति परः स्वमते बलेनापकर्षोऽपकर्षणं यत्रेति सत्वभक्षणक्रियाविशेषणं एतेन त्वरया परिष्कारादिकं तदपि प्राप्तं परिष्कृतत्वादौ बलहेतुत्वस्य वैयर्थ्यात् चणम् वेत्यस्य योगविभागाद्वा चणम् घोरेण भयदेन नञ्पूर्वाज्जसेर्हिंसदीपकम्पाजसेति रः ॥ ४४ ॥ भ०

भुजावित्यादि । रघूत्तमौ रामलक्ष्मणौ तस्य योजनबाह्वोः बाहू यथास्थानमागतौ चकृततुः छिन्नवन्तौ कृतीच्छेदने इत्यस्य रूपं काभ्यां निस्त्रिंशाभ्यां खड्गाभ्यां निर्गतस्त्रिंशतोऽङ्गुलिभ्य इति वाक्ये डच्प्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानमिति त्रिंशच्छब्दाड्डच्विधिः निरादय इति समासः टिलोपः । स छिन्नबाहुः कृत्तभुजः सन् अपतत् पतितः पतेर्लङि रूपं लृदित्त्वादङ् विह्वलो व्याकुलः भुवं भूमिं ह्वलयन् ह्वलचलने घटादित्वे ह्रस्वत्वम् । इति प्रकीर्णकाः ॥४५॥ज०म०

भुजावित्यादि । रघूत्तमौ निस्त्रिंशाभ्यां तस्य रक्षसो भुजौ स्वस्वग्रहणोद्यतौ चकृततुः कृतीशपच्छिदि त्रिंशतोऽङ्गुलीभ्यो निर्गतः निस्त्रिंशः निशः शतो ड इति सूत्रे निश इति निर्देशात् निष्पतम्य इत्यादिवत् ज्ञापकप्राप्तस्य षत्वस्याभावः त्रिंशतोऽङ्गुलीभ्योऽधिकं परिमाणं खड्गस्योक्तम् निस्त्रिंशः कर खड्गयोरिति कोषः । स छिन्नबाहुः सन् भुवं ह्वलयन् कम्पयन्

प्रष्टव्यं पृच्छतस्तस्य कथनीयमवीवचत्।
आत्मानं वनवासञ्च जेयञ्चारिं रघूत्तमः ॥ ४६ ॥

न्यपतत् ह्वलज्वलचालेत्यादिना अगेर्वा ह्रस्वः विह्वलो व्याकुलः। इति प्रकीर्णकाः ॥ ४५ ॥ भ०

इतः परं कृत्याधिकारः। प्रष्टव्यमित्यादि। स योजनबाहुः निहतो रामं पप्रच्छ को भवान् कस्य पुत्रः कथं तव वनवासः कस्माच्चोद्विग्नः सन् भ्रमसीति प्रष्टव्यं प्रश्नार्हं पृच्छतस्तस्य तव्यत्तव्यानीयर इति तव्यत् व्रश्चेति षत्वं टत्वञ्च रघूत्तमः इदानीं कथनीयं कथनार्हं तत्प्रश्नानुरूपं पूर्वेणानीयर अवीवचत् वक्ति स्म वचभाषणे चौरादिकः स्वार्थिको णिच् लुङ् चङ् णिलोपह्रस्वः द्विर्वचनसन्वद्भावेत्वदीर्घत्वेषु रूपम् किं तदित्याह आत्मानं रामो दाशरथिरिति वनवासं पितुरादेशात् वनवासं जेयं चारिं यः कनकमृगच्छलेन रावणः सीतामपहृतवान् ॥ ४६ ॥ ज० म०

अथ कृत्याधिकारः। स्नमते त्यास्तव्यानीयघ्यण्क्यप्केलिमाः। प्रष्टव्यमित्यादि। कस्त्वं कथमिहागत इत्यादि प्रश्नार्हं पृच्छतस्तस्य राक्षसस्य सम्बन्धे रघूत्तमः कथनार्हं प्रश्नानुरूपं अवीवचत् कथितवान् वच्कच्सन्देशे क्त्वात् चुरादेः ञिश्रीत्यङ् ञङ्ङः स्वः खे सन्वत् ञेर्लोपः। किन्तदित्याह आत्मानं पित्रादिसम्बन्धेन वनवासं वनवासकारणमर्थात् जेयं जतव्यमरिं शत्रुं रावणं शत्रु,तावोजसहितमित्यर्थात् प्रच्छीशन्नीप्से तव्ये शच्छाजिति षङ् शतरि तु ग्रहस्वपाद्योरिति जिः कथत्क वाक्यप्रबन्धे हसान्तोपोऽशित्ययोरित्यकारलोपेऽपि स्थानिवद्भावान्नञ्णित्यन्तेञ्ङतोरिति ञिः ञेर्लोपः तेत्याः शक्यार्हेति अर्हे इत्यर्थे सर्वत्र त्यः ॥ ४६ ॥ भ०

लभ्या कथं नु वैदेही शक्यो द्रष्टुं कथं रिपुः।
सह्यः कथं वियोगश्च गद्यमेतत्त्वया मम ॥ ४७ ॥
अहं राम! श्रियः पुत्त्रो मद्यपीत इव भ्रमन्।
पापचर्य्यो मुनेः शापाज्जात इत्यवदत् स तम् ॥ ४८ ॥

---

लभ्येत्यादि। कथं केन प्रकारेण उपायेन लभ्या वैदेही प्राप्या पोरदुपधाद्दिति यत् शत्रुः केन प्रकारेण द्रष्टुं शक्यः शकधृषेत्यादिना तुमुन् वियोगश्चायं सीतायाः कथं केन प्रकारेण सह्यः सोढव्यः सकिसहोश्चेति यत् गद्यमेतत् कथनीयमेतत् गदमदेत्यादिना यत् ममेति शेषविवक्षायां षष्ठी। त्वं पुनः कः इति पृष्ट आह ॥ ४७ ॥ ज० म०

लभ्येत्यादि। इत्यपि अवोचदिति सम्बन्धः नु प्रश्ने कथं वैदेही लभ्या रिपुः रावणः कथं द्रष्टुं शक्यः अज्ञातदेशत्वात् कथं वियोगः सीताया इत्यर्थात् सह्यः एतत्सर्वं त्वया मम सम्बन्धे गद्यं वाच्यं लभड्डीङ्शप्राप्तौ शकयञ् शकिरूनशक्तौ सहङ्मर्षे एभ्यः पूशकसहेत्यादिना यः गदभाषे इत्यस्मात् गदमदयमिति यः त्वयेति त्यभावक्तोति कर्त्तुः षष्ठी निवृत्तिपक्षे तृतीया ॥ ४७ ॥ भ०

अहमित्यादि। हे राम! अहं श्रियः पुत्त्रः मद्यपीत इव वाहिताग्न्यादित्वान्निष्ठान्तस्य परनिपातः कार्य्याकार्य्यविवेकाभावात्पापचर्य्यो राक्षसः मुनेः स्थूलशिरसः शापाज्जात उत्पन्नः माद्यत्यनेनेति मद्यं चरितव्यं चर्य्यमितौ पूर्ववद्यत् प्रत्ययान्तौ पापं चर्य्यं यस्येत्यवदत् स योजनबाहुस्तं रामं वाक्यार्थोऽत्र कर्म ॥ ४८ ॥ ज० म०

अहमित्यादि। इति स योजनबाहुस्तं रामं अवदत्। किन्तदित्याह हे राम! अहं श्रियोऽप्सरसः पुत्त्रः मद्यपीतः

प्रयातस्तव यस्त्वं शस्त्रपूतो ब्रवीमि ते ।
रावणेन हृता सीता लङ्कां नीता सुरारिणा ॥ ४९ ॥
ऋष्यमूकेऽनवद्योऽस्ति पम्पभ्रातृवधः कपिः ।

---

पीतमदिर इव भ्रमन् कार्य्याकार्य्यविवेकशून्यत्वात् कृताप-राधो मुनेः स्थूलशिरसः शापात् पापचर्य्यः पापहेतुकर्मा राक्षसो जातः एतत् कथनं तद्वाक्ये रामप्रीत्यर्थं मदीभिर्यज्जि-र्ह्यर्थे मद्यतेऽनेनेति मद्यं अभिधानात् गदमदयमित्यादिना द्भावे विहितोऽपि यः करणे पीतं मद्यं येनेति अग्न्याहिता-दित्वात् क्लान्तस्य वा परनिपात इति रः स्वमते गमकत्वात् पापं चर्य्यं चरणीयं यस्य गदमदयमचरेति यः ॥ ४८ ॥ भ०

प्रयात इत्यादि । इदानीं तव यस्त्वं बध्यत्वं प्रयातः यमिः पूर्ववत् यत् शस्त्रपूतस्तव शस्त्रेण पावितः सन् देवोभूतो ब्रवीमि ते तुभ्यं कथयामि युष्मदस्तुर्थ्येकवचनस्य ते मयावे-कवचन इति ते आदेशः क्रियायोगे चतुर्थी । कथनीयमाह रावणेन सुरारिणा हृता सीता लङ्कां नीता ॥४९॥ज० म०

प्रयात इत्यादि । इदानीं तव यस्त्वं बध्यत्वं प्रयातः प्राप्तः सन् तव शस्त्रेण पूतः पापान्निर्मुक्तः पूर्वदशां लब्ध्वा ते तुभ्यमहं ब्रवीमीति तादर्थ्ये ची यमिः पूर्वेण यः पूक्लिश्मुदित इत्यनेन वेम्त्वात् नेम्डीश्वोदिद्वेम इति पूङः क्तक्तवत्वोरनि-मत्वम् । वचनीयमाह रावणेन सुरारिणा सीता हृता लङ्कां नीता प्रापिता च एतेन लङ्कायां रिपुर्द्रष्टव्य इति शक्यो द्रष्टुं रिपुः कथमित्यत्रोत्तरमुक्तम् ॥ ४९ ॥ भ०

वैदेही प्राप्या कथमिति यमुपेत्य पृष्टवान् तं कथयन्नाह ऋष्यमूक इत्यादि । ऋष्यमूकपर्वते सुग्रीवो नाम कपिः चारुविक्रमो महापराक्रमोऽस्ति असौ भवता वर्य्यो वरणीयः

सुग्रीवो नाम वर्य्योऽसौ भवता चारुविक्रमः ॥ ५० ।

प्रार्थनीयः वर इप्सायामिति चौरादिकाद्यत् यद्वा अवद्य-पण्येत्यत्र इञो वर्य्येति स्त्रियामनिरोध अनिरोध्या संततप्रवृत्तिनी वर्य्या प्रीतिर्यस्येत्यर्श आद्यच् भवता सह वर्य्यः प्रीतिमान् समानव्यसनत्वात् यतः पण्यभ्रातृवधः सः पण्यो विक्रेतव्यो भ्रातुर्वालिनो बधो येन यद्येवं तदा कथं मया पापीयान् वर्य्य इत्यत आह अनवद्यः अगर्हणीयः दारापहारित्वेन आततायिनो भ्रातुर्वधेन निर्दोषत्वादिति भावः ॥५०॥ ज० म०

ऋष्येत्यादि । लभ्या कथं नु वैदेहीत्यत्रोत्तरमिदं सुग्रीवो नाम कपिः ऋष्यमूकनामपर्वते अस्ति असौ सुग्रीवो भवता वर्य्यः वरणीयः यतश्चारुविक्रमः अनुपकारकेण मया हृतोऽसौ मत्कार्य्यं कथं साधयिष्यतीत्याह पण्यभ्रातृवधः पण्योविक्रेतव्यो भ्रातुर्वालिनो बधो येन भवता वालिवधं कारयित्वा सीतोद्धारं करिष्यतीति भावः पण्यतुल्यत्वात् पण्यव्यपदेशः तर्हि पापात्मनस्तस्य वरणमनुचितं न च तद्वचनेऽपि विश्वास इत्यत आह अनवद्यः अनिन्द्यः दारापहारित्वेनाततायिनो भ्रातुर्वधे निर्दोषत्वात् नञ्पूर्वो वदिः पणङ् व्यवहृतौ स्तुतौ वृञ्ग सम्भक्तौ एषां यान्तानां पण्यवद्यवर्य्येत्यादिना निपातनात् तथा रूपम् । केचित्तु वरत्वेप्से इत्यस्मात्तव्यानीयया इति ये वर्य्य इति रूपमित्याहुः । ऋषयोऽमूका अध्ययनशीला यत्र स ऋष्यमूकः मूर्द्धन्यषकारवानयं ऋष्यो मृगविशेषो मूकों यत्रेति वा बलटश्याटश्यास्थलीति यमकात् तालव्यशकारवानिति केचित् केचित्तु ऋचोऽद्रिभेदे भल्लूके इति विश्वप्रकाशे एकदेशेनापि संज्ञा गम्यत इति न्यायात् ऋचमूक इत्येव संज्ञामाहुः । नामेति प्रकाश्यसम्भावनाक्रोधाभ्युपगमेष्वव्ययम् अन्यथा भेदके तृतीया स्यात् ॥ ५० ॥ भ०

तेन वध्येन हन्तासि त्वमर्य्यं पुरुषाशिनाम्।
राक्षसं क्रूरकर्माणं शक्रारिं दूरवासिनम्॥ ५१॥
आस्ते स्मरन् स कान्ताया हृताया वालिना कपिः।
वृषो यथोपसर्य्याया गोष्ठे गोदण्डताड़ितः॥ ५२॥

---

तेनेत्यादि। तेन सुग्रीवेण त्वं राक्षसं हन्तासि निहनिष्यसि वध्येन वहत्यभिप्रेतमनेनेति वध्यं करणमिति यत्। कीदृशमर्य्यं स्वामिनं पुरुषाशिनां राक्षसानाम् अर्य्यः स्वामिवैश्ययोरिति यन्निपात्यते क्रूरकर्माणं पापाचारं शक्रारिं रावणं यद्येवमहमेव हन्तुं समर्थ इत्यभिप्रायेणाह दूरवासिनं समुद्रान्तरितवासित्वात् एकाकिना हन्तुं न शक्यते इति भावः ॥५१॥ ज० म०

तेनेत्यादि। तेन सुग्रीवेण त्वं राक्षसं रावणं हन्तासि घां रूपम् वध्येन उह्यतेऽर्थोऽनेनेति वध्यस्तेन कीदृशं पुरुषाशिनां राक्षसानाम् अर्य्यं स्वामिनं क्रूरकर्माणं पापाचारं शक्रस्यापि अरिं एतेन दुर्जयत्वं दर्शितं दूरे वसन्तम् एतेन समुद्रान्तरितत्वात् सहायं विना न हन्तुं शक्यते इति भावः वहेर्ञौ प्रापणे ऋहलि गत्यां अनयोः पूर्वेण निपातः ॥५१॥ भ०

यद्यनवद्यस्तदा कथमस्य पत्नी भ्रातृबध इत्याह आस्ते इत्यादि। बालिना हृतायाः कान्तायाः स्मरन्नास्ते कोऽन्यः सम्भवेत् यस्तं हत्वा त्वया मां योक्ष्यते अधीगिति कर्मणि षष्ठी। कस्येव वृषो यथा उपसर्य्याया आसन्नप्रसवाया गोः स्मरन् गोष्ठे आस्ते उपसर्य्याकाल्याप्रजन इति निपातितं दण्डताडितः सन् दण्डस्थानीयोऽत्र बाली ॥५२॥ ज० म०

आस्त इत्यादि। तुल्ययोः सख्यनैविध्यसूचनाय पत्न्यपहारवधत्वादोषदर्शनाय वा इदमाह स कपिः सुग्रीवो

तेन सङ्गतमार्य्येण रामाजर्य्यं कुरु द्रुतम् ।
लङ्कां प्राप्य ततः पापं दशग्रीवं हनिष्यसि ॥ ५३ ॥

---

बालिना हृतायाः कान्तायाः स्मरन् आस्ते कुतो मया सा लब्धव्येति कर्मणि षष्ठी यथा उपसर्य्याया आसन्नगर्भग्रहणायाः गोः स्मरन् वृषो गोष्ठे गोस्थाने दण्डेन ताड़ितः सन् तिष्ठति तद्वत् दण्डतुल्योऽत्र वाली उपसियते वृषभेण गम्यते उपसर्य्या ऋतुमत्यां पण्यावद्येत्यादिना निपात्यते ॥ ५२ ॥ भ०

तेनेत्यादि । हे राम ! तेन वानरेण सङ्गतं सख्यं अजर्य्यं अनपायं न जीर्य्यते इत्यस्मिन् वाक्ये अजर्य्यं सङ्गतमिति निपातितं आदौ विशेष्यत्वेनोपात्तं सङ्गतं तद्विशेषणमजर्य्यं कुरु द्रुतं यावत्तस्यानेन युष्मद्विधेन सङ्गतं न भवति आर्य्येण सदाचारेण ऋद्दलोर्ण्यत् ततः सङ्गतात् लङ्कां प्राप्य गत्वा पापं पापीयांसं रावणं हनिष्यति ॥ ५३ ॥ ज० म०

तेनेत्यादि । हे राम ! तेन सुग्रीवेण सह द्रुतं शीघ्रं अजर्य्यं मैत्रीं कुरु । कीदृशं सङ्गतं समयक्रमेण उचितं सङ्गतपदस्य सख्यवाचित्वेऽजर्य्यस्य तथार्थत्वाद्वैयर्थ्यं स्यात् केचित्तु सुग्रीवेण सह सङ्गतं सख्यं कुरु । कीदृशं अजर्य्यं अनपायं सङ्गतार्थस्यापि अजर्य्यशब्दस्योपचारादन्यत्र प्रवृत्तिरित्याहुः न जीर्य्यतीत्यजर्य्यं सङ्गतं पूर्ववन्निपातितं स्नेहो मैत्रीप्रीतिरजर्य्यसभाजनसङ्गतं प्रोक्तमिति हलायुधः । आर्य्येण सदाचारेण ऋधातोर्हस्वयुवोरिति ण्यति रूपं आरात् पापेभ्यो दूरं यातीति आर्य्य इति केचित् तदा मनीषादिः द्रुतशब्देन यावद्भवद्विधेनान्येन सह तस्य सख्यं न जातमिति व्यज्यते ततः सङ्गतानन्तरं लङ्कां प्राप्य दशग्रीवं पापं त्वं हनिष्यसि स्वस्यर्द्धन इत्यर्थः ॥ ५३ ॥ भ०

अनृतोद्यं न तत्रास्ति सत्यवद्यं ब्रवीम्यहम् ।
मित्रभूयं गतस्तस्य रिपुहत्यां करिष्यसि ॥ ५४ ॥
आदृत्यस्तेन हृत्येन स्तुत्यो जुष्येण सङ्गतः ।

---

ननु यावत्कार्य्यं न सिध्यति तावन्मां सङ्गच्छति कृतकृत्यस्तु नैवेत्यत आह अनृतोद्यमित्यादि। सत्यमुद्यत इति कर्मणि यत् अहं सत्यं वचो ब्रवीमीत्यर्थः अनृतोद्यं तत्र सुग्रीवे नास्ति अनृतमसत्यं उद्यं वचनं अनृतोद्यं भावे क्यप् यजादित्वात् सम्प्रसारणं उभयत्रापि वदः सुपि क्यप् चेति चकाराद्यच्च ॥ यस्मादेवं तस्मान्मित्रभूयं मित्रभावं गतः भुवो भावे क्यप् रिपुहत्यां शत्रुहत्यां करिष्यसि हनस्तचेति क्यप् तकारश्चान्तादेशः ॥ ५४ ॥ ज० म०

अनृतोद्यमित्यादि। स्वकार्य्यं साधयित्वा यदि मामुपेक्षते तदा किं स्यादित्याह अहं सत्यवद्यं सत्यवचनं ब्रवीमि तत्र सुग्रीवेऽनृतोद्यं मिथ्यावचनं नास्ति वदैवाचि लेर्वदः क्यप्यावित क्यप् ग्रहस्वपाद्योरिति जिः। तस्मात्तस्य सुग्रीवस्य मित्रभूयं मित्रभावं गतः सन् रिपुहत्यां शत्रुवधं करिष्यसि भूहनः क्यप् भावे नतश्चेति क्यप् नस्य तश्च लिङ्गभेदोऽभिधानात् ॥५४॥भ०

आदृत्य इत्यादि। तेन सङ्गतः सन् दृध्यमभिलषणीयमवाप्स्यसि ऋदुपधादिति क्यप्। कीदृशः कीदृशेनेत्याह आदृत्यः आदरणीयः हृत्येन वरणीयेन स्तुत्यः स्तवार्हः जुष्येण सेव्येन हनूमत्प्रभृतीनां क इव शिष्येण गुरुरिव यथोपाध्यायः शिष्येकार्थः अनुगम्यस्तद्वदिति एतिस्तुशास्वित्यादिना क्यप् ह्रस्वान्तात्तुक् ॥ ५५ ॥ ज० म०

आदृत्य इत्यादि। न केवलं रिपुहननमन्यदप्यस्तीत्याह तेन शिष्येणेव गुरुरिव त्वं सङ्गतः सन् दृध्यमाकाङ्क्षणीयम-

तुल्यः शिष्येण गुरुवद् गृध्यमर्थमवाप्स्यसि ॥ ५५ ॥
नाखेयः सागरोऽप्यन्यस्तस्य सद्भृत्यशालिनः।
मन्युस्तस्य त्वया मार्ग्यो मृज्यः शोकश्च तेन ते ॥ ५६ ॥

---

र्थमवाप्स्यसि त्वं कीदृशस्तेन वा कीदृशेन आदृत्य आदरणीयः वृत्येन वरणीयेन स्तुत्यः स्तवार्हः जुष्येण सेवार्हेण जनानामर्थात् तेन तुल्ययोरुभयोः सङ्गतं योग्यं तुल्यः अनुगन्तव्यः अर्थात्तेन भवतो गुरुत्वेन तस्य शिष्यत्वेन मैत्रीकरणेऽपि न ते मानहानिरिति सूचितं दृङ्शादरे वृञ्वृतौष्टुञ्स्तुतौ शङोजिजुषमुदिसेवे इणगतौ शासुञ्चस्तूशासने गृधिर्ग्युलिप्से एभ्यो दृभजुषेत्यादिना क्यप् स्वस्य तन् पिति ॥ ५५ ॥ भ०

नाखेय इत्यादि। तस्य सुग्रीवस्य सद्भृत्यशालिनः हनूमदादिभृत्ययुक्तस्य भृञोऽसंज्ञायामिति क्यप् अन्यो द्वितीयः सागरोऽपि नाखेयो न खननीयः अपितु खननीय एव अपिशब्दः सम्भावनायां तस्य कारणं सद्भृत्यशालित्वं ईचखन इति क्यवीकारौ तस्य शरीरस्य मन्युस्त्वया मार्ग्योऽपनेयः ते तव तेन च शोको मृज्यः मृजेर्विभाषेति यद्विकल्पे क्यप् ॥ ५६ ॥ ज० म०

नाखेय इत्यादि। हनूमदादिसद्भृत्यशालिनस्तस्य सुग्रीवस्य अन्योऽपि सागरो न अखेयः अपितु शक्य खनन एव एतेन तन्मैत्रं बहुसहायत्वं समुद्रलङ्घनमपि सुकरमिति सूचितं खनुङ्विदारे खनाख्येरिये इति टेरेत्वम्। तस्मात् प्रथमं त्वया तस्य मन्युर्दैन्यं मार्ग्यो मार्जनीयः पश्चात्तव शोकस्तेन मृज्यः अपनेयः एतेन सद्यः कथं वियोगश्चेत्यत्रोत्तरं दत्तं सुग्रीवेणाचिरादेव वियोगापनयात् अपिशब्दः सम्भावनायां मृज-

स राजसूययाजीव तेजसा सूर्य्यसन्निभः ।
अमृषोद्यं वदन् रुच्यो जगाहे द्यां निशाचरः ॥ ५७ ॥
अकृष्टपच्याः पश्यन्तौ ततो दाशरथी लताः ।

---

लूषभुजौ कृत्वषमृजेति वा क्यप् पचे हस्वयूसोरिति घ्यण् चजोः कगौ घितोति गत्वं मृजोऽकङितीति वृिः ॥ ५६ ॥ भ०

स इत्यादि । स निशाचरो द्यामाकाशं जगाहे गतः राजसूययाजीव राज्ञा सूयते राजा वा अनेन सूते इति राजसूयः क्रतुः तेनेष्टवान् स राजसूययाजी करणे यज इति णिनिः तद्वदित्यर्थः रुच्यः प्रियो जातो रामस्येत्यर्थात् राजसूय इत्यादिना क्यबन्ता राजसूयादयः ॥ ५७ ॥ ज० म०

स राजेत्यादि । इत्येवममृषोद्यं सत्यवचनं वदन् स निशाचरो योजनाबाहुर्द्यां स्वर्गम् आकाशं वा जगाहे गतः राजसूयनामयज्ञकर्त्तेव तेजसा सूर्य्यतुल्यः रुच्यः रामस्य रुचिविषयः प्रिय इति यावत् सुजनसम्बाधकृदपीडामन्य राज्ञा सूयते सोमोऽत्रेति राजसूयः पाय्यधाय्येत्यादिना निपातितः राजसूयेन यजते राजसूययाजी ग्रहादित्वात् णिन् सरतीति सूर्य्योऽर्कः रोचते रुच्यः एतौ रुच्यविनीयेत्यादिना निपातितौ सूर एव सूर्य्यः स्वार्थे य इति गोयीचन्द्रः नञ्पूर्वमृषाशब्दाद्वदेर्नित्यं क्यप् मृषोद्यं नित्यमित्युक्तेः ॥ ५७ ॥ भ०

अकृष्टपच्या इत्यादि । ततो निशाचरगमनानन्तरं दाशरथी रामलक्ष्मणावाटतुर्गतवन्तौ । कीदृशौ नष्टा संस्मृतिः ययोः केषां संस्मृतिः खाद्यान्नपानकुप्यानां खाद्यान्नपानानि प्रसिद्धानि कुप्यं स्वर्णरजताभ्यामन्यत् वस्तु तत् क्यप् गकारस्य ककारः कर्मणि षष्ठी लताः पश्यन्तौ कृष्टे पच्यन्ते इति कृष्ट-

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



रत्नान्नपानकुप्यानामाटतुर्नष्टसंस्मृती ॥ ५८ ॥
समुत्तरन्तावव्यथौ नदान् भिद्योद्ध्यसन्निभान्।
सिध्यतारामिव ख्यातां शवरीमापतुर्वने ॥ ५९ ॥

---

पच्याः पूर्ववत् क्यप् पश्चान्नञ्समासः स्वयमेव पच्यन्ते यास्ता इत्यर्थः ॥ ५८ ॥ ज० म०

अकृष्टेत्यादि। ततस्तद्गमनानन्तरं लताः पश्यन्तौ दाशरथी रामलक्ष्मणौ आटतुः अटगतौ। लताः कीदृशीः अकृष्टपच्याः कृष्टे क्षेत्रे स्वयमेव पच्यन्ते इति कृष्टपच्याः पूर्वेण निपातः पश्चान्नञ्समासः। कीदृशौ रत्नानां अन्नस्य पानस्य कुप्यानां ताम्रादीनाञ्च नष्टा सम्यक् स्मृतिर्ययोः गुणभूतापि क्रिया साधनसम्बन्धमनुभवतीति कर्मणि षष्ठी सम्बन्धविवक्षयेत्यन्ये कुप्यते इति कुप्यं स्वर्णरूप्याभ्यामन्यद्धनं पूर्ववन्निपातः ॥ ५८ ॥ भ०

समुत्तरन्तावित्यादि। तौ तस्मिन् वने शवरीमापतुः प्राप्तवन्तौ अव्यथौ न व्यथेते पूर्ववत् क्यप् परिश्रमवर्जिता-वित्यर्थः। नदान् समुत्तरन्तौ। कीदृशान् भिद्योद्ध्यस-न्निभान् भिद्योद्ध्यौ नदविशेषौ भिद्योद्ध्याविति पूर्व-वत् निपातितं भिनत्ति कूलमिति भिद्यः उज्झत्युदकमिति उद्ध्यः उदझ्उत्सर्गे दकारात् परस्य धकारो निपात्यते तत्-सदृशान् नदान् सिध्यतारामिव ख्यातां सिध्यन्त्यस्मिन्निति सिध्यः पुष्यसिध्यौ नक्षत्रे इति निपातनात् पुष्याख्यां तारामिव ख्यातां शवरीम् ॥ ५९ ॥ ज० म०

समुत्तरन्तावित्यादि। तौ वने शवरीमापतुः प्राप्तवन्तौ न व्यथेते अव्यथौ नदान् समुत्तरन्तौ। कीदृशान् भिद्योद्ध्य-सन्निभान् कूलं भिनत्तीति भिद्यो नदः वार्य्युज्झतीति उद्ध्यः

वसानां वल्कले शुद्धे विपूयैः कृतमेखलाम्।
श्यामामञ्जनपिण्डाभां दण्डिनीमजिनास्तराम्॥ ६०॥

नदः तयोस्तुल्यात्। शबरीं कोटरशीं सिध्यतारामिव कार्य्य-साधकत्वात् ख्यातां प्रसिद्धानुभवां कार्य्यं साधयतीति सिध्या सर्वत्र गृह्यविनीयेत्यादिना निपातः॥ ५९॥ भ०

वसानामित्यादि। वसानां परिदधानां वल्कले विपूयैर्मुञ्जैः कृतमेखलां कृतकटिसूत्रां यद्यपि विपूर्वस्य पवतेर्वि-पूय इत्यादिना मुञ्जे निपातितं तथापि मुञ्जानामनुपहतत्वं ज्ञापयितुं विपूयैरिति विशेषणं पवित्रैरित्यर्थः मुञ्जशब्दस्ता-दानीं सामान्यमाह विपूयैरित्युक्ते मुञ्जैरित्युपादानमनर्थकं एवं कृत्वा पाठान्तरमुच्यते वसानां वल्कले शुद्धे विपूयैरिति श्यामां कृशां श्यायो म इति निष्ठानत्वं अञ्जनपिण्डस्येवाभा यस्या अस्तीति तां कृष्णां दण्डिनीं गृहीतदण्डाम् आस्तीर्य्यत इति आस्तरः ऋदोरप् अजिनमास्तर उत्तरासङ्गो यस्यास्ता-मजिनास्तराम्॥ ६०॥ ज० म०

वसानामित्यादि। दृष्टा तामसुचद्राम इति तृतीय-श्लोकेनान्वयः। शुद्धं वल्कलद्वयं वसानां वसलङ्स्तृतौ स्तृति-राच्छादनं विपूयैर्मुञ्जैः कृतमेखलां कृतकटीसूत्रां पूङ् शोधे पूर्ववन्निपातः शुद्धे इत्यत्र मुञ्जैरिति पाठे विपूयैरित्यस्य पवित्रैरित्यर्थः। यद्यपि विपूयशब्दो मुञ्जे रूढस्तथाप्यन्वय-वशात् पवित्रार्थः। श्यामां व्रतेन चीणां शैशुष्यचो मकव इति तस्य मः अञ्जनपिण्डवदाभा यस्यास्तां तद्वदाभातीति वा दण्डिनीं पालाशदण्डवतीं अजिनमास्तरः शयनीयं यस्याः आस्तर उत्तरासङ्ग इति केचित्॥ ६०॥ भ०

प्रगृह्य पदवत् साध्वीं स्पष्टरूपामविक्रियाम् ।
अगृह्यां वीतकामत्वाद् देवगृह्यामनिन्दिताम् ॥ ६१ ॥

---

प्रगृह्येत्यादि। अविक्रियामजातविकाराम् अतएव स्पष्टरूपां एवञ्च साध्वीं साधुचरितां कमिव प्रगृह्यपदवत् यस्य पदस्य प्रगृह्यसंज्ञा तत् पदं प्रगृह्यं प्रत्यपिभ्यां ग्रहेरित्यनुवृत्तौ पदास्वैरित्यादिना प्रपूर्वाद् ग्रहेः पदेऽभिधेये क्यप् यथा तत् पदमविकाररूपत्वात् स्पष्टं साधु च प्लुतप्रगृह्या अचीति प्रकृतिभावेन स्वरसन्ध्यभावादित्यर्थः। कथमजातविक्रियेति चेदाह अगृह्यां ग्रहेः स्वैरविषये क्यप् अगृह्यामस्वैरिणीमस्वतन्त्रा न भवतीत्यर्थः कस्मात् वीतरागत्वात् वीतरागाप्यस्वतन्त्रा भवति देवगृह्याममरपक्षां पक्षविषये क्यप् एवं चानिन्दितामगर्हिताम् ॥ ६१ ॥ ज० म०

प्रगृह्येत्यादि। नास्ति विक्रिया रागादिविकारो यस्यास्तामविक्रियां स्पष्टं अकौटिल्यं व्यक्तं रूपं स्वभावो यस्यास्तां स्पष्टरूपां साध्वीं साधुचरितां अतएव प्रगृह्यपदतुल्यां यत्र नाजोऽन्तोऽनाङिप्लुस्वेत्यादिना सन्धिनिषेधः क्रियते तत्र पाणिनिना प्रगृह्यसंज्ञा कृता गृह्यविनीयेत्यादिना पदादौ गृह्यं निपातितं पदादिविषयस्तूदाहरणेऽभिहितः। तथाहि प्रगृह्यं पदमित्यादि तदपि पदं विकाररहितम् अतएव स्पष्टरूपं दीर्घादिविकारे सत्येव रूपस्यान्यथाभावात् साधु च भवति। अर्थप्रतिपादकत्वं धर्मजनकत्वं व्याकरणव्युत्पाद्यत्वं वा पदस्य साधुत्वम् अविक्रियत्वे हेतुमाह अगृह्यां स्वतन्त्रां विगतकामत्वात् सरागा हि भोगार्थं परतन्त्रा भतति गृह्या परतन्त्रा पश्चान्नञ्समासः देवगृह्यां देववर्ग्यां देवपक्षपातिनीं अतएवानिन्दितां वीतकामत्वादित्यत्र पूर्वं स्त्रीत्वाविवक्षया

धर्मकृत्यरतां नित्यमवृष्यफलभोजनाम् ।
दृष्ट्वा तामसुचद्रामो युग्यायात इव श्रमम् ॥ ६२ ॥
स तामूचेऽथ कच्चित्त्वममावास्यासमुन्नये ।

---

त्वप्रत्ययः स्त्रीत्वविवक्षा चेत् पुंवत्स्युरक्त इति पुंवद्भावः ॥ ६१ ॥ भ०

धर्मकृत्यरतामित्यादि । पुण्यकर्मरतां नित्यं अवृष्यफलभोजनां वृष्याणीन्द्रियविकारनिमित्तानि फलानि भोजनं यस्याः पश्चान्नञ्समासः विभाषाकृवृषोरिति क्यप् दृष्ट्वा तां तथाविधां श्रमसुचत् मुक्तवान् तद्दर्शनाह्लादितत्वात् युग्यायात इव वाहनं प्राप्त इव क्यप् युग्यञ्च पत्र इति निपातितम् ॥ ६२ ॥ ज० म०

धर्मेत्यादि । नित्यमविरतं धर्मस्य कृत्ये करणे रतां वृष्यं वैद्यशास्त्रोक्तवीर्य्यकरं विकारोत्पादकं तद्भिन्नं फलमेव भोजनं यस्याः भुज्यतेऽनेनेति वेति घञलनटोऽघे इति अनट् तेन भोजनं यस्या इति वा कृञ्वडुदकृतौ वृष्सेचने आभ्यां कृवृषस्जेत्यादिना वा क्यप् एवम्भूतां तां शवरीं दृष्ट्वा चित्तप्रसन्नतया रामः श्रमसुचत् त्यक्तवान् मुच्लृशपञ्जो मोचे लृदित्त्वात् ङः युग्येन वाहनेनाश्वादिना आगत इव गत्न्वविनीयेत्यादिना युजः क्यपि युग्यं निपातितम् ॥ ६२ ॥ भ०

स इत्यादि । अथानन्तरं त्यक्तश्रमः स रामस्तां शवरीमूचे उक्तवान् कच्चित् किं त्वं अमावास्यायाः सम्प्राप्तौ पितृणां कार्य्यं तत्र प्रीत्यर्थं ब्राह्मणभोजनं स्वादुभिर्मिष्टैः फलैः अवाच्यैरवचनीयैः कुरुषे अमा सह वसतोऽस्यां चन्द्रार्कावित अमापूर्वकवसधातोः क्यप् ॥ ६३ ॥ ज० म०

स तामित्यादि । अथ श्रमत्यागानन्तरं स रामस्तां

पितॄणां कुरुषे कार्य्यमवाच्यैः स्वादुभिः फलैः ॥ ६३ ॥
अवश्यपाव्यं पवसे कच्चित्त्वं देवभाग्घविः ।
आसाव्यमध्वरे सोमं द्विजैः कच्चिन्नमस्यसि ॥ ६४ ॥

---

शवरीं ऊचे कथितवान् व्रुलवउक्ती वचोऽरे कच्चिदिति कामप्रवेदनेऽव्ययं त्वं फलैरमावास्यायास्तिथैः समुन्नये सम्प्राप्ते पितॄणां सम्बन्धि कार्य्यं कुरुषे कीदृशैः फलैः अवाच्यैः अनिन्द्यैः स्वादुभिर्मिष्टैः अमा सहार्थेऽव्ययं सहवसतोऽस्यां चन्द्रार्काविति त्वमावास्या यद्वा "अमा नाम रवेरश्मिः सूर्य्यलोके प्रतिष्ठिता। तस्यां सोमो वसत्यस्याममावास्या प्रकीर्त्तिता ॥" पाय्यधाय्येत्यादिना घ्यणि निपातः ऋवृषमृजेत्यस्याप्रवृत्तिपक्षे ऋणो हलयुासोरिति घ्यण् वाच्यं वचनीयं निन्द्यमेव रूढं भुजवचेति घ्यणि कत्वनिषेधः ॥ ६३ ॥ भ०

अवश्यपाव्यमित्यादि। देवभाक् देवान् भजते इति भजो ण्विः तद्धविः कच्चित् किं पवसे पवित्रीकरोषि मन्त्रादिना झयोहोऽन्यतरस्यामिति हकारस्य पूर्वसवर्णः पूञ्पवन इति भौवादिकः। कीदृशमवश्यपाव्यमवश्यम्भावेन पावयितव्यमित्यर्थः ओरावश्यके ण्यत् मयूरव्यंसकादित्वात् समासः लुम्पेदवश्यमः कृत्येतुंकाममनसोवनोति मकारलोपः सोमसौषधिविशेषं आसाव्यमभिषवार्हं अध्वरे यज्ञे द्विजैः सह कच्चित्त्वं नमस्यसि आसुपुवपीति यत् ॥ ६४ ॥ ज० म०

अवेत्यादि। कच्चित्त्वं देवभाक् हाविर्हव्यं पवसे अग्निसंस्कारादिना पवित्रीकरोषि देवाय दातुमित्यर्थात् देवान् भजते इति ढाङ्गजवहसह्रो विण् शहोस्वपादेति हस्य घत्वम्। हविः कीदृशं अवश्यपाव्यं अवश्यम्भावेन पवितुं पवित्रीकर्त्तुं योग्यं ङ्योधे घ्यणोरावश्यक इति घ्यण् जित्यन्तेजुङतोरिति

आचाम्यं सन्ध्ययोः कच्चित् सम्यक्तेन प्रहीयते।
कच्चिदग्निमिवानाय्यं काले सम्मन्यसेऽतिथिम्॥ ६५॥
न प्रणाय्यो जनः कच्चिन्निकाय्यं तेऽधितिष्ठति।

वि: ओदौतोऽज्वत्तक्रच्युक्यड्या इति अज्वद्भावात् जलायवायाव इति आवादेशः क्रियाविशेषणस्य द्वितीयान्तत्वात् तत्पुरुषः समासः द्यादिक्तप्रन्तपूर्वदानां षसंज्ञा इति सामान्योक्तेः मयूरव्यंसकादित्वात् समास इति न्यासः समतुम्मनः-कामेऽवश्यमित्यादिना मलोपः। कच्चित् त्वं द्विजैः सार्द्धं सोमं लताविशेषं नमस्यसि नमः करोषीति नमस्तपोवरिव इति क्यः। सोमं किम्भूतं अध्वरे यागे आसाव्यं अभिषवनीयं सन्धा-नार्हं इस्ययासोरिति घ्यण् द्विजैरासाव्यमिति वान्वयः॥६४॥भ०

आचाम्यमित्यादि। प्रभातेऽपराह्णे च सन्ध्ययोर्यदा-चाम्यमुपस्पर्शनं पूर्ववत् घ्यण् कच्चित् सम्यक् यथावत्तव तत् न प्रहीयते काले आतिथ्योक्तकाले कच्चित् संमन्यसे पूजयसि यथा अग्निं आनाय्यम् मन्यसे तद्वत् आनाय्यो नित्य इति नय-तेराङ्पूर्वस्य घ्यण् अयादेशौ निपात्येते॥ ६५॥ ज० म०

आचाम्यमित्यादि। कच्चित्ते तव सायं प्रातःसन्ध्ययोः सम्यगाचाम्यं आचमनं स्वयमेव न प्रहीयते न भ्रश्यते कर्म-कर्त्तरि प्रत्ययः. पृशकसहेत्यादौ चमादिवर्जात् हसन्तत्वात् घ्यण् जनवधः सेम इत्यादौ आचमवर्ज्जनान्न ह्रस्वः। कच्चित् त्वं काले आतिथ्योचिते अतिथिं सम्मन्यसे पूजयसि यथा आनाय्यमग्निं दक्षिणाग्निं सम्मन्यसे तद्वत् आङ्पूर्वस्य णीञो घ्यणि पाय्यधाय्येत्यादिना निपातः॥ ६५॥ भ०

न प्रणाय्य इत्यादि। महानुदयः स्वर्गापवर्गाणां यस्याः सा तथा हे महोदये! देवकार्य्यविघाताय देवानहं हनिष्या-

देवकार्य्यविघाताय धर्मद्रोही महोदये ॥ ६६ ॥
कुण्डपाय्यवतां कच्चिदग्निचित्यावतां तथा।

णीति भाववचनात् चेति भविष्यति घञ् तुमर्थात् च भाववचनादिति चतुर्थी प्रणाय्योऽसम्मतो जनः प्रणाय्योऽसम्मताविति निपातितं क्वचित् निकाय्यं गृहं ते तव नाधितिष्ठति नाधिवसति पाय्येत्यादिना निवासे चिनोतेर्निपूर्वात् ण्यदायादेशौ आदेः कुत्वञ्च अधिशीङ्स्थासां कर्मेति कर्म धर्मद्रोही धर्मद्रोहशीलः ॥ ६६ ॥ ज० म०

नेत्यादि। हे महोदये। कच्चित् प्रणाय्योऽसम्मतो जनश्चौरादिस्ते तव निकाय्यं निवासं देवकार्य्यविघातार्थं नाधितिष्ठति धर्मद्रोही धर्मद्रोहशीलः धर्माय द्रुह्यतीति ग्रहादित्वाणिन् धर्मद्रोहोऽस्यास्तीति वा प्रपूर्वणीञो घ्यणि प्रणाय्यः निपूर्वचिनोतेर्घ्यणि निकाय्यः द्वौ पूर्वेण निपात्येते कर्मक्रियेत्यादिना निकाय्यस्याधारत्वे कर्मत्वं महानुदयः स्वर्गापवर्गफललक्षणस्तत्त्वज्ञानमेव वा यस्यास्तस्याः सम्बोधनं महोदयः कान्यकुब्जे स्वाधिपत्यापवर्गयोरिति विश्वदर्शनात् ततोऽर्श आदित्वाद् इत्यन्ये विघातायेति हनो घञि खेर्हो घो ञ्णिति चेति घः हनस्तङ् ॥ ६६ ॥ भ०

कुण्डपाय्यवतामित्यादि। कुण्डेन पीयतेऽत्र क्रतौ कुण्डपाय्यः क्रतुः क्रतौ कुण्डपाय्यसञ्चाय्याविति निपातितं कच्चित्कथाभीरमसे ढ्रलोप इति दीर्घः तथाग्निचित्यावताम् आहिताग्निकानां कथाभीरमसे चित्याग्निचित्येचेति निपात्यते अग्निचयनमग्निचित्या भावे क्यप् तुक् तद्वतां तथोपचाय्यवतां उपचीयते इत्युपचाय्योऽग्निः अग्नौ परिचाय्येति निपातितः उपपूर्वाच्चिनोतेर्ण्यदायादेशौ तद्वतां कथाभीरमसे शुभे! कल्याणि! इति कृत्याधिकारः ॥ ६७ ॥ ज० म०

कथाभीरमसे नित्यमुपचाय्यवतां शुभे ! ॥ ६७ ॥

इति कल्याः ।

अथ प्रकीर्णकाः ।

वर्द्धते ते तपो भीरु ! व्यजेष्ठा विघ्ननायकान् ।
अजैषीः कामसंमोहौ संप्रापथा विनयेन वा ॥ ६८ ॥

---

कुण्डेत्यादि । हे शुभे ! कल्याणि ! कच्चित् त्वं कुण्डपाय्यवतां तथा अग्निचित्यावतां तथा उपचाय्यवतां कथाभिर्नित्यं रमसे क्रीडसि कुण्डैः पीयतेऽत्र सोम इति कुण्डपाय्यः क्रतुविशेषः पाय्यधाय्येत्यादिना निपातः स विद्यते येषां इति मोऽनुभूपादतुः अग्नेश्चयनं राशीभाव इत्यग्निचित्या पूर्ववत् निपातः उपचीयते इत्युपचाय्योऽग्निः पूर्ववत् निपातः अग्निविशेषो यज्ञविशेषाङ्गम् । इति कल्याः ॥ ६७ ॥ भ०

अतः परं प्रकीर्णकाः । वर्द्धते इत्यादि हे । भीरु ! कातरचित्ते ! तव तपो वर्द्धते तस्य च ये विघ्नास्तेषां ये नायकाः प्रणेतारस्तान् व्यजेष्ठाः जितवत्यसि लुङि विपराभ्यां जेरित्यात्मनेपदं कामसम्मोहौ कच्चिदजैषीः जितवत्यसि सिचि वृद्धिः विनयेन वा संप्रापथाः संप्राप्तासि कर्मणि लुङ् झलो झलीति सिचो लोपः अत्रानुक्तमिति कच्चिदिति ग्राह्यम् ॥ ६८॥ ज०म०

अथ प्रकीर्णकाः ।

वर्द्धते इत्यादि । कच्चिदित्यत्रानुषज्जनीयं हे भीरु ! कच्चित्ते तव तपो वर्द्धते कच्चित् त्वं तपसो विघ्नानां नायकान् प्रणेतॄन् व्यजेष्ठाः अभिभूतवत्यसि विपराजोरिति मं कच्चित् त्वं काममनङ्गविकारं सम्मोहमविद्याञ्च अजैषीः व्रजवदेति व्रिः कच्चिद्विनयेनापि त्वं संप्रापथाः सम्प्राप्तासि कर्मणि ढो सम्बो-

नायस्यसि तपस्यन्ती गुरून् सम्यगतूतुषः ।
यमान्नोदविजिष्ठास्त्वं निजाय तपसेऽतुषः ॥ ६८ ॥
अथार्घ्यं मधुपर्काद्यमुपनीयादरादसौ ।

धनमहिम्नार्थावममात् कच्चिदित्यस्यानुषङ्गं केचिन्नेच्छन्ति ॥ ॥ ६८ ॥ भ०

नायस्यसीत्यादि । तपस्यन्ती तपश्चरन्ती कच्चिन्नायस्यसि न खिद्यसे तपश्चरणशालीभूतेत्यर्थः कर्मणोरोमन्थेति क्यङ् तपसः परस्मैपदञ्च गुरून् आचार्य्यादीन् सम्यक् यथावदनुवृत्त्याऽतूतुषः तोषितवत्यसि तुषेर्ण्यन्तस्य लुङि रूपं चङि णिलोपादि यमान्मृत्योर्नोदविजिष्ठाः नाभैषीः पुण्यवतां नो मृत्युभयमित्यर्थः ओविजेरात्मनेपदं लुङि सिच इट् विज इति सिचो ङित्त्वेन गुणः निजायात्मीयाय अतुषः तुष्टवत्यसि ॥ ६८ ॥ ज० म०

नायेत्यादि । अत्रापि कच्चिदनुषज्यते तपस्यन्ती तपः कुर्वती त्वं कच्चिन्नायस्यसि न खिद्यसे अत्यन्ताभ्यासात् नमस्तपोवरिव इति क्यः ईर्यस्युयतने कच्चित्त्वं गुरूनाचार्य्यादीन् सम्यगतूतुषः तोषितवत्यसि तुषिलृयौञितुष्टौ अन्तादङ् अग्ल्युङः स्वः खेः सन्विदिति खेघः कच्चित्त्वं यमात् उदविजिष्ठाः नाभैषीः पुण्यवतां मृत्योर्भयं नास्तीति भावः यम इन्द्रियनिग्रहे वा कियत्कालं यमः कार्य्य इति भयं दूरीभूतमित्यर्थः विजङोशोभोकम्पे विजेर्नुर्नेमोत्यगुणत्वं कच्चित्त्वं निजाय स्वकीयाय तपसे अतुषः तुष्टासि श्रद्धावती आसीद्वल-शङ्काशून्या वासीत्यर्थः पुषादित्वात् ङः ॥ ६८ ॥ भ०

अथेत्यादि । अथानन्तरमसौ शबरी अर्घ्यमर्घार्थं पादार्घाभ्यामिति यत् मधुपर्काद्यं मधुपर्कमिश्रमुदकं मधुपर्कः

अर्च्चयित्वा फलैरर्च्यौ सर्वत्राख्यदनामयम् ॥ ७० ॥

अतः परं कृदधिकारः ।

सख्यस्य तव सुग्रीवः कारकः कपिनन्दनः ।
द्रुतं द्रष्टासि मैथिल्याः सैवमुक्त्वा तिरोऽभवत् ॥ ७१ ॥

---

तदार्घ्यं आदौ भवमार्घ्यं तदुपनीयादरात् फलैरर्च्चयित्वा अर्च्चैरा अर्च्चनार्हौ एवत् रामलक्ष्मणौ सर्वलोकेषु अनामयं कल्याणं आख्यत् कथितवती अस्यतीत्यङ्। इति प्रकीर्णकाः ॥ ७० ॥ ज० म०

अथेत्यादि । एवं प्रश्नानन्तरं असौ शवरी मधुपर्केणाढ्यं सहितं अर्घ्यमुपनीय अर्च्चैरा अर्च्चार्हौ रामलक्ष्मणौ फलैराद-रात् अर्चयित्वा सर्वत्र पूर्वपृष्टेष्वर्थेषु अनामयं कुशलं आख्यत् उक्तवती वक्त्यस्यख्येति ङः मूल्ये पूजाविधावर्घः अर्घशब्दात्त-दर्थे विकारसंघेति यः मधुपर्काद्यमिति पाठे आदौ भव आद्यः मधुपर्कं आद्यो यस्येत्यर्घ्यविशेषणं यद्वा आदिरेवाद्यः अर्घ्य-मधुपर्कादि पूजोपहारश्चोपनीयेत्यर्थः आमयशब्दो लक्षणया अनिष्टमात्रे प्रयुज्यते । इति प्रकीर्णकाः ॥७०॥ भ०

अथ कृदधिकारमाह । कृत्यानां तदन्तर्भावेऽपि भाव-कर्मणोः कृत्या इति विशेषप्रतिपादनार्थः पृथगधिकारः तत्रो-पपदं सप्तमीस्थमित्यादिना एतदप्यधिक्रियते तान् इतो दर्श-यन्नाह सख्यस्येत्यादि । सा शवरी तिरोऽभवदन्तर्भूता एवमुक्त्वा किं तदित्याह तव सख्यस्य सखित्वस्य सख्युर्यः कर्मषष्ठी कारकः सुग्रीवः ण्वुल्तृचाविति ण्वुल् त्वया सह मैत्रीं करि-ष्यति कपिनन्दनः कपीनां नन्दयिता नन्द्यादिभ्यो ल्युः कृद्योगे षष्ठी असीति वर्त्तमाने लट् ॥ ७१ ॥ ज० म०

अथ कृदधिकारः । यद्यपि कृत्यानां कृत्त्वमस्ति तथापि

नन्दनानि मुनीन्द्राणां रमणानि वनौकसाम्।
वनानि भेजतुर्वीरौ ततः पाम्पानि राघवौ ॥ ७२ ॥

---

भावकर्मणोस्तद्विधानमिति सूचनाय पृथक् प्रदर्श्य कर्त्तरि ण्वुलणाह तत्र निरुपपदसोपपदयोर्निरुपपदं प्रयोगबाहुल्यादादौ दर्शयति सख्यस्येत्यादि। सा शबरी एवमुक्त्वा तिरोऽभवत् अन्तर्हिता। किन्तदित्याह सुग्रीवस्तव सख्यस्य कारकः सख्यं करिष्यति सख्युर्भावः कर्म वा सख्यं विकारसंघेति यः ढचेक्तीत्यादिना कर्मणि षष्ठी कपीनां नन्दयिता कपेः पुत्रो वा ग्रहनन्दिपचादेरिति ल्युः ततो द्रुतं मैथिल्या द्रष्टाऽसि प्रेक्षको भविष्यसि अस्तेर्भविष्यत्सामीप्ये कौ अभिधानात् असीति युष्मदर्थं अव्ययमिति वा तृणकौ चे इत्यादिषु कालस्यानिर्देशात् त्रिष्वपि कालेषु तृणादयो भवन्तीति बोध्यं दृशेर्वद्रोऽकिदिति रः ॥ ७१ ॥ भ०

नन्दनानीत्यादि। तत उक्तादनन्तरं वीरौ राघवौ रामलक्ष्मणौ वनानि भेजतुः सेवितवन्तौ एत्वाभ्यासलोपौ तृफलेत्यादिना पाम्पानीति पम्पाया अदूरभवश्चेत्यण् मुनीन्द्राणां नन्दनानि प्रमोदकारीणि वनौकसां वनेचराणाम् ओच्समवाये असमादौणादिकोऽसुम् पृषोदरादित्वाद्वर्णविपर्य्ययः तेषां रमणानि रतिजनकानि नन्द्यादित्वात् ल्युः कर्मणि षष्ठी ॥ ७२ ॥ ज० म०

नन्दनानीत्यादि। ततोऽनन्तरं राघवौ पाम्पानि वनानि भेजतुः सेवितवन्तौ जग्मतुरित्यर्थः भजञो भागसेवयोः तृफलभजत्रपेति अत एत्वं खिलोपश्च पम्पानामसरःसम्बन्धीनि पम्पाया अदूरभवानीत्यर्थे वा विकारसंघेत्यादिना ण्यः मुनीन्द्राणां नन्दनानि प्रमोदकानि वनौकसां वनवासिनां रमणानि

भृङ्गालीकोकिलक्रुङ्भिर्वाशनैः पश्य लक्ष्मण ! ।
रोचनैर्भूषितां पम्पामस्माकं हृदयाविधम् ॥ ७३ ॥
परिभावीनि ताराणां पश्य मन्थीनि चेतसाम् ।
उद्भासिनी जलेजानि दुन्वन्त्यदयितं जनम् ॥ ७४ ॥

---

क्रीडाजनकानि उभयत्र अहनन्दिपचादेरिति अनः कर्मणि षष्ठी ॥ ७२ ॥ भ०

भृङ्गालीत्यादि । हे लक्ष्मण ! पम्पां पश्य अस्माकं हृदयाविधं हृदयं विध्यतीति ग्रहिज्यादिना सम्प्रसारणं नहिवृतीति दीर्घः भूषितां कैर्भृङ्गालीभिः भ्रमरपंक्तिभिः कोकिलैः क्रुङ्भिश्च वाशनैः कूजद्भिः रोचनैः शोभनैः क्रुञ्चिति ऋत्विगादिना क्विन् निपातनसामर्थ्यादनुनासिकलोपाभावः संयोगात् च लोपः क्विन्प्रत्ययस्येति कुत्वम् ॥ ७३ ॥ ज० म०

भृङ्गेत्यादि । राम इत्युवाचेत्यर्थाद्गम्यते । हे लक्ष्मण ! पम्पां पश्य । कीदृशीं भृङ्गालीभिर्भ्रमरपङ्क्तिभिः कोकिलैः क्रुङ्भिः क्रौञ्चैश्च भूषितां क्रुञ्चगत्यां त्रासुदित्यादिना विच् चकारेत्त्वं क्विप् संशयनिवारणार्थं न तु अव्ययार्थमिति बोध्यं विवितिपाठ इत्येके चुञ्चित्यादौ क्रुञ्चः पृथक्पाठात् प्राक् कुङ् म्नोर्नुः जपे जम्नोरिति ङस्यान्तस्य लुप् । कीदृशैः वाशनैः कूजद्भिः वाशृङ्शब्दे रोचनैः शोभमानैः उभयत्र नन्द्यादित्वादनः । पुनः किम्भूताम् अस्माकं हृदयाविधं चेतः पीड़यन्तीं हृदयं विध्यतीति क्विप् ग्रहस्वपाद्योरिति जिः वीरुहो धङ्काविति दीर्घनिर्देशात् क्वचित् क्विवन्ते पूर्वपदस्य दीर्घत्वमिति दीर्घः आङ्पूर्वस्य रूपं वा ॥ ७३ ॥ भ०

परिभावीनीत्यादि । जलेजानि पद्मानि पश्य तत्पुरुषे कृतीत्यादिनाऽलुक् सप्तम्याः उद्भासीनि भासमानानि अतएव

सर्वत्र दयिताधीनं सुव्यक्तं रामणीयकम् ।
येन जातं प्रियापाये कद्वदं हंसकोकिलम् ॥ ७५ ॥

---

ताराणां परिभावीनि तिरस्कारीणि ततश्चेतसां मन्थीनि पीडाकारीणि अतो जनमदयितं प्रियारहितं दुन्वन्ति टुदु उपतापे सौवादिकः मन्थोद्भासपरिभूभ्यो ग्रहादित्वाणिनिः ॥ ७४ ॥ ज० म०

परीत्यादि । हे लक्ष्मण ! जलेजानि पद्मानि पश्य हनजनादिति डः सरसिजमित्युदाहरणेन क्वचित् समासे सप्तम्या अलुगिति सूचितं तत्पुरुषे कृति बहुलं सप्तम्या अलुगिति परः । कोट्टशानि उद्भासीनि शोभमानानि अतएव ताराणां परिभावीनि तिरस्कारकाणि समानीत्यर्थौ वा ढचेकत्त्वव्येति कर्मणि षष्ठी नोऽचोऽन्तरदुर्गेरित्यादौ भूवर्जनात् न एवं किन्तु षणोऽदान्त इत्यादिना समासाद्विहितेन स्वादिना सहितत्वात् विकल्पेन णत्वं नोऽचोऽन्तरित्यादिना उपसर्गमात्राश्रयस्यैव णत्वनिषेधात् अतएव चेतसां मन्थीनि पीडकानि सर्वत्र ग्रहादित्वाणिन् अतएव अदयितं प्रियारहितं माहृशं जनं दुन्वन्ति पीडयन्ति टुदु उपतापे शतरि स्वादित्वात् नुः ॥ ७४ ॥ भ०

सर्वत्रेत्यादि । हे लक्ष्मण ! सर्वत्र यत्किञ्चिद्रामणीयकं रमणीयस्य भावः योपधाद्वुञ् तत्सर्वं दयिताधीनं दयितायत्तम् अषडक्षेत्यादिना खः सुव्यक्तं स्पष्टं कुतः येन प्रियाया अभावे सति हंसकोकिलं हंसाश्च कोकिलाश्चेति शकुनित्वात् द्वन्द्वैकत्वं कद्वदं कुत्सितप्रलपितं वदतीति पचाद्यच् कुत्सितं वद इति रथवदयोश्चेति कोः कत् दयितायां सत्यां मधुरप्रलपितमिदमिति ॥ ७५ ॥ ज० म०

पक्षिभिर्विहदैर्यूनां शाखिभिः कुसुमोत्किरैः ।
अज्ञो यो यस्य वा नास्ति प्रियो प्रम्लो भवेन्न सः ॥ ७६ ॥

---

सर्वत्रेत्यादि । हे लक्ष्मण ! रामणीयकं यत्किञ्चित् रमणीयत्वं तत् सर्वत्र दयिताधीनं प्रियानिमित्तकमिति सुव्यक्तं स्पष्टमेव कथमित्याह येन हेतुना प्रियाया अपाये विरहे सति हंसकोकिलमपि कद्वदं कुत्सितवादि जातं यदा सीता आसीत्तदा मधुरालापीदमासीदिति भावः कुत्सितं वदतीति कत्त्वाचत्रिरथवद इति कदादेशः रमणीयस्य भाव इति विकारसंघेति कण् हंसाश्च कोकिलाश्चेति समाहारद्वन्द्वः ॥ ७५ ॥ भ०

पक्षिभिरित्यादि । उहदिहिंसानादरयोरित्यस्मादिगुपधः कः यूनां विहदैः हिंसकैः पक्षिभिः शाखिभिर्वृक्षैश्च ग्रीह्यादित्वादिनिः कुसुमोत्किरैः उत्किरन्तीत्युत्किराः पूर्ववत् कः कुसुमानामुत्किराः कर्मयोगलक्षणां षष्ठीं विधाय समासः तैर्हेतुभूतैः करणभूतैर्वा स प्रम्लो न भवेत् प्रकर्षेण ग्लायते प्रम्लः आतश्चोपसर्गे कः योऽज्ञः गुणदोषानभिज्ञः पूर्ववत्कः यस्य प्रियो नास्ति तस्य प्रयोजनाभावः सर्वत्र विविक्तत्वात् प्रीणातीति प्रियः इगुपधेति कः ॥ ७६ ॥ ज० म०

पक्षिभिरित्यादि । पक्षिभिः शाखिभिश्च स एव जनः प्रम्लो ग्लानिमान्न भवति यो जनोऽज्ञो गुणदोषानभिज्ञो भवति यस्य वा जानतोऽपि प्रियो जनो नास्ति सर्वत्र विरक्तत्वात् न त्वस्मद्विधोऽभिज्ञः प्रियानुरक्तश्चेति भावः । पक्षिभिः शाखिभिश्च कीदृशैः यूनामर्थाद्विरहिणां विहदैर्हिंसकैः शाखिभिः कीदृशैः कुसुमोत्किरैः पुष्पविक्षेपकैः हदुअधिनादरे च चकाराद्धिंसायां कृशविक्षेपे ज्ञागबोधने प्रीञ्प्रीतौ एभ्यः कृगृज्ञा-

ध्वनीनामुद्गमैरेभिर्मधूनामुद्वयैर्भृशम् ।
आजिघ्रैः पुष्पगन्धानां पतङ्गैर्ग्लपिता वयम् ॥ ७७ ॥
धारयैः कुसुमोर्मीणां पारयैर्बाधितुं जनान् ।
शाखिभिर्हा हता भूयो हृदयानामुदेजयैः ॥ ७८ ॥

---

ग्रीजुङ इति कः ढवे क्वतीति कर्मणि षष्ठी प्रग्लायतीति प्रग्लः एचोऽशित्या इत्यत्र अशितीति विषये सप्तमी हनजनादिति ड़ः ॥ ७६ ॥ भ०

ध्वनोनामित्यादि। पतङ्गैर्भ्रमरैर्ग्लपिताः पीडिता वयं ग्लास्नावनुवमां चेति मित्त्वात् ह्रस्वः पतेरङ्गच्पर्चिद्धणीत्यौणादिकः ध्वनीनामुद्गमैः ध्वनीन् कुर्वद्भिः घ्राधातोः पाघ्रेति शः पाघ्राध्मेति धमादेशः मधूनामुद्धमैः मधूनि पुनः पुनः पिबद्भिः धेट्पान इत्यस्यायादेशः आजिघ्रैः पुष्पगन्धानां पुष्पगन्धान् गृह्णद्भिः पाघ्राध्मेति शः कृद्योगलक्षणा षष्ठी ॥ ७७ ॥ ज० म०

ध्वनीनामित्यादि। एभिः पतङ्गैर्वयं ग्लपिताः पीडिताः विशेषेण महिम्ना भ्रमरैरिति गम्यते एभिरित्यङ्गुलीनिर्दिष्टत्वेन वा कीदृशैः ध्वनीनां गुञ्जितानां उद्गमैः कारकैः मधूनां उद्वयैः पानकारिभिः पुष्पगन्धानां आजिघ्रैः ग्रहणकारिभिः भृशमत्यर्थमिति सर्वत्र क्रियाविशेषणं ध्मा शब्दाग्नियुतौ ध्वनौ अनेकार्थत्वादत्र करोत्यर्थः धेटपाने घ्रागन्धग्रहणे एभ्यो धेटृशपाघ्राध्मः श इति शित्त्वात् स्थादानपाघ्रेत्यादिना ध्माधम आजिघ्र पतङ्गः पक्षिसूर्य्ययोः पतो गच्छतीति शर्द्धंजह्नोरङ्गम इत्यादिना खे निपातः ग्लायतेर्जन्तस्य ज्वलह्वलह्मलम्बेति वा ह्रस्वः ॥ ७७ ॥ भ०

धारयैरित्यादि। हा कष्टं शाखिभिर्द्रुमैर्भूयोऽत्यर्थं वयं हताः कामशराणां धारणात् तदेवाह कुसुमानां ये ऊर्मयः

ददद्भिर्दुःखस्य मातृभ्यो धार्यैरामोदमुत्तमम् ।
लिम्पैरिव तनोर्वातैश्चेतयः स्याज्ज्वलो न कः ॥ ७९ ॥

---

भङ्गाः प्रकाशा वा तान् धारयद्भिः । ऊर्मिस्तरङ्गे पीडायां वेगे सङ्गप्रकाशयोः । उत्कण्ठावस्त्रसंकोचबोधेषु च प्रकीर्त्तित इति विश्वः । समूहेऽपीति अतएव जनान् मद्विधान् बाधितुं पारयद्भिः यतो हृदयानामुदेजयैरुत्कण्ठाजनकैरिति भावः धृञ् धारणे पृ पालनपूरणयोः एजृ कम्पने च एभ्योणिजन्तेभ्यः अनुपसर्गाल्लिम्पविन्देत्यादिना शः उदेजीति सूत्रे निर्देशात् अनुपसर्गादिति न निषेधः ॥ ७८ ॥ ज० म०

धार्यैरित्यादि । हा कष्टं शाखिभिर्वृक्षैर्वयं भूयोऽत्यर्थं हताः । कीदृशैः कुसुमानामूर्मयः प्रकाशाः सङ्गा वा तेषां धार्यैः धारकैः अतएव जनान् बाधितुं पीडयितुं पार्यैः पारयद्भिः यतो हृदयानामुदेजयैः उत्कम्पकैः धृशब्दस्थितौ पृलिपालनपूरणयोः ऋस्वान्तो जुहोत्यादिः दीर्घान्तः क्र्यादिकश्च एजृकम्पे उत्पूर्वः एभ्यः प्रेरणअन्तेभ्यः साहिसातीत्यादिना शः पारत्कतीरवत् इत्यस्य न ग्रहणं प्रेरणअन्तैः साहचर्य्यात् अगीरिति प्रतिषेधेऽपि उदेजः शः कृत्तद्धितसमासानामभिधानं नियामकमित्युक्तेः । ऊर्मिस्तरङ्गे पीडायां वेगे सङ्गप्रकाशयोः । उत्कण्ठावस्त्रसङ्कोचबोधेषु च प्रकीर्त्तित इति विश्वः । समूहेति जयमङ्गला ॥ ७८ ॥ भ०

ददद्भिरित्यादि । वातैर्ददैः दुःखस्य दुःखं ददद्भिः केभ्यो मातृभ्यः अस्मादृशेभ्यो विरहिभ्यः त्यदादिषु दृश इति क्विन् दृदृग्दृशवतुष्वित्याकारः धार्यैरामोदमुत्तमम् आमोदं प्रियासङ्गमेन हर्षं यावत् विरहिभ्यो दत्तस्य दुःखस्य धार्यैः पोषकैरित्यर्थः उत्तममिति क्रियाविशेषणम् उत्तममामोदं धार्यैः

अवश्यायकणास्रावाश्वाहमुक्ताफलत्विषः ।

---

कुसुमानां परिमलं धारयद्भिरिति व्याख्याने अनित्यत्वात् क्वप्रयोगी कर्मषष्ठ्यभावः लिम्पैरिव तनोः शरीरं लिम्पद्भिरिव वातैर्हेतुभिः को नाम विरहाग्निना यश्चेतयमानः ज्वालाज्वलन्नग्निरिव न स्यात् किन्तु भवेदेवेति भावः। ददैर्धायैरिति श्याद्व्यधेति आकारान्तलक्षणे णे प्राप्ते ददातिदधात्योरिति शाणौ भवतः णे आतो लोपः णेतु युक् लिम्पश्चेतय इति अनुपसर्गादिति शः ज्वल इति ज्वलिति कसन्तेभ्यो ण इति णस्य विकल्पपचाद्यच् ॥ ७९ ॥ ज० म०

ददैरित्यादि। कश्चेतयश्चेतनावान् जनोऽर्थाद्विरही वातैर्हेतुभिर्ज्वलो न स्यात् अग्निरिव न भवति वायुभिश्चेतःसन्तोषात् सर्व एव ज्वलो दीप्तिमान् स्यादिति वा केवलं मद्विधानां विरहिणां कष्टमित्याह माद्दग्भ्यो दुःखस्य ददैर्दातृभिः यतः उत्तममामोदं पुष्पसम्बन्धिनं धायैर्धारयद्भिः क्वचिद्विशेषेऽपि सामान्यप्रवृत्तिरिति न्यायात् ढषेद्भलीति कर्मणि षष्ठीं बाधित्वा कर्मक्रियेत्यादिना द्वितीया तनोर्देहस्य लिम्पैर्लेपकारिभिरिव ददाने पचादित्वादन् अहमिव दृश्यते इति तदादिभवत्समानेत्यादिना कर्मणि क्विप् अं भाधाञ्धारणे पुष्टौ दासंज्ञकत्वात् श्वसव्यधेन तनदावश्चस इति नः यन्त्रणित्क्रादिण्यातः भिलिपीयपञ्लेपे साहिसातीत्यादिना शः सुचादित्वात् नुण् चितकङ्ज्ञाने इत्यस्मात् अभिधानात् शः धेटद्दशेत्यत्र योगविभाग इत्यन्ये साहिसातीत्यादौ चेतीति लिपिकरप्रमादात् पतितमित्यन्ये जज्वलज्वलनत्विषोः दुनीभूज्वलेत्यस्याप्रवृत्तिपक्षे पचादित्वादन् ॥ ७९ ॥ भ०

अवश्यायेत्यादि। अवश्यायते इत्यवश्यायः तस्य कणा

कुर्वन्ति चित्तसंस्रावं चलत्पर्णाग्रसम्भृताः ॥ ८० ॥
अवसायो भविष्यामि दुःखस्यास्य कदा न्वहम् ।
न जीवस्यावहारो मां करोति सुखिनं यमः ॥ ८१ ॥

---

विन्दवः आस्रवन्तीत्यास्रावाः क्षरन्तः श्याद्व्यधेति णः कर्त्तरि तयोर्विशेषणसमासे राजदन्तादिति परनिपातः ते कुर्वन्ति चित्तसंस्रावं संस्रवतीति संस्रावः पूर्ववत्ः चित्तं संस्रावं चलत्-कुर्वन्ति इत्यर्थः पूर्ववत् समासपरनिपातौ कीदृशाश्चलत्पर्णाग्र-संस्थिताः अतएव चारुमुक्ताफलत्विषः दर्शनीयमुक्ताफलानु-कारिणः सीताहारस्थमुक्ताफलानि स्मारयन्तीत्यर्थः ॥ ८० ॥ ज० म०

अवेत्यादि । अवश्यायकणास्रावाश्चित्तसंस्रावं कुर्वन्ति अवश्यायस्य नीहारस्य कणा विन्दवः आस्रवन्तीति आस्रावाः कर्मधारये गमकत्वात् विशेषणस्यापि परनिपातः स्रुगतौ दुनीभूज्वलेत्यादिना पक्षे णः चित्तञ्च तत् संस्रावं चलच्चेति पूर्ववत् । कीदृशाः चलतां पत्राणाम् अग्रेषु संभृताः चलन्तश्च ते पत्राग्रसंभृताश्चेति वा स्थूलीभूता गलिता इत्यर्थः अतएव चारुणः शोभनस्य मुक्ताफलस्य त्विट् दीप्तिर्येषु ते तथा सीता-हारस्थितानि मुक्ताफलानि स्मारयन्त इत्यर्थः श्यैङ्गतौ घञि यन्ङितृक्तदिण्यात इति यन् ॥ ८० ॥ भ०

अवसाय इत्यादि । कदा नु काले अहं दुःखस्यानुभूय-मानस्य अवसायोऽन्तकरो भविष्यामि येन जीवस्यावहारो-ऽवहर्त्ता यमो मां सुखिनं न करोति मारयतीत्यर्थः अवस्यति इति अवसायः षोऽन्तकर्मणि अवहरतीत्यवहारः श्याद्व्यधेति सर्वत्र णः युक् ॥ ८१ ॥ ज० म०

अवेत्यादि । नु प्रश्ने वितर्के वा कदा अहं अस्य दुःखस्य

दह्येऽहं मधुनो लेहैर्दावैरुग्रैर्यथा गिरिः ।
नायः कोऽत्र स येन स्यां वताहं विगतज्वरः ॥ ८२ ॥
समाविष्टं ग्रहेणेव ग्राहेणेवात्तमर्णवे ।
दृष्ट्वा गृहात् स्मरस्येव वनान्तान् मम मानसम् ॥ ८३ ॥

---

व्यवसायोऽन्तकरो भविष्यामि येन जीवस्तावद्धारोऽपकारको भूत्वा अद्यापि यमो मां दुःखिनं न करोति विना मरणं न दुःखमपगमिष्यतीत्यर्थः षोय नाशे ह्वञ् ह्वत्यां आभ्यामिव पूर्वाभ्यां ख्सव्यधेन तनदावह्वस इति णः ॥ ८१ ॥ भ०

दह्येऽहमित्यादि । मधुनो लेहैर्भृङ्गैः अहं दह्ये श्याद्व्य-धेति णः दावैर्वनाग्निभिरुग्रैः प्रचण्डैर्यथा गिरिर्दह्यते तद्वत् । अत्र को नायः नयतीति नायः उपायः ईप्सितप्रापकः उभ-यत्र दुन्योरिति णः येन नायेन विगतज्वरः विगतपीडः स्यामिति आशंसायां लिङ् वत खेदे ॥ ८२ ॥ ज० म०

दह्ये इत्यादि । मधुनो लेहैर्मधु लिहद्भिर्भ्रमरैरहं दह्ये कर्मणि को यथा उग्रैः प्रचण्डैर्दावैर्वनाग्निभिर्गिरिर्दह्यते तद्वत् अत्र स को नायोऽभिमतप्रापक उपायः येनाहं विगतज्वरः विगतसन्तापः स्यां नु प्रश्ने वितर्कें वा वत खेदे अस्तेः श्नसो-र्लोपोऽस्त्यसोरिति अकारलोपः लिहौञ् स्वादे पचादित्वादन् टुदु उपतापे दुगतौ वा णीञ् प्रापणे दुनीभूज्वलेति वैकल्पिको णः । दवदावौ वनानले इत्यमरः ॥ ८२ ॥ भ०

समाविष्टमित्यादि । वनान्तान् वनपर्य्यन्तान् स्मरस्य कामस्य गृहमिव उन्मादकत्वात् गेहे क इति ग्रहैः कः अर्द्ध-र्चादिपाठात् पुंलिङ्गता स्थितस्येत्यर्थात् योज्यं अन्यथा कथं समानकर्तृकत्वं मानसञ्चेतः ज्योतिषि ग्रहः ग्राहेणेवात्तमर्णवे अर्णः पानीयं यत्रास्तीति केशाद्वोऽन्यतरस्यामिति तत्रार्णवो

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



वाताहतिचलच्छाखा नर्त्तका इव शाखिनः ।
दुःसहा ही परिच्छिन्नाः क्वणद्भिरलिगाथकैः ॥ ८४ ॥

---

लोपश्चेति भूमनिन्दाप्रशंसास्वित्यादौ वः सलोपश्चेति अर्णवे समुद्रे वर्त्तमानेन ग्राहेण कुम्भीरादिना आत्तं गृहीतं आङ्-पूर्वस्य दाञोऽच उपसर्गात्तः ॥ ८३ ॥ ज० म०

समेत्यादि । वनान्तान् वनस्वरूपान् तत्समीपदेशान् वा दृष्ट्वा स्थितस्य मम मानसं ग्रहेण सूर्य्यादिना समाविष्टमिव आसदीकृतमिव इत्यर्थः उपहितत्वात् समुद्रे ग्राहेण कुम्भी-रादिना आत्तं गृहीतमिव अतिगभीरशोकमग्नत्वेऽपि काम-पीडितत्वात् स्थितस्येत्यधाहारेणैककर्तृकत्वे पूर्वकाले क्त्वाच् । वनान्तान् कीदृशान् स्मरस्य गृहानिव ग्रहैः सूर्य्यादौ अन् जल-जन्तौ घञ् निलयेऽलिजिश्वाभिधानात् गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालया इत्यमरः । आङ्पूर्वदाञः क्ते ग्यचस्त-वेति पक्षे तादेशः अर्णो जलं विद्यते अस्येति केशादित्वात् वः मनीषादित्वात् सलोपः मन एव मानसं स्वार्थे ष्णः केचित्तु मन एव जानातीति व्यवहारात् मनस एव दर्शनकर्तृकत्वं विवक्षितमित्युक्त्वा स्थितस्येति नाध्याहरन्ति अन्तः प्रान्तेऽ-न्तिके नाशे स्वरूपेऽपि मनोहर इति विश्वः ॥ ८३ ॥ भ०

वातेत्यादि । हा कष्टं एते शाखिनः नर्त्तका इव शिल्पिनि ष्वुन् दुःसहा दुःखेन सह्यन्ते इति ईषदित्यादिना खल् नर्त्तकैः साधर्म्यमाह वाताहतिचलच्छाखा वाताहतिभिः चलन्त्यः शाखा बाहुलता इव येषां ते अलयो भ्रमरा गाथका इव गस्थकन् तैश्च परिच्छिन्नाः परिवेष्टिता इति ॥८४॥ ज० म०

वातेत्यादि । एते शाखिनो दुःसहा दुःखेन सह्यन्ते ईषद्दुःसोरिति खल् ही विषादे नर्त्तका इव नृत्यन्तीति नृत्-

एकहायनशारङ्गगती रघुकुलोत्तमौ ।
लवकौ शत्रुशक्तीनामृष्यमूकमगच्छताम् ॥ ८५ ॥
तौ वालिप्रणिधी मत्वा सुग्रीवोऽचिन्तयत् कपिः ।

---

खनरन्ज इति थक: नृतादेः शिल्पिनि क्वष इति पर: समर्त शिल्पिविशेषोऽर्थाद्गम्यते । नर्त्तकसाधर्म्यमाह वाताहतिचलच्छाखाः वातस्याहतिभिश्चलन्ती शाखा बाहुतुल्या येषां अलयो भ्रमरा एव गाथका गायनास्तैः परिक्षिप्ताः परिवेष्टिताः गायन्तीति गोषनट्थकाविति थक: गायतेरितो स्तोत्रे इति वृत्तावुक्तत्वात् गैगाने इत्यस्यैव ग्रहणं न तु गाङः क्वणद्भिः शब्दायमानैः ॥ ८४ ॥ भ०

एकहायनेत्यादि । रघुकुलोत्तमौ रामलक्ष्मणौ ऋष्यमूकमगच्छतां गतवन्तौ लङि रूपं हायनः संवत्सरः स एको यस्य शारङ्गस्य मृगस्य तस्येव गतिर्ययोः शीघ्रगामित्वात् हनश्च व्रीहिकालयोरिति हाधातोर्ण्युट् आतो युक् तौ शत्रुशक्तीनां लवकौ अपनेतारौ प्रुसृल्वः समभिहार इति वुन् तत्समभिहारग्रहणं साधुकारित्वोपलक्षणार्थम् ॥ ८५ ॥ ज० म०

एकेत्यादि । एतद्वचनानन्तरं रघुकुलस्य उत्तमौ श्रेष्ठौ रामलक्ष्मणौ ऋष्यमूकं पर्वतम् अगच्छताम् । कीदृशौ एकहायनशारङ्गगती एको हायनो वत्सरो वयो यस्य तादृशस्य शारङ्गस्य हस्तिनः इव मृगस्येव वा गतिर्गमनं ययोः शीघ्रगामित्वात् जहातेर्णनटि हायनो निपातितः हाङो रूपमित्यन्ये शत्रुशक्तीनां लवकौ छेदकौ लुनातेः प्रुद्रुसुस्त्वोऽकः इत्यकः प्रादेः साधुकारिण्यर्थेऽक इति परः । शारङ्गश्चातके भृङ्गे कुरङ्गे च मतङ्गजे इति कोषः ॥ ८५ ॥ भ०

तावित्यादि । तौ रामलक्ष्मणौ बालिनः प्रणिधी चरौ

बन्धुना विग्रहीतोऽहं भूयासं जीवकः कथम्॥ ८६॥
स शत्रुलावौ मन्वानो राघवौ मलयं गिरिम्।
जगाम सपरीवारो व्योममायमिवोत्थितम्॥ ८७॥

---

मत्वा सुग्रीवः कपिरचिन्तयत् चिन्तितवान् प्रणिधीयते नियुज्यते कार्य्येषु प्रणिधिः उपसर्गे घोः किः बन्धुना भ्रात्रा विग्रहीतो विरोधितः सन् कथं जीवको भूयासमिति आशंसायां लिङ् जीवेराशिषि वुन्। इति निरुपपदकृदधिकारः॥८६॥ ज० म०

तावित्यादि। रामलक्ष्मणौ बालिनः प्रणिधी चरौ मत्वा सुग्रीवः कपिरचिन्तयत् बन्धुना बालिना विग्रहीतो विरोधितोऽहं कथं जीवको भूयासं प्रणिधीयते कर्मणि प्रयुज्यतेऽसाविति दासंज्ञकत्वात् किर्दोऽन्तर्गरित्यनेन भावविहितोऽपि किः कृतोः कभाव इत्युक्तेरत्र कर्मणि बोध्यः। केचित्तु कभावेऽमी इत्यस्मात् मण्डूकप्लुताधिकारादत्र कभाव इत्यनुवर्त्तते वृत्तौ तु कारकानुपदेशो लिपिकरप्रमादात् इत्याहुः आशिषीति जीवतेरकः। इति निरुपपदाधिकारः॥८६॥ भ०

इतः प्रभृति तत्रोपपदं सप्तमीस्थमिति अस्योपपदस्थानेन कृतो दर्शयन्नाह स इत्यादि। स सुग्रीवः सपरीवारः सपरिकरः उपसर्गस्येति दीर्घः कपीनाममनुष्यत्वात् मलयं गिरिं जगाम राघवौ शत्रून् लुनातीति कर्मण्यण् शत्रूणामुन्मूलकाविति मन्वानोऽवगच्छन् मनुबोधन इत्यस्मादात्मनेपदिनस्तनादिभ्य उः व्योममायमिवोत्थितं व्योम आकाशं मिमीत इति ह्वावामश्चेत्यण् नभः परिच्छेत्तुमिवोत्थितं कियत्प्रमाणमस्येति॥ ८७॥ ज० म०

शर्मदं मारुतिं दूतं विषमस्थः कपिद्विपम् ।
शोकापनुदमव्यग्रं प्रायुङ्क्त कपिकुञ्जरः ॥ ८८ ॥

---

अथ सोपपदाधिकारः । यस्मात् पराद्धातोः प्रत्ययास्तदुपपदं स इत्यादि । स सुग्रीवो राघवौ शत्रुलावौ शत्रूणां छेदकौ मन्वानः परीवारैः परिजनैः सह मलयं गिरिं जगाम व्योममायं आकाशस्य परिमाणं कुर्वाणमिव उत्थितं अतिदैर्घ्यादियमुत्प्रेक्षा शत्रून् लुनातीति व्योम मातीति च ढात् षण्यनर्ष्षित् क्वदिति आतो यन् मनदङ्कबोधे ङित्त्वान्म' दित्त्वात्तनादिः परिपूर्वाद्वृञो घञ् परेरिकारस्य दीर्घत्वमभिधानात् ॥ ८७ ॥ भ०

शर्मदमित्यादि । कपिकुञ्जरः सुग्रीवः हनूमन्तं दूतं प्रायुङ्क्त प्रस्थापितवान् वृन्दारकनागकुञ्जरैरित्यादिना कर्मधारयः सः वृत्तान्तं ज्ञातुमित्यर्थात् प्रायुङ्क्त इति प्रोपाभ्यां युजेरित्यात्मनेपदं रुधादित्वात् श्नम् । कपिकुञ्जरः किम्भूतः विषमे दुर्गपर्वते तिष्ठतीति विषमस्थः सुपिस्थ इति कः । मारुतिं कीदृशं शर्म कल्याणं ददातीति शर्मदः आतोऽनुपसर्गे क इति कः । श्रेष्ठत्वमाह कपिद्विपं कपिश्रेष्ठं द्वाभ्यां पिबतीति द्विपः कपिरयं द्विप इव उपमितं व्याघ्रेत्यादिना कर्मधारयः । पुनः कीदृशं शोकापनुदं शोकमपनुदति तुन्दशोकयोरिति कः अव्यग्रं सुस्थिरचित्तमित्यर्थः ॥ ८८ ॥ ज० म०

शर्मदमित्यादि । कपिकुञ्जरः सुग्रीवो मारुतिं हनूमन्तं दूतं प्रायुङ्क्त प्रस्थापितवान् वृत्तान्तं ज्ञातुमित्यर्थात् । कीदृशः विषमस्थः विषमे कृच्छ्रे तिष्ठतीति हनजनादिति डः एवम्भूतोऽपि महासत्वत्वादव्यग्रोऽव्याकुलः यद्वा विषमे दुर्गे स्थितः अतएव अव्यग्रः अक्षोभितमनाः । कीदृशं मारुतिं शर्म

विश्वासप्रदवेशोऽसौ पथिप्रज्ञः समाहितः ।
चित्तसंख्यो जिगीषूणामुत्पपात नभस्तलम् ॥८९॥

---

ददातीति शर्मदं सुखदायकं पूर्ववत् डः । शर्मशातसुखानि चेत्यमरः । कपिद्विपं कपिश्रेष्ठं शोकमपनुदति शोकापनुदं तुन्दशोकयोः परिमृजापनुदोरिति कः कपिर्द्विप इव कपिः कुञ्जर इव गमकत्वात् विशेषणस्यापि परनिपातः द्वाभ्यां पिबतीति द्विपः पूर्ववत् डः कुञ्जो दन्तो विद्यतेऽस्येति मध्वादित्वात् रः । कुञ्जः कुञ्जे निकुञ्जेऽपि हनौ दन्तेऽपि दन्तिनामिति विश्वः । मारुतस्यापत्यमिति वाह्वाद्यत इति षिञः । आञ्जनेयो हनूमान् स्याद्धनुमानपि मारुतिरिति कोषः । अव्यग्रमिति क्वचित् पाठः तादृशस्य दूतस्य योग्यत्वात् युजेर्घ्यों रुधादित्वात् श्नम् नशोऽन्तेणाविति नादेशः ॥ ८८ ॥ भ०

विश्वासेत्यादि । असौ मारुतिर्नभस्तलमुत्पपात विश्वासं प्रददातीति विश्वासप्रदः प्रे दाज्ञ इति कः विश्वासप्रदो वेषो यस्य भिक्षुवेषः इत्यर्थः वेष्यते आत्मानेनेति अकर्त्तरि च कारके घञ् विष्लृव्याप्ताविल्यस्य रूपं पन्थानं प्रजानातीति पथिप्रज्ञः समाहितः अभ्रान्तचित्तः इदञ्च मया तत्र वक्तव्यमिति जिगीषूणां जेतुमिच्छतां चित्तसंख्यः चित्तं संख्याति परिच्छिनत्तीति समिख्य इति कः ॥ ८९ ॥ ज० म०

विश्वासेत्यादि । असौ मारुतिर्नभस्तलमुत्पपात । कीदृशः विश्वासप्रदो वेशो यस्य स तथा भिक्षुवेशत्वात् शौविशप्रवेशे घञि वेशः विषिर्लिजोऌव्याप्ताविल्यस्य मूर्द्धन्यान्तस्य रूपमित्यन्ये पन्थानं प्रजानाति इति तुन्दशोकयोः परिमृजापनुदोरिति कः समाहितः अभ्रान्तचित्तः जिगीषूणां जेतुमिच्छूनां स्वपक्षाणां परपक्षाणाञ्च चित्तं संख्याति परिच्छिनत्तीति हननजनादिति

सुरापैरिव घूर्णद्भिः शाखिभिः पवनाहतैः ।
ऋष्यमूकमगाद् भृङ्गैः प्रगीतं सामगैरिव ॥ ९० ॥
तं मनोहरमागत्य गिरिं वर्महरौ कपिः ।
वीरौ सुखाहरोऽवोचद् भिक्षुर्भिक्षार्हविग्रहः ॥९१॥

---

डः संपूर्वस्य ख्याख्याताविल्यस्य प्रयोगो नास्तीति ये वदन्ति तन्मते चक्षिङो रूपं तदा चक्षिङः कशाञ्ख्याञरे इत्यत्र अर इति विषयसप्तमी ॥ ८९ ॥ भ०

सुरापैरित्यादि। मारुतिर्ऋष्यमूकमगात् शाखिभिरुपलक्षितं घूर्णद्भिः कम्पमानैः पवनाहतत्वात् अतएव सुरापैरिव मत्तैरिव गापोष्टगित्यत्र सुरासीध्वोरिति टक् प्रगीतं प्रगीयतेऽत्रेति अधिकरणे क्तः कैर्भृङ्गैः सामगैरिव सामवेदपाठकैरिव गायन्तीति टक् ॥ ९० ॥ ज० म०

सुरापैरित्यादि। स मारुतिर्ऋष्यमूकमगात्। कीदृशं शाखिभिरुपलक्षितम्। कीदृशैः पवनेनाहतैः अतएव घूर्णद्भिः कम्पमानैः घूर्णजभ्रमणे शतुः अतएव सुरापैर्मद्यपैरिव सुरां पिबन्तीति हनजनादिति डः भृङ्गैः प्रगीतं नादितं गीयते यत्रेति ध्रौव्यगत्येति आधारे क्तः क्तद्योः कभाव इत्युक्तः अपवादेऽप्युत्सर्गप्रवृत्तिः क्वचिदिति न्यायात् कामुकसञ्ज्ञार्थक्तेन इत्यनेन षष्ठीप्राप्तौ साधनहेत्वित्यादिना कर्त्तरि तृतीया भावक्तान्तादर्श आदित्वादतिभृङ्गकर्तृकसङ्गीतयुक्तमिति वार्थः प्रकृष्टं गीतं यत्रेति वा सामगैरिव सामवेदं गायन्तीति हनचरगष्टक् ॥ ९० ॥ भ०

तमित्यादि। ऋष्यमूकं गिरिमागम्य कपिर्वीरौ रामलक्ष्मणौ अवोचत् उक्तवान्। कीदृशं मनोहरं रम्यत्वात् मनो हरतीति हरतेरनुद्यमनेऽच् वर्महरौ कवचं हर्त्तुं क्षमौ सम्रा-

बलिनावसुमद्रीन्द्रं युवां स्तम्बेरमाविव ।
आचचाथामिथः कस्माच्छङ्करेणापि दुर्गमम् ॥९२॥

---

समानवयसावित्यर्थः वयसि चेत्यच् सुखाहरः सुखाहरणशीलः आङि ताच्छील्य इत्यच् भिक्षुः परिव्राट्वेशः न कपिरूपः यतो विश्वासप्रदवेश इत्युक्तं भिक्षार्हविग्रहः भिक्षायोग्यशरीरः कृशत्वादित्यर्थः भिक्षामर्हतीत्यच् ॥ ९१ ॥ ज० म०

तमित्यादि। तं ऋष्यमूकं गिरिं आगत्य आगस्य कपिर्हनूमान् वीरौ रामलक्ष्मणौ अवोचत् कथितवान्। गिरिं कीदृशं रम्यत्वात् मनोहरं हरतीति हरः पचादित्वादन् मनसो हरः मनोहरः। कीदृशौ तौ वर्महरौ कवचधरौ पूर्ववदन् कपिः कीदृशः सुखाहरः सुखकारी अर्थात् तयोः पूर्ववत् अन् परे तु अवहने कर्मणः परात् हृञोऽन् वयोबोधकवहने च आङ्पूर्वात् तु ताच्छील्य एवेत्याहुः मन्यते मनो हरतीति मनोहरस्तं वहने तु भारहार इत्यादि बोध्यं वर्म हर्त्तुं चमौ वर्महरौ अत्र सम्भाव्यमानं वयो गम्यते तरुणावित्यर्थः सुखमाहर्त्तुं शीलमस्य सुखाहरः भिक्षुर्यतिरूपः भिक्षणशीलो वा सम्भिक्षाशंस उः भिक्षार्हविग्रहः भिक्षायोग्यशरीरः भिक्षुकवेशपरिग्रहात् न तु वानरमूर्त्तिः विश्वासप्रदवेश इत्युक्तं भिक्षामर्हतीति भिक्षार्हः पचादित्वादन् ॥ ९१ ॥ भ०

किमवोचदित्याह बलिनावित्यादि। युवां असुं अद्रीन्द्रं कस्मात् कारणादिथः प्राप्तौ इण्गतावित्यस्माद्वर्त्तमानसामीप्ये भूते लट् थस् एतदाचचाथां कथयतं लोटि रूपं बलिनौ बलवन्तौ यत् शङ्करेणापि महादेवेनापि दुर्गमं दुःखेन गम्यते काविव स्तम्बेरमाविव यथा मत्तद्विपौ प्राप्नुतस्तद्वत्

व्याप्तं गुहाशयैः क्रूरैः क्रव्याद्भिः सनिशाचरैः ।
तुङ्गशैलतरुच्छन्नं मानुषाणामगोचरम् ॥ ९३ ॥

उत्क्रुष्टाधिकारः ।

---

स्तम्बकरणयोरित्यच् कर्त्तरि हस्तिन्यभिधेये हस्तिसूचकयोरिति वचनात् शङ्कर इति शमिधातोरित्यच् ॥ ९२ ॥ ज० म०

बलीव्यादि । किमवोचदित्याह युवां असुं अद्रीन्द्रं ऋष्यमूकं कस्मात् कारणात् इथः प्राप्नुथः इण्गतौ भूतसामीप्ये की अभिधानात्,एतत् युवामाचक्षाथां कथयतं प्रार्थनायां गी अद्रीन्द्रं कीदृशं शङ्करेण महादेवेनापि दुर्गमं दुःखेन गम्यते इति ईषद्दुःसोरिति खल् अतएवात्र गमनात् युवां वलिनौ बलमस्ति ययोरिति नैकाजादिति इन् अत्रातिशयेन अस्त्यर्थो बोध्यः । तथाच "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्ति विवक्षायां भवन्ति मतुवादयः ॥" इति स्तम्बेरमाविव हस्तिनौ यथा प्राप्नुथस्तद्वत् स्तम्बेरमते इति पचादित्वादन् अभिधानात् सप्तम्यलुक् हस्तिन्येव रूढः शं कल्याणं करोतीति शङ्करः स्वकुष्ट इति टः अभिधानात् संज्ञा गम्यते ॥ ९२ ॥ भ०

व्याप्तमित्यादि । दुर्गमत्वदर्शनाय इदमुच्यते । कीदृशमद्रीन्द्रं क्रव्यमपक्वमांसं भक्षयद्भिः सिंहादिभिः सनिशाचरैः राक्षससहितैर्व्याप्तं क्रव्ये चेति विट् गुहाशयैः गुहायां शेरते इति शीङोऽधिकरणेऽच् तुङ्गाः उच्चाः शैलाः शिलायां भवा ये तरवस्तैश्छन्नं व्याप्तं अतएव मानुषाणामगोचरं अगम्यं गोचरसञ्चरेत्यादिना निपातितः ॥ ९३ ॥ ज० म०

व्याप्तमित्यादि । दुर्गमत्वं दर्शयन्नाह अद्रीन्द्रं कीदृशं क्रव्याद्भिः किरातादिभिः सिंहादिभिर्व्याप्तं क्रव्यं मांसमदन्तीति

सत्वमेजयसिंहाढ्यान् स्तनन्धयसमत्विषौ ।
कथं नाडिन्धमान्मार्गानागतौ विषमोपलान् ॥९४॥

क्विप् क्रव्यशब्दादद: पक्वे क्विप् अपक्वेऽण्क्विपाविति पर: स्वमते पक्वापक्वविशेषानुक्तौ न च्चतिरर्थानतिशयत्वात् कीदृश: गुहाशयै: गुहायां शेरते इति पचादित्वादन् शीङोऽधिकरणादनेति परसूत्रं क्रूरैर्निर्दयै: कठिनैर्वा सनिशाचरै: राक्षससहितै: । पुन: कीदृशं तुङ्गशैलतरुच्छन्नं तुङ्गै: शैलैस्तरुभिश्च छन्नं सर्वतो व्याप्तं अतएव मानुषाणामगोचरं अगम्यम् । द्विषन् वनेचराग्राणामित्यारभ्य चरादेष्ट इत्यादिप्रकरणस्य प्रागुक्तत्वात् अत्र तत्याग इत्यत आह उक्ताष्टाधिकार इति ॥९३॥ भ०

सत्वमित्यादि । युवामिमान् मार्गानागतौ सत्वमेजयसिंहाढ्यान् सत्वमेजयन्ति ये सिंहा: एजे: खश् अरुर्द्विषेति सुम् तैराढ्यान् व्याप्तान् सिंहग्रहणं तद्वद्धिंस्रोपलक्षणार्थं हिनस्तीति सिंह: पृषोदरादित्वाद्वर्णविपर्य्यय: नाडिन्धमानिति उच्चनीचाधिरोहणान्मुहुर्मुहुर्निश्वासैर्नाडिन्धमन्तीति नाडीमुष्ट्योश्चेति खश् खित्यनव्ययस्येति ह्रस्व: विषमोपलान् उन्नतपाषाणयुक्तान् स्तनन्धयसमत्विषौ बालवत् सुकुमारौ सामर्थ्यं पुनर्युवयोरचिन्त्यं स्तनं धयत: पिबत: नासिकास्तनयोरिति खश् अरुर्द्विषदिति सुम् ॥ ९४ ॥ ज० म०

अथ खशाद्यधिकार: सत्वमित्यादि । युवां कथम् इमान् मार्गान् आगतौ एतत् ब्रूतमिति वक्ष्यमाणश्लोकेनान्वय: । कीदृशान् सत्वमेजयसिंहाढ्यान् सत्वान् प्राणिन एजयन्ति कम्पयन्ति भीषयन्तीति यावत् खश्एजेरिति खश् खित्यव्याजिति मन् तादृशा ये सिंहास्तैराढ्यान् व्याप्तान् हिनस्तीति सिंह: पचा-

उत्तीर्णौ वा कथं भीमाः सरितः कूलमुद्वहाः।
आसादितौ कथं ब्रूतं न गजैः कूलमुद्रुजैः॥ ९५॥

---

दिबादन् निपातनात् वर्णविपर्य्ययः नाडिन्धमान् मुहुर्मुहुर्नाडीं निःश्वासैर्धमन्ति उपतापयन्तीति नाडीमुनीस्तनेत्यादिना खश् स्यादानपेत्यादिना ध्मोधमादेशः पूर्वेण मन् क्रमश्च विषमोपलान् उन्नतानतप्रस्तरयुक्तान्। युवां कीदृशौ स्तनन्धयसमत्विषौ स्तनं धयति पिबतीति स्तनन्धयो बालकः पूर्ववत् खश् मन् च तेन समा त्विट् दीप्तिर्ययोः एतेन सौकुमार्य्यं दर्शितं स्तनन्धयशब्देनार्थात् तद्दीप्तिरुपलक्ष्यते दीप्तौ तत्समत्वमुचितं परम्परया धर्मिसाम्यं धर्मसाम्यं वा गम्यते ॥ ९४ ॥ भ०

उत्तीर्णावित्यादि। कथं वा केनोपायेन युवां सरितो नदीरुत्तीर्णौ भीमास्त्रासकरीः यतः कूलमुद्वहाः कूलमापूर्य्यं वहन्त्यः उदिकूल इति खश् गजैः कूलमुद्रुजैः कूलं भिन्दद्भिः कथं नासादितौ न व्यापादितौ इति ब्रूतं कथयतम्॥ ९५॥ ज० म०

उत्तीर्णावित्यादि। कथं वा युवां सरितो नदीरुत्तीर्णौ तरणमपि गतिः तेन गत्यर्थाढेत्यादिना कर्त्तरि क्तः। कीदृशीः कूलमुद्वहाः कूलान्यापूर्य्य वहन्ति कूलं तीरमपि जलानि प्रापयन्ति वा अतएव भीमास्त्रासकरीः गजैर्हस्तिभिः कथं वा युवां नासादितौ न प्राप्तौ न मारिताविति भावः कर्मणि क्तः। कीदृशैः कूलमुद्रुजैः मत्ततया कूलं भिन्दद्भिः एतत् युवां ब्रूतं कथयतं उभयत्र कूलादुद्रुजुद्वह इति खश् खित्यव्याजिति मन् ॥ ९५ ॥ भ०

रामोऽवोचद्धनूमन्तमावामभ्रंलिहं गिरिम् ।
ऐव विद्वन् ! पितुः कामात् पान्तावल्पम्पचान् मुनीन् ॥८६॥

---

राम इत्यादि । हनुर्वदनैकदेशः सोऽस्यास्तीति निन्दायां मतुप् अन्येषामपि दृश्यते इति दीर्घः हनूमान् हनुमानपीति विश्वदर्शनात् द्वैरूप्यं तस्य किल जातमात्रस्य आदित्यरथं गृह्णतो हनुद्वयं भग्नमिति श्रूयते तं रामोऽवोचत् उक्तवान्। तत् किमित्याह हे विद्वन् ! यद्यमुं गिरिमावामैव आगतौ तत् पितुः कामादभिप्रायात् आङ्पूर्वादिणो लङि रूपं अभ्रंलिह-मुच्चैस्तरं अभ्रं लेढीति वहाभ्रे लिह इति खश् । किं कुर्वाणौ पान्तौ रक्षन्तौ मुनीन् अल्पम्पचान् अल्पसन्तुष्टान् अल्पं पचन्तीति मितनखे चेति मितेत्यर्थग्रहणात् खश् चकारस्यानुक्त-समुच्चयार्थत्वाद्वा ॥ ८६ ॥ ज० म०

राम इत्यादि । रामो हनूमन्तम् अवोचत् पर्वताघात-भग्नत्वात् कुत्सिता हनूरस्यास्तीति निन्दायां मतुः हनूशब्दात् तन्वादेर्वा इति पाक्षिक ऊप् उतोऽयुङ्रज्ज्वादेरित्यस्य प्रत्युदा-हरणे रज्ज्वादौ तु हनुरिति क्वचित् पुस्तके दृश्यते तत्तु लिपि-करप्रमादादिति केचित् नाम्नस्त्यर्थेऽचो घं इति केचित् हनू-मान् हनुमानपीति विश्वदर्शनात् द्वैरूप्यमेव । किमुक्तवानि-त्याह हे विद्वन् ! आवां पितुः कामादभिलाषादमुं गिरिं ऐव आगतौ इणो घीव अदादित्वात् शपो लुक् अभ्रंलिहमा-काशं लेढि प्राप्नोतीति तृभ्वृदृजीत्यादिना अभिधानादना-न्यपि खः खितीति मन् अभिधानात् गुणाभावः । आवां कीदृशौ मुनीनां पान्तौ रक्षन्तौ पालरक्षणे शतुः । कीदृशान् अल्पम्पचान् स्वल्पसन्तुष्टान् दरिद्रान् वा घटीखारीत्यादौ मितनखमानादित्यत्रार्थस्यैव ग्रहणं तेनाल्पशब्दात् पचः खश्

अमितम्पचमीशानं सर्वभोगीणमुत्तमम् ।
आवयोः पितरं विद्धि ख्यातं दशरथं भुवि ॥ ९७ ॥
छलेन दयितारण्याद्रक्षसारुन्तुदेन नः ।
असूर्यम्पश्यया मूर्त्या हृता तां मृगयावहे ॥ ९८ ॥

---

अलं यथा स्यात्तथा पचानिति केचित् मुनिरक्षणेन दुष्टहिंसाप्रवृत्तयोरावयोः कुतः सिंहादिभयं तादृशोश्च सरिदुत्तरणमपि नाशक्यमिति पूर्वप्रश्नेषु सर्वत्रोत्तरं सूचितम् ॥९६॥ भ०

कः पुनः पिता यदादेशादागतावित्यत आह । अमितम्पचमित्यादि । आवयोः पितरं दशरथनामानं भुवि विख्यातं विद्धि जानीहि हुझल्भ्यो हेर्धिः अमितम्पचं महामन्त्रिणं पूर्ववत् खश् मुम् च ततो नञ्समासः ईशानमीशनशीलं स्वामिनमित्यर्थः ताच्छील्येत्यादिना चानश् सर्वभोगीणं सर्वसत्वभोगाय हितम् आत्मन्विश्वजनेति खः भोगशब्दोऽत्र शरीरवाची अट्कुप्वादिना णत्वम् ॥ ९७ ॥ ज० म०

अमितमित्यादि । कः पिता यदादेशादत्रागतावित्याह । आवयोः पितरं दशरथं विद्धि जानीहि हुझसो हेर्धिः । कीदृशं अमितम्पचं प्रचुरान्नप्रदं घटीखारीत्यादिना खश् पश्चान्नञ्समासः ईशानं ऐश्वर्य्ययुक्तं ईशलङ् ऐश्वर्य्ये शानः सर्वभोगाय सर्वशरीराय हितं भुज्यतेऽनेनेति भोगः शरीरं ततो विकारसङ्घेत्यादिना हितार्थे ईनः षू र्वोऽदान्ते इत्यादावतद्धादित्यस्य योगविभागात् णत्वम् । उत्तमं श्रेष्ठं भुवि ख्यातं पृथिव्यां प्रसिद्धं सर्वज्ञातत्वात् ॥ ९७ ॥ भ०

यदि पितुरादेशादागतौ किमत्र गमनेनान्वेषयथ इत्याह । छलेनेत्यादि । नोऽस्माकं दयिता अरण्याद्राक्षसेन हृता । कीदृशेन अरुन्तुदेन मर्मस्पृशा विध्वरुषोस्तुद इति खश् मुम्

प्रत्यूचे मारुतीरामममस्ति बालीति बानरः।
शमयेदपि संग्रामे यो ललाटन्तपं रविम्॥ ९९॥

---

असूर्य्यम्पश्यया आदित्यगोप्यया मूर्त्त्या शरीरेणोपलक्षिता असूर्य्यललाटयोरिति खश् तां हृतां मृगयावहे मवेषयावः मृग अन्वेषणे स्वार्थिकण्यन्तः। युवयोः पौरुषान्वितत्वात् कथं हृतेत्याह छलेन छद्मना॥ ९८॥ ज० म०

छलेनेत्यादि। पितुराज्ञया दण्डकागमनेऽपि कथं अत्रागमनमित्याह। अस्माकं दयिता अरण्याद्रक्षसा हृता। कथं युवयोरग्रे हृतेत्याह छलेन छद्मना न तु बलात्। कीदृशेन रक्षसा अरुन्तुदेन मर्मस्पृशा घटीखारीत्यादिना खश् खित्यव्याजिति मन् स्यादेः सो लोपः अस्मद एकत्वे बहुत्वविवक्षा। तां हृतां मृगयावहे अन्वेषयावः मृगत् कङ् मार्गणे मार्गणमन्वेषणं मूर्त्त्या शरीरेणोपलक्षिता विशेषणे तृतीया। कीदृश्या असूर्य्यम्पश्यया सूर्य्यमपि न पश्यन्त्या अतिगोप्ययेत्यर्थः पूर्वेण खश् स्वादानेत्यादिना दृशेः पश्यादेशः सूर्य्येण सह समासो गमकत्वात्॥ ९८॥ भ०

त्वं पुनः कस्य वेत्यत आह। प्रत्यूचे इत्यादि। रामं मारुतिः प्रत्यूचे प्रत्युक्तवान् अस्ति वालीति नाम्ना कपीश्वरः यः संग्रामे युद्धे ललाटन्तपं सर्वेषामुपरि वर्त्तमानं रविं पूर्ववत् खश् शमयेत् पराजयेदिति सम्भावने लिङ्। बालिशब्दो नान्तः इदन्तश्च। तथाच "बाली बालिश्च कथ्यते" इति शब्दभेदः॥ ९९॥ ज० म०

प्रत्यूचे इत्यादि। मारुतिर्हनूमान् रामं प्रत्यूचे। किम्प्रत्यूचे इत्याह वालीति नाम्ना वानरोऽस्ति यः संग्रामे प्रवृत्ते रविं सूर्य्यमपि शमयेत् पराजयेत् प्रोत्साहसम्भावनेति खी।

उग्रम्पश्येन सुग्रीवस्तेन भ्रात्रा निराकृतः।
तस्य मित्रीयतो दूतः संप्राप्तोऽस्मि वशंवदः॥ १००॥
प्रियंवदोऽपि नैवाहं ब्रुवे मिथ्या परन्तप!।
सख्या तेन दशग्रीवं निहन्तासि द्विषन्तपम्॥ १०१॥

---

कीदृशं रविं ललाटन्तपं सर्वेषामुपरिवर्त्तिनं मध्याह्नकालीनमपि प्रचण्डमपीत्यर्थः यद्वा सूर्य्योऽपि चेत्तस्य ललाटं तपति तदा तमपि शमयेत् सुतरामेवान्यायकारिणमित्यर्थः घटीखारीत्यादिना खश्॥ ९९॥ भ०

उग्रम्पश्येनेत्यादि। तेन भ्रात्रा उग्रम्पश्यता पापं विजानता उग्रम्पश्येत्यादिना निपातितं यस्य सुग्रीवो निराकृतोऽभिभूतस्तस्य हि दूतः प्राप्तोऽस्मि वशंवदः वशमनुकूलं वदतीति वशंवदः प्रियवशे वदः खच्। कीदृशस्य मित्रीयतो मित्रमिच्छतः सुप आत्मनः क्यच्॥ १००॥ ज० म०

उग्रमित्यादि। तेन भ्रात्रा बालिना सुग्रीवो निराकृतः देशान्निःसारितः। कीदृशेन उग्रम्पश्येन पापं पश्यता उग्रदृष्टिना वा घटीखारीत्यादिना खश् तस्य सुग्रीवस्य दूतोऽहं सम्प्राप्तोऽस्मि आगतोऽस्मि। कीदृशस्य मित्रीयतः आत्मनो मित्रमिच्छतः तथा भवन्तमेव क्योऽस्वरायद्यश्चेति क्यः अवर्णस्य ईश्च ततः शतः वशमनुकूलं वदतीति वशंवदः प्रियवशादित्यादिना खः अस्मीति क्रियापदं अस्मदर्थेऽव्ययं वा॥ १००॥ भ०

किन्तेन सख्येनेति चेदाह प्रियंवद इत्यादि। प्रियंवदतया लोको मिथ्या वदति अहं प्रियंवदोऽपि पूर्ववत् खच् परन्तप! शत्रूणामुपतापद! द्विषद्विति खच् वाचंयमपुरन्दरौ चेत्यमामसो निपात्यते नैवाहं मिथ्या ब्रुवे वदामि तेन सुग्रीवेण सख्या मित्रेण दशग्रीवं निहन्तासि हनिष्यसि हन्तेर्लुटि

वाचंयमोऽहमनृते सत्यमेतद् ब्रवीमि ते।
एहि सर्वंसहं मित्रं सुग्रीवं कुरु वानरम्॥ १०२॥

रूपम्। कीदृशं द्विषन्तपं शत्रूणामुपतापयितारं पूर्ववत् खच्॥ १०१॥ ज० म०

प्रियमित्यादि। किन्तेन मित्रेणेत्याह। तेन सुग्रीवेण सख्या त्वं दशग्रीवं हन्तासि निहनिष्यसि हन्तेर्लुट्। कीदृशं द्विषन्तपं शत्रूणामुपतापकं तृभूव इत्यादिना द्विषच्छब्दात्तपोऽभिधानादसं ज्ञायामपि खः मनीषादित्वात्तलोपे खित्यव्याजिति मन् किंवा द्वेष्टीति द्विषः क्षगटज्ञापीजुङ इति कः तस्मात्तपः खः। प्रियंवदत्वान्मृषा ब्रवीषि चेदाह हे परन्तप! शत्रूणामुपतापक! प्रियंवदोऽपि सन् नैव मिथ्या ब्रुवे वदामि परन्तपेति रामसम्बोधनात् द्विषन्तपमिति रावणविशेषणात् द्वयोः साम्यमुक्तं तेन तज्जयाय रामस्य मित्रान्तरापेक्षा युक्तेति भावः। प्रियंवद इति प्रियवशादिति खः। परन्तपेत्यत्र द्विषन्तपवत् खः॥ १०१॥ भ०

वाचंयम इत्यादि। वाचंयमपुरन्दरौ चेत्यमागमो निपात्यते तस्मात् सत्यमेतत् पूर्वोक्तं ब्रवोमि ते तुभ्यं तादर्थ्ये चतुर्थी। यत एवं तस्मादेहि आगच्छ सुग्रीवं वानरं मित्रं कुरु। कीदृशं सर्वंसहं सर्वं सहते इति पूःसर्वयोरिति खच्॥ १०२॥ ज०म०

वाचमित्यादि। न मिथ्या ब्रुवे इति प्रागुक्तं द्रढयन्नाह अहं अनृते असत्ये वाचंयमो मौनी तस्माद्दशग्रीवं निहन्तासि इति यदुक्तं एतत्तुभ्यं सत्यमेव ब्रवीमि तादर्थ्ये चतुर्थी। तस्मात् एहि आगच्छ सुग्रीवं वानरं मित्रं कुरु। कीदृशं सर्वंसहं सर्वकार्य्यक्षमं तृभूव इत्यादिना अभिधानादसंज्ञायामपि खः। वाचंयम इति वाचःशब्दात् यमः पूर्ववत् खः खित्यव्या-

सर्वङ्कषयशःशाखं रामकल्पतरुं कपिः ।
आदायाभ्रङ्कषं प्रायान्मलयं फलशालिनम् ॥ १०३ ॥
मेघङ्करमिवायान्तमृतुं रामं क्लमान्वितः ।
दृष्ट्वा मेने न सुग्रीवो बालिभानुं भयङ्करम् ॥ १०४ ॥

---

जिति मन् ह्रस्वश्च परे तु वाक्शब्दोपपदेन साधयन्ति ॥ १०२ ॥ भ०

सर्वङ्कषेत्यादि । रामः कल्पतरुरिव यस्तमादाय गृहीत्वा कपिः प्रायात् गतः । कीदृशं रामं सर्वङ्कषयशःशाखं सर्वं कषन्ति व्याप्नुवन्ति यानि यशांसि सर्वकूलेत्यादिना खश् तान्येव शाखा यस्य फलशालिनमभिमतफलसम्पादनात् अभ्रङ्कषमुच्चैस्तरं मलयं पूर्ववत् खच् ॥ १०३ ॥ ज० म०

सर्वमित्यादि । राम एव कल्पतरुः तमादाय कपिर्हनूमान् मलयं प्रायात् प्रगतः । रामं कीदृशं सर्वं कषयन्ति व्याप्नुवन्ति सर्वं पापं नाशयन्ति वा यानि यशांसि तान्येव शाखा यस्य तं फलशालिनं अभिमतफलसम्पादनात् । मलयं कीदृशं अभ्रङ्कषं आकाशव्यापकं अत्युच्छ्रितत्वात् । फलशालिनमिति मलयस्य विशेषणात् श्रमापहारकत्वं सूचितमिति केचित् प्रियवशाद्वयत्तीत्यादिना खः ॥ १०३ ॥ भ०

मेघङ्करमित्यादि । राममायान्तं दृष्ट्वा सुग्रीवो बालिनं भानुमिव भयङ्करं भीतिजनकं न मेने न बुद्धवान् मेघर्त्तीत्यादिना खच् । क्लमान्वितो ग्लानो बालिभानुना पीडितत्वात् । कीदृशं रामं मेघङ्करं ऋतुमिव प्रावृट्कालमिव पूर्ववत् खच् ॥ १०४ ॥ ज० म०

मेघमित्यादि । राममागतं दृष्ट्वा सुग्रीवो भानुमिव बालिनं भयङ्करं भीतिजनकं न मेने न मन्यते स्म । कीदृशः

उपाग्न्यकुरुतां सख्यमन्योन्यस्य प्रियङ्करौ ।
क्षेमङ्कराणि कार्य्याणि पर्य्यालोचयतां ततः ॥ १०५ ॥
आश्वितम्भवमुत्क्रुष्टं वल्गितं शयितं स्थितम् ।
बह्वमन्यत काकुत्स्थः कपीनां स्वेच्छया कृतम् ॥ १०६ ॥

---

श्रमेनान्वितः ग्लानः । रामं कीदृशं मेघङ्करं मेघोत्पादकं ऋतुमिव वर्षाकालमिव वर्षाकालस्य सूर्य्याच्छादकत्वेन क्लान्तश्रमभयापहारित्वात् साम्यम् । प्रियवशाद्वयर्त्तिमेघादिति· खः ॥ १०४ ॥ भ०

उपाग्नीत्यादि । उपाग्नि अग्निसमीपे रामसुग्रीवौ सख्यमकुरुतां इतः प्रभृत्यावयोः सख्यमिति अन्योन्यस्य प्रियङ्करौ क्षेमप्रियमद्रेष्वण् चेति चकारात् खच् । ततः सख्यकरणानन्तरं क्षेमङ्कराणि हितजनकानि यथा कार्य्याणि प्रत्यालोचयतां निरूपितवन्तावित्यर्थः । पठपुटेत्यत्र चुरादिकाण्डे धातौ लोचृ पठ्यते तस्य लङि रूपम् ॥ १०५ ॥ ज० म०

उपाग्नीत्यादि । रामसुग्रीवौ उपाग्नि अग्निसमीपे सख्यं मैत्रीं अकुरुतां चक्रतुः अग्निसाक्षिकं सख्यमिति भावः । अन्योन्यस्य प्रियङ्करौ प्रियं कुरुत इति क्षेमप्रियभद्रात् कुर्वेति खः विकारसङ्घेति सखिशब्दात् भावे यः । ततः सख्यानन्तरं परस्परस्य क्षेमङ्कराणि कुशलजनकानि कार्य्याणि पर्य्यालोचयतां निरूपितवन्तौ लोचृक्भासीत्यस्य ण्यां रूपं पूर्ववत् खः ॥ १०५ ॥ भ०

आश्वेत्यादि । आश्वितम्भवमशनम् आश्विते भुवः करणभावयोरिति खच् उत्क्रुष्टं किलकिलायितं वल्गितं धावनं तथा शयितं स्थितञ्च कपीनां स्वेच्छया कृतम् एतत् काकुत्स्थो बह्वमन्यत श्लाघितवान् पुण्यभाज इमे यदेषां स्वेच्छाविहा·

ततो बलिन्दमप्रख्यं कपिविश्वम्भराधिपम् ।
सुग्रीवः प्राब्रवीद्रामं बालिनो युधि विक्रमम् ॥ १०७ ॥

---

रिणां चेष्टितम् अस्माकन्तु शोकसन्तप्तानां न किञ्चिदस्तीति भावः । सर्वत्र भावे निष्ठा ॥ १०६ ॥ ज० म०

आश्रितमित्यादि । आङ्पूर्वादश्नातेः क्तः आश्रितस्य वृक्षे-र्भोजनस्य भवनम् आश्रितभ्भावं भावघेत्वाश्रिताद्भव इति स्वः उत्क्रुष्टं शब्दकरणं वल्गितं गमनं शयितं शयनं पूशीङ्घेत्या-दिना गुणः स्थितम् अवस्थानं दोषोमास्थामिति ङिः सर्वत्र भावे क्तः कपीनामेतत् सर्वं स्वेच्छया कृतं काकुत्स्थो बहु अमन्यत स्तुतवान् पुण्या एते स्वेच्छयैवं व्यवहरन्ति अस्मा-कन्तु शोकसन्तप्तानां न किञ्चिदस्तीति भावः स्वभावसिद्ध-त्वादाहार्य्यशोभारहितत्वात् प्रशंसा वा ॥ १०६ ॥ भ०

तत इत्यादि । ततः कार्य्यालोचनानन्तरं सुग्रीवोऽब्रवीत् लङि ब्रुव ईट् । किमुक्तवान् बालिनो युधि विक्रमं शौर्य्यमिति प्रधानं कर्म राममित्यकथितम् । कीदृशं रामं बलिन्दमप्रख्यं विष्णुतुल्यं बलिं दमयतीति संज्ञायां तृभृवृजीत्यादिना खच् अमन्तस्य मित्वङ्खत्वे तथा विश्वं बिभर्त्तीति विश्वम्भरा तस्या अधिपम् अधिपातीत्यधिपः आतश्चोपसर्ग इति कः ॥ १०७ ॥ ज० म०

तत इत्यादि । ततः कार्य्यालोचनानन्तरं सुग्रीवः कपि-युंधि संग्रामे बालिनो विक्रमं रामं प्राब्रवीत् । रामं कीदृशं बलिन्दमप्रख्यं बलिं दमयतीति बलिन्दमस्त्रिविक्रमस्तेन तुल्यं तृभृवृ इत्यादौ त्ररक्तदमो ग्रहणम् अरिन्दम इत्युदाहरणे कर्मोपपदेन सूचितं केवलस्य दमेरन्तर्भूतण्यर्थत्वात् सकर्म-कत्वमिति केचित् सकर्मकोऽपि दमिरिष्यत इति गोयीचन्द्रे-

वसुन्धरायां कृत्स्नायां नास्ति बालिसमो बली ।
हृदयङ्गममेतत्त्वां ब्रवीमि न पराभवम् ॥ १०८ ॥
इति खजधिकारः ।
दूरगैरन्तगैर्बाणैर्भवानत्यन्तगः श्रियः ।
अपि संक्रन्दनस्य स्यात् क्रुद्धः किमुत बालिनः ॥ १०९ ॥

---

णोक्ता दमित्वा परिसङ्ख्यातानिति निदर्शितम् । विश्वं बिभर्त्तीति विश्वम्भरा पृथ्वी पूर्ववत् खः तस्या अधिपं स्वामिनम् अधिपातीत्यधिपः ह्वनजनादिति डः ॥ १०७ ॥ भ०

वस्वित्यादि । वसुन्धरायां पूर्ववत् खच् बालिना समोऽन्यो बली बलयुक्तो नास्तीति हृदयङ्गमं मम स्वानुभवं हि ब्रवीमि मम स्वानुभवं वस्तु हृदयङ्गममित्युच्यते तेन संज्ञायामित्यधिकृत्य गमश्चेति खच् न पुनस्त्वां पराभवमभिभवं ब्रवीमि ॥१०८॥ ज० स०

वस्वित्यादि । कृत्स्नायां समस्तायां वसुन्धरायां पृथिव्यां वालितुल्यो बलवान् नास्ति वसु धरतीति तृभृत्व इत्यादिना खः एतत्तु हृदयङ्गमं आत्मानुभूतमेव त्वां ब्रवीमि हृदयं गच्छतीति पूर्ववत् खः अनुभूतस्येयं संज्ञा न पुनस्त्वां पराभवं ब्रवीमि तस्मात् भवतः पराभवं न त्वां वदामि तेन नास्ति वालिसमो बलीति प्रागनुभूतं कथितं न तु त्वत्तोऽधिकोऽयमिति सम्प्रति ज्ञापितम् । इति खश्धिकारः ॥ १०८ ॥ भ०

एवम्पराक्रमोऽसौ तत्र किं त्वं करिष्यसीत्याह दूरगैरित्यादि । यतो भवान् क्रुद्धः सन् संक्रन्दनस्यापि शक्रस्यापि नन्द्यादिभ्यो ल्युः बाणैः करणभूतैः दूरगैः दूरं गच्छतीति अन्तगैः कार्य्यसमापकैः अन्तात्यन्तेत्यादिना डः श्रियो लक्ष्म्याः अत्यन्तगः विनाशयिता स्यात् अत्यन्तं पर्य्यवसानं गच्छतीति

वरेण तु मुनेर्बाली सञ्जातो दस्युहो रणे ।
अवार्य्यप्रसरः प्रातरुद्यन्निव तमोऽपहः ॥ ११० ॥

---

किं पुनर्बालिनो लक्ष्म्या अत्यन्तगो भवान् विनाशयितेति भावः ॥१०९॥ज०म०

दूरगैरित्यादि। रामं प्रोत्साहयन्नाह भवान् क्रुद्धः सन् संक्रन्दनस्य इन्द्रस्यापि श्रियो लक्ष्म्या बाणैरन्तगो भवेत् किं पुनर्बालिनः श्रियः सुरतामितलक्ष्म्या नाशयिता स्यात्। बाणैः कीदृशैर्दूरगैः दूरपातिभिः अन्तगैः कार्य्यसमापकैः दूरमन्तञ्च गच्छतीवि हनजनाह्नमादेर्डः दितिगर्भं संक्रन्दितवान् इति नन्द्यादित्वादनः॥ १०९ ॥

वरेणेत्यादि। मुनेस्तु वरेण दस्युहः दस्यून् शत्रून् बध्यादिति आशिषि हन इति डः अतो रणे अवार्य्यप्रसरोऽनभिभवनीयगतिः सञ्जातः क इव तमोऽपह इव तमोऽपहः आदित्यः तमोऽपहन्तीति अपेक्लेशतमसोरिति डः प्रातः प्रभाते उद्यन् उद्गच्छन् उत्पूर्वादिणः शतरि इणो यण् अवार्य्यप्रसरस्तद्वदसावपि सर्वं वाक्यं सावधारणं भवतीति प्रातरप्युद्यन्नवार्य्यप्रसर एवेति तेन सर्वकाले अस्यावार्य्यप्रसरत्वं सिद्धं न तु प्रातरेवोद्यन्नवार्य्यप्रसर इति भावः॥ ११० ॥ ज० म०

वरेणेत्यादि। रामस्याध्यवसायं जिज्ञासुः पुनरपि बालिविक्रममाह मुनेर्वरेण तु दस्युहः स बाली रणेऽवार्य्यप्रसरः सञ्जातः काले उद्यन् तमोऽपहः सूर्य्य इव दस्यून् शत्रून् हन्तीति हनजनादिति डः हन्तेराशिषि ड इति परे तन्मते बाली दस्यून् बध्यादिति मुनेर्वरेण अवार्य्यप्रसरो जातः स्वमते आशीरर्थानुक्तौ न क्षतिः वरेण दस्युहन्तृत्वे आशीर्गम्यत एव अवार्य्योऽखण्डनीयः प्रसरो गतिर्यस्य स तथा स्वगतौ अनि

अतिप्रियत्वान्न हि मे कातरं प्रतिपद्यते ।
चेतो बालिबधं राम ! क्लेशापहमुपस्थितम् ॥ १११ ॥

इति डाधिकारः ।

शीर्षघातिनमायातमरीणां त्वां विलोकयन् ।
पतिघ्नीलक्षणोपेतां मन्येऽहं बालिनः श्रियम् ॥ ११२ ॥

---

रूपं उत्पूर्वस्येणः शतरि उद्यन् तमोऽपहन्तीति पूर्ववत् डः तमःक्लेशार्थेभ्योऽपपूर्वहन्तेर्ड इति परः ॥ ११० ॥

अतीत्यादि । हे राम ! मदीयं चेतो बालिबधं कर्मीभूतमुपस्थितं प्राप्तं न हि प्रतिपद्यते नैव प्रत्येति यस्मात् कातरं व्याकुलं बालिनोऽतिबलयुक्तत्वात् कीदृशं बधं क्लेशापहं दुःखस्योन्मूलकं पूर्ववड्डः अतिप्रियत्वाद्बालिबधस्य यस्य हि यत् प्रियं तत् सिद्धमपि असौ न प्रत्येति ॥ १११ ॥ ज० म०

अतीत्यादि । हे राम ! बालिबधस्यातिप्रियत्वात् मे मम चेतो बालिबधमुपस्थितमुपपन्नमपि न प्रतिपद्यते न प्रत्येति यतः कातरं बालिभयाद्व्याकुलं उपस्थितेऽपि प्रिये कातरस्य प्रतीतिर्नास्तीति भावः बालिबधं कीदृशं क्लेशापहं दुःखस्योन्मूलकं अतएवास्यातिप्रियत्वं क्लेशमपहन्तीति पूर्ववत् डः ॥ १११ ॥ भ०

उपस्थितोऽस्य बध इति कथं ज्ञायते इत्याह शीर्षेत्यादि । अरीणां शीर्षघातिनं कुमारशीर्षयोर्णिनिः निपातनात् शिरसः शीर्षभावः आयातं विलोकयन् बालिनः श्रियं पतिघ्नीलक्षणोपेतामहं मन्ये पतिं हन्ति यल्लक्षणं तेनोपेतामिवेतीवार्थोऽत्र द्रष्टव्यः । अमनुष्यकर्तृके चेति टक् गमहनेत्युपधालोपः होहन्तेरिति कुत्वम् ॥ ११२ ॥ ज० म०

शीर्षेत्यादि । बालिबधस्योपस्थितत्वं दर्शयन्नाह आगतं

शत्रुघ्नान् युधि हस्तिघ्नो गिरीन् क्षिप्यन्नकृत्रिमान् ।
शिल्पिभिः पाणिघैः क्रुद्धस्त्वया जय्योऽभ्युपायवान् ॥ ११२॥

---

त्वां विलोकयन्नहं बालिनः स्त्रियं पतिघ्नीलक्षणोपेतां मन्ये स्त्रियो बालिपत्नीत्वेन निरूपणात् पतिहन्तृचिह्नयुक्तत्वात् बालिबधो गम्यते पतिं हन्तीति हनचरगष्टक् हनगमित्युङ्लोपः हनोक्तोघ्नः अमनुष्यकर्तृकाद्वन्ते ष्टगिति परः। त्वां किम्भूतं अरीणां शीर्षघातिनं शिरश्छेदिनं अहादित्वाषिन् कुमारशीर्षाभ्यां हन्तेर्णिन्निति परः। उत्प्रेक्षाव्यञ्जकोऽत्र मन्येशब्दः अन्यथास्थितस्यान्यथाकथनात् ॥ ॥ ११२ ॥ भ०

शत्रुघ्नानित्यादि। किञ्च युधि संग्रामे बाली त्वया जय्यः शक्यो जेतुं यदि युष्मदस्त्राणां शक्तिर्दृष्टा ताञ्च द्रष्टुमिच्छामीति वक्ष्यमाणाभिप्रायः क्षय्यजय्यौ शक्यार्थे इत्ययादेशनिपातनम्। कीदृशः अभ्युपायवान् युद्धोपाययुक्तः किं कुर्वन् क्रुद्धः क्षिप्यन् गिरीन् दिवादित्वाच्छ्यन् अकृत्रिमान् देवनिर्मितान् शत्रुघ्नान् शत्रून् हन्तीति अमनुष्येति टक् हस्तिघ्न इव हस्तिघ्नः हन्तुं शक्तः शक्तौ हस्तिकपाटयोरिति सूत्रस्य मनुष्यकर्तृकार्थारम्भकत्वात् बाली चामनुष्यः शिल्पिभिर्युद्धकुशलैः वानरैः सह क्षिप्यन् सहार्थस्य गम्यमानत्वात् सहयोगे तृतीया पाणिघैः पाणिवादकैः ते हि हस्तियुद्धेऽन्यस्य वाद्यस्यासम्भवात् हस्तिमुखमेव वादयित्वा गिरीन् प्रहरणान् क्षिप्यन्ति पाणिघताडघौ शिल्पिनीति कर्त्तरि निपातनम् ॥ ११२ ॥ ज० स०

शत्रुघ्नानित्यादि। प्रत्ययजनककर्मद्वारा रामविक्रमं ज्ञातुमिच्छन् महतामग्रतः साक्षात् स्वाभिप्रायकथनायुक्तत्वात् छलेन रामं स्तुवन्नेवाह ईदृशोऽपि बाली त्वया जय्यः जेतुं शक्यः पराक्षावद्येत्यादिना निपातः। कीदृशः अभ्युपायवान्

आढ्यङ्करणविक्रान्तो महिषस्य सुरद्विषः ।
प्रियङ्करणमिन्द्रस्य दुष्करं कृतवान् वधम् ॥ ११४ ॥

युद्धोपाययुक्तः क्रुध्यन् सन् गिरीन् क्षिप्यन् क्षिप्यौणु मुदि कीदृशान् अकृत्रिमान् देवनिर्मितान् एतेन स्वभावसिद्धमुच्छ्रितत्वं सूचितं शत्रुघ्नान् क्षिप्यमाणा गिरयः शत्रुं घ्नन्ति शत्रुं हन्तुं गिरीन् क्षिपतीति भावः पतिघ्नवत् टक् । पुनः कीदृशः हस्तिघ्नः हस्तिनं हन्तीति पूर्ववत् टक् हस्तिकपाटाभ्यां हन्तेः शक्तौ टगिति परः तेन हस्तिनं हन्तुं शक्त इत्यर्थः स्वमते अर्थादेव शक्तिर्गम्यते शिल्पिभिर्युद्धकुशलैर्वानरैरुपलक्षितः पाणिघैः पाणिवादकैः युद्धे तेषां वाद्यान्तराभावात् हर्षेण हस्तयुगमेव वादयन्ति विशेषणे तृतीया शिल्पिभिः सह गिरीन् क्षिप्यन् इति वा सम्बन्धः एतेन तत्सदृशास्तत्सहाया अपि सन्तीति सूचितं पाणिभ्यां पाणी हन्तीति पाणिघो निपातनात् ॥ ११३ ॥ भ०

आढ्यमित्यादि । अनाढ्यमाढ्यं करोत्यनेनेति आढ्यसुभगेत्यादिना करणे ख्युन् आढ्यङ्करणं विक्रान्तं यस्य बालिनः अनाढ्यः सन् विक्रान्तेनाढ्योभूत इत्यर्थः महिषस्य सुरद्विषो दुन्दुभेर्वधं मरणं यः कृतवान् दुष्करं कृच्छ्रसाध्यं प्रियङ्करणमिन्द्रस्य तुष्टिकरं अप्रियं प्रियङ्करोत्यनेनेति पूर्ववत् ख्युन् ॥ ११४ ॥ ज० म०

आढ्यमित्यादि । किञ्च बाली युधि महिषस्य देवशत्रोर्वधं कृतवान् । कीदृशः अनाढ्य आढ्यः क्रियते येन तादृशं विक्रान्तं विक्रमो यस्य स तथा अनाढ्यः सन्नपि विक्रमेणाढ्यो भूत इत्यर्थः नग्नपलितेत्यादिना खनट् । वधं कीदृशं इन्द्रस्य प्रियङ्करणं प्रीङ्प्रीतौ कृगृज्ञाप्रीति कप्रत्यये प्रियः प्रीतिमान्

प्रियम्भावुकतां यातस्तं क्षिपन् योजनं मृतम् ।
स्वर्गे प्रियम्भविष्णुश्च कृत्स्नं शक्तोऽप्यबाधयन् ॥११५॥

---

मद्विषभयेन प्रागप्रियः प्रियः क्रियते अनेनेति पूर्ववत् खनट् प्रीतिजनकमित्यर्थः यद्वा इन्द्रो लोकानामप्रिय आसीत् शत्रु-बधाक्षमत्वात् पुत्रकृतशत्रुबधेन तु प्रियः क्रियते इत्यर्थः यतो दुष्करं कृच्छ्रसाध्यम् एतेन इन्द्रादप्यधिकोऽयं बलीति सूचि-तम् ॥ ११४ ॥ भ०

प्रियमित्यादि। तमेवं सुरद्विषं मृतं पादाङ्गुष्ठेन योजन-मध्वानं क्षिपन् प्रेरयन् क्षिपेस्तौदादिकस्योभयपदिनो रूपं प्रियम्भावुकतां यातस्तथा स्वर्गे प्रियम्भविष्णुश्चासीत् कर्त्तरि भुव इत्यनेनाढ्यादिषूपपदेषु खिष्णुच्खुकञौ शक्तोऽपि समर्थो-ऽपि कृत्स्नं लोकमित्यर्थात् अबाधयन् अपीडयन् बधसंयम इति चौरादिकः तस्य शतरि रूपं स ईदृशस्त्वया शक्यो जेतुं यदि त्वदस्त्राणां सामर्थ्यं दृष्टमित्यभिप्रायेणाब्रवीत् सुग्रीवः ॥ ११५ ॥ ज० म०

प्रियमित्यादि। तं मृतं मद्विषं पदाङ्गुष्ठेन योजनम् अध्वानं क्षिपन् प्रेरयन् प्रियम्भावुकतां प्राप्तः प्राक् यस्याप्रिय आसीत् दुष्टबधात् तस्यापि प्रियभावं प्राप्तः बाधितुं शक्तः समर्थोऽपि कृत्स्नं लोकम् अबाधयन् अपीड़यन् स्वर्गस्य प्रिय आसीत् तस्यापि प्रियोभूतः भुवो घे खिष्णुखुकञाविति चूर्थे खिष्णुखुकञौ बधक् बन्धे किस्त्वाच्चुरादिः। योजनशब्देनात्र योजनान्तरितदेशो लक्ष्यते सदाध्वादिव्याप्ताविति योजनात् द्वितीया एवं सुग्रीवः प्राब्रवीद्राममिति प्रागुक्तेन सम्बन्धः ॥ ११५ ॥ भ०

जिज्ञासोः शक्तिमस्त्राणां रामो न्यूनधियः कपेः ।
अभिनत् प्रतिपत्त्यर्थं सप्त व्योमस्पृशस्तरून् ॥ ११६॥
ततो बालिपशौ बध्ये रामर्त्विग्जितसाध्वसः ।
अभ्यभून्निलयं भ्रातुः सुग्रीवो निनदन् दधृक् ॥ ११७॥

---

रामोऽपि तदभिप्रायं विदन् यत् कृतवान् तदाह । जिज्ञासोरित्यादि । अस्त्राणां शराणां शक्तिं जिज्ञासोः ज्ञातुमिच्छोः कपेः सुग्रीवस्य न्यूनधियः स्वल्पबुद्धेः यतः प्रमाणान्तरेणापरिज्ञानात् प्रत्यक्षेण ज्ञातुमिच्छतीति प्रतिपत्त्यर्थं संप्रत्ययार्थं रामः सप्त तरून् तालान् पङ्क्त्या स्थितान् एकेन शरेणाभिनत् व्योमस्पृशः स्पृशोऽनुदके क्विन् ॥ ११६ ॥ ज॰ म॰

जिज्ञासोरित्यादि । यदि तवास्त्राणां भेदकत्वं दृष्टं स्यात्तदा त्वया तादृशो बाली जेतुं शक्यते इति सम्भाव्यते इति सुग्रीवाभिप्रायं रामोऽपि ज्ञातवान् यतो न्यूनबुद्धेरत एवास्त्राणां शक्तिं ज्ञातुमिच्छोः कपेः सुग्रीवस्य प्रतिपत्त्यर्थं सम्प्रत्ययार्थं रामः सप्त तालान् अभिनत् भिदेर्लङ् रुधादित्वात् श्नन् व्योमस्पृशः अत्युच्छ्रितानित्यर्थः व्योम स्पृशन्तीति त्वासुपीति क्विप् उदकवर्जसुपपदात् स्पृशः क्विविति परः ॥११६॥भ॰

तत इत्यादि । ततस्तरुभेदादनन्तरं सुग्रीवो भ्रातुर्निलयमभ्यभूत् अभिभूतवान् । कीदृशः दधृक् धृष्टः ऋत्विगित्यादिना निपातितं धृषेः क्विन् द्विर्वचनं क्विन्प्रत्ययस्य कुरिति कुत्वं खकारः चर्त्वं ककारः यस्माद्वालिनि पशाविव बध्ये बधार्हे रामेण ऋत्विजा याजकेन जितसाध्वसः अपनीतसाध्वसः तस्माद्दधृक् ऋतौ यजति ऋतुं वा यजति ऋतुप्रयुक्तो वा यजतीति ऋतुपूर्वाद्यजेः क्विन् यजादित्वात् सम्प्रसारणम्

गुहाया निरगाद्वाली सिंहो मृगमिव द्युवन् ।
भ्रातरं युङ्भियः संख्ये घोषेणापूरयन् दिशः ॥ ११८ ॥

---

इदम्त्विक्शब्दनिर्वचनं रूढितस्तु याजयितृषु ब्राह्मणेषु क्विन्प्रत्ययस्य कुः निनदन् किलकिलाशब्दं कुर्वन् ॥ ११७ ॥ ज० म०

तत इत्यादि। प्रत्ययानन्तरं सुग्रीवो निनदन् शब्दं कुर्वन् भ्रातुर्बालिनो निलयं निवासम् अभ्यभूत् अभिभूतवान् भूस्थापिबेति सेर्लुक् बालिनि पशाविव बध्ये सति रामेणैव ऋत्विजा याजकेन जितमपनीतं साध्वसं भयं यस्य येन वा स तथा अतएव दधृक् धृष्टः ऋतौ यजतीति त्रासुसिति क्विप् अहस्वपाद्योरिति जिः चूङिति कङ् धृषप्रागल्भ्ये क्विपि दधृक् दद्दृञ्जुङ्वागित्यादिना निपातः ऋत्विजा पशुरपि हन्यते इति भावः ॥ ११७ ॥ भ०

गुहाया इत्यादि। तस्य शब्दमाकर्ण्य गुहाया निरगाद्वाली निर्गतः इणो गा लुङि गातिस्थेति सिचो लुक् भ्रातरं द्युवन् अभिगच्छन् द्यु अभिगमने अस्यादादिकस्य वर्त्तमानसामीप्ये लटः शतरि उवङादेशे रूपं संख्ये युद्धे भियो युङ् भीतेर्योक्ता कर्मणि छत् भीतिं युञ्जन्नित्यर्थः युजेः पूर्ववत् क्विन् युजेरसमास इति नुम् संयोगान्तलोपः क्विन्प्रत्ययस्य कुः ङकारः कः कमिव सिंहो मृगमिव द्युवन् घोषेण दिशः आपूरयन् दिशन्ति ता इति दिशः पूर्ववत् क्विन् ॥ ११८ ॥ ज० म०

गुहेत्यादि। सुग्रीवस्य शब्दं श्रुत्वा बाली गुहायाः सकाशात् निरगात् निर्गतः इणो गा ल्यां भूस्थापिबदेण इति सेर्लुक् सिंहो यथा मृगं द्यौति तद्वत् भ्रातरं द्युवन् आभिमुख्येन गच्छन् द्यु लभिंसर्पसे भविष्यत्सामीप्ये क्वी अभिधानात् संख्ये युद्धे भियो युङ् भयस्य प्रयोक्ता भयप्रद इत्यर्थः युजेः क्विप्

व्यायच्छमानयोर्मूढो भेदे सदृशयोस्तयोः ।
बाणमुद्यतमायंसोदिक्ष्वाकुकुलनन्दनः ॥ ११९ ॥
ऋष्यमूकमगात् क्लान्तः कपिर्मृगसदृग्द्रुतम् ।

गुजिरोऽसि नुन्घाविति नुण् ङित्यादौ युजेः पृथक् ग्रहणात् प्राक्‌ङ् न्नोर्नुः ङपिजम् नोरिति ङः स्यान्तस्य लुप् घोषेण शब्देन दिशः आपूरयन् दिशतीति दिक् त्वासुसिति क्विप् ॥ ११८ ॥ भ०

व्यायच्छेत्यादि । तयोर्बालिसुग्रीवयोर्व्यायच्छमानयोः कलहायमानयोः सदृशयोः समानयोः भेदे पृथक्त्वे मूढो भ्रान्तः सन् इक्ष्वाकुकुलनन्दनो रामो बाणमुद्यतं सज्जीकृतमायंसीत् उपसंहृतवान् समदाङ्भ्यो यमो ग्रन्थ इति तङ् न भवति अकर्त्रभिप्रायत्वात् तत्र कर्त्रभिप्राय इति वर्त्तते आङो यमहन इत्यनेनापि न स्यात् सकर्मकत्वात् तत्राकर्मकादिति वर्त्तते समानपूर्वस्य दृशेः समानान्ययोश्चेत्युपसंख्यानात् त्यदादिष्वित्यादिना कञ् दृग्दृशवतुष्विति समानस्य सभावः ॥ ११९ ॥ ज० भ०

व्यायेत्यादि । इक्ष्वाकुकुलनन्दनो रामस्तयोर्बालिसुग्रीवयोर्भेदे विवेचने मूढः भ्रान्तः सन् बालिबधायोद्यतं कृतसन्धानमपि बाणं सुग्रीवबधशङ्कया आयंसीत् संहृतवान् यमरमणमात इति इम्सनौ। कीदृशयोस्तयोः व्यायच्छमानयोः कलहायमानयोः युध्यमानयोर्वा आत्माङ्गढादढाच्चाद्दनयम इति न मं सदृशयोराकृत्या अन्योन्यं तुल्ययोः मूढत्वे हेतुरयं समानो दृशत इति त्यादादिना टक् समानेदं किमद इति समानस्य सादेशः ॥ ११९ ॥ भ०

ऋष्यमूकमित्यादि । कपिः सुग्रीवः किष्किन्धाद्रिसदा

किष्किन्धाद्रिसदात्यर्थं निष्पिष्टः कोष्णमुच्छ्वसन् ॥ १२० ॥
कृत्वा बालिद्रुहं रामो मालया सविशेषणम्।
अङ्गदस्वं पुनर्हन्तुं कपिनाह्वाययद्रणे ॥ १२१ ॥

---

बालिना किं किं दधातीति किष्किन्धा गुहा आतोऽनुपसर्गे कः पारस्करादिदर्शनात् पूर्वस्य सुडागमो मलोपः षत्वञ्च निपात्यते तदुपलक्षितोऽद्रिः किष्किन्धाद्रिः तत्र सीदतीति सत्सूद्विषेत्यादिना क्विप् तेनात्यर्थं निष्पिष्टः पीडितः निष्पिष्टत्वात् क्लान्तः सन् ऋष्यमूकं मृगसट्टक् द्रुतमगात् समानोपपदात् दृशेः पूर्ववत् क्विन् कोष्णमीषदुष्णमुच्छ्वसन् कवञ्चोष्ण इति चकारात् कोः कादेशः ॥ १२० ॥ ज० म०

ऋष्येत्यादि। कपिः सुग्रीवः किष्किन्धाद्रिसदा बालिना अत्यर्थं निष्पिष्टः पीडितः अतएव क्लान्तः सन् कोष्णं ईषदुष्णं उच्छ्वसन् द्रुतं शीघ्रं ऋष्यमूकं अगात् गतवान् मृगसट्टक् पलायने द्रुतगमनात् मृगतुल्यः क्विपि सट्टक् सट्टशवत् किखिभिर्वानरोभिरिष्यते इति इन्धेर्जन्तात् घञलनट इति अल् निपातनात् किखेः किष्कादेशः किं किं दधातीति किष्किन्धेत्यन्ये किष्किन्धा मूर्द्धन्यषकारवती यकारोपान्तापि किष्किन्ध्येति श्रीपतिः किष्किन्धा गुहा तदुपलक्षितोऽद्रिस्तत्र सीदतीति चासुसिति क्विप् ॥ १२० ॥ भ०

कृत्वेत्यादि। बालिद्रुहं सुग्रीवं बालिनं द्रुह्यतीति सत्स्वित्यादिना क्विप् मालया सविशेषणं सचिह्नं कृत्वा भेदपरिज्ञानार्थं रामः अङ्गदस्य बालिनं अङ्गदं सूत इति पूर्ववत् क्विन् ओःसुपीति यणादेशः तं रणे हन्तुं कपिना सुग्रीवेणाह्वाययत् अभिभवं कारितवान् ह्वयतेर्हेतुमण्णिचि शाच्छेत्यादिना युक् ॥ १२१ ॥ ज० म०

तयोर्वानरसेनान्योः संप्रहारे तनुच्छिदम्।
वालिनो दूरभाग्रामो बाणं प्राणादमत्यजत् ॥ १२२ ॥
बालिनं पतितं दृष्ट्वा वानरा रिपुघातिनम्।
बान्धवाक्रोशिनो भेजुरनाथाः ककुभो दश ॥ १२३ ॥

कृत्वेत्यादि। वालिद्रुहं सुग्रीवं बालिभेदज्ञानाय मालया सविशेषणं सचिह्नं कृत्वा रामोऽङ्गदस्वं वालिनं रणे हन्तुं कपिना सुग्रीवेण पुनराह्वाययत् आह्वानमकारयत् धोऽञौजे-रित्यादौ अखादनीक्रन्दायशब्दायह्वादेति वर्जनात् जरन्तस्य कर्त्तुः कपेर्न कर्मत्वं शाच्छासाह्वेत्यादिना यन् अङ्गदं सूतं जनयतीति त्वासुसित्यादिना क्विप् कव्यद्यनेकाच इति वत्वं बालिने द्रुह्यतीति पूर्ववत् क्विप्॥ १२१ ॥ भ०

तयोरित्यादि। वानरसेनान्योः वानरस्वामिनोः एरने-काच इति यण् संप्रहारे युद्धे प्रवृत्ते रामो वाणमत्यजत् बालि-नस्तनुच्छिदं तनुं शरीरं छिनत्तीति पूर्ववत् क्विप् छे चेति तुक् प्राणादं प्राणापहारिणं प्राणानत्तीति प्राणादं अदोनन्न इति विट् दूरभाक् दूरमवस्थितो रामो दूरं भजते इति भजो ण्विः॥ १२२ ॥ ज० म०

तयोरित्यादि। तयोर्वानरसेनानामीश्वरयोः संप्रहारे युद्धे प्रवृत्ते सति दूरभाक् दूरदेशस्थितो रामो बालिनस्तनुच्छिदं अतएव प्राणादं प्राणभक्षकं बाणं अत्यजत् चिक्षवान् सेनां नयति तनुं शरीरं छिनत्ति प्राणानत्तीति च त्वासुसिति क्विप् अत्तेरनन्तत्वात् क्विविति परः। दूरं भजते इति ढाञ्जसहव-होविण्॥ १२२ ॥ भ०

बालिनमित्यादि। रिपुघातिनं रिपून् हन्तुं शीलम-स्येति सुप्यजातौ णिनिः तं बालिनं पतितं दृष्ट्वा वानरा दश

धिग्दाशरथिमित्यूचुर्मुनयो वनवर्त्तिनः ।
उपेयुर्मधुपायिन्यः क्रोशन्त्यस्तं कपिस्त्रियः ॥ १२४ ॥

---

ककुभो दश दिशो भेजुः, अनाथाः सन्तः स्वामिनो हतत्वात् बान्धवक्रोशिनो बान्धवा इव क्रोशन्तीति कर्त्तर्य्युपमान इति णिनिः ॥ १२३ ॥ ज० म०

बालिनमित्यादि । बालिनं पतितं दृष्ट्वा वानरा दश ककुभो दिशो भेजुः पलायिता इत्यर्थः । रिपुघातिनं रिपुं हन्तीति ग्रहादित्वाण्णिन् बान्धवाक्रोशिनः बान्धववत् आक्रोशन्तः क्रन्दन्तः कर्त्तुरुपमाने णिन्निति परः स्वमते ग्रहादित्वाण्णिन् इवार्थस्य गम्यमानत्वम् । अनाथाः बालिनाशेन स्वामिरहिताः ॥ १२३ ॥ भ०

धिग्दाशरथिमित्यादि । येषां सत्यन्यस्थाने वृत्तौ च वन एव वर्त्तितुं शास्त्रतो नियमः ते वनवर्त्तिनो मुनयः व्रत इति णिनिः धिगिमं दाशरथिमित्यूचुः उक्तवन्तः येनानपराधेऽपि बालिनीदृशं कृतमिति कपिस्त्रियश्च बालिनमुपेयुः मधुपायिन्यः आभीक्ष्ण्येन मधु पिबन्त्यः बहुलमाभीक्ष्ण्ये इति णिनिः क्रोशन्त्यो हा नाथेति रुदन्त्यः ॥ १२४ ॥ ज० म०

धिगित्यादि । दाशरथिं रामं धिगिति वनवर्त्तिनो मुनय ऊचुः महतामन्यासक्तघातित्वानौचित्यात् धिक्समयेत्यादिना दाशरथेर्द्वितीया वने वर्त्तन्त इति ग्रहादित्वात् णिन् कपिस्त्रियः क्रोशन्त्यो हा नाथेति क्रन्दन्त्यस्तं बालिनं उपेयुरुपगताः उपपूर्वस्य णष्ठ्या उसि रूपम् । मधुपायिन्यः मधूनि पीतवत्यः ग्रहादित्वात् णिन् यन्त्रणित्कृदिति यन् परमते तु आभीक्ष्ण्ये तु णिन् पुनः पुनर्मधु पिबन्ति स्मेत्यर्थः आभीक्ष्ण्यार्थस्य णिनो कृत्वात् न द्वित्वं स्वमतेऽप्यभिधानादेव ॥ १२४ ॥ भ०

राममुच्चैरुपालब्ध शूरमानो कपिप्रभुः ।
व्रणवेदनया ग्लायन् साधुम्मन्यमसाधुवत् ॥ १२५ ॥
मृषासि त्वं हविर्याजी राघव ! छद्मतापसः ।
अन्यव्यासक्तघातित्वाद् ब्रह्मघ्नां पापसम्मितः ॥ १२६ ॥

राममित्यादि। कपिप्रभुर्वाली राममुच्चैर्महता शब्देनोपालब्ध उपालब्धवान् लभिरात्मनेपद्यनिट् तस्य लुङि झलो झलीति सिचो लोपः झषस्तथोर्धो धः झलाञ्जश्झशि। शूरमानी शूरमात्मानं मन्यमानः आत्ममाने खश्चेति चकाराण्णिनिः व्रणवेदनया ग्लायन् ग्लानिमुपगच्छन् साधुम्मन्यं साधुमात्मानं मन्यमानं रामं तेनैव खश् तस्मिन् सार्वधातुके परतो दिवादित्वाच्छ्यन् पूर्वपदस्य मुम् असाधुवदसाधुमिव असाधुना तुल्यो वर्त्तते इति वतिः ॥ १२५ ॥ ज० म०

राममित्यादि। व्रणवेदनया ग्लायन् कपिप्रभुर्वाली उच्चैः शब्देन राममुपालब्ध निन्दितवान् लभिस्तनि झसलाञ्झसीति सेर्लोपः ढभात्तथोरिति तस्य धः झप्झसोरिति भस्य वः। शूरमानो आत्मानं शूरम्मन्यमानः अभिधानात् मन्यतेरात्मनो मनने णिन् यद्वा शूरसम्बन्धिमानो विद्यतेऽस्येति नैकाजादिति इन् वीराभिमानवानित्यर्थः शूरश्चासौ मानी चेति वा। रामं कीदृशं साधुम्मन्यं साधुमात्मानं मन्यमानं भ्रातृवधूहरणेनोचितस्य दण्डस्यैव करणात् मन्यात् स्वार्थे इति खश् शित्त्वादूले दिवादित्वात् श्यन् खित्यव्याजिति मन् असाधुवत् असाधुना तुल्यं असाध्वात् हननात् चूत् साम्ये इति चूत् असाधुं यथा निन्दति तथोपालब्धेति वा ॥ १२५ ॥ भ०

मृषासीत्यादि। हे राघव ! त्वं छद्मना तापसः स त्वं मृषैव मिथ्यैव हविर्याजी हविषा करणेनेष्टवानसि न लोक-

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



पापकृत् सुकृतां मध्ये राज्ञः पुण्यकृतः सुतः ।
मामपापं दुराचार ! किं निहत्याभिधास्यसि ? ॥ १२७ ॥

---

प्राप्तभय इत्यभिप्रायः करणे यज इति भूते णिनिः इतः प्रभृतिभूत इत्यधिक्रियते यतो ब्रह्मघ्नां पापसम्मितः ब्रह्म हतवन्त इति ब्रह्मेत्यादिना क्विप् तेषां पापेन तुल्यः कुतः अन्यव्यासक्तघातित्वात् अन्यस्मिन् सुग्रीवे व्यासक्तं मां हतवान् कर्मणि हन इति णिनिः तत्र कुत्सितग्रहणं कर्त्तव्यमित्युक्तं यदि सुग्रीवेण विरोधः किं तवायातमिति कुत्सितहननम् ॥ १२६ ॥ ज० म०

मृषेत्यादि । हे राघव ! त्वं हविर्याजी मृषा स्वर्गादिफलावाप्तये हविषा करणेन इष्टवानिति मिथ्या ग्रहादित्वात् णिन् करणाद्यजो भूते णिन्निति परः स्वमते करणादिर्भूतकालस्य विशेषानुक्तेरर्थाद्गम्यते । यतश्छद्मना तापसः तपस्वी न तु वस्तुतः अन्यव्यासक्तघातित्वात्त्वं ब्रह्मघ्नां ब्रह्माणं हतवतां पापसम्मितः पापेन सम्मितस्तुल्यः तुल्यपापाश्रयत्वात् पुरुषोऽपि तुल्य इत्युच्यते पापेन करणभूतेन ब्रह्मघ्नां तुल्य इत्यन्वयः । अन्यस्मिन् सुग्रीवे व्यासक्तं हतवानिति ग्रहादित्वात् णिन् कर्मणो हनः कुत्सायामिति परः हनस्तञ् खेर्हौघोञ्णिति चेति घः ततस्त्वती भाव इति त्वं ब्रह्माणं हतवानिति त्वासुसिति क्विप् ब्रह्मभ्रूणवृत्रेषु भूत इति परः स्वमते अविशेषात् कालत्रयं प्राप्तमत्रातीतविवक्षा सदा नोऽल्लोप इत्यकारलोपे हनोह्नो घ्नः ॥ १२६ ॥ भ०

तदेव दर्शयन्नाह पापेत्यादि । हे दुराचार ! मामपापं निहत्य पापकृत् कृतकिल्विषः राज्ञो दशरथस्य पुण्यकृतः सुतः सुकृतां मध्ये किमभिधास्यसि वक्ष्यसि किं चेपे न किञ्चि-

अग्निचित् सोमसुद्राजा रथचक्रचिदादिषु ।
अनलेष्विष्टवान् कस्मान्न त्वयापेक्षितः पिता ॥ १२८ ॥

---

दभिधातव्यमस्तीति भावः । सर्वत्र सुकर्मपापेत्यादिना क्विप् ॥ १२७ ॥ ज० म०

पापेत्यादि । हे दुराचार ! अपापं मां निहत्य सुकृतां शोभनक्रियावतां मध्ये किमभिधास्यसि किं वक्ष्यसि यतस्त्वं पुण्यकृतो दशरथस्य सुतः पुत्त्रोऽपि भूत्वा पापकृत् पापं सुष्ठु पुण्यञ्च कृतवानसि त्वासुसित्यादिना क्विप् पुण्यादेः कर्मणः सोम कृञः कर्त्तरि भूत इति परः स्वमतेऽविशेषात् सर्वं विवचितम् ॥ १२७ ॥ भ०

अग्निचिदित्यादि । कस्मात्त्वया पिता नापेक्षितः नानुवृत्तः येनैवं कृतवानसीति । कीदृशः अग्निचित् आहिताग्निः अग्निं चितवानिति अग्नौ चेरिति क्विप् सोमसुत् सोमं सुतवान् सोमयाजी सोमे सुञ इति क्विप् अनलेषु अग्निषु इष्टवान् रथचक्रचिदादिषु रथचक्रवच्चीयते इति कर्मण्यग्न्याख्यायामिति क्विप् आदिशब्दाच्छ्येनचिदादिग्रहणम् अग्न्यर्थो हि तदाकार इष्टकाचय इत्युच्यते तद्द्वारेणाग्निरपि ॥ १२८ ॥ ज० म०

अग्नीत्यादि । कथं त्वया पिता दशरथो राजा नापेक्षितः न चिन्तितः नानुवृत्तो वा येनैवं कृतमिति भावः । अग्निचित् आहिताग्निः सोमसुत् सोमयाजी रथचक्रचिदादिषु अग्निविशेषेषु इष्टवान् कृतयज्ञः अग्निं चितवान् सोमं सुतवान् रथचक्रवच्चीयते इति च त्वासुसित्यादिना क्विप् रथचक्रचिदादिष्वित्यादिशब्दात् श्येनचिदादिष्वपि अग्न्यर्थो रथचक्राद्याकार इष्टकारचनाविशेषः क्रियते तद्द्वारेणाग्निरपि रथचक्र-

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



मांसविक्रयिणः कर्म व्याधस्यापि विगर्हितम् ।
मां घ्नता भवताकारि निःशङ्कं पापदृश्वना ॥ १२९ ॥
बुद्धिपूर्वं ध्रुवन् न त्वा राजन्नत्वा पिता खलम् ।
सह युध्वानमन्येन योऽहिनो मामनागसम् ॥ १३० ॥

---

चिदादितया व्यपदिश्यते इष्टवानिति यजेः क्तवतुः ग्रहस्यपाद्योरिति जिः ॥ १२८ ॥ भ०

मांसेत्यादि । मांसविक्रयिणः कुत्सितकर्मकारिणो व्याधस्यापि विगर्हितं निन्दितं कर्मणोनिर्विक्रिय इति इनिः तत्र कुत्सितग्रहणं कर्त्तव्यमित्युक्तं निकृष्टकर्मकरणेनेति यद्भवता पापदृश्वना पापं दृष्टवता दृशेः क्वनिप् न संयोगाद्वमन्तादिति अल्लोपप्रतिषेधः कर्म अकारि कृतं कर्मणि लुङ् निःशङ्कं शङ्कां त्यक्त्वा किं कुर्वता मां घ्नता मारयता हन्तेः शतरि गमहनेत्युपधालोपः होहन्तेरिति कुत्वम् ॥ १२९ ॥ ज० म०

मांसेत्यादि । मांसविक्रयिणो व्याधस्यापि यद्विगर्हितं कर्म तत्त्वया मां घ्नता निःशङ्कं शङ्कां त्यक्त्वा कृतं पापदृश्वना पापं दृष्टवतापि पापानभिज्ञेन मांसोपजीविना व्याधेनापि अन्यासक्तस्य निष्प्रयोजनत्वाद्वानरस्य च हननं निन्द्यते भवता तु पापं जानतापि तत् कृतमिति भावः । व्याधस्येति कर्त्तरि सम्बन्धविवक्षा यद्वा व्याधस्यापीदृशं कर्म लोकैर्विशेषेण निन्दितमित्यर्थः मांसविक्रयोऽस्यास्तीति नैकाजादिति इन् विक्रीणातेर्भूते कुत्सायामिति परः तन्न साधु अत्र व्याधस्य मांसविक्रयणे कुत्साया अभावात् दृशेस्त्वासुसित्यादिना क्वनिप् ॥ १२९ ॥ भ०

बुद्धिपूर्वमित्यादि । त्वत्पिता त्वां खलं असाधुचरितं ध्रुवन् गच्छन् ध्रु गतिस्थैर्य्ययोरिति रुदादौ पठ्यते तस्य गतौ

पञ्च पञ्चनखा भक्ष्या ये प्रोक्ताः कृतजैर्द्विजैः ।

ज्ञानार्थे वर्त्तमानस्य शतरि विकरणलोपे उवङादेशे रूपं यत्न राजकृत्वा कस्य तवेत्यर्थात् राजनियुधिकृञ इति क्वनिप् तत्तस्य बुद्धिपूर्वं ध्रुवमवश्यं तस्येति व्याख्याने कृत्प्रयोगे कर्मणि षष्ठ्या भवितव्यं यस्त्वं मामनागसमपापमन्येन सह युध्वानं अन्येन सुग्रीवेण सह योद्धुं प्रवृत्तं सहे चेति क्वनिप् अहिनः हिंसितवान् हिंसेर्लङि मध्यमपुरुषैकवचने श्नमि श्नान्नलोपे हल्ङ्यादिलोपे रुत्वे च रूपम् ॥ १३० ॥ ज० म०

बुद्धेत्यादि । खलं दुष्टचरितं त्वां पिता दशरथो यत्न राजकृत्वा राजानं न कृतवान् तद्बुद्धिपूर्वं खलत्वविज्ञानपूर्वकमेव ध्रुवं निश्चितं त्वासु सित्यादिना कृञः क्वनिप् स्वस्य तन् पिति ष्ठीचीषीणामित्यादिना त्वादेशः क्वचिदपवादविषयेऽप्युत्सर्गोऽपि प्रवर्त्तते इति न्यायात् ढवे कृतोत्यस्य विषयेऽपि कर्मविक्रयेत्यादिना द्वितीया केचित्तु ध्रुशि स्थैर्ये इत्यस्य शतरि ध्रुवन् धातूनामनेकार्थत्वात् ज्ञानार्थः पिता त्वा खलं ध्रुवन् यत्न राजकृत्वा अर्थात्तव तद्बुद्धिपूर्वमित्याहुः अन्ये तु इति निषेधे आशब्दः स्मरणे पीडायां वा राजकृत्वेत्यत्र तवेत्यर्थाद्गम्यते नञः प्रश्लेषात् अखलमिति मामित्यस्य वक्ष्यमाणस्य विशेषणमित्याहुः। खलत्वमाह यस्त्वं मां अहिनो हतवान्। कीदृशं अन्येन सुग्रीवेण सह युद्धानं योद्धुं प्रवृत्तं युधेः पूर्ववत् क्वनिप अनागसं अनपराधं अहिन इति हिसि हिंसायां ध्याः सिप् रुधादित्वात् श्नन् ननो नलोप्य इति इदनुबन्धजन्यनकारस्य लोपः हसङ्ग्यां दिसेरिति सेर्लोपः ॥ १३० ॥ भ०

मांसार्थं हत इति चेदाह पञ्च पञ्चेत्यादि । हे कौशल्याज ! कौशल्याजात ! सप्तम्यां जमेडः ये पञ्च पञ्चनखाः

कौशल्याज ! शशादीनां तेषां नैकोऽप्यहं कपिः ॥१३१॥
कथं दुष्ठुः स्वयं धर्मे प्रजास्त्वं पालयिष्यसि ।
आत्मानुजस्य जिह्रेषि सौमित्रेस्त्वं कथं न वा ॥ १३२ ॥

---

"शशकः शल्लकी गोधा खड्गी कूर्मश्च पञ्चमः" इति कृतजैः कृतयुगजातैः सप्तम्यां जनेर्डः द्विजैर्द्विजातिः अन्येष्वपि दृश्यते इति डः सप्तम्यामित्युपलक्षणं असप्तम्यामपि दृश्यते भक्ष्याः भक्षणीयाः प्रोक्ताः तेषामहमेकोऽपि न भविता अहं कपिः तत्किमिति हतोऽहं त्वयेति भावः ॥ १३१ ॥ ज० म०

पञ्चेत्यादि । राजभिर्मांसाय मृगा हन्यन्ते इति प्रमाणं निराकुर्वन्नाह हे कौशल्याज ! ये पञ्च पञ्चनखाः "शशकः शल्लकी गोधा खड्गी कूर्मश्च पञ्चमः" इत्यादिवाक्येन कृतजैः सत्ययुगजातैर्द्विजैर्महर्षिभिर्भक्षणयोग्याः प्रोक्ताः कथिताः तेषां शशादीनां मध्ये अहं नैकोऽपि यतः कपिरहं अतोऽभक्ष्यत्वान्मम बधो व्यर्थ एव । कौशल्यायाः सकाशाज्जातः कृते जातः द्विजात इति च हनजनादिति डः पैतृकधर्माश्रयाहितया कुत्सार्थं मातुरुत्कीर्त्तनम् ॥ १३१ ॥ भ०

कथमित्यादि । स्वयमात्मना धर्मे दुष्ठुः दुःस्थः सन् अपदुःसुषुस्थ इत्यौणादिकः कुप्रत्ययः कथं प्रजाः पालयिष्यसि नैवेति भावः उपसर्गे च संज्ञायामिति जनेर्डः, कथं वा सौमित्रे भ्रातुरात्मानुजस्य कनीयसः आत्मानमनुजात इत्यनौ कर्मणि इति डः न जिह्रेषि न लज्जसे ॥ १३२ ॥ ज० म०

कथमित्यादि । त्वं कथं प्रजाः पालयिष्यसि अपितु नैवेति भावः यतः स्वयमात्मनः धर्मे दुःस्थः दुःखेन तिष्ठतीति हनजनादिति डः दुष्ठुरिति पाठे औणादिकः कुप्रत्ययः बलेश्चाभिधानात् प्रजायन्ते इति प्रजा लोकाः पूर्वेण डः स्त्रीत्वं

मन्ये किञ्जमहं घ्नन्तं त्वामक्षत्रियजे रणे।
लक्ष्मणाधिज ! दुर्वृत्त ! प्रयुक्तमनुजेन नः॥ १३३॥
प्रत्यूचे बालिनं रामो नाक्षतं क्षतवानहम्।

---

संज्ञा चाभिधानात् आत्मानुजस्य सौमित्रेः कथं न वा जिह्मेषि न लज्जसे ? आत्मानमनुजात इति पूर्ववत् डः॥ १३२॥ भ०

मन्ये इत्यादि। किञ्जं त्वामहं कुतोऽपि जातं न राजजातं मन्ये पञ्चम्यामजाताविति डः घ्नन्तंमारयन्तम् अक्षत्रियजे रणे क्षत्रियादजाते हे लक्ष्मणाधिज ! लक्ष्मणाग्रज ! हे दुर्वृत्त ! नोऽस्माकमनुजेन भ्रात्रा प्रयुक्तं जातावपि दृश्यते अक्षत्रियज इति उपसर्गे च संज्ञायामित्युक्तम् असंज्ञायामपि दृश्यते। लक्ष्मणा धिज इति अनौ कर्मणीत्युक्तं कर्मण्यपि दृश्यते अनुज इति सर्वत्रान्येष्वपि दृश्यते इति डः। इत्युपपदाधिकारः॥ १३३॥ ज० म०

मन्ये इत्यादि। हे लक्ष्मणाधिज ! हे दुर्वृत्त ! दुश्चरित्र ! अहं त्वां किञ्जं कुतोऽपि जातं कुत्सिताद्वा जातं मन्ये न तु राज्ञो जातं यतः अक्षत्रियजे क्षत्रियादजाते रणे मां घ्नन्तं मारयन्तम् अस्माकमनुजेन कनिष्ठेन सुग्रीवेण प्रयुक्तं सर्वत्र हनजनादिति जनेर्डः परे तु विशेषसूत्राण्युक्त्वा अन्यत्रापि दृश्यते इत्यनेन तेषां प्रायिकत्वं बोधयन्ति। तथाहि पञ्चम्यन्तादजातेर्डः इत्यस्य किञ्ज इत्युदाहरणं जातेरपि अक्षत्रियज इत्युदाहृतम् उपसर्गात् संज्ञायामित्यस्य प्रजास्त्वं पालयिष्यसीत्युदाहरणम् असंज्ञायामपि अधिज इति कर्मणोऽनोरित्यस्य आत्मानुजस्य जिह्मेषीत्युदाहरणम् अकर्मणोऽपि अनुज इति अतएव महाधिया वोपदेवेन विशेषेणोक्तः॥१३३॥ भ०

प्रत्यूचे इत्यादि। रामोऽपि बालिनं प्रत्यूचे प्रत्युक्तवान्।

यज्वभिः सुत्वभिः पूर्वैर्जरद्भिश्च कपीश्वर ! ॥ १३४ ॥
ते हि जालैर्गले पाशैस्तिरश्चामुपसेदुषाम् ।
ऊषुषां परदारैश्च सार्द्धं निधनमैषिषुः ॥ १३५ ॥

---

किमित्याह हे कपीश्वर ! पूर्वैर्जरद्भिर्वृद्धैः जीर्य्यतेरतृन् यज्वभिः याज्ञिकैः सुत्वभिः सोमयाजिभिः सुयजोर्ङ्वनिप् नाकृतं कृतवानहम् अपितु कृतमेव कृतवानहं निष्ठेति भूते क्तक्तवतू ॥ १३४ ॥ ज० म०

प्रत्यूचे इत्यादि । रामो बालिनं प्रत्यूचे । किं प्रत्युक्तवानित्याह हे कपीश्वर ! यज्वभिर्याज्ञिकैः सुत्वभिः सोमपीतिभिः पूर्वैर्जरद्भिर्वृद्धैर्मान्धातृप्रभृतिभिर्यन्न कृतं तदहं न कृतवान् इष्टवानिति यजसुसिति वनिप् सुत्वानिति ङ्वनिप् ह्रस्य तन् पिति जीर्य्यतीति शतृः । जीनो जीर्णो जरन्नपीत्यमरः ॥१३४॥ भ०

ते हीत्यादि । हि यस्मात्ते पूर्ववृद्धाः जालैर्गले पाशैश्च तिरश्चां मृगपक्षिसरीसृपाणां तिरोऽञ्चतीति ऋत्विगित्यादिना क्विन् आमि अच इत्यल्लोपः तेषां निधनं विनाशमैषिषुः इष्टवन्तः इषेर्लुङि रूपम् । कीदृशम् उपसेदुषां समीपमुपगतवतां तेषां समीपवर्त्तिनामुपद्रवकारित्वात् भाषायामिति क्वसुः परदारैश्च सार्द्धमूषुषाम् उषितवतां पूर्ववत् क्वसुः वसेर्यजादित्वात् सम्प्रसारणम् ॥ १३५ ॥ ज० म०

ते हीत्यादि । पूर्वोक्ते हेतुरयं हि यस्मात् तेऽपि पूर्वे वृद्धास्तिरश्चां पक्षिमृगादीनां जालैर्गले पाशैश्च निधनम् ऐषिषुः इच्छन्ति स्म न केवलं तिरश्चां परदारैः परस्त्रीभिः सार्द्धम् ऊषुषां कृतनिवासानाञ्च परदारैः सह वासमग्रिमश्लोके वक्ष्यति अतएव बध्यत्वप्रतिपादकं रूपद्वयमेव त्वय्यास्ते । उभयविशेषणमाह उपसेदुषां समीपमुपगतानां स्ववाचस्थितानां

अहन्तु शुश्रुवान् भ्रात्रा स्त्रियं भुक्तां कनीयसा ।
उपेयिवाननूचानैर्निन्दितस्त्वं लतामृग ! ॥ १२६ ॥

---

मपीत्यर्थः । केचित्तु परदारैः सार्द्धमूषुषामिति तिरश्चामित्यस्य विशेषणं बध्यत्वदर्शनायेत्याहुः । तिरोऽञ्चतीति क्विप् सहसन्तिर इति तिर्य्यादेशः तिर्य्यगमुमूयगिति तिरश्चादेशः उपपूर्वसदश्चोपमवदिति क्वसुः वसोर्घसेकाजिति इम् श्रुद्विं छश्रडीति द्वित्वं तृफल्लेति अत एत्वं खिलोपश्च वसोर्वः से मपीति उः वसेः पूर्ववत् क्वसुः इम् च व्यथग्रहेति खेर्जिः ग्रहस्वपाद्योरिति प्रकृतेर्जिः क्वितादिति षः इषु इच्छायां अन् व्यां सिः अनुस्विदेः भूयोऽम् ॥ १२५ ॥ भ०

अहमित्यादि । हे लतामृग ! हे शाखामृग ! अहं पुनः शुश्रुवान् श्रुतवान् पूर्ववत् क्वसुः यदुत भ्रात्रा कनीयसा भुक्तां स्त्रियं त्वमुपेयिवान् सन् अनूचानैर्वेदविद्भिर्निन्दितस्ततो मे नैव दोषः उपेयिवाननूचान इति उपेयिवानित्यादिना निपातितौ ॥ १२६ ॥ ज० म०

अहमित्यादि । हे लतामृग ! शाखामृग ! अहं शुश्रुवान् । किं शुश्रुवानित्याह कनीयसा कनिष्ठेन भ्रात्रा सुग्रीवेण भुक्तां स्त्रियं त्वमुपेयिवान् उपगतोऽसि अतएव अनूचानैर्वेदविद्भिस्त्वं निन्दितः तेन तव बधे मम दोषो नास्तीति भावः शृणोतेरिणश्च पूर्ववत् क्वसुः द्वित्वं वसोर्घसेकाज्विणात इमित्यत्र खिसहितस्यैकाचोर्ग्रहणं तेन न श्रोरिम् इणस्तु इमि यिणोऽच्यणाविति यादेशः खेः क्वितिर्घः अनुपूर्वब्रूञः कानः वचोऽरे पूर्ववत् जिः अनूचानः प्रवचने साङ्गेऽधीती गुरोश्च य इत्यमरः । लता ज्योतिष्मती प्रक्का शाखा वल्ली प्रियङ्ग्विति विश्वः ॥ १२६ ॥ भ०

अन्वनैषीत्ततो वाली त्रपावानिव राघवम् ।
न्यक्षिपच्चाङ्गदं यत्नात् काकुत्स्थे तनयं प्रियम् ॥ १२७ ॥
म्रियमाणः स सुग्रीवं प्रोचे सद्भावमागतः ।
सम्भविष्याव एकस्यामभिजानासि मातरि ॥ १२८ ॥

---

अन्वेत्यादि । ततो रामवचनादनन्तरं वाली राघवमन्वनैषीत् अनुनीतवान् देव ! क्षम्यतां यदजानता मयोक्तमिति नयतेर्लुङित्यनेन भूतसामान्ये लुङ् त्रपावानिव यथा लज्जावान् कश्चिदनुनयति तद्वत् अङ्गदञ्च प्रियं तनयं काकुत्स्थे रामे न्यक्षिपत् न्यस्तवान् यत्नादादरात् क्षिपेरनद्यतने लङ् लकारप्रत्ययस्यातिङिति प्रतिषेधान्न क्तत्संज्ञा ॥ १२७ ॥ ज० म०

अन्वेत्यादि । ततो रामवाक्यानन्तरं वाली राघवमन्वनैषीत् अनुनीतवान् णीञ्भ्यां सिः नेमिकाजिति इम्निषेधः व्रजवदेति वृिः । त्रपावानिव वस्तुतो मृगस्य भ्रातृवधूहरणेऽपि त्रपा नास्ति किन्तु यथा लज्जावान् कश्चिदनुनयति तद्वत् अङ्गदनामानं प्रियं पुत्रं काकुत्स्थे रामे यत्नात् न्यक्षिपत् समर्पितवान् ॥ १२७ ॥ भ०

म्रियेत्यादि । स वाली म्रियमाणः सन् सद्भावं शोभनभावमागतः सन् सुग्रीवं प्रोचे । किमित्याह अभिजानासि स्मरसि एकस्यां मातरि सम्भविष्यावः समभवाव इत्यस्मिन्नर्थे अभिज्ञावचने लृङित्यनद्यतने लृट् अभिजानासीत्यभिज्ञावचनस्योपपदत्वात् ॥ १२८ ॥ ज० म०

म्रियेत्यादि । म्रियमाणः सन् सद्भावं प्राप्तो वाली सुग्रीवं प्रोचे ब्रूञ्स्थो वचोऽरे म्ङस्थोक्यमिति प्रानः तौदादिकः प्रः ऋद्रिः मु ध्योरितीयः । किमित्याह एकस्यां मातरि आवां यत्

अवसाव नगेन्द्रेषु यत्पास्यावो मधूनि च।
अभिजानीहि तत्सर्वं बन्धूनां समयो ह्ययम्॥ १३९॥
दैवं न विदधे नूनं युगपत् सुखमावयोः।
यच्छश्वद्बभूव तद्दुःस्थं यतो न इतिहाकरोत्॥ १४०॥

---

सश्च विष्याव: सम्भूतौ तदभिजानासि स्मर्थेस्त्ययदित्यतीत इति भूते ती॥ १३८॥ भ०

अवेत्यादि। अभिजानीहि स्मर यन्नगेन्द्रेषु अवसाव उषितवन्तौ अत्राभिज्ञावचनस्य यच्छब्दसहितत्वात् न यदीत्यनेन लृटि प्रतिषिद्धे लङेव भवति अत्र वासमात्रं स्मर्य्यते। मधूनि च यत्पास्याव: तत्र पीतवन्तौ तत् सर्वमभिजानीहि अत्र विभाषाकाङ्क्ष इति पक्षे लृट् साकाङ्क्षता च प्रयोक्तुर्लक्ष्यलक्षणयोः सम्बन्धे तत्र वासोलक्षणं पानञ्च लक्ष्यमिति यस्मात् बन्धूनामयमेष समय: काल:॥ १३९॥ ज० म०

अवेत्यादि। नगेन्द्रेषु पर्वतश्रेष्ठेषु आवां अवसाव यच्च तत्र मधूनि पास्याव: पीतवन्तौ तत् सर्वं अभिजानीहि स्मर यस्मात् अयं बन्धूनां समय: नेदानीं वैरिचिन्ता युक्तेति भाव: वानेकस्मार्य्यं इति भूते विभाषया ती वसौ निवासे घौ॥ १३९॥ भ०

दैवमित्यादि। नूनमवश्यं दैवमावयो: सुखं युगपदेककालं न विदधे न हि विहितवत् परोक्षे लिट् जित्त्वात्तङ् आतोलोप:। यतो यस्मात्तत् दैवं शश्वत् नित्यं दुःस्थमननुकूलं नोऽस्माकं बभूव तस्मादितिह एवमकरोत् ह इत्येवं कृतवान् यद्युगपदावयो: सुखविधानं तत दुःस्थं शश्वत् बभूव हाकरोदिति भूतानद्यतनपरोक्षे लिटि प्राप्ते हशश्वतोर्लङ् चेति लङ्

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



ददौ स दयितां भ्रात्रे मालाञ्चाग्र्यां हिरण्मयीम्।
राज्यं सन्दिश्य भोगांश्च ममार व्रणपीड़ितः॥ १४१॥
तस्य निर्वर्त्त्य कर्त्तव्यं सुग्रीवो राघवाज्ञया।
किष्किन्ध्याद्रिगुहां गन्तुं मनः प्रणिदधे द्रुतम्॥१४२॥

---

चकारात् लिट् तत्र शश्वच्छब्दे उपपदे लिडेवोदाहृतः न खलु हशब्दे लङेव न लिड़पीति॥ १४०॥ ज० म०

दैवमित्यादि। नूनं निश्चितं दैवं कर्त्तृ युगपदेकदा नावयोः सुखं विदधे चकार धाजश्ठग्राम् उस्येचीत्यादिना आलोपः यतस्तत् दैवं नोऽस्माकं शश्वन्नित्यं दुःस्थं प्रतिकूलं बभूव तस्मादिति प्रागुक्तं युगपत् सुखाभावम् अकरोत् हा विषादे हा पादपूरणे वा "पारम्पर्य्यप्रसिद्धौ स्यादैतिह्यमिति हाव्ययम्" इति दर्शनात्। पारम्पर्य्यप्रसिद्धिमकरोदिति केचित् इति लोकापवादागमयोरिति वर्द्धमानवचनात् लोकापवादं भ्रातृवधूगमनरूपमकरोदिति केचित् यत्तदोः परस्पराकाङ्क्षया व्रत इति गम्यते॥ १४०॥ भ०

ददावित्यादि। स बाली दयितां ताराख्यां भ्रात्रे सुग्रीवाय ददौ मालां चाग्र्यां श्रेष्ठां हिरण्मयीं सुवर्णघटितां राज्यं सामात्यादिद्रव्यप्रकृतिं सन्दिश्य दत्त्वा भोगांश्च राज्याङ्गानि ममार व्रणपीड़ितः तत्रापि परोक्षे लिट्॥ १४१॥ ज० म०

ददावित्यादि। स बाली भ्रात्रे सुग्रीवाय दयितां स्वप्रियां हिरण्मयीं स्वर्णमयीं स्वर्णघटितां मालाञ्च ददौ अग्र्यां श्रेष्ठामित्युभयविशेषणम्। हिरण्यस्य विकारो हिरण्मय इति निपातनात् मयट् यलोपश्च ततो राज्यं भोगांश्च सन्दिश्य दत्त्वा व्रणपीड़ितः सन् ममार मृतः॥ १४१॥ भ०

तस्येत्यादि। तस्य मृतस्य कर्त्तव्यं पिण्डोदकादिकर-

नामग्राहं कपिभिरशनैः स्तूयमानः समन्तात्
अन्वग्भावं रघुवृषभयोर्वानरेन्द्रो विराजन् ।
अभ्यर्णेऽम्भःपतनसमये पर्णलीभूतसानुं
किष्किन्ध्याद्रिं न्यविशत मधुक्षीवगुञ्जद्द्विरेफम् ॥१४३॥

इति भट्टिकाव्ये वालिवधो नामाधिकारकाण्डे षष्ठः सर्गः ।

---

शीयं कृत्वा सुग्रीवो राघवाज्ञया गच्छ वर्षासमयमतीत्य शरदागमिष्यसीति आज्ञया किष्किन्ध्याद्रिगुहां गन्तुं मनः प्रणिदधे कृतवान् अत्रापि परोक्षे लिट् ॥ १४२ ॥ ज० म०

तस्येत्यादि । तस्य मृतस्य बालिनः कर्त्तव्यं कर्त्तुमुचितं पिण्डोदकदानादि निर्वर्त्य अङ्गदद्वारा स्वयञ्च यथायोग्यं निष्पाद्य राघवस्याज्ञया किष्किन्ध्यानाम्नीमद्रिगुहां द्रुतं शीघ्रं गन्तुं मनः प्रणिदधे चकार धात्वष्ठी प्राग्वन्नो ण इति णत्वं किष्किन्ध्याद्रिगुहेति सुमेरुपर्वतादिवत् एकार्थत्वे कर्मधारयः ॥ १४२ ॥ भ०

नामेत्यादि । वानरेन्द्रः सुग्रीवः किष्किन्ध्याद्रिं न्यविशत निविष्टवान् नेर्विश इति तङ् । अशनैः सुष्ठु कपिभिस्तूयमानः वर्त्तमाने लट् तस्य कर्मणि विहितत्वात् लक्षणहेत्वोः क्रियाया इति शानच् नामग्राहं नाम गृहीत्वा नाम्नादिशिग्रहोरिति णमुल् समन्तात्सर्वतः विराजन् शोभमानः अत्र परस्मैपदसंज्ञकः शतृः किं कृत्वा रघुवृषभयोरन्वग्भावम् अनुकूलो भूत्वा अन्वक्पूर्वाद्भवतेरन्वच्यानुलोम्य इति णमुल् तदनुकूलवर्त्तित्वाद्विराजन् कदा न्यविशत अभ्यर्णे निकटे अम्भःपतनसमये प्रावृषीत्यर्थः पर्णलीभूतसानुं पर्णानि सन्ति येषामिति सिध्मादिपाठाल्लच् तदन्तादभूततद्भावे च्विः पर्णलीभूताः सानव एकदेशा यस्याद्रेः मधुक्षीवा मधुमत्ता गुञ्जन्तो द्विरेफा यत्र

क्षीव इत्यत्रानुपसर्गात् फुल्लक्षीवकृशोल्लाघा इति निपातितः क्षीवृमदे इत्यस्मात् क्तप्रत्ययस्य लोपः इडभावश्च निपात्यते गुञ्जेर्लट् क्वचित् प्रथमासमानाधिकरणेऽपि शतृप्रत्ययः। इति सोपपदक्तः ॥ १४२ ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायामधिकारकाण्डे प्रथमः परिच्छेदः रामस्य सुग्रीवाभिषेको नाम षष्ठः सर्गः ।

नामेत्यादि। वानरेन्द्रः सुग्रीवः किष्किन्ध्यया गुहाविशेषेणोपलक्षितमद्रिं न्यविशत प्रविष्टवान् नौविशप्रवेशे विपराजोति सं। कीदृशः अशनैरुच्चैः समन्तात् सर्वतो नाम ग्राहं नाम गृहीत्वा कपिभिः स्तूयमानः कर्मणि शानः रतनोरिति यकि घोंऽन्त्यऽरे रघुवृषभयोः रामलक्ष्मणयोः अन्वग्भावं अनुकूलो भूत्वा विराजमानः उत्तरपदे वृषभादिशब्दः श्रेष्ठवाचकः स्वभावात् रामकार्य्यं त्यक्त्वा कृती गृहं गत इत्याह अम्भःपतनसमये वर्षाकाले अभ्यर्णे समीपवर्त्तिनि सति तदा प्रयाणानौचित्यात् तयोराज्ञया गृहं गत इत्यर्थः अभ्यर्ण इति अर्देः क्तान्तस्य समीपार्थे क्षुब्धवाढेत्यादिना निपातः। कीदृशमद्रिं पल्वलीभूताः सानव एकदेशा यस्य यादृशं वेशन्तः पल्वलञ्चाल्पसर इत्यमरः। च्विः कृभ्वस्तिष्विति च्विः अकारस्य ईत्वञ्च। मधुना क्षीवा मत्ता गुञ्जन्तो द्विरेफा भ्रमरा यत्र क्षीवृङ् दर्पे इत्यस्य क्तान्तस्य क्षीवः पूर्वेण निपातितः। नामग्राहमिति कर्मरूपं नाम्न आदिशिग्रहिभ्यां चणमिति परः स्वमतेऽभिधानात् किंवा नाम्नो ग्राहो ग्रहणं यत्रेति स्तुतिक्रियाविशेषणम्। अन्वग्भावमिति आनुकूल्येऽन्ववो भुवश्चणमिति परः स्वमतेऽव्याप्यभिधानात् यद्वा रघुवृषभविषये अनुगतो भावो

# सप्तमः सर्गः ।

ततः कर्त्ता वनाकम्पं ववौ वर्षाप्रभञ्जनः ।
नभः पूरयितारश्च समुन्नेमुः पयोधराः ॥ १ ॥

---

यत्वेति दीप्तिक्रियाविशेषणं एतेन विनयित्वं दर्शितम् । इति सोपपदकृदधिकारः ॥ १४३ ॥ भ०

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेनविरचितायां मुग्धबोधिन्यां भट्टिटीकायामधिकारकाण्डे प्रथमपरिच्छेदः ।

काव्यस्य षष्ठः सर्गः ।

---

इतस्ताच्छीलिकं कृतमधिकृत्योच्यते ताच्छीलिकमित्युपलक्षणं तद्धर्मं तत्साधुकारिष्वपि द्रष्टव्यं यत आक्वेस्तच्छीलतद्धर्मतत्साधुकारिष्विति तत्राधिक्रियते । तत इत्यादि । ततः प्रवेशानन्तरं वर्षाप्रभञ्जनः प्रावृड्वातो ववौ वाति स्म वा गतिगन्धनयोरिति । कर्त्ता वनाकम्पं साधु कुर्वन् तृन्निति तृन् न लोकेति षष्ठीप्रतिषेधः । पयोधरा मेघाश्च समुन्नेमुः सनुन्नताः कीदृशा नभः पूरयितारः तृन् ॥ १ ॥ ज० म०

अथ ताच्छीलिकाः कृत उच्यन्ते । ताच्छीलिका इत्युपलक्षणं परमते तच्छीलतद्धर्मतत्साधुकारिष्वर्थेषु तृनादिदर्शनात् स्वमते यद्यपि तृनादीष्णुखादिविधायकसूत्रेषु तच्छीलाद्यर्थो नोक्तस्तथापि ढघेकृतीत्यादौ शीलार्थतृन्भव्यर्णार्थणिनीति ज्ञापकात् तृनिष्णुखादयः कतिचित् प्रत्यया अभिधानात् शीलाद्यर्थेष्वपि भवन्तीति बोध्यम् । उक्तं हि "कृत्तद्धितसमासानाः

तर्पणं प्रजनिष्णूनां शस्यानाममलं पयः ।
रोचिष्णवः सविस्फूर्जा मुमुचुर्भिन्नवद्घनाः ॥ २ ॥

---

मभिधानं नियामकम्” इति । शीलाद्यर्थाकथनेऽपि नाधिका क्षतिः प्रकृतार्थस्य तद्बोधकत्वात्। तथाहि ततः कर्त्ता वनाकम्पमित्यादौ वनस्य ईषत्कम्पकारित्वेनैव वायोः साधुत्वं गम्यते। एवमन्यत्रापि । तत इत्यादि । ततोऽनन्तरं वर्षाकालसम्बन्धी प्रभञ्जनो वायुर्ववौ वहति स्म वाल गमनहिंसयोः णवातोडौ कीदृशः वनानामीषत्कम्पनं कर्त्ता साधु कुर्वन् एतेन मान्द्यं सौगन्ध्यञ्च परमते साधुकारिणि तृन् स्वमते ईषत्कम्पकारित्वेनैव साधुत्वं गम्यते। तृणकौ घे इति तृन् ढघे क्ततीत्यादौ शीलार्थतृन्निति शीलार्थं इत्युपलक्षणं तेन तत्साधुकार्य्यस्यापि ग्रहणम्। शीलार्थतृन्नित्यत्र शीलाद्यर्थतृन्निति पाठं केचिद्वदन्ति किंवा शीलार्थे तृन् वनानामीषत्कम्पकरणशील इत्यर्थः अतएव कर्मणि न षष्ठी वर्षासु वायोरतिशयत्वं वर्णनीयमिति सम्प्रदायानुरोधात् वनानामाकम्पं कर्त्तेति केचित्। पयोधरा मेघाः समुन्नेमुः सम्यगुन्नताः परिवृद्धा बभूवुः दिशो व्याप्तवन्त इत्यर्थः नमेरुसि तृफलेत्यादिना अत एत्वं खिलोपश्च। पयो धरतीति पचादित्वादन् पयो धरतीति वाक्याद्ढात् षष्ठित्यस्य विपयाशङ्का चेत् तदा धरतीति धरः पयसो धर इति वाक्यम् । कीदृशाः नभ आकाशं पूरयितारः पूरणशीलाः पूरक् पूर्त्तौ पूर्ववत् ॥ १ ॥ भ०

तर्पेत्यादि । घना अमलं पयो मुमुचुः भिन्नवत् भिन्ना इव । कीदृशं पयः तर्पणं शस्यानां तर्पणं तर्पयतीति कृत्यल्युटो बहुलमिति कर्त्तरि ल्युट्। प्रजनिष्णूनां साधु प्रादुर्भवतां रोचि-

निराकरिष्णवो भानुं दिवं वर्त्तिष्णवोऽभितः ।
अलङ्करिष्णवो भान्तस्तडित्वन्तश्चरिष्णवः ॥ ३ ॥

ष्णवः साधु दीप्यमानाः सविस्फूर्जाः सवज्रनिस्वनाः अलङ्कृ-ञित्यादिना इष्णुच् ॥ २ ॥ ज० म०

तर्पेत्यादि । घना निर्मलं पयो मुमुचुः त्यक्तवन्तः भिन्न-वत् भग्ना इव यथा घटादयो भग्नाः सन्तो बहु जलं त्यजन्ति तद्वत् । कीदृशं पयः प्रजनिष्णूनां प्रकृष्टजननशीलानां साधु प्रादुर्भवतां वा शस्यानां तर्पणं तृप्तिकारकं तर्पयतीति नन्द्या-दित्वादनः परमतेऽत्रापि शीलार्थः कुकविकाव्यमिव नीरसस्य रमणीयमिति देशवर्णनायां श्लेषात् सस्यशब्दो दन्त्यद्वयवा-नित्येके । तालव्या अपि दन्त्याः स्युः शस्यशूकरशालय इत्यन्ये । घनाः कीदृशा रोचिष्णवो दीप्तिशीलाः साधु दीप्यमाना वा सविस्फूर्जा वज्रनिर्घोषसहिताः भ्राजभूसहेत्यादिना प्रपूर्व-जनेरुचश्च इष्णुः टुओस्फूर्जा वज्रनिर्घोषे सेमत्वात् सरोरिति अः ॥ २ ॥ भ०

निरेत्यादि । भानुं निराकरिष्णवो निराकरणशीला घनाः पयो मुमुचुरिति योज्यं दिवमभितो वर्त्तिष्णव आकाशमभितो वर्त्तनस्वभावाः पूर्वपश्चिमयोर्वर्त्तनहेतुत्वात् पर्य्यभिभ्यां सर्वो-भयार्थे तसिः अभितः परित इति द्वितीया । तडित्वन्तः सवि-द्युतः अतएव भान्तो दीप्यमानाः एवञ्च कृत्वा अलङ्करिष्णवो-ऽलङ्करणशीला इव दिशश्चरिष्णवः इतस्ततो गमनशीलाः पूर्ववदिष्णुच् ॥ ३ ॥ ज० म०

निरेत्यादि । कीदृशा घनाः भानुं निराकरिष्णव आच्छा-दका इत्यर्थः दिवमभित आकाशस्योभयभागे पूर्वे पश्चिमे च वर्त्तनशीलाः धिक्समयेत्यादिना अभियोगे द्वितीया । तडि-

तान् विलोक्यासहिष्णुः सन् विललापोन्मदिष्णुवत् ।
वसन् माल्यवति ग्लास्नूरामो जिष्णुरधृष्णुवत् ॥ ४ ॥

---

त्वन्तो विद्युद्युक्ताः अतएव भान्तो दीप्यमानाः एवञ्चालङ्करिष्णवो दिवमिति सम्बध्यते साधु भूषयन्तः चरिष्णवः इतस्ततो गमनशीला पूर्वेण इष्णुः ढघे कृतीत्यादौ उदन्तवर्जनात् न कर्मणि षष्ठी तडिच्छब्दात् मोञ्मभूपाद्वतुः नदन्तसाविति पदनिषेधात् न चपोऽवेजव् इत्यनेन तकारस्य दत्वं यद्यपि तडित्वान् वारिदोऽम्बुभृदित्यमरेणोक्तं तथाप्यत्र विद्यमानतडिद्योगप्रतिपत्त्यर्थमुक्तम्, अत्र तु गोशब्दादिवद्रूढिरेव यद्वा तडित्वन्तो मेघाः पयो मुमुचुः । कीदृशाः घना निविडाः ॥ ३ ॥ भ०

तानित्यादि । तान् घनान् विलोक्य असहिष्णुरसहनशीलो रामः माल्यवति पर्वते वसन् विललाप उन्मदिष्णुवत् उन्मदनशीलः उन्मत्तस्तद्वत् पूर्ववदिष्णुच् ग्लास्नुः ग्लानशीलः जिष्णुर्जयशीलः अधृष्णुवदप्रगल्भ इव शोकाभिभूतत्वात् ग्लाजिस्थश्चक्ष्णुः धृष्णुरिति त्रसिगृधीत्यादिना क्नुः ॥ ४ ॥ ज० म०

तानित्यादि । तान् घनान् विलोक्य असहिष्णुः सन् अक्षमाशीलो भवन् रामो माल्यवति पर्वते वसन् उन्मदिष्णुवदुन्मत्तवत् विललाप विलापं कृतवान् सन् पण्डितोऽपि उन्मदिष्णुरिव विललापेति वा योजना जिष्णुर्जयशीलोऽपि अधृष्णुवत् अप्रगल्भ इव ग्लास्नुः ग्लानिशीलः सह्योन्मदिभ्यां पूर्वेण इष्णुः ग्लाम्लास्थेत्यादिना म्लायतेः स्नुः ष्णुक् भूजेरिति जयतेः ष्णुक् च्छिपत्रसगृधेत्यादिना धृषः क्नुः ॥ ४ ॥ भ०

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



भ्रमी कदम्बसम्भिन्नः पवनः शमिनामपि।
क्लमित्वं कुरुतेऽत्यर्थं मेघशीकरशीतलः॥ ५॥
संज्वारिणेव मनसा ध्वान्तमायासिना मया।
द्रोहि खद्योतसम्पर्कि नयनामोषि दुःसहम्॥ ६॥

---

किं तद्विलपनमित्याह भ्रमीत्यादि। भ्रमी भ्रमणशीलः कदम्बसम्भिन्नः कदम्बगन्धसंश्लिष्टः शमिनामपि शमनशीलानामपि क्लमित्वं कुरुते अत्यर्थं ग्लानिं कुरुते शमित्यष्टाभ्यो घिनुण् नोदात्तोपदेशेत्यादिना उपधावृद्धिप्रतिषेधः॥ ५॥ ज० म०

भ्रमीत्यादि। इतःप्रभृति एवं विललापेति पूर्वेण सम्बन्धः पवनः शमिनां शान्तिशीलानामपि क्लमित्वं मनसो ग्लानिशीलत्वं कामहेतुकमित्यर्थात् अत्यर्थम् अतिशयितं कुरुते। कीदृशः भ्रमी भ्रमणशीलः मन्दत्वात् कदम्बपुष्पेण सम्भिन्नः सुरभीकृत इत्यर्थः मेघस्य शीकरैः शीतलः। शीकरोऽम्बुकणाः स्मृता इत्यमरः। भ्रम्यचाले शमुभ्य इर्शमे क्लमुभिर्ग्लानौ एभ्यो ग्रहादित्वात् णिन् जनवधः सेम इति ह्रस्वः॥ ५॥ भ०

संज्वेत्यादि। मयैतत् ध्वान्तं तमो दुःसहं दुःखेन सह्यते इति मनसा करणभूतेन कीदृशेन संज्वारिणेव रोगशीलेनेव आयासिना आयासशीलेन मयेति द्रोहि अपकारशीलं ध्वान्तं खद्योतसम्पर्कि ज्योतिरिङ्गणसंसर्गशीलं नयनामोषि चक्षुर्मोषणशीलं संपृचानुरुधेत्यादिना सर्वे घिनुणन्ताः॥ ६॥ ज० म०

संज्वेत्यादि। मया मनसा करणेन ध्वान्तं तमो दुःसहं दुःखेन सह्यते संज्वारिणेव रोगशीलेनेव। आयासशीलेन ध्वान्तं कृतो दुःसहं इत्याह द्रोहि अपकारशीलं खद्योतसम्पर्कि

कुर्वन्ति परिसारिण्यो विद्युतः परिदेविनम् ।
अभ्याघातिभिरामिश्राश्चातकैः परिराटिभिः ॥ ७ ॥
संसर्गी परिदाहीव शीतोऽप्याभाति शीकरः ।
सोढुमाक्रीडिनोऽशक्याः शिखिनः परिवादिनः ॥ ८ ॥

---

ज्योतिरिङ्गणसंसर्गशीलं नयनामोषि नेत्रापहारकं ज्वरमरोगे दूयंसुयतने ल्टद्रुह्मजिघांसे पृच् धीचसंपर्के मुषलुटने एभ्योग्रहादित्वात् णिन् पृचः कङ् निपातात् एभ्यो घञक्तेभ्योऽस्त्यर्थे इन् वा ॥ ६ ॥ भ०

कुर्वन्तीत्यादि। एता विद्युतः परिदेविनं परिदेवनशीलं कुर्वन्ति मामित्यर्थात्। कीदृश्यः परिसारिण्यः परिसरणशीलाः चातकैः पक्षिविशेषैः परिराटिभिः परिरटनशीलैः एवञ्चाभ्याघातिभिः अभिहननशीलैः दुःखोत्पादनात् आमिश्रा युक्ताः विद्युतः पूर्ववत् णिनुण् ॥ ७ ॥ ज० म०

कुर्वेत्यादि। विद्युतोऽर्थान्मां परिदेविनं विलापशीलं कुर्वन्ति परिसारिण्यः परिसरणशीलाः दुःखोत्पादकतया अभिहननशीलैः परितो रटनशीलैश्चातकैः पक्षिविशेषैर्युक्ताः सृगतौ देवृङ्देवने हनलौ गतौ वधे रटवाचि एभ्यो ग्रहादित्वाण्णिन् विपूर्वात् द्योततेः क्विप् विद्युत् ॥ ७ ॥ भ०

संसर्गीत्यादि। संसर्गी संसर्जनशीलः शीतोऽपि शीकरो विन्दुः परिदाहीव परिदहनशील इवाभाति शिखिनश्च मयूराः सोढुमशक्याः आक्रीडिनो नर्त्तनशीलाः परिवादिनः परिवदनशीला इव। इवशब्दश्चात्र लुप्तो द्रष्टव्यः। पूर्ववत् णिनुण् ॥ ८ ॥ ज० म०

संसेत्यादि। शीकरः शीतोऽपि संसर्गसाधुकारी अपि सन् परिदहनशील इव आभाति। शिखिनो मयूराः सोढुम्

एता दैवानुरोधिन्यो द्वेषिण्य इव रागिणम् ।
पीडयन्ति जनं धाराः पतन्त्योऽनपकारिणम् ॥ ९ ॥
कुर्य्याद्योगिनमप्येष स्फूर्जावान् परिमोहिनम् ।
त्यागिनं सुखदुःखस्य परिक्षेप्यम्भसामृतुः ॥ १० ॥

---

शक्याः । कीदृशाः आक्रीड़नशीलाः परि सर्वतो वदनशीलाः साधुभाषिणो वा रन्जोऽपषकालासघिनाविति ज्ञापकात् क्वचित् घिनुण्प्रत्ययोऽस्तीति प्राप्तं तेन रुजेर्घिनि चजोः कगाविति गत्वं घञन्तादस्त्यर्थे इन् वा दहिक्रीड़वदिभ्यो ग्रहादित्वात् णिन् ॥ ८ ॥ भ०

एता इत्यादि । एता धाराः पतन्त्यो द्वेषिण्य इव द्वेषणशीला इव जनं रागिणं रागशीलं अनपकारिणमनपराधशीलं पीडयन्ति दैवानुरोधिन्यः भाग्यानुरोधात् प्रवर्त्तनशीलाः पूर्ववत् घिनुण् घिनुणि च रन्जेरुपसंख्यानमित्यनुनासिकलोपः क्वतानन्नुनासिकनिर्देशाद्वा लोपनिपातनम् ॥ ९ ॥ ज० म०

एता इत्यादि । एताः पतन्त्यो धाराः द्वेषशीला इव अनपकारशीलमपि जनं पीडयन्ति दैवानुरोधात् प्रवर्त्तनशीलाः रुधद्विषकुभ्यो ग्रहादित्वात् णिन् रन्जेः संसर्गिवत् घिनि रन्जोऽपसर्केति नलोपः घञन्तनिष्पादितरागशब्दात् इन् वा ॥ ९ ॥ भ०

कुर्य्यादित्यादि । एष ऋतुरम्भसां जलानां परिक्षेपी परित्यजनशीलः कर्मणि षष्ठी योगिनमपि योगशीलमपि सुखदुःखस्य त्यागिनं त्यागशीलं कर्मणि षष्ठी परिमोहिनं परिमोहनशीलं कुर्य्यात् । कीदृशः स्फूर्जावान् वज्रनिर्घोषयुक्तः पूर्ववत् घिनुण् ॥ १० ॥ ज० म०

कुर्य्यादित्यादि । एषोऽम्भसां परिक्षेपी परित्यागशीलः

विकत्थी याचते प्रत्तमविस्रम्भी मुहुर्जलम् ।
पर्जन्यञ्चातकः पक्षी निकृन्तन्निव मानसम् ॥ ११ ॥
प्रलापिनो भविष्यन्ति कदा न्वेतेऽपलाषिणः ।

---

ऋतुर्योगिनं शास्त्रविधिना योगि साधुकारिणमपि सुखदुःखस्य त्यागशीलमपि परि सर्वतो मोहशीलं कुर्य्यात् । यतः स्फूर्जा-वान् वज्रनिर्घोषयुक्तः तेन कामस्य भयस्य चोत्पादात् केचित्तु योगिनं कान्तायुक्तं वज्रनिर्घोषेण सुखत्यागिनं कान्तालिङ्ग-नेन च दुःखत्यागिनमित्याहुः । युजेः संसर्गिवत् घिन् घञन्ता-दिन् वा सुहिन्त्विपिभ्यां ग्रहादित्वाणिन् ॥ १० ॥ भ०

विकेत्यादि । चातको मानसं निकृन्तन्निव खण्डयन्निव प्रत्तं प्रदत्तम् अच उपसर्गात्तः जलं याचत इति प्रधानं कर्म पर्जन्यमित्यकथितम् । विकत्थी विकत्थनशील इव पर्जन्योऽपि मह्यं जलं ददाति इवशब्दो लुप्तोऽत्र द्रष्टव्यः । अविस्रम्भी अवि-श्वासशीलः मानसखण्डनात् वीकषलसेति घिनुण् ॥ ११ ॥ ज०म०

विकेत्यादि । चातकः पक्षिविशेषो मम मानसं निकृन्तन्निव खण्डयन्निव व्योम्नि मुहुः पुनः पुनः प्रदत्तमपि जलं पर्जन्यं मेघं याचते याचिर्द्विकर्मकः । यतोऽविस्रम्भी अविश्वासशीलः तृषाव्याकुलत्वात् प्राप्तेऽपि जले जलं याचत इत्यर्थः विकत्थी श्लाघाशीलः कत्थङ्श्लाघे स्रन्भुङ्विश्वासे दन्त्यादिः आभ्यां ग्रहादित्वात् णिन् प्रपूर्वस्य दाञो ण्यचस्तन्नेति तादेशः पृषुसेके इत्यस्यान्यप्रत्यये चवर्गतृतीयो निपात औणादिक इत्यर्जुनदत्तः । कृतीश्छेदने कृतीशपश्छेदि मुचादित्वात् नुणरधोमुचा-मिति नुण् ॥ ११ ॥ भ०

प्रलापीत्यादि । एते पापदर्दुराः पापाश्च ते दर्दुराश्चेत्याक्रो-शाभिधानं कदा नु अपलाषिणो भविष्यन्ति अपलषणशीलाः

प्रमाथिनो वियुक्तानां हिंसकाः पापदर्दुराः ॥ १२ ॥
निन्दको रजनिम्मन्यं दिवसं क्लेशको निशाम् ।
प्रावृष्यनैषीत् काकुत्स्थः कथञ्चित्परिदेवकः ॥ १३ ॥

---

व्यपगतकामा इत्यर्थः लषकान्तौ अपे च लष इति घिनुण् प्रलापिनः प्रलपनशीलाः प्रमाथिनः प्रमथनशीलाः चेतसा-मित्यर्थात् पेलपेत्यादिना घिनुण् अतएव वियुक्तानां मादृशां हिंसकाः हिंसनशीलाः इत्येवं विललाप निन्दहिंसेत्यादिना वुञ् ॥ १२ ॥ ज० म०

प्रलेत्यादि। एते पापदर्दुराः पापिनो भेकाः कदा अप-लषणशीलाः व्यपेतकामा भविष्यन्ति तदैव तत्प्रलापनिवृत्त्या दुःखानुत्पत्तिः पापशब्द आक्रोशपूर्वककुत्साद्योतनाय प्रयुक्तः प्रलापकरणशीलाः प्रलापोऽनर्थकं वचः वियुक्तानां भार्य्यावि-रहिणां प्रमाथिनः साधुप्रमथनकारिणः यतो हिंसकाः हिंसा-शीलाः लपलषमथिभ्यो ग्रहादित्वात् णिन् हिंसेः वुसकौ चे इति णकः। एवं विललापेति सम्बन्धनीयमेतत्पर्य्यन्तम् ॥ १२ ॥ भ०

निन्देत्यादि। काकुत्स्थो दिवसं रजनिम्मन्यं रजनीमा-त्मानं मन्यमानं घनान्धकारित्वात् आत्ममाने खश् खित्यनव्य-यस्येति ह्रस्वत्वं निशाञ्च प्रावृषि कथमप्यनैषीत् नीतवान् निन्दकः निन्दनशीलः नक्तन्दिनस्येत्यर्थात् क्लेशकः क्लेश-नशीलः परिदेवकः परिदेवनशीलः आत्मन इत्यर्थात् ॥ १३ ॥ ज० म०

निन्देत्यादि । काकुत्स्थः प्रवृषि वर्षाकाले कथञ्चित् कथमपि दिवसं निशाञ्च अनैषीत् गमयामास। कीदृशः नि-न्दकः निन्दाशील: अर्थादात्मनः दिनरात्र्योर्वा दिवसं निशाञ्च

अथोपशरदेऽपश्यत् क्रौञ्चानाञ्चेष्टनैः कुलैः ।
उत्कण्ठावर्द्धनैः शुभ्रं रवणैरम्बरं ततम् ॥ १४ ॥
विलोक्य द्योतनं चन्द्रं लक्ष्मणं शोचनोऽवदत् ।

---

निन्दक इति ये वदन्ति तन्मते ढवे क्लतीत्यादौ शीलार्थत्वन्नित्यत्र तृन्नित्युपलक्षणं शीलार्थे एकस्यापि ग्रहणं तेन न षष्ठी क्लेशकः क्लेशशीलः परिदेवकः साधु देवनकारी सन् दिवसं कीदृशं रजनिम्मन्यम् आत्मानं रजनिं रात्रिं मन्यमानं तत्त्वमिति यावत् घनान्धकारात् खिदिक्लिशिदेविभ्यः वुञ्को चे इति णकः ॥ १३ ॥ भ०

अथेत्यादि । अथानन्तरमुपशरदे शरत्समीप इत्यव्ययीभावे शरत्प्रभृतिभ्य इति समासान्तष्टच् तृतीयासप्तम्योर्बहुलमित्यमभावः क्रौञ्चानां कुलैस्ततं व्याप्तमम्बरं शुभ्रं शुक्लमपश्यत् दृष्टवान् चेष्टनैः व्यापारशीलैः रवणैः शब्दनशीलैः अनयोश्चलनशब्दार्थत्वात् चलनशब्देत्यादिना युच् उत्कण्ठावर्द्धनैः उत्कण्ठावर्द्धनशीलैः अनुदात्तेतश्चेति युच् क्रौञ्च इति क्विन् प्रत्ययान्तत्वात् प्रज्ञादित्वादण् ॥ १४ ॥ ज० म०

अथेत्यादि । अथानन्तरम् उपशरदे शरत्कालस्य समीपे काकुत्स्थोऽम्बरमाकाशमपश्यत् । कीदृशं क्रौञ्चानां पक्षिविशेषाणां कुलैः समूहैः ततं व्याप्तम् अतएव शुभ्रं धवलं कीदृशैश्चेष्टनैः साधुचेष्टां कुर्वद्भिः उत्कण्ठाया भार्य्याविषयिकाया वर्द्धनैः वृद्धिशीलैः साधूत्कण्ठावृद्धिकारिभिर्वा रवणैः साधुशब्दं कुर्वद्भिः चेष्टवृधिरुभ्यो नन्द्यादित्वादनः वृधिरत्र अन्तःशरदोऽव्ययीभावे शरद्विपाडय इति अः वीप्स्योर्वेति पक्षे मप्रवृत्तिः क्रुङेव क्रौञ्चः स्वार्थे णः ॥ १४ ॥ भ०

विलोक्येत्यादि । चन्द्रं विलोक्य द्योतनं साधु द्योतमानम्

पश्य दन्द्रमणान् हंसानरविन्दसमुत्सुकान् ॥ १५ ॥
कपिश्चङ्क्रमणोऽद्यापि नासौ भवति गर्द्धनः ।
कुर्वन्ति कोपनं तारा मण्डनं गगनस्य माम् ॥ १६ ॥

---

अनुदात्तेतश्चेति युच् शोचनः शोचनशीलः जुचङ्क्रम्येत्यादिना युच् रामो लक्ष्मणमवदत् पश्य हंसान् दन्द्रमणान् शनैर्द्रमणशीलान् द्रमेर्नित्यं कौटिल्य एव भवति न तु क्रियासमभिहार इत्युक्तं तदन्ताद्युच् अतो लोपः यस्य हलः अरविन्दसमुत्सुकान् प्रसितेति सप्तमीं विधाय सप्तमीति योगविभागात् सः ॥ १५ ॥ ज० म०

विलोक्येत्यादि। चन्द्रं विलोक्य रामो लक्ष्मणमब्रवीत्। चन्द्रं कीदृशं द्योतनं द्योतमानं शोचनः शोकशीलो रामः किमुक्तवानित्याह हंसान् त्वं पश्य। कीदृशान् दन्द्रमणान् कुटिलगमनशीलान् अरविन्देषु पद्मेषु समुत्सुकान् द्युतश्चङ्क्लुगन्तद्रमिभ्यो नन्द्यादित्वादनः विपरीतदिशां देशानां गमनमिह वक्रम् ॥ १५ ॥ भ०

कपिरित्यादि। नासौ कपिः सुग्रीवोऽद्यापि चङ्क्रमणः शनैर्गमनशीलो न भवति यतो गर्द्धनोऽभिलाषशीलः स्त्रीष्विच्यर्थात् पूर्ववद्युच् ताराश्च मां कोपनं कोपनशीलं तद्विषय एव कुर्वन्ति। कीदृश्यः गगनस्य मण्डना भूषणाः क्रुधमण्डार्थेभ्यश्चेति युच् ॥ १६ ॥ ज० म०

कपिरित्यादि। असौ कपिः सुग्रीवोऽद्यापि कुटिलगतिशीलो न भवति नाना दिक्षु गमनं न करोतीत्यर्थः यतो गर्द्धनः अभिलाषशीलः अर्थात् भोगेषु तारा मां कोपनं कोपशीलं कुर्वन्ति तद्विषय इत्यर्थात्। कीदृश्यः गगनस्य मण्डनं साधुभूषाकारिण्यः यङ्लुगन्तक्रमेर्गृधुकुपमण्डिभ्यश्च नन्द्यादित्वा-

नावैत्याप्यायितारं किं कमलानि रविं कपिः।
दीपितारं दिनारम्भे निरस्तध्वान्तसञ्चयम् ॥ १७ ॥
अतीतेँ वर्षुके काले प्रमत्तः स्थायुको गृहे।
गामुको ध्रुवमध्वानं सुग्रीवो वालिना गतम् ॥ १८ ॥

---

टनः वेदाः प्रमाणमित्यादिवत् सामान्योपक्रमान्नपुंसकत्वमेकत्वञ्च किंवा मामित्यस्य विशेषणम् आकाशवासित्वाद्गगनभूषणं मामित्यर्थः अहमाकाशवासी सोऽद्यापि गृहे तिष्ठतीति कोपहेतुः ॥ १६ ॥ भ०

नावैत्येत्यादि। किमसौ कपिः रविं नावैति नावगच्छति कमलान्याप्यायितारं साधु वर्द्धयन्तम् अनुदात्तेतश्चेति प्राप्ते नय इति प्रतिषिद्धे तृन्नेव भवति ततश्च नलोकेति षष्ठीप्रतिषेधः दिनारम्भे दीपितारं साधु दीप्यमानं पूर्ववद्युचि प्राप्ते सूददीपदीक्षेति प्रतिषेधः निरस्तध्वान्तसञ्चयम् अपनीतान्धकारसंहतिकं किमसौ शरत्समयं नावैतीत्यर्थः ॥ १७ ॥ज०म०

नावैत्येत्यादि। किमसौ कपिरीदृशं सूर्य्यं नावैति शरत्कालमागतं किं न जानातीत्यर्थः। कीदृशं रविं कमलानि आप्यायितारं पद्मवृद्धिं साधु कुर्वन्तं दिनारम्भे दीपितारं साधु दीप्यमानम् अपनीतान्धकारसमूहं प्यायिदीपिभ्यां तृसकौ घे इति तृन् ढघे क्तीत्यादौ शीलार्थस्योपलक्षणत्वान्न कर्मणि षष्ठी क्वचिदपवादविषयेऽप्युत्सर्गोऽपि प्रवर्त्तत इति वा द्वितीया ॥ १७ ॥ भ०

अतीत्यादि। वर्षुके वर्षणशीले काले अतीतेऽपि गृहे स्थायुकः स्थितिशीलः शरदि नागतत्वात् प्रमत्तः सन् सुग्रीवो वालिना गतम् अध्वानं प्राप्तमार्गं ध्रुवमवश्यं गामुकः साधु गन्ता लषपतेत्युकञ् नलोकेति षष्ठीप्रतिषेधः ॥ १८ ॥ ज०म०

जल्पाकीभिः सहासीनः स्त्रीभिः प्रजविना त्वया ।
गत्वा लक्ष्मण ! वक्तव्यो जयिना निष्ठुरं वचः ॥ १९ ॥

---

अतीत्यादि । असौ सुग्रीवो बालिना गतमध्वानं यम-मार्गं ध्रुवं निश्चितं गामुकः साधु गमिष्यति यतः वर्षुके वृष्टि-शीले काले अतीतेऽपि गृहे स्थायुकः स्थितिशीलः अतएव प्रमत्तः अनवहितः वृषस्यागमिभ्यः शृस्थाभूकमेति उकः ढचे क्षतीत्यादौ उक्तवर्जनान्न कर्मणि षष्ठी ॥ १८ ॥ भ०

जल्पेत्यादि । हे लक्ष्मण ! त्वया प्रजविना प्रकृष्टगमन-शीलेन प्रजोरिनिः जयिना अभिभवनशीलेन जिदृक्षीत्या-दिना इनिः सुग्रीवो निष्ठुरं वचोऽभिधातव्यः जल्पाकीभिः जल्पनशीलाभिः स्त्रीभिः सहासीनः जल्पभिक्षेति षाकन् षित्वात् ङीष् तन्मध्ये हि परुषमभिधीयमानः परिभवं मन्यत इति भावः ॥ १९ ॥ ज० म०

जल्पेत्यादि । हे लक्ष्मण ! त्वया गत्वा सुग्रीवो निष्ठुरं वचो वक्तव्यः कथनीयः सुग्रीवस्य गौणकर्मत्वात् गौणे याचा-दय इति तत्रैव प्रत्ययः । सुग्रीवः कीदृशः जल्पाकीभिर्जल्पन-शीलाभिः साधु जल्पन्तीभिर्वा स्त्रीभिः सह आसीनः उपविष्टः भिक्षजल्पकुट्टेति षाकः षित्वादीप् यासोऽस्येत्यनेन आसः शानस्य आ ईत्वम् । त्वया कीदृशेन प्रजविना प्रकृष्टवेगवता जयिना जययुक्तेन जुजिभ्यामनन्ताभ्यामस्त्यर्थे इन् किंवा कृत्तद्धितसमासानामभिधानं नियामकमित्युक्तेस्तद्धितषणा-दिवत् कृत्प्रत्यया अपि क्वचित् सेतोऽनितश्च भवन्ति तेन ग्रहादित्वात् णिनो सकारेत्त्वाविवक्षया वृद्ध्यभावे गुणेऽङ इति गुणः परे तु शीलाचारसाधुषु जुजिप्रभृतिभ्य इन् वर्त्तमान इत्याहुः ॥ १९ ॥ भ०

शैले विश्रयिणं क्षिप्रमनादरिणमभ्यमी।
न्याय्यं परिभवी ब्रूहि पापमव्यथिनं कपिम्॥ २०॥
स्पृहयालुं कपिं स्त्रीभ्यो निद्रालुमदयालुवत्।
श्रद्धालुं भ्रामरं धारुं सद्गुमद्री वद द्रुतम्॥ २१॥

---

शैले इत्यादि। कपिं क्षिप्रं गत्वा ब्रूहि इत्यकथितं कर्म न्याय्यं वच इति प्रधानं कर्म अस्य चातिस्पष्टार्थत्वादिदं तदिति न सन्दिष्टम् अनादरिणमनादरशीलं कपिं कालातिक्रमणात् आङ्पूर्वाद्दृङ् अतएव पापं दुराचारम् अव्यथिनं निर्भयशीलं नञ्पूर्वो व्यथिः शैले विश्रयिणं तत्र स्थितिशीलं विपूर्वः श्रयतिः त्वं चाभ्यमी अभिमुखगमनशीलः अभिपूर्वोऽमगत्यादिषु परिभवी साधु परिभवं जनयन् परिपूर्वो भवतिः अत्र सर्वत्र जिदृक्षीत्यादिना इनिः॥ २०॥ ज० म०

शैले इत्यादि। त्वं क्षिप्रमभ्यमी शीघ्रमाभिमुख्येन साधु गतः सन् परिभवी साधु परिभवं कुर्वन् न्याय्यं न्यायादनपेतं वचस्तं कपिं ब्रूहि। कीदृशं कपिं शैले विश्रयिणं स्थितिशीलम् अनादरिणं मयि अनादरशीलं पापं दुराचारं यतोऽव्यथिनं निर्दयशीलं श्रिदृश्रमभूव्यथानां प्रजविवत् तथा रूपाणि॥ २०॥ भ०

स्पृहेत्यादि। स्त्रीभ्यः स्पृहयालुं कपिं साधु स्पृहयन्तं स्पृहिः स्वार्थिकण्यन्तोऽदन्तश्च अयामन्तेत्ययादेशः स्पृहेरीप्सित इति सम्प्रदानसंज्ञा द्रुतं वद ब्रूहि अदयालुवत् अदयनशील इव निद्रालुं निद्राशीलम् अस्मत्कार्य्येष्वनवधानत्वात् शयनीय एव सर्वदा स्थितत्वात् स्त्रीभिः सह श्रद्धालुं साध्वभिलषन्तं भ्रामरं भ्रमरैः कृतं क्षुद्राभ्रमरेत्यादिना अञ् मध्वित्यर्थात् नलोकेति षष्ठीप्रतिषेधः स्पृहिगृहीत्यादिना आलुच्

क्षमरोऽभङ्गुरप्रज्ञो गृहीत्वा भासुरं धनुः ।
विदुरो जित्वरः प्राप लक्ष्मणो गत्वरान् कपीन् ॥ २२ ॥

---

श्रद्धालुत्वादेव धारु' साधु पिबन्तं भ्रामरमेव सद्रु' साधु सीदन्त' दाधेट्सिशदसदो रुः ॥ २१ ॥ ज० म०

स्पृहेत्यादि। द्रुतं शीघ्रं त्व' कपिं वद विषादे पौनरुक्त्य' न दोषाय अतिदार्ढ्यार्थत्वात् कीदृशं स्त्रीभ्यः स्पृहयालु' स्पृहशीलं साधु स्पृहयन्तं वा यस्मैदित्सेत्यादिना संप्रदानत्वम् अदयावन्तमिव निद्रावन्त' भ्रमरैः कृतं भ्रामरं मधु ढघे कादिति ष्णः तत् धारु' साधु पिबन्त' तथापि तत्र श्रद्धालुम् अभिलाषवन्तम् एतेन पानासक्ततया प्रमत्तत्व' दर्शितम् अद्रौ किष्किन्धापर्वते सद्रु' साधु सीदन्त' तिष्ठन्तमित्यर्थः एवं रामो लक्ष्मणमब्रवीदिति पूर्वेणान्वयः स्पृहत्क्षेप्से पतिगृहिस्पृहीति आलुः निद्रादयाश्रद्धाशब्देभ्यो गोत्वणमेधेत्यादिना निद्रादित्वादस्त्यर्थे आलुः निपूर्वद्रादयश्रत्पूर्वधाञ् इत्येतेभ्यः स्पृहयालुवदालुरिति परे धेट्सदिभ्यां शतसत्सिधेदो रुरिति रुः ॥२१॥ ज० म०

क्षमेत्यादि। लक्ष्मणः कपीन् प्राप। कीदृशः क्षमरः साधु गन्ता क्षघस्यदः क्मरच् भङ्गुरा ये स्वयमेव भज्यन्ते भञ्जभासेति घुरच् तान् प्रजानातीति भङ्गुरप्रज्ञ इति कः विदुरः साधु वेदी विदिभिदिच्छिदेः कुरच् जित्वरः साधु जयशीलः इणनशजीत्यादिना क्करप् गृहीत्वा धनुर्भासुरं भासनशीलं गत्वारान् गमनशीलान् कपीन् अस्थिरप्रकृतीनित्यर्थः गत्वरेति निपातितं गमेः क्वरप्यनुनासिकलोपः ॥ २२ ॥ ज० म०

क्षमेत्यादि। लक्ष्मणो भासुरं दीप्तिशीलं धनुर्गृहीत्वा गत्वरान् अस्थिरप्रकृतीन् तद्भयात् पलायमानान् वा कपीन्

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



तं जागरूकः कार्य्येषु दन्दशूकरिपुं कपिः ।
अकम्प्रं मारुतिर्दीप्रं नम्रः प्रावेशयद् गुहाम् ॥ २३ ॥

प्राप । कीदृशः स्मरः साधु सरति गच्छतीति घसस्रदः क्मरः भङ्गुरान् स्वयमेव भञ्जनशीलान् अर्थात् कपीन् प्रजानातीति कृगृज्ञाप्रीति कः यद्वा नञः प्रश्लेषात् अभङ्गुरा स्थिरा प्रज्ञा बुद्धिर्यस्य स तथा साधु वेत्तीति विदुरः जित्वरी जयशीलः भन्जिभासिभ्यां भिद्भासभन्ज इति घुरः क्कङोः कभाव इत्युक्तेः कर्त्तरि विहितोऽपि घुरो भन्जेः कर्मकर्त्तरि बोध्यः भज्यते स्वयमेवेति भङ्गुरः चजोः कगाविति गत्वं वेत्तेश्छिदिभिदि इति कुरः जिगमिभ्यां त्वरप्सृजीनित्यादिना त्वरप् मस्य तस्य स्वस्य तन् पिति ॥ २२ ॥ भ०

तमित्यादि । तं लक्ष्मणं कपिर्मारुतिः गुहां प्रावेशयत् विशेर्हेतुमण्ण्यन्तात् लङि रूपं कार्य्येषु कृत्येषु जागरूकः सावधानः जागरूक इति जागर्तेरूकः दन्दशूकारिपुं हिंसारिं यजजपेत्यादिना दंशेर्यङन्तादूकः लुपसदेत्यादिना यङ् दीप्रं साधु दीप्यमानम् अकम्प्रम् अकम्पनशीलम् अभीरुमित्यर्थः नम्रः साधु प्रह्वीभूतः सर्वत्र नमिकम्पीत्यादिना रः ॥ २३ ॥ ज० म०

तं जेत्यादि । कपिर्मारुतिर्हनूमान् तं लक्ष्मणं गुहां किष्किन्धां प्रवेशयामास प्रवेशोऽपि गतिभेदः तेन घोर्जेः शब्दासनगतीत्यादिना प्रयोज्यकर्त्तुः कर्मत्वं गुहेति भिदादित्वात् भीषिचिन्तीत्यादिना ङः स्त्रीत्वञ्च । कीदृशो मारुतिः कार्य्येषु जागरूकः साधु सावधानः नम्रः साधु प्रह्वीभूतः । तं कीदृशं दन्दशूकानां हिंसाणां रिपुम् अकम्प्रं अकम्पनशीलं निर्भयमित्यर्थः दीप्रं दीप्तिशीलं जाग्रयङन्तदन्शिभ्यां जाग्रयङन्तयजेत्यादिना ऊकः दन्शो नलोपो वेति यङ्लुकि नस्य

कम्राभिरावृतः स्त्रीभिराशंसुः क्षेममात्मनः।
इच्छुः प्रसादं प्रणमन् सुग्रीवः प्रावदन्नृपम् ॥ २४ ॥
अहं स्वप्नक् प्रसादेन तव वन्दारुभिः सह।
अभीरुरवसं स्त्रीभिर्भास्वराभिरिहेश्वरः ॥ २५ ॥

---

लोपः जसजपेत्यादिना खेर्नुण् कम्पिदीपिपणिभ्यो हिंसदीपेत्यादिना रः ॥ २३ ॥ भ०

कम्रेत्यादि। सुग्रीवः प्रावदन् नृपं लक्ष्मणं स्त्रीभिरावृतः परिवृतः सन् प्रणमन् ताभिः सहेत्यर्थः कम्राभिः कमनशीलाभिः पूर्ववद्रः आत्मनः क्षेमं कल्याणमाशंसुः प्रार्थयमानः सनाशंसभिक्ष उः नलोकेति षष्ठीप्रतिषेधः। इच्छुः प्रसादं प्रसादमिच्छणशीलः अपि मे स्वामी प्रसन्नः स्यादिति विन्दुरिच्छुरिति निपातनम् ॥ २४ ॥ ज० म०

कम्रेत्यादि। सुग्रीवो नृपं लक्ष्मणं प्रावदत् कम्राभिः कामुकीभिः स्त्रीभिः परिवृतः सन् प्रणमन् अर्थात् ताभिः सह पूर्ववत् रः आत्मनः क्षेमं कुशलं आशंसुः इच्छुः सनभिक्षाशंस उः अतएव तस्य प्रसादं इच्छुः साधु इच्छन् विन्दिच्छु इति निपातः ढघे कृतीत्यादौ उदन्तवर्जनात् न षष्ठी ॥ २४ ॥ भ०

अहमित्यादि । अहं तव प्रसादेन इह गुहायामवसं उषितवात् स्वप्नक् निद्रालुः चिन्ताभावात् स्वपितृषोर्नजिङ् वन्दारुभिर्वन्दनशीलाभिः सह शृवन्द्योरारुः अभीरुः अभयशीलः भियः क्रुक्लुकनौ भास्वराभिः भासनशीलाभिः ईश्वरः ईशनशीलः स्थेशभासेति वरच् ॥ २५ ॥ ज० म०

अलमित्यादि। किमुक्तवानित्याह हे ईश्वर! तव प्रसादेनाहं स्त्रीभिः सह इह गुहायां अवसम् उषितवानस्मि। अ हं

विद्युन्नाशं रवेर्भासं विभ्राजं शशलाञ्छनम् ।
रामप्रत्तेषु भोगेषु नाहमज्ञासिषं रतः ॥ २६ ॥
एष शोकच्छिदो वीरान् प्रभो ! सम्प्रति वानरान् ।
धरासमुद्रशैलानामन्तगान् प्रहिणोम्यहम् ॥ २७ ॥

इति ताच्छीलिकाः समाप्ताः ।

---

कीदृशः स्वप्नक् साधु स्वपन् स्वपतृषगृधधृषोऽन्नज् भ्रज् अभी-रुर्भयहीनः क्रुक्रुकौ भिय इति क्रुः । कीदृशीभिः स्त्रीभिः वन्दारुभिः प्रणामशीलाभिः साधु स्तुतिं कुर्वाणाभिर्वा शृवन्द आरुः भास्वराभिः दीप्तिशीलाभिः साधु दीप्यमानाभिर्वा भासीशिभ्यां यायायभास्करसेत्यादिना वरः ॥ २५ ॥ भ०

विद्युदित्यादि । रामप्रत्तेषु रामदत्तेषु भोगेषु रतः सक्तः नाहमज्ञासिषं नाहं ज्ञातवान् लुङि यमरमेत्यादिना सगिटौ विद्युन्नाशं द्योतनशीला विद्युतः तासां नाशं रवेर्भासः भासनशीला दीप्तीर्विभ्राजं साधु दीप्यमानं शशलाञ्छनं चन्द्रं प्रावृड़तिक्रान्ता शरदायातेति नाज्ञासिषमित्यर्थः सर्वत्र भ्राजभासेति क्विप् ॥ २६ ॥ ज० म०

विद्युदित्यादि । अहं रामेण प्रत्तेषु भोगेषु रतः आसक्तः सन् विद्युतां नाशं सूर्य्यस्य दीप्तिं साधु दीप्यमानं चन्द्रञ्च नाज्ञासिषं न ज्ञातवानस्मि शरदागमनं न ज्ञातवान् गृहे तिष्ठामीति भावः यमरमेति इमसनौ विभ्राजत इति क्विप् ॥ २६ ॥ ज० म०

एष इत्यादि । हे प्रभो ! एषोऽहं सम्प्रति वानरान् प्रहिणोमि प्रस्थापयामि । कीदृशान् शोकच्छिदः शोकापनोदनशीलान् अन्येभ्योऽपि दृश्यत इति क्विप् वीरान् शूरान् धराशैलसमुद्राणां अन्तं गच्छन्ति ये तानन्तगान् अन्तात्यन्तेति

अथ निरधिकारवृत्त् ।

राघवस्य ततः कार्य्यं कारुर्वानरपुङ्गवः ।
सर्ववानरसेनानामाश्वागमनमादिशत् ॥ २८ ॥

डः धरा पृथ्वी धरासमुद्रशैलानामिति पाठान्तरं अत्र बहुष्व-नियम इति पूर्वनिपातः यथा वीणाशङ्खदुन्दुभयः । इति ताच्छीलिकवृत्तः ॥ २७ ॥ ज० म०

एष इत्यादि । हे प्रभो ! एषोऽहं सम्प्रति वानरान् प्रहि-णोमि प्रेरयामि सैन्यानयनायेत्यार्थात् कीदृशान् शोकच्छिदः शोकापनोदनशीलान् तासुसिति क्विप् वीरान् समर्थान् अत-एव पृथिवीसमुद्रपर्वतानामप्यन्तगान् अन्तं गच्छन्तीति हन-जनादिति डः प्रभवतीति प्रभुः स्वयंशंविसम्भादिति डुः प्रा-प्राग्वन्नोणोन्तरदुर्गेरित्यादिना नुविकरणस्य णत्वं इत्येवं सुग्रीवः प्रवदन्नृपमिति पूर्वेण सम्बन्धः । इति ताच्छीलिका उक्ताः ॥ २७ ॥ भ०

इतो विशेषाधिकाराभावात् निर्विशेषवृत्तो दर्शयन्नाह राघवस्येत्यादि । ततोऽभिधानानन्तरं वानरपुङ्गवः सुग्रीवः सर्ववानरसेनानामाशु शीघ्रमागमनमादिशत् आदिष्टवान् पुमांश्चासौ गौश्चेति गोरतद्धितलुकीति समासान्तष्टच् व्युत्प-त्तिमात्रमेतत् पुङ्गवशब्दस्तु प्रधानमाचष्टे कारुः करोतीति उणादयो बहुलमिति औणादिकः कृपावाजीत्यादिना उण् एवमाशु कस्य कर्त्तेत्याह राघवस्य कार्य्यम् ॥ २८ ॥ ज० म०

सम्प्रति निर्विशेषाः वृत्त उच्यन्ते राघवस्येत्यादि । तत्-कथानन्तरं वानरश्रेष्ठः सुग्रीवः सर्वासां वानरसेनानां आशु शीघ्रं आगमनं आदिशत् आज्ञापयामास नाम्नन्येतिक् चेति गमेर्डोः पुमांश्चासौ गौश्चेति गोरतार्थे इति षः व्युत्पत्ति-

वयमद्यैव गच्छामो रामं द्रष्टुं त्वरान्विताः ।
कारका मित्रकार्य्याणि सीतालाभाय सोऽब्रवीत् ॥ २९ ॥

---

मात्रमिदं पुङ्गवशब्दस्तूत्तरपदे प्रधानार्थः । कीदृशः राघवस्य कार्य्यं कारुः कर्त्ता अभिधानात् नाव्ययद्येतिक् चेत्यस्य क्वचिदसंज्ञायामपि प्रवृत्तिरिति तेन उण् रघिगताविल्यस्मात् पूर्वेण उक् नञा निर्दिष्टस्यानित्यत्वात् नेदित्यूजार्थाञ्चो-रित्यस्याप्रवृत्तेर्हसुङ्नलोपः तस्यापत्यमिति ष्णः अभ्रूङ्व्याप्तौ उण् आशु ॥ २८ ॥ भ०

वयमित्यादि । आगमनमादिश्य सुग्रीवोऽब्रवीत् उक्त-वान् वयमद्यैव गच्छाम इति रामं द्रष्टुं रामं द्रक्ष्याम इति त्वरान्विताः त्वरिता इत्यर्थः कीदृशा वयं सीतालाभाय सीतां प्राप्स्याम इति कारका मित्रकार्य्याणि रावणबधादेः कार्य्यस्य कर्त्तारो भविष्याम इति गच्छाम इति क्रियायां क्रियार्थाया-मुपपदे तुमन्ण्वुलौ भविष्यति काले स्यातां मित्रकार्य्याणीति अकेनोर्भविष्यदाधमर्ण्ययोरिति षष्ठीप्रतिषेधे द्वितीयैव स्यात् सीतालाभायेति भाववचनाच्चेति क्रियायां क्रियार्थायामुपपदे भविष्यति घञ् तुमर्थाच्च भाववचनादिति चतुर्थी ॥२९॥ ज०म०

वयमित्यादि । आगमनमादिश्य स सुग्रीव इदमब्रवीत् आदिष्टवान् कपीनित्यर्थात् । किमुक्तवानित्याह वयमद्यैव रामं द्रष्टुं गच्छामः अद्यैवेत्यनेन वानरानयनमद्यैव कार्य्यमिति त्वरा सूचिता बहुत्वं सेनासाहित्यात् सीतालाभाय त्वरायुक्ताः तादर्थ्ये चतुर्थी मित्रस्य रामस्य कार्य्याणि रावणबधादीनि कारकाः कर्त्तारः क्वचिदपवादविषयेऽप्युत्सर्गोऽपि प्रवर्त्तत इति षष्ठीविषये द्वितीया ॥ २९ ॥ भ०

ततः कपीनां सङ्घाता हर्षाद्राघवभूतये ।
पूरयन्तः समाजग्मुर्भयदाता दिशो दश ॥ ३० ॥
सुग्रीवान्तिकमासेदुः साधयिष्याम इत्यरिम् ।
कपिष्यन्त इवाकस्माद् भुवनं निर्दशाननम् ॥ ३१ ॥

---

तत इत्यादि। आदेशादनन्तरं कपीनां संघाताः समाजग्मुः हर्षात् हर्षेण आदेशादानमेव हर्षहेतुः राघवभूतये अपि नाम राघवस्य सम्पत् स्यादिति समाजग्मुरित्यस्यां क्रियायां क्रियार्थायामुपपदे भाववचनाच्चेति भविष्यति क्तिन् चतुर्थी इच पूर्ववत् पूरयन्तो व्याप्नुवन्तः दश दिशः भयदायाः भयं दास्याम इत्यस्यां क्रियायामुपपदे अण् कर्मणि चेत्यण् आतो युक् ॥ ३० ॥ ज० म०

तत इत्यादि। तत आदेशात् कपीनां संघाताः समूहा दश दिशः पूरयन्तो व्याप्नुवन्तो राघवस्य भूतये सम्पत्त्यर्थं हर्षादाजग्मुः किष्किन्धायामित्यर्थात् भयदायाः शत्रुभ्यो भयं ददातीति मित्राणां भयं घ्नन्ति खण्डयन्तीति वा खस-व्यधेनतनदेति णः जनञ्णिदिति यन् ॥ ३० ॥ भ०

सुग्रीत्यादि। अरिं शत्रुं साधयिष्यामो व्यापादयिष्याम इति सुग्रीवान्तिकमासेदुः आगताः लृट् शेषे चेति चकारात् क्रियार्थायामुपपदे भविष्यति लृट् आसेदुरिति क्रिया क्रियार्था अकस्मादतर्कितं भुवनत्रयं निर्दशाननं रावणरहितं करिष्यन्त इव तथाविधमहासंरम्भदर्शनादुत्प्रेक्ष्यते लृट् शेषे चेति लृट् अत्र क्रियायाः क्रियार्थाया अन्यः शुद्धो भविष्यत्कालः शेषः ॥ ३१ ॥ ज० म०

सुग्रीवेत्यादि। वयमरिं साधयिष्यामः व्यापादयिष्याम इति एतदर्थं सुग्रीवस्यान्तिकं समीपमासेदुरागताः कपीनां

कर्त्तास्मि कार्य्यमायातैरेभिरित्यवगम्य सः ।
काकुत्स्थपादपच्छायां शीतस्पर्शामुपागमत् ॥ ३२ ॥
कार्य्यसारनिभं दृष्ट्वा वानराणां समागमम् ।
अवैन्नाशं दशास्यस्य निर्वृत्तमिव राघवः ॥ ३२ ॥
इति निरधिकारकृत् ।

---

संघाता इत्यनुषज्यते अकस्मादतर्कितं यथा स्यात्तथा भुवनं रावणशून्यं करिष्यन्त इव महापराक्रमदर्शनादुत्प्रेक्षेयम् ॥ ३१ ॥ भ०

कर्त्तेत्यादि । एभिरायातैर्वानरैः कार्य्यं सीतान्वेषणादि कर्त्तास्मि करिष्यामीति अवगम्य अनद्यतने भविष्यति लुट् सुग्रीवः काकुत्स्थपादपच्छायामुपागमत् पद्यन्त इति पादाः पदरुजेति कर्त्तरि घञ् भविष्यतीति निवृत्तं पादैः पिबतीति पादपो वृक्षः आतोऽनुपसर्गे कः काकुत्स्थः पादप इव समाश्रयणीयत्वात् तस्य छायां शीतस्पर्शां अनुद्वेजनकरीं स्पृश्यत इति स्पर्शस्तन्मात्र उच्यते अकर्त्तरि चेति घञ् मनु पदरुजेत्यादिना तत्र हि स्पृश उपताप इति वक्तव्यमित्युक्तं स्पृशतीति स्पर्श उपतापः ॥ ३२ ॥ ज० म०

कर्त्तेत्यादि । आगतैरेभिर्वानरैरहं कार्य्यं सीतान्वेषणादिरूपं कर्त्तास्मि करिष्यामि श्वो रूपं इत्यवगम्य निश्चित्य सुग्रीवः काकुत्स्थपादपच्छायामुपागमत् रामान्तिकं गतवानित्यर्थः शीतस्पर्शां दुःखहन्त्रीमित्यर्थः पद्यत इति कर्त्तरि घञ् पादो मूलं तेन पिबति सेकजलमिति पादपो वृक्षः छाया स्यादातपाभावे शोभायामपि दृश्यते । अत्र लक्षणया समीपदेशवृत्तिः ॥ ३२ ॥ भ०

कार्य्येत्यादि । राघवः वानराणां समागमं दृष्ट्वा कार्य्यसा-

अतः परं वञधिकारः ।

ततः कपिसमाहारमेकं निश्चायमागतम् ।
उपाध्याय इवायामं सुग्रीवोऽध्यापिपद्दिशाम् ॥ २४ ॥

---

रनिभं सीतालाभतुल्यं सरति कालान्तरे तिष्ठतीति कर्त्तरि कारके स्थिर इति घञ् दशास्यस्य रावणस्य नाशं विनाशं निर्वृत्तमिव निष्पन्नमिव अवैत् ज्ञातवान् अवपूर्वादिणो लङि रूपम् । इति निरधिकाराः कृतः ॥ २३ ॥ ज० म०

कार्य्येत्यादि । वानराणां समागमं दृष्ट्वा राघवो दशास्यस्य नाशं निर्वृत्तं निष्पन्नमिव अवैत् ज्ञातवान् अवपूर्वादिनो घ्यादिप् । कीदृशं समागमं कार्य्यसारस्य सीतालाभस्य तुल्यं सरति कालान्तरमिति सारः कर्त्तरि घञ् नशेर्भावे घञ् । इति निरधिकाराः कृत उक्ताः ॥ २३ ॥ म०

अतः परं भावेऽकर्त्तरि च कारक इत्यधिकृत्य कृदुच्यते । तत इत्यादि ! कपिसमागमनान्तरं सुग्रीवः कपिसमाहारं कपिसमूहं दिशामायाममध्यापिपत् बोधितवान् अमुका अमुका दिक् ईदृशीति गतिबुद्धीत्यादिना समाहारस्य कर्म्मसंज्ञा आयामपरिज्ञानञ्चास्य बालिभयात् दूरपरिभ्रमणात् एकनिश्चायमागतं एकराशितां प्राप्तं आयाममित्यर्थः निश्चायमिति परिमाणाख्यायामिति घञ् पश्चादेकशब्देन पूर्वकालैकेति सः क इव उपाध्याय इति उपेत्याधीयते अस्मादिति इङश्चेति घञ् ॥ २४ ॥ ज० म०

अथाकर्त्तरि कारके कृत उच्यन्ते । तत इत्यादि । कपिसमागमानन्तरं सुग्रीवः कपीनां समाहारं समूहं दिशामायामं दैर्घ्यं अध्यापिपत् अध्यापितवान् अस्यां दिशि एतत्पर्य्यन्तं गन्तव्यमिति ज्ञापितवान् आयामज्ञानञ्चास्य वालिभ-

सजलाम्भोदसंरावं हनूमन्तं सहाङ्गदम्।
जाम्बवन्नीलसहितं चारुसन्द्रावमब्रवीत्॥ ३५॥
यात यूयं यमस्रायं दिशं नायेन दक्षिणाम्।

---

येन दूरभ्रमणात् घोऽश्रौजेःशब्दाशनगतिन्नित्यादिना समाहारस्य प्रयोज्यस्य कर्मत्वं क्रीजीङोऽजेति इङ श्रात्वं क्नोवी-त्यादिना पण् उपाध्याय इव यथा गुरुरध्यापयति तथेत्यर्थः उपे-त्याधीयतेऽस्मादिति ग्रजलनटोऽघे इति घञ्। कीदृशमायामं एकं निस्रायं स्नानं आगतं प्राप्तं अत्यभ्यासात् सर्वासां दिशां दैर्घ्यं सुग्रीवस्य स्नानारूढमित्यर्थः पूर्वेण घञ् एको निस्रायो निश्चयो यस्येति कपिसमाहारस्य विशेषणं वा एतेनैकवा-क्यता दर्शिता एवमागतं यमिर्वञि जनबध इत्यादिना पचे क्रस्वाभावः॥ ३४॥ भ०

सजेत्यादि। सुग्रीवो हनूमन्तमब्रवीत् सजलाम्भोदसंरावं सजलमेघस्येव संरावो यस्य हनूमतः उपसर्गे रुव इति घञ् सहाङ्गदं अङ्गदसहितं तथा जाम्बवं ऋक्षाधिपतिं नीलस-हितमब्रवीत् जाम्बवशब्दोऽकारान्तो द्रष्टव्यः चारुसन्द्रावं चारुगतिं समियुदुद्रुव इति घञ्॥ ३५॥ ज० म०

सजेत्यादि। सुग्रीवो हनूमन्तमब्रवीत् सजलस्य मेघस्येव संरावः शब्दो यस्य तं अतिगम्भीरस्वनमित्यर्थः पूर्वेण घञ् उपसर्गाद्रुव इति परः अङ्गदेन सह विद्यमानं जाम्बवता नीलेन च सहितं नीलसहितं जाम्बवञ्चाब्रवीदिति वा जाम्ब-वान् जाम्बवोऽपि चेति विश्वः चारुसंद्रावं मनोहरगतिं पूर्वेण घञ् समत्प्रेभ्यो द्रुव इति परः॥ ३५॥ भ०

यातेत्यादि। यूयं यात गच्छत यमस्रायं यमस्नानं अय-त्येनमिति श्रिणीभुवोऽनुपसर्गे इति घञ् कर्मणि कां दक्षिणां

विद्रावैस्तोयविस्रावं तर्जयन्तो महोदधेः ॥ ३६ ॥
उन्नायानधिगच्छन्तः प्रद्रावैर्वसुधाभृताम् ।
वनाभिलावान् कुर्वन्तः स्वेच्छया चारुविक्रमाः ॥ ३७ ॥

---

दिशं सामान्याभिधानाद्विशेषाभिधानं नायेन नीत्या सामादिना नीयतेऽनेनेति पूर्ववत्करणे घञ् महोदधेस्तोयविस्रावं तोयध्वनिं तर्जयन्तो न्यक्कुर्वाणाः कैः विद्रावैः स्वैः शब्दैः उभयत्रापि वौक्षुश्रुव इति कर्मणि घञ् ॥ ३६ ॥ ज० म०

यातेत्यादि । यूयं दक्षिणां दिशं यात गच्छत यमस्रायं यमस्थानं श्रयत्येनमिति घञ् सामान्यविशेषभावात् पौनरुक्त्यभावः यमस्थानं न गन्तव्यमित्याशयो वा नायेन नीत्या सामदानादिना उपलक्षिता यूयमित्यर्थः करणत्वविवक्षा वा णीञः करणे घञ् महोदधेस्तोयस्य विस्रावं शब्दं विद्रावैः स्वीयशब्दैस्तर्जयन्तः क्षुश्रुभ्यां घञ् ॥ ३६ ॥ भ०

उन्नेत्यादि । वसुधाभृतां पर्वतानां उन्नायानुच्चयानुच्चत्वान्यधिगच्छन्तः जानन्तः अवोदोर्नियः इति भाव घञ् कैः प्रद्रावैः प्रकृष्टगतिभिः प्रे द्रुस्तुस्रुव इति घञ् वनाभिलावान् वनविध्वंसान् निरभ्योः पूल्वोरिति भावे घञ् स्वेच्छया कुर्वन्तः चारुविक्रमाः असाधारणपराक्रमाः यात यूयमिति सम्बन्धः ॥ ३७ ॥ ज० म०

उन्नेत्यादि । प्रद्रावैः प्रकृष्टगमनैर्वसुधाभृतां पर्वतानां उन्नायान् उच्छ्रितत्वानि अधिगच्छन्तो जानन्तः यूयं यातेति पूर्वेणान्वयः वनाभिलावान् अरण्यविध्वंसान् स्वेच्छया कुर्वन्तः चारुविक्रमाः असाधारणशौर्य्याः उत्पूर्वणीञः प्रपर्वद्रोरभिपूर्वलूञश्च भावे घञ् ॥ ३७ ॥ भ०

सदोद्गारसुगन्धीनां फलानामलमाशिताः ।
उत्कारेषु च धान्यानामनभीष्टपरिग्रहाः ॥ ३८ ॥
संस्तावमिव शृण्वन्तश्छन्दोगानां महाध्वरे ।
शिञ्जितं मधुलेहानां पुष्पप्रस्तारशायिनाम् ॥ ३९ ॥

---

सदेत्यादि । सदा सर्वदा उद्गारे भक्षणानन्तरं श्वसनपूर्वके शब्दोच्चारणे यानि सुगन्धीनि फलानि तेषामलं पर्य्याप्तमाशिताः तृप्ताः गॄशब्द इत्यस्मादुत्पूर्वादुन्योर्ग्र इति घञ् आङ्पूर्वादश्नातेरादिकर्मणि क्तः कर्त्तरि चेति कर्त्तरि क्तः क्तप्रयोगे कर्मणि षष्ठी नलोकेति निषिद्धातः शेषे षष्ठी उत्कारेषु च राशिषु धान्यानां कॄविक्षेप इत्यस्मादुत्तूर्वात् कॄधान्य इति इति कर्मणि घञ् अनभीष्टपरिग्रहाः अनभिलाषुका इत्यर्थः ॥ ३८ ॥ ज० म०

सदेत्यादि । सर्वदा उद्गारे सुगन्धिभिः फलैरलमत्यर्थम् आशिताः तृप्ताः यूयं यातेति सम्बन्धः अशभोजन इत्यस्य आङ्पूर्वस्य तृप्त्यर्थेनाकर्मकत्वात् गत्यर्थाढित्यादिना कर्त्तरि क्तः शीलादित्वात् वर्त्तमाने क्त इत्यन्ये तृप्त्यर्थानां वेति अधिकरणे षष्ठी उत्पूर्वात् गॄशनिगरणे इत्यस्मात् गॄगिशब्दे इत्यस्माद्वा घञ् यदुक्तं सदुद्गारेऽपि सुगन्धिं प्रकाशयति तदुद्गारसुगन्धि उद्गारः परिणाम इत्यन्ये धान्यानामुत्कारेषु राशिषु अनभीष्टः परिग्रहो येषां ते धान्यानभिलाषुका इत्यर्थः किर आधारे घञ् किरोधान्ये इति परसूत्रम् ॥ ३८ ॥ भ

संस्त्वादि । मधुलेहानां भ्रमराणां पुष्पप्रस्तारशायिनां प्रस्तोऽयज्ञ इति घञ् शिञ्जितं शब्दं शृण्वन्तः यूयं यात छन्दोगानां महाध्वरे संस्तावमिव सम्भूय स्तवनमिव पाठध्वनिविशेषमिव वा यज्ञे समिस्तुव इति घञ् ॥ ३९ ॥ ज० म०

आलोचयन्तो विस्तारमम्भसां दक्षिणोदधेः।
स्वादयन्तः फलरसं मुष्टिसंग्राहपीडितम्॥ ४०॥
कुलकम्।
न्याय्यं यद्यत्र तत्कार्य्यं पर्य्यायेणाविरोधिभिः।

---

संस्त्वित्यादि। मधुलेहानां भ्रमराणां शिञ्जितं शब्दं शृण्वन्तो यूयं यातेति सम्बन्धः यद्यपि भूषणानाञ्च शिञ्जितमित्यमरेणोक्तं तथापि शिजि अव्यक्ते शब्दे इति धात्वर्थमात्रे तात्पर्य्यं छन्दोगानां वेदविदां महायज्ञे संस्तावमिव सम्यक् स्तवनमिव भावे घञ् पुष्पाणां प्रस्तारे समूहे शायिनां स्थितानां प्रपूर्वस्तृञो घञ्॥ ३९॥ भ०

आलोचेत्यादि। दक्षिणोदधेरम्भसां विस्तारं विस्तीर्णतां विपूर्वात् स्तृणातेः प्रथने वावशब्द इति घञ् आलोचयन्तो निरूपयन्तः इयानस्य विस्तार इति फलरसमास्वादयन्तः मुष्टिसंग्राहपीड़ितं मुष्टेः संग्राहेण हस्तेन पीड़ितं ग्रहेः शमिमुष्टाविति घञ् भावे मुष्टिविषये व्युत्पादितत्वात् मुष्टिग्रहणमभिव्यक्तार्थं ज्ञातव्यम्॥ ४०॥ ज० म०

आलोचेत्यादि। दक्षिणोदधेरम्भसां विस्तारं विस्तीर्णतां अलोचयन्तो निरूपयन्तो यूयं यातेति सम्बन्धः स्तृञो भावे घञ् मुष्टिसंग्राहेण मुष्टिबन्धेन पीड़ितं फलरसं आस्वादयन्तः यद्यपि संग्राहो मुष्टिबन्ध इत्यमरमाला तथापि मुष्टिग्रहणमवाभिव्यक्तार्थं संग्राहो मुष्टिरिष्यत इति हलायुधवाक्यादन्यत्रापि प्रवृत्तिदर्शनाद्वा॥ ४०॥ भ०

न्याय्यमित्यादि। यदत्र न्यायादनपेतं तत्कार्य्यमविरोधिभिर्युष्माभिः परिन्योनिणोरिति घञ् पदार्थानामनपचारेणेत्यर्थः व्युपयोः शेतेः पर्य्याय इति घञ् पर्य्यायेण परिपाट्या

निशोपशायः कर्त्तव्यः फलोच्चायश्च संहतैः ॥ ४१ ॥
सीता रक्षोनिकायेषु स्तोककायैश्छलेन च ।
मृग्या शत्रुनिकायानां व्यावहासीमनाश्रितैः ॥ ४२ ॥

---

परावनुपात्यये इण इति भावे घञ् अनुपात्ययः पर्य्यायः निशोपशायः कर्त्तव्यः युष्माभिर्निशायामुपशायः पर्य्यायशयनं कर्त्तव्यं व्युपयोः शेतेः पर्य्याय इति घञ् फलोच्चायश्च संहतैः युष्माभिः कर्त्तव्यः हस्तादान इति घञ् हस्तादानं चादेयस्य प्रत्यासत्तिः ॥ ४१ ॥ ज० म०

न्याय्यमित्यादि । यत्र यत् न्यय्यं न्यायादनपेतं तत्र तत् कार्य्यं अविरोधिभिर्युष्माभिः पर्य्यायेण परिपाट्या क्रमेणेति यावत् निशोपशायः निशायां शयनक्रिया कर्त्तव्या संहतैर्मिलितैः सद्भिः फलोच्चायः फलादानं कर्त्तव्यः वने हिंस्रादिभयान्मिलितैरेव गन्तव्यमिति भावः । निपूर्वात्परिपूर्वाच्चेण उपपूर्वात् शीङउत्पूर्वाच्चेञ घञ् न्यायशब्दात् ढधे कादिति णग्रः ॥ ४१ ॥ भ०

सीतेत्यादि । छलेन युष्माभिः सीता मृग्या रक्षोनिकायेषु निवासेषु निवसन्त्यस्मिन्निति अधिकरणे निवासचित्तीत्यादिना घञ् आदेश्च ककारः स्तोककायैर्युष्माभिः चिन्वन्त्यस्माच्छुभमिति कायः शरीरे घञ् शत्रुनिकायानां अरिसमूहानां निचीयत इति निकायः संघे चानौत्तराधर्य्ये इति कर्मणि घञ् आदेश्च ककारः तेषां सम्बन्धिनी व्यावहासीं परस्परहसनं अनाश्रितैः व्यवपूर्वाद्धसः कर्मव्यतीहारेण च स्त्रियामिति स्त्रीलिङ्गे भावे णचं विधाय णचः स्त्रियामञ् न कर्मव्यतीहार इति वृद्धिप्रतिषेधः ॥ ४२ ॥ ज० म०

सीतेत्यादि । युष्माभिः स्तोककायैः स्वल्पदेहैः सद्भिः रक्षो-

सांराविणं न कर्त्तव्यं यावन्नायाति दर्शनम्।
संदृष्टायान्तु वैदेह्यां निग्राहो वोऽर्थवानरैः॥ ४३॥

निकायेषु राक्षसनिवासेषु सीता मृग्या अन्वेषणीया छद्मेन न तु प्रकटेन मृगत्कङ् मार्गणे शत्रुनिकायानां शत्रुसमूहानां व्यावहासीं परस्परहसनं अनाश्रितैः उपहसतोऽपि शत्रोरुपहासं कार्य्यसिद्धर्थमकुर्वद्भिरित्यर्थः व्यावहासी परस्परविचारणेति केचित्। निचीयतेऽस्मिन्निति निकायो निवासः समूहश्च चीयते सुखदुःखार्थमिति कायो देहः स्वदैधावोदेत्यादिना घञि कायनिकायौ निपातितौ व्यवपूर्वहसो व्यतीहारे णन् मूर्द्धन्यणकार इद्वृद्धयर्थः दन्त्यनकारस्तु यूयुम् दान्ते इत्यादौ स्वध्वरणन इति चिह्नार्थः णनन्तात् स्वार्थे षणः षित्वात् स्त्रियामीप्॥ ४२॥ भ०

सांराविणमित्यादि। संरावणमभिव्याप्त्या भाषणं न कर्त्तव्यं युष्माभिः यावन्नायाति दर्शनं सीताया इत्यर्थात् संपूर्वाद्रौतेरभिविधौ भाव इत्युन् तदन्तादणि नुण् इत्यण् तस्मिन्निनणनपत्य इति प्रकृतिभावः यस्मात् संदृष्टायां चैतस्यां वैदेह्यां अरेर्निग्राहः आक्रोशोऽभिभवलक्षणः वो युष्माकमर्थवान् आक्रोशेऽवन्योर्ग्रह इति भावे घञ्॥ ४३॥ ज० म०

सामित्यादि। यावत् वो दर्शनं नायाति न प्राप्नोति अर्थात् सीता कर्त्री तावद्युष्माभिः सांराविणं अभिव्याप्य भाषणं कोलाहलरूपं न कर्त्तव्यं संपूर्वरुखध्वनौ व्याप्तौ भावे णिन् णिनन्तात् स्वार्थे ष्णः मन्वर्ज्जान्वर्मोक्षस्येन इत्यादिना संयोगात् परस्य इनन्तस्यापत्यष्णे नकारलोपाभाव उक्तस्तेन असंयोगात् परस्य इनन्तस्यापत्यष्णे नकारलोपः स्यान्नत्वपत्यष्णे इति प्राप्तं तेनात्र नलोपाभावः देवीदासचक्रवर्त्ती तु णिन-

प्रग्राहैरिव पात्राणामन्वेष्या मैथिली क्रतैः ।
ज्ञातव्या चेङ्गितैर्धर्म्यैर्ध्यायन्ती राघवागमम् ॥ ४४ ॥
वेदिवत् सपरिग्राह्या यज्ञियैः संस्कृता द्विजैः ।
दृश्या मासतमादह्नः प्रागनिन्दितवेशभृत् ॥ ४५ ॥

---

प्रत्ययोऽकारान्तः णिनन्तादित्यत्र णिनान्तादिति पाठ इत्याह हि यस्माद् सम्यग्दृष्टायामेव वैदेह्यां अरेर्निग्राह आक्रोशोऽभिभवो वा युष्माकं स्वार्थको भवति ग्रहेर्भावे घञ् ॥ ४३॥भ०

प्रग्रेत्यादि। पात्राणां भिक्षाभाजनानां प्रग्राहैरिव क्रतैरन्वेष्या मैथिली भिक्षुकवेशैरिव युष्माभिरित्यर्थः ग्रहेः प्रे लिप्सायामिति भावे घञ् कर्मणि षष्ठी इङ्गितैर्धर्म्यैः चेष्टितैः कुलाङ्गनोचितैः ज्ञातव्या सा ध्यायन्ती रामागमं कुलाङ्गना हि प्रोषितभर्तृका सर्वदा भर्त्तुरागमनं ध्यायतीति भावः ॥ ४४ ॥ ज०म०

प्रग्रेत्यादि। पात्राणां भिक्षाभाजनानां प्रग्राहैरिव प्रग्रहणैरिव क्रतैर्भवद्भिः सीताऽन्वेष्या भिक्षुवेशैरपीत्यर्थः इवार्थोऽत्र सम्भावना प्रादुग्रहेर्भावे घञ्। कथं सा ज्ञेयेत्याह धर्म्यैर्धर्मादनपेतैरिङ्गितैश्चेष्टितैर्ज्ञातव्या राक्षसगृहेऽन्यस्यास्तादृशधर्मासम्भवात्। कीदृशी राघवागमनं चिन्तयन्ती असाधारणं चिह्नमेतत् कुलस्त्री सदा स्वामिनः समागमं ध्यायति स्वधर्मञ्च न त्यजतीति भावः ॥ ४४ ॥ भ०

वेदीत्यादि। यथा यज्ञियैर्यज्ञकर्मार्हैर्द्विजैः ब्राह्मणैः वेदिः यज्ञस्थली सपरिग्राह्या परिगृहीता संस्कृता तथा साऽपि अतिपवित्रत्वात् ग्रहेः परौ यज्ञ इति यज्ञविषये घञ् मासतमादह्नः प्राग्दृश्या दर्शनार्हा मासस्य पूरणं यदह्नः नित्यं शतादिमासेत्यादिना तमडागमः अस्मादेव निपातनात् मास-

नीवारफलमूलाशानृषीनप्यतिशेरते ।
यस्या गुणा निरुद्द्रावास्तां द्रुतं यात पश्यत ॥ ४६ ॥

---

शसंख्यावाचित्वे डट् मासतमेऽह्नीति हेतुं दर्शयन्नाह तस्याः पूतत्वात्तदनिन्दितवेशभृत् मैथिली मङ्गलमात्राभरणा दर्शनार्हा तां द्रष्टुं भवतां न चिरकालो भवतीति मासावधिना प्रेषिताः ॥ ४५ ॥ ज० म०

वेदीत्यादि । मासतमात् मासपूरणादह्नः प्राक् सीता युष्माभिर्द्रष्टव्या मासावधिनैव भवन्तः प्रेष्यन्ते चिरकालो न कर्त्तव्य इति दृशेः ऋदुपधत्वात् दृक्षजुषेत्यादिना क्यप् मासशब्दात् शतादिमाससंवत्सरादिति पूरणे तमट् । कीदृशी अनिन्दितवेशभृत् मङ्गलमात्राभरणसत्त्वात् यथा यज्ञियैर्यज्ञकर्मार्हैर्द्विजैः सपरिग्राह्या परिगृहीता वेदिस्तैः संस्कृता तथा सापि अतिपवित्रत्वात् पुरोहितैः संस्कृतत्वाच्च परिग्रहो घञ् यज्ञविषये परिग्रहो घञिति परः ढघे कादिति यज्ञशब्दात् अर्हतीत्यर्थे इयः ॥ ४५ ॥ म०

नीवेत्यादि । यस्या गुणा ब्रह्मचर्य्यादयः ऋषीनप्यतिशेरते न्यक्कुर्वते तां द्रुतं यात पश्यत तत्र नीवारः अकृष्टपच्यधान्यं नीवृधान्यम् इति घञ् उपसर्गस्य घञीति दीर्घत्वं फलं मोचादि मूलं शालूकादि एतान्यश्नन्ति ये ऋषयः कीदृशा गुणाः निरुद्द्रावाः स्थिराः उदिश्रयतीति घञ् ॥४६॥ ज० म०

नीवारेत्यादि । यस्याः सीतायाः गुणाः शमदमादयो मुनीनपि अतिशेरते न्यक्कुर्वन्ति शीङ् अतिपूर्वः अतिक्रमे सकर्मकः स्वभावात् । कीदृशाः निरुद्द्रावाः स्थिराः उत्पूर्वात् द्रवतेर्घञ् कीदृशान् नीवारं तृणधान्यं फलमामलक्यादि मूलं शालूकादि अश्नतः तां यूयं द्रुतं पश्यत यात च निपर्वात् ह्रञो

उच्छ्रायवान् घनारावो वानरं जलदारवम् ।
दूराप्लावं हनूमन्तं रामः प्रोचे गजाप्लवः ॥ ४७ ॥
अवग्राहे यथा वृष्टिं प्रार्थयन्ते कृषीवलाः ।
प्रार्थयध्वं तथा सीतां यात सुग्रीवशासनात् ॥ ४८ ॥

---

घञ् अभिधानात् क्वचिदुपसर्गस्य घञन्ते दीर्घ इति व्यतीहार इति दीर्घनिर्देशेन ज्ञापितं तेनैव दीर्घत्वम् अतएवेदितो नुण् अतएव पं इत्यादिवचनात् ज्ञापकेन कार्य्यसिद्धिः स्वयमेवोक्ता । तृणधान्यानि नीवारा इत्यमरः । इति सुग्रीवोऽब्रवीदित्यन्वयः ॥ ४६ ॥ भ०

उच्छ्रेत्यादि । रामो हनूमन्तं प्रोचे । कीदृशः उच्छ्रायवानुन्नतियुक्तः पूर्ववत् घञ् घनस्येवारावो यस्य विभाषाङ्गिरुत्प्लुवोरिति भावे घञ् गजाप्लवः गजगमनः पक्षे पूर्ववदप् । कीदृशं दूराप्लावं दूरमाप्लाव उद्गमनं यस्य पूर्ववत् घञ् ॥ ४७ ॥ ज० म०

उच्छ्रेत्यादि । रामो हनूमन्तं वानरं प्रोचे । कीदृशः उच्छ्रायवान् उन्नतिमान् महापुरुषलक्षणमेतत् उत्पूर्वात् श्रिञो घञ् घनस्येवारावो ध्वनिर्यस्य स तथा गजाप्लवो गजगमनः । वानरं कीदृशं जलदारावं मेघशब्दं दूराप्लावं दूरदेशे उत्प्लुतिकारिणम् आङ्पूर्वाभ्यां रुप्लुभ्यां घञन्तौ ॥ ४७ ॥ भ०

अवेत्यादि । अवग्रहो वर्षप्रतिबन्धः अवे ग्रह इति पक्षे अप् यथा अवग्रहे कृषीवला वृष्टिं प्रार्थयन्ते तथा सीतां यूयं प्रार्थयध्वं तस्या दुर्लभत्वादत्यन्तादरणीयत्वाच्च यात सुग्रीवशासनात् ॥ ४८ ॥ ज० म०

अवेत्यादि । कृषीवलाः कृषका यथा अवग्राहे वृष्टिप्रतिबन्धे वृष्टिं प्रार्थयन्ते तथा यूयं सीतां प्रार्थयध्वम् अतिदुर्लभत्वात् यात

वणिक् प्रग्राहवान् यद्वत् काले चरति सिद्धये ।
देशापेक्षास्तथा यूयं यातादायाङ्गुरीयकम् ॥ ४९ ॥
अभिज्ञानं गृहीत्वा ते समुत्पेतुर्नभस्तलम् ।
वाजिनः स्यन्दने भानोर्विमुक्तप्रग्रहा इव ॥ ५० ॥

---

सुग्रीवशासनात् न तु मयाज्ञा क्रियत इति भावः गौरवख्यापनायैकत्वेऽपि बहुत्वं लोकात् अन्यसंहितत्वात् वा अर्थत्क-ड्याचने अवादृष्टिबन्धे ग्रहो घञलाविति परः स्वमते घञ-लनटोऽघे इत्यस्य सर्वविषयत्वात् क्वचिग्रहणात् गोचरणमेवेति बलः नाम्नस्त्यर्थेऽचो घः ॥ ४८ ॥ भ०

वणिगित्यादि । तुला प्रगृह्यते येन सूत्रेण स प्रग्राहः प्रे वणिजामिति करणे घञ् स तुलासम्बन्धी विद्यते यस्य वणिजः संसर्गे मतुप् यथा तुलाप्रग्राहवान् तदुपलक्षितो वणिक्काले उचिते क्रयसिद्धये चरति तथा यूयं अङ्गुलीयं तुलासूत्रस्थानीयं चिह्नमादाय देशापेक्षाः तत्तद्देशस्थितास्तत्र हि चिह्नेन रामदूता इति लक्ष्यन्ते ॥ ४९ ॥ ज० म०

वणिगित्यादि । यथा प्रग्राहवान् तुलासूत्रवान् वणिक् योग्ये काले क्रयविक्रयादिस्वक्रियासिद्ध्यर्थं चरति योग्यदेशमपेक्षते च तथा यूयमपि ममाङ्गुरीयकं तुलासूत्रतुल्यमादाय गृहीत्वा योग्यकाले देशापेक्षाः सीतानिवासदेशमपेक्षमाणा यात गच्छत इति रामः प्रोचे इति सम्बन्धः अनेनैवाङ्गुलीयकेन चिह्नेन सीतया मद्दूता भवन्तो ज्ञास्यन्त इति भावः तुला प्रगृह्यते येन सूत्रेण तत् प्रग्राह उच्यते प्रपूर्वात् ग्रहो वणिक्सम्बन्धे रज्जौ च घञन्नाविति परः स्वमते घञलनटोऽघे इत्यस्यापि विषयो दुर्निवारः ॥ ४९ ॥ भ०

अभीत्यादि । ते वानरा नभस्तलमुत्पेतुः वाजिन इव

उदक् शतवलिं कोव्या सुषेणं पश्चिमां तथा ।
दिशं प्रास्थापयद्राजा वानराणां कृतत्वरः ॥ ५१ ॥

विमुक्तप्रग्रहाः विमुक्तः प्रग्रहो नियमरज्जुर्येषामिति रश्मौ चेति विभाषाग्रहणमनुवर्त्तते घञभावपक्षे ग्रहवृढनिश्चिगमश्चेत्यप् स्यन्दने रथे भानोरादित्यस्य किं कृत्वा अभिज्ञानं गृहीत्वा चिह्नमङ्गुलीयकमादाय ॥ ५० ॥ ज० म०

अभीत्यादि। ते हनूमदादयोऽभिज्ञानं चिह्नमङ्गुरीयकं गृहीत्वा नभस्तलम् आकाशं समुत्पेतुः यथा भानोः स्यन्दने रथे विमुक्तप्रग्रहाः शिथिलीकृतबन्धरज्जवो वाजिनोऽश्वा नभो गच्छन्ति तथा एतेनातिशीघ्रत्वं दर्शितम्। तलशब्दोऽत्र स्वरूपार्थः। तलं स्वरूपाधारयोः खङ्गमुष्टिचपेटयोरिति विश्वः। प्रग्रहोऽनन्तो रज्जुवाचकः॥ ५० ॥ भ०

उदगित्यादि। वानराणां राजा सुग्रीवः शतबलिं नाम वानरं वानराणां कोव्या सहः उदगुदीचीं दिशं प्रास्थापयत् तिष्ठतेर्ण्यन्तस्य लङि रूपं उदीचीशब्दात् प्रथमान्ताद्दिशि वर्त्तमानादस्तात्तिः तस्याञ्चतेर्लुक् लुक्तद्धितलुकीति स्त्रीप्रत्ययस्य लुक् तस्मिन्निवृत्तौ भसंज्ञाभावादीत्वमपि निवर्त्तते तसिलादिस्तद्धित एधाच् पर्य्यन्त इत्यव्ययत्वे द्वितीयालुक्। तथैव सुषेणं वानरं पश्चिमां दिशं प्रास्थापयत् कृतत्वरः त्वरितः ॥ ५१ ॥ ज० म०

उदगित्यादि। वानराणां राजा सुग्रीवः कृतत्वरस्त्वरान्वितः सन् शतबलिनामानं कपिं उदक् उत्तरस्यां दिशि प्रस्थापयामास तथा सुषेणनामानं पश्चिमां दिशं प्रास्थापयत् वानराणां कोव्या सहेत्युभयत्र योज्यं घोऽजौञेः शब्दाशनगतीत्यादिना प्रयोज्यस्य कर्मत्वं प्रपूर्वस्य तिष्ठतेर्गत्यर्थत्वात्

प्राचीं तावद्भिरव्यग्रः कपिभिर्विनतो ययौ।
अप्रग्राहैरिवादित्यो वाजिभिर्दूरपातिभिः॥ ५२॥
ययुर्विन्ध्यं शरन्मेघैः प्रावारैः प्रवरैरिव।
प्रच्छन्नं मारुतिप्रष्ठाः सीतां द्रष्टुं प्लवङ्गमाः॥ ५३॥

---

उदगिति उदक्शब्दाद्दिग्देशकाले इति सप्तम्याः स्तात् तस्य लुक् चात्परत्वात् तदन्तस्याव्ययत्वं लोकोपचारात्॥ ५१॥ भ०

प्राचीमित्यादि। कपिभिः तावद्भिरित्येककोटिसंघातैः सह विनतः प्रणतः सुग्रीव इत्यर्थात् अव्यग्रः अनाकुलः प्राचीं पूर्वां दिशं ययौ यथा आदित्यो वाजिभिरप्रग्राहैः मुक्तबन्धनैः करणभूतैः रश्मौ चेति घञ् दूरयायिभिः॥ ५२॥ ज० म०

प्राचीमित्यादि। विनतनामा वानरोऽव्यग्रोऽनाकुलः स तावद्भिः कोटिसंख्यातैः कपिभिः सह प्राचीं पूर्वां दिशं ययौ सुग्रीवाज्ञयेत्यर्थात् यथा आदित्यः सूर्य्योऽप्रग्राहैर्मुक्तरज्जुभिर्दूरपातिभिर्वाजिभिरश्वैः सह प्राचीं याति तथा प्रग्राहो घञन्तो रज्जुवाचकः। अदितेरपत्यमिति गर्गादित्वात् ण्यः। केचित्तु विनतो नम्रः सुग्रीवः प्राचीं ययावित्याहुस्तत् तु रामायणविरुद्धम्॥ ५२॥ भ०

ययुरित्यादि। मारुतिप्रष्ठाः हनूमदग्रेसराः सीतां द्रष्टुं विन्ध्यपर्वतं ययुः शरन्मेघैः प्रावारैरिव प्रावरणैरिव प्रच्छन्नं वृणोतेराच्छादन इति घञ् प्रवरैः श्रेष्ठैः अनाच्छादने ग्रहेत्यादिना अप्॥ ५३॥ ज० म०

ययुरित्यादि। प्लवङ्गमा वानराः सीतां द्रष्टुं विन्ध्यपर्वतं ययुः प्लवेन गच्छन्तीति तृम्भृवृदृजीत्यादिना खः। कीदृशाः मारुतिर्हनूमान् प्रष्ठोऽग्रसरो येषां ते तथा प्रादग्रगेस्थस्य षत्वमभिधानात् मनीषादित्वाद्वा। कीदृशं शरन्मेघैः प्रच्छन्नं

परिभावं मृगेन्द्राणां कुर्वन्तो नगमूर्द्धसु ।
विन्ध्ये तिग्मांशुमार्गस्य चेरुः परिभवोपमे ॥ ५४ ॥
भ्रेमुः शिलोच्चयांस्तुङ्गानुत्तेरुरतरान् नदान् ।
आशंसवो लवं शत्रोः सीतायाश्च विनिश्चयम् ॥ ५५ ॥

---

प्रवरैः श्रेष्ठैः प्रावारैः प्रच्छदपटैरिव अभिधानात् प्राङ्पूर्वात् वृञ आच्छादने घञ् अन्यत्वात् ॥ ५३ ॥ भ०

परीत्यादि। मृगेन्द्राणां सिंहानां परिभावमभिभवं कुर्वन्तः विन्ध्ये चेरुः भ्रान्ताः परौभुवोऽवज्ञान इति घञ्। कीदृशे परिभवोपमे आदित्यमार्गस्य परिभवनं अत्युच्चत्वात् घञभावपक्षे अप् ॥ ५४ ॥ ज० म०

परीत्यादि। ते नगमूर्द्धनि गिरिशिखरे मृगेन्द्राणां सिंहानां परिभावं तिरस्कारं कुर्वन्तो विन्ध्ये चेरुः चरगतौ। कीदृशे सूर्य्यवर्त्मनः परिभव इव तस्यात्युच्चत्वात् परिभवशब्देन नात्र तत्कर्त्ता लच्यते। आदित्यमार्गस्य परिभवेणोपगता मा लक्ष्मीः शोभा यस्येति वा यद्वा तत्परिभवक्रिययैवात्र लोकभयदत्वेन साम्यं विवच्चितं परिपूर्वाङ्कुवो घञलौ स्वभावादवज्ञानार्थता न गच्छतीति नगः हनजनादिति डः ॥ ५४ ॥ भ०

भ्रेमुरित्यादि। उत्पूर्वाच्चिनोतेः एरजित्यच् शिलाभिरुच्चयो येषां तान् शिलोच्चयान् भ्रेमुः भ्रमणक्रियाया व्याप्यत्वात् सकर्मकता नदान् अतरान् तरितुमशक्यान् उत्तेरुः उत्तीर्णवन्तः शत्रोर्लवमुच्छेदनं सीतायाश्च विनिश्चयं विनिर्णयम् आशंसवः आशंसनशीलाः सनाशंसभिच्च उः तरलवौ ऋदोरविति अप्प्रत्ययान्तौ विनिश्चय इति ग्रहेरित्यप् ॥ ५५ ॥ ज० म०

भ्रेमुरित्यादि। ते भीमान् भयदान् शिलोच्चयान् पर्वतान् भ्रेमुः तृफलेत्यादिना अत एत्वं खिलोपश्च भ्रमणस्य गतिवि-

आदरेण गमच्चक्रुर्विषमेष्वप्यसङ्घसाः।
व्याप्नुवन्तो दिशोऽन्यादान् कुर्वन्तः सव्यधान् हरीन् ॥५६॥
सञ्चेरुः सहसाः केचिदस्नना: केचिदाटिषुः।

---

ग्रोषत्वात् सकर्मकता शिलाभिरुच्चयो वृद्धिर्येषां उच्चीयत इति वा उच्चयस्तूपः शिलाभिरुच्चयः शिलोच्चयः अतरान् अन्यैस्तरितुमशक्यान् नदान् उत्तेरुः तॄतरेऽभिभवन्नुत्यां कृतो णुः क्टि्व्यां शत्रोर्लवं छेदं आशंसव इच्छवः सीताया विशेष्य निश्चयश्च आशंसवः सनभिच्छाशंस उः चितॄलूभ्योऽल् ॥ ५५ ॥ भ०

आदेत्यादि। विषमेष्वपि प्रदेशेषु गमं गगनं चक्रुः आदरेणानवज्ञया ग्रहेरित्यप् असंघसाः त्यक्ताहाराः उपसर्गे द इति अपि घञपोश्चेति अदेर्घस्लादेशः हरीन् सिंहान् सव्यधान् सप्रहारान् व्यधजपोरित्यप् सप्रहारत्वादन्यादान् परित्यक्ताहारान् कुर्वन्तः नौणचेति निपूर्वाददेरण्प्रत्ययः तस्मिन्नदेर्न घस्लादेशः चकारादपि तत्र निघसः दिशः व्याप्नुवन्तः सर्वव्यापिनः ॥ ५६ ॥ ज० म०

आदेत्यादि। विषमेष्वपि देशेषु गमं चक्रुः रामस्य कार्य्यमित्यादरेण न तु परस्य कार्य्यमित्यवज्ञया कीदृशाः असंघसाः सम्यगाहाररहिताः निरन्तरभ्रमणात् दिशो व्याप्नुवन्तः हरीन् सिंहान् सव्यधान् सप्रहारान् अतएवान्यादान् आहाररहितान् कुर्वन्तः गम अदव्यधिभ्योऽल् घसदः सन्व्यल्घञोति अदेर्घसादेशः निपूर्वाददोनाम्नयन्येतिक् चेति णप्रत्ययः घञि तु घसादेशप्रसङ्गात् नेरदो णालाविति परः। जेमनं लेप आहारो निघसोऽन्याद इत्यपीत्यमरः ॥ ५६ ॥ भ०

सञ्चे इत्यादि। सहसाः सस्मिताः अस्नना: तूष्णीकाः स्नहसोर्वेत्यप् यतिवत् संयामवन्तः नियमवन्तः यमः समुप-

संयामवन्तो यतिवन्निगदानपरेऽमुचन् ॥ ५७ ॥
अथ क्रमादनिःक्वाणा नराः क्षीणपणा इव ।
अमदाः सेदुरेकस्मिन् नितम्बे निखिला गिरेः ॥ ५८ ॥

---

निविषु चेति घञ् आटिषुः अटितवन्तः अटेर्लुङि रूपम् अपरे निगदान्वचनान्यमुचन् नौगदेत्यादिना विकल्पेनापो विधानात् घञ् ॥ ५७ ॥ ज० म०

सञ्चेरुरित्यादि । केचिद्वानराः सहसाः सन्तश्चेरुः तृफ्लेति अत एत्वं खिलोपश्च केचिदस्वना मौनिनः यतिवत् संयामवन्तः संयमिनः सन्त आटिषुर्गतवन्तः अटगतौ व्याप्तिः घनुसिद्ध इति अन उस् अपरे निगदान् अमुचन् अन्तःस्थितस्य शब्दस्य वहिर्निःसारणं मोक्षः तं कृतवन्त इत्यर्थः हसस्वननिगदा अलन्ताः संयामो घञन्तः ॥ ५७ ॥ भ०

अथेत्यादि । अथ परिभ्रमणादनन्तरं क्रमेन परिश्रमेण अमदाः गतहर्षाः मदोऽनुपसर्गे इत्यप् अतएव निःक्वाणाः निःशब्दाः क्वणो वीणायाञ्चेत्यपो विकल्पेन घञ् वीणादिविषयमेतत् क्वणेर्निपूर्वादनुपसर्गाद्वीणादिविषयाच्च विकल्पेनाप्‌त्यय इत्युक्तं एकस्मिन् गिरेर्नितम्बे सेदुः निषण्णाः निखिलाः समस्ता वानराः क्षीणपणा इव अर्थरहिता नरा इव पण्यन्त इति पणाः व्यवहाराय कृते पणे व्यवस्थाप्यन्ते नित्यं पणः परिमाणे इत्यप् ॥ ५८ ॥ ज० म०

अथेत्यादि । भ्रमणानन्तरं ते निखिलाः सर्वे वानराः कस्यचिद्गिरेर्नितम्बे सेदुर्निषण्णा कीदृशाः क्रमेन श्रमेण निःक्वाणा निःशब्दाः अमदा हर्षरहिताः क्षीणपणा नष्टधना इव निःक्वाणो घञन्तः क्वणः शब्दमात्रे घञको सप्रादेरपि वीणाध्वनौ तु सप्रादेरेवेति परः स्वमते अभिधानं नियामकमित्युक्तेः

ततःससम्मदास्तत्र निरैक्षन्त पतत्रिणः ।
गुहाद्वारेण निर्यातः समजेन पशूनिव ॥ ५९ ॥
वीनामुपसरं दृष्ट्वा तेऽन्योन्योपह्वा गुहाम् ।
प्राविशन्नाह्वप्रज्ञा आह्वावमुपलिप्सवः ॥ ६० ॥

---

स एव नियमः क्वणपणमदा अबन्ताः पख्यते व्यवह्रियते अनेनेति पणः । पणो वराटमात्रे स्यान्मूल्ये कार्षापणे ग्रहे । क्रय्यशाकटिकाद्यूतव्यवहारे भृतौ धन इति विश्वः ॥५८॥ भ०

तत इत्यादि । ततो विश्रामानन्तरं ते तत्र तस्मिन् पर्वते पतत्रिणः पक्षिणो निरैक्षन्त ईक्षितवन्तः ईक्षेर्लङि रूपम् । कीदृशान् गुहाद्वारेण निर्यातः निर्गच्छतः निष्पूर्वाद्यातेः शत्रन्तस्य शसि रूपम् । ससम्मदाः सहर्षाः प्रमदसम्मदाविति निपातितं समजेन वृन्देन पशूनिव निर्यातः समुदोरजपशु-ष्वित्यप् ॥ ५९ ॥ ज० म०

तत इत्यादि । उपवेशानन्तरं ते ससम्मदाः सहर्षाः सन्तस्तत्र पर्वते गुहाद्वारेण निर्यातो निर्गच्छतः पतत्रिणः पक्षिणो निरैक्षन्त दृष्टवन्तः समजेन समूहेन निर्गच्छतः पशूनिव तद्वदतिस्थूलानित्यर्थः समदसमजावबन्तौ व्यजोऽरे इत्यादौ अबन्तवर्जनान्नाजेर्व्यादेशः संप्राभ्यां मदो हर्षे समुद्गग्र-मजः पशुसंहप्रेरणयोरलिति परेषां विशेषसूत्रं निःपूर्वादी-र्घेर्यो जातिः शतृः ॥ ५९ ॥ भ०

वीनामित्यादि । वीनां पक्षिणामुपसरं नैरन्तर्येण निर्गमनं दृष्ट्वा उपसर इव उपसरनैरन्तर्य्यमात्रेणोपलक्षितत्वात् उपसरो हि स्त्रीगवीषु पुङ्गवानामभिगमनमुच्यते स च नैरन्तर्य्येण भवति प्रजनेसर्त्तेरित्यप् वानरा अन्योन्योपह्वाः परस्पर-माह्वानं येषां आगच्छतागच्छत प्रविशाम इति ह्वः संप्रसा-

कुर्वन्तो ह्वमाप्तानां पिपासाबधकाङ्क्षिणः ।
द्वारं तमोघनप्रख्यं गुहायाः प्राविशन् द्रुतम् ॥ ६१ ॥

रणमित्यप् संप्रसारणञ्च गुहां प्राविशन् प्रविष्टवन्त आहवप्रज्ञाः युद्धप्रज्ञाः आह्वयते युद्धाय स्पर्द्धतेऽत्रेत्याङि युद्ध इत्यप् संप्रसारणञ्च आहावमुपलिप्सवः उदकाधारमुपलब्धुमिच्छवः निपानमाहाव इति घञि संप्रसारणं निपात्यते वृद्धिरस्त्येव अप्प्रत्यये त्ववृद्धिः ॥ ६० ॥ ज० म०

वीनामित्यादि । वीनां पक्षिणामुपसरं उपर्य्यधो गमनं दृष्ट्वा ते वानरा गुहां प्राविशन् । कीदृशाः अन्योन्यस्य उपह्वं आह्वानं येषां ते तथा आहवे युद्धे प्रज्ञाः पण्डिताः अतएव गुहाप्रवेशे निर्भयत्वं आहावमुदकाधारमुपलब्धुमिच्छवः उपसरो लन्तः अभिधानात् उपर्य्यधोगमनार्थः उपसरो हि स्त्रीगवीषु पुङ्गवानामभिगमनमुच्यते स चोपर्य्यधोभावेन भवतीत्युपमानादिह उपसरशब्देन उपर्य्यधोगामित्वमुच्यते इति केचित् । गर्भग्रहणार्थोपसरणे सर्त्तेरणिति परसूत्रं तन्मते उपसरो गर्भार्थग्राम्यधर्माचरणं तच्च वह्निर्निःसरतां पक्षिणां सम्भवत्येव हुलिहोमेऽदने इत्यस्मादल्घञौ उपसर्गेणान्यार्थता परेषां मते ह्वेञो रूपं अभ्युपनिविभ्यो ह्वञोऽल् ह्रस्वेति तथा आङो युद्धे ह्वेञोऽल् ह्रस्वेति आङो निपाने ह्रस्वेति तेषां सूत्रत्रयम् ॥ ६० ॥ भ०

कुर्वेत्यादि । गुहां प्रविश्य तस्याः द्वारमपरं प्राविशन् आप्तानां स्निग्धानां ह्वमाह्वानं कुर्वन्तः भावेऽनुपसर्गस्येत्यप् संप्रसारणं च पिपासा पातुमिच्छा तस्या बधोऽपनयनं हनश्च बध इत्यप् बधादेशश्च तं काङ्क्षितुं शीलं येषामिति काङ्क्षिमाक्षिकांक्षाया इत्यस्मात् सुप्यजातौ णिनिः इदितो नुम् साधु-

तस्मिन्नन्तर्घणे पश्यन् प्रघाणे सौधसद्मनः ।
लीढोद्घनघनस्कन्धा ललितापघनां स्त्रियम् ॥ ६२ ॥

कारिणि वा । कीदृशं द्वारं तमोघनप्रख्यं तमसो घनः मूर्त्तिः काठिन्यं तेन सदृशं मूर्तौ घन इति हन्तेरप्प्रत्ययो घनादेशश्च निपात्यते मूर्त्तिमत्तम इव द्वारमित्यर्थः ॥ ६१ ॥ ज० म०

कुर्वत्यादि । ते आप्तानां स्निग्धानां हवमाह्वानं कुर्वन्तो गुहाया द्वारं द्रुतं प्राविशन् । कीदृशाः पिपासायास्तृष्णाया वधं हननं काङ्क्षन्तीति ग्रहादित्वात् णिन् ताच्छील्ये आभीक्ष्ण्ये वा णिन्निति परः स्वमतेऽपि तदर्थता प्राप्यते यतो णिन्विधायकसूत्रे अर्थविशेषो नोक्तः किन्तु ढघे क्तीत्यादौ भव्यर्णार्थणिन्नित्युक्तं तेनाभिधानादर्थविशेषेऽपि णिन् स्यादिति ज्ञापितम् । द्वारं कीदृशं तमोघनप्रख्यं तमसां घनेन काठिन्येन प्रख्यं सदृशं मूर्त्तिः काठिन्यमुच्यते तदुपचारात् मूर्त्तिमत्तया इवेत्यर्थः मेघप्रख्यं तमश्च प्राविशन्निति केचित् । हवमिति ह्वलिह्वोमि इत्यस्यालन्तस्य रूपं धातूनामनेकार्थत्वात् आह्वानार्थता ह्वे ञोऽल् इश्च भावे न तूपसर्गादिपरः हन्तेरलि हनवधष्टोव्यलीति बधादेशः काठिन्यादौ हन्तेरल् घनादेशश्चेति परः स्वमते निपातः ॥ ६१ ॥ भ०

तस्मिन्नित्यादि । द्वारमतिक्रम्य यः सावकाशप्रदेशः सोऽन्तर्घण इत्युच्यते तथाह्यर्हन्यते क्रोडीभवत्यस्मिन्निति अनुगतार्थत्वं अन्तर्घणो देश इत्यन्तःपूर्वाद्धन्तेरप् घनादेशः घणादेशो वा ये णकारं पठन्ति यत्तु संज्ञीभूतौ वाह्लीकेषु देशविशेष इत्युक्तं तत्संज्ञाशब्दमाश्रित्य तस्मिन्नन्तरे यत् सौधसद्म धवलगृहं तस्य प्रघाणे एकदेशे प्रघणः प्राघाणश्चेति निपातितं स्त्रियं ललितापघनां ललिताङ्गीमपश्यन् अपघनोऽङ्गमिति

सा स्खलयन्यदन्यासान् विघनेन्दुसमद्युतिः ।
परिघोरुभुजानाह्व हसन्ती स्वागतं कपीन् ॥ ६२ ॥

---

निपातनं लौहोद्घनघनस्कन्धाः यस्मिन् स्थापयित्वा काष्ठादीनि संस्क्रियन्ते स उद्घनः आधानं तद्वत् घनः स्कन्धो येषामिति उद्घनोऽत्याधानमिति निपातनम् ॥ ६२ ॥ ज० म०

तस्मिन्नित्यादि। तस्मिन् गुहाभ्यन्तरे अन्तर्घणे द्वारसमीपे सावकाशप्रदेशे यत् सौधसद्म धवलगृहं तस्य प्रघणे द्वारप्रकोष्ठाभ्यां वहिःप्रदेशे ललितापघनां मनोहरशरीरां स्त्रियं तेऽपश्यन्। कीदृशाः लौहोद्घनघनस्कन्धाः यस्मिन् स्थापयित्वा काष्ठादिकं हन्यते स उद्घनः लोहस्य य उद्घनस्तद्वद्घनो निविडः स्कन्धोयेषां ते तथा लौहवदुद्घनः काष्ठविशेष इत्यन्ये। परमते अन्तर्हन्यते यस्मिन्नित्यन्तर्घणोऽभ्यन्तरदेश उच्यते अन्तरो हन्तेरलि देशे घनादेशः विभाषया णत्वं स्वमते मूर्द्धन्यान्तत्वे घणोऽलि रूपं दन्त्यान्तत्वे तु हन्तेर्निपातः। परमते प्रकृष्टं हन्यते गम्यतेऽस्मिन्निति प्रघाणः प्राक्गृहद्वारवाह्यपिण्डके हन्तेर्घञन्तो घनादेशश्च पूर्वपदस्थात् निमित्तात् संज्ञायां णत्वं स्वमते घणो घञि रूपम्। प्रघाणप्रघणालिन्दावहिर्द्वारप्रकोष्ठके इत्यमरः। परमते ऊर्द्धं हन्यते यस्मिन् स उद्घनः उदः प्रतिकाष्ठके हन्तेरल् घनादेशश्च स्वमते निपातः निधाय तक्ष्यते यत्र काष्ठे काष्ठं स उद्घन इत्यमरकोषे काष्ठ इत्युपलक्षणं घनः पूर्ववत् परमतेऽपहन्यतेऽनेनेत्यपघनो देहः अपादङ्गे हन्तेरल् घनादेशश्च स्वमते निपातः वस्तुतः अन्तर्घणादयो रूढाः व्युत्पत्तिस्तु यथाकथञ्चिदेव ॥ ६२ ॥ भ०

सा स्खलेत्यादि। सा स्त्री हसन्ती कपीन् स्वागतं वच

पिप्रायाद्रिगुहोपघ्नानुद्घान् सङ्घसमागतान्।
फलैर्नानारसैश्चित्रैः स्वादुशीतैश्च वारिभिः॥ ६४॥

आह। कीदृशी विघनेन्दुसमद्युतिः विहन्यते अभिभूयते अन्या द्युतिर्येन स विघनः करणेऽपो विदुष्वित्यप् घनादेशश्च स चेन्दुश्चेति सः तत्समा द्युतिर्यस्याः स्तम्बो हन्यते येन पादन्यासेन स स्तम्बघ्नः तृणकाष्ठादिः स्तम्बे कच इति करणे कः गमहनेत्युपधालोपः तादृशः पादन्यासो येषां कपीनामिति परिहन्यते येन परीघ इत्यप् घादेशश्च परिघोऽर्गलः तदनुकारिणो विपुला बाहवो येषामिति॥ ६२॥ ज० म०

सेत्यादि। सा हसन्ती स्वागतमिति कपीनाह। कीदृशान् स्तम्बघ्नपदन्यासान् स्तम्बो हन्यते तृणकाष्ठादिकमुपमर्द्यते येन तादृशः पदन्यासो येषां तान् हनचरगष्टगिति कर्त्तरि विहितष्टक् कृत्वोः कभाव इति अन्यत्र दृश्यते घेऽपि न चतिः हनगमित्युल्लोपे हनोऽङ्गोघ्नः स्तम्बघ्नश्च स्तम्बघनः स्तम्बो येन निहन्यते। स्तम्बो गुच्छस्तृणादिन इत्यमरः। परिघवद्गुरवो विपुला भुजा येषां परिघोऽस्त्रविशेषः परमते परिहन्यतेऽनेनेति हन्तेर्डान्तस्य रूपम्। रूढशब्दोऽयम्। सा कीदृशी विघनेन्दुसमद्युतिः विगतो घनो मेघो यस्मात् तादृशस्य शरत्कालीनस्य चन्द्रस्येव दीप्तिर्यस्याः परमते हन्तेरल् मेघे घनादेशश्च स्वमते निपातः॥ ६२॥ भ०

पिप्रेत्यादि। तान् विविधैः फलैर्वारिभिश्च पिप्राय तर्पितवती अद्रिगुहोपघ्नान् अद्रिगुहैव उपघ्न आश्रयो येषां कपीनाम् उपघ्न आश्रय इत्यप् उपधालोपश्च निपात्यते संघसमागतान् समूहेनागतान् उद्घान् प्रशस्तान् संघोद्घौ गणप्रशंसयो-

निघानिघतरुच्छन्ने तस्मिंस्ते लभ्भ्रिमैः फलैः ।
तत्रास्तां भ्राजथुमतीं पप्रच्छुः कस्य पूरियम् ॥ ६५ ॥
रक्षणं करोषि कस्मात्त्वं यत्नेनाख्यायतां शुभे ! ।
स्वप्ने निधिवदाभाति तव सन्दर्शनं हि नः ॥ ६६ ॥

---

रिति समुदोरुपपदयोः हन्तेरपि टिलोपश्च निपात्यते ॥ ६४ ॥
ज० म०

पिप्रेत्यादि । सा फलैर्वारिभिश्च तान् पिप्राय तर्पितवती कीदृशान् अद्रिगुहा उपघ्न आश्रयो येषां तान् उपादाश्रये हन्तेरल् घ्नश्चेति परः स्मरति हनचरगष्टगित्यस्य कद्वोः कभावः इत्यन्यत्र प्रवृत्तिःअभिधानादाश्रयार्थता । स्यादुपघ्नोऽन्तिकाश्रय इत्यमरः । उद्घान् प्रशस्तान् परमतें उद्घं हन्यते ज्ञायते इति उदः प्रशस्ते हन्तेरल् घादेशश्च स्मरति हनजनादित्यस्य कद्वोः कभाव इत्यन्यत्र प्रवृत्तेर्गमादित्वात् घणो डः संघेन समूहेनागतान् संहननं संहन्यते वा अस्मिन्निति सङ्घो हन्तेरल् समूहे घादेशश्चेति परः स्मरति उद्घवत् । फलैः कीदृशैः नानारसैः नानाविधरसयुक्तैः चित्रैरङ्गतैः । वारिभिः कीदृशैः स्वादुशीतैः मधुर शीतलैः ॥ ६४ ॥ भ०

निघेत्यादि । तस्मिन् प्रघणे निघानिघैर्निमित्तानिमित्तैस्तरुभिः छन्ने निघो निमित्तमिति निपूर्वाद्धन्तेरपि टिलोपे निपात्यते समारोहपरिणाहाभ्यां निमित्तमित्युच्यते ते कपयः लभ्भ्रिमैर्लाभनिर्वृत्तैः ड्वितः क्त्रिः, फलैस्तृप्ताः सन्तस्तां स्त्रियं भ्राजथुमतीं शोभावतीं पप्रच्छुः पृष्टवन्तः कस्येयं पूरिति ट्वितोऽथुच् तदन्तान्मतुप् ॥ ६५ ॥ ज० म०

निघेत्यादि । तस्मिन् सौधसद्मनः प्रघाणे ते वानरास्तां पप्रच्छुः । तस्मिन् कीदृशि निघानिघैर्दैर्घ्यविस्ताराभ्यां तुल्या-

ततो जलधिगम्भीरान् वानरान् प्रत्युवाच सा ।
इयं दानवराजस्य पूः सृष्टिर्विश्वकर्मणः ॥ ६७ ॥

तुल्यैस्तरुभिर्वृक्षैश्छन्ने आवृते परमते निःशेषेण हन्यन्ते ज्ञायन्ते इति नेस्तुल्यारोहपरिणाहे हन्तेर्डो घादेशश्च स्रमते घणो रूपम् । विष्वक्समे निघ इत्यमरः । ते कीदृशाः लब्धिमेलाभेन निर्वृत्तैः फलैस्तृप्ताः लभहोऽघ प्राप्तौ ड्वितस्त्वे त्रिमक् ढभावत्तयोर्धः । तां कीदृशीं भ्राजथुमतीं शोभावतीं टुभ्राजृब् दीप्तौ ट्वितोऽथुर्भावे किं पप्रच्छुरित्याह कस्येयं पूरिति अग्रिमश्लोकेनाप्यन्वयः ॥ ६५ ॥ म०

रक्षणमित्यादि । हे शुभे ! कस्माद्वा रक्षणं रक्षां करोषि एतद्यत्नेनादरेण नोऽस्माकमाख्यायतां उभयत्रापि यत्नयाचेति नङ् । तस्मात् स्वप्ने निधिवत् निधिरिव तव सन्दर्शनमाभाति नोऽस्माकमतिदुर्लभत्वात् स्वप्न इति रूपो नन् निधिरिति उपसर्गे घोः किः ॥ ६६ ॥ ज० म०

रक्षणमित्यादि । हे शुभे ! कस्माद्वा त्वं रक्षणं रक्षां करोषि अर्थात् पूर्य्याः एतत् यत्नेनादरेणाख्यायतां कथ्यतां हि यस्मात् स्वप्ने निधिरिव तव सन्दर्शनं अतिदुर्लभत्वान्नोऽस्माकमाभाति अतः पूर्वमननुभूतत्वात् एवं पृच्छाम इति भावः । स्वपरक्षयतेत्यादिना सर्वत्र नङ्रक्षेर्णत्वं निधिरिति किर्दोऽन्तर्गेरिति किः उस्येचोत्यालोपः ॥ ६६ ॥ म०

तत इत्यादि । ततस्तस्मादनन्तरं सा प्रत्युवाच । जलं धीयते अस्मिन्निति अधिकरणे चेति किः जलधिः समुद्रः तद्वद्गम्भीरानक्षोभ्यत्वात् इयं पूः दानवराजस्य विश्वकर्मणः सृष्टिः सृज्यते इति सृष्टिः कर्मणि स्त्रियां क्तिन् । इतः स्त्रीलिङ्गमधिकृत्योच्यते ॥ ६७ ॥ ज० म०

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



निहतश्च स्थितिं भिन्दन् दानवोऽसौ बलद्विषा ।
दुहिता मेरुसावर्णेरहं नाम्ना स्वयम्प्रभा ॥ ६८ ॥
जूतिमिच्छथ चेत् तूर्णं कीर्त्तिं वा पातुमात्मनः ।
करोमि वो वहिर्यूतीन् पिधध्वं पाणिभिर्दृशः ॥ ६९ ॥

---

तत इत्यादि । तदनन्तरं सा वानरान् प्रत्युवाच । कीदृशान् जलधिवत् गम्भीरान् अक्षोभ्यान् जलानि धीयन्तेऽत्रेति ढाङ्डे इति किः । किं प्रत्युवाचेत्याह दानवराजस्य इयं पूः विश्वकर्मणः सृष्टिः पूर्वं कस्य पूरिति स्वामिनः कर्त्तुश्च प्रश्न इत्युभयमुक्तं सृज्यते इति क्तिः क्तिस्त्रघे इति कर्मणि स्त्रियां क्तिः । इतः स्त्रीकृदधिकारः ॥ ६७ ॥ भ०

निहेत्यादि । असौ दानवराजः स्थितिं मर्य्यादां भिन्दन् स्थागापापचोभाव इति क्तिन् बलद्विषा इन्द्रेण निहतः यस्य चाहं दुहिता स पिता नाम्ना मेरुसावर्णिः अहञ्च नाम्ना स्वयम्प्रभेति ॥ ६८ ॥ ज० भ०

निहेत्यादि । बलद्विषा इन्द्रेण असौ दानवराजो निहतः यतः स्थितिं मर्य्यादां भिन्दन् त्यजन् अहं मेरुसावर्णिनाम्नो दुहिता कन्या च स्वयम्प्रभा पितुरात्मनश्च प्रसिद्धनामोत्कीर्त्तनेन दानववधानन्तरमिन्द्रेणाहमिह नियुक्तेति किंवदन्ती सूचिता तिष्ठतेः क्तिः दोषोमास्यामिति ङिः मर्य्यादा धारणा स्थितिरित्यमरः । स्वयम्प्रभेति स्वयं प्रभाति शोभते इति आतोऽन्तःअङ्गे रिति ङः स्वयमात्मना प्रभा यस्या इति वा ॥ ६८ ॥ भ०

जूतिमित्यादि । यदि तूर्णं शीघ्रं जूतिं गमनमिच्छथ कीर्त्तिं वा आत्मनः पातुं रक्षितुं वः युष्मान् वहिर्यूतीन् वहिर्भूतान् ऊतियूतीत्यादिना निपातितः तत्र यौतेर्जवतेश्च क्तिन् दीर्घत्वञ्च निपात्यते कीर्त्तिरपि कृत् संशब्दने स्वार्थिको णिच्

व्रज्यावती निरुद्धाच्चान् विधेवानुष्ठितक्रियान् ।
निरचिक्रमदिच्छातो वानरांश्चङ्क्रमावतः ॥ ७० ॥

उपधायाश्चेतीत्वं तस्मात् क्तिन् अतः पाणिभिः दृशः दृष्टीः पिधध्वं छादयध्वं अपिपूर्वाद्धाञो लोटि द्विर्वचने दधस्तथोश्चेति अभ्यासस्य भष्भावे श्नाभ्यस्तयोरित्याकारलोपे झलां जश्झशीति धातोर्दकारे वष्टि भागुरिरित्युपसर्गाकारलोपे च रूपम् ॥ ६९ ॥ ज० म०

जूतिमित्यादि । यूयं चेत् यदि तूर्णं शीघ्रं जूतिं गमनमिच्छथ प्रभुकार्य्यं कृत्वा आत्मनश्च कीर्त्तिं पातुं रक्षितुमिच्छथः तदा पाणिभिर्हस्तैर्दृशश्चक्षूंषि पिधध्वं आच्छादयत ततोऽहं वो युष्मान् वहिर्यूतीत् वहिर्देशे यूतिर्मिश्रणं येषां तादृशान् वहिर्गतानित्यर्थः जुगत्यां युत्मिश्रणे सातिहेतीति जूतियूती भावक्त्यन्ते निपात्येते कृत्कसंशब्दे क्तित्वाच्चुरादिः कीर्त्यतेऽनेति कर्मणि क्तिः कीर्त्तक्षत इति कीर्त्तादेशः ञेर्लोपः अपिपूर्वात् धाञो गोध्वं श्वादीरेद्विः खेर्दत्वं श्नाद्यगोरित्यालोपः झभान्तस्येति खेर्दस्य धत्वं झप्भझसोरिति मूलधातोर्दत्वं वातोऽवाप्योरिति पक्षे अपेरतो लुक् ॥ ६८ ॥ म०

व्रज्येत्यादि । सा व्रज्यावती प्रशस्तगमनवती व्रजयजोर्भावे क्यप् प्रशंसायां मतुप् वानरान्निरुद्धाच्चान् निरचिक्रमत् निष्कासितवती क्रमेर्ण्यन्तस्य लुङि सन्वल्लघुनीति सन्वद्भावात् सन्यत इतीत्वं दीर्घो लघोरिति न दीर्घत्वं संयोगपरस्य गुरुत्वात् अनुष्ठितक्रियानाचरिततदुपदिष्टव्यापारान् लुकः शचेति शः सार्वधातुके यक् रिङादेशश्च चङ्क्रमावतः कुटिलगतिमतः अः प्रत्ययादिय्यकारः इच्छात इति वानराणामिच्छा या इच्छेति निपातितं इषेः शप्प्रत्ययः छत्वावश्च निपात्यते

निष्क्रम्य शिक्षया तस्यास्त्रपावन्तो रसातलात् ।
ज्ञात्वा मासमतिक्रान्तं व्यथामवललम्बिरे ॥ ७१ ॥

विद्यासंज्ञायामिति क्यप् यथा विद्या अनुष्ठितक्रियान् कृतपुरश्चरणान् पुरुषानिच्छातोऽभीष्टं सम्पादयति तद्वत् सेति भावः ॥ ७० ॥ ज० म०

व्रज्येत्यादि । सा व्रज्यावती प्रशस्तगतिमती वानरानिच्छातो निरचिक्रमत् निष्क्रामयामास यथा विद्या तत्त्वज्ञानं इच्छातः अनुष्ठितक्रियान् विहितध्यानधारणादीन् संसारान्निष्क्रामयति तद्वत् वानरानपि अनुष्ठितक्रियान् आचरिततदुपदिष्टव्यापारान् यतो निरुद्धाचान् आच्छादितदृशः सक्थ्यक्ष्णः षः स्वाङ्ग इति षः पक्षे जितेन्द्रियान् अक्षशब्द इन्द्रियवचनः चङ्क्रमावतः अन्धकारे कुटिलगतियुक्तान् पक्षे तीर्थादिचङ्क्रमणकारिणः व्रज गतौ शीव्रजयजविदेत्यादिना क्यप् ततोऽस्त्यर्थे प्रशंसायां वतुः विदज्ञाने पूर्ववत् क्यप् क्रियते इति क्रिया कुः शश्चेति शः ऋद्रिः श्नुध्वोरितीयः क्रमेर्यङन्तात् जिश्रिद्रुस्रु इत्यङ् खेः सन्वत् स्यश्चेत् स्वः स्वेररिति गुरुत्वान्न दीर्घः इषु इच्छायां तुलेच्छेत्यादिना निपातः क्रमेर्यङन्तात् शंस्यादः यङो लुक् ततो वतुः ॥ ७० ॥ भ०

निष्क्रम्येत्यादि । तस्याः शिक्षया उपदेशेन गुरोश्च इव इत्यकारः तस्माद्रसातलान्निष्क्रम्य निर्गम्य त्रपावन्तः स्त्रिया उपदेशेन निष्क्रान्ता वयमिति त्रपेति षिद्भिदादिभ्योऽङ् मासमतिक्रान्तं ज्ञात्वा वहिर्निर्गताः सन्तः व्यथां भयं भिदादिलादङ् अवललम्बिरे वयं मासावधिना प्रेषिताः स च मासो विनैव कार्य्येणातिक्रान्त इति स्वामिनो भयम् ॥ ७१ ॥ ज० म०

निष्क्रम्येत्यादि । तस्याः स्वयम्प्रभायाः शिक्षया उपदेशेन

चिन्तावन्तः कथाञ्चक्रुरुपधाभेदभीरवः।
अकृत्वा नृपतेः कार्य्यं पूजां लप्स्यामहे कथम् ॥ ७२ ॥

---

रसातलात् निष्क्रम्य स्वयं निष्प्रभाशक्तया त्रपावन्तो लज्जायुक्ताः सन्तः राज्ञा अवधित्वेन निश्चितं मासं अतिक्रान्तं ज्ञात्वा ते व्यथां राज्ञः सकाशाद्भयं अवलम्बिरे प्रापुः श्विचेः सेमन्तात्-सरोरिति अप्रत्ययः त्रपूषङ्लज्जायां षित्त्वात् भीषिचिन्ति-पूजीत्यादिना ङः व्यथषमङ्दुःखेचालेभये घटादित्वात् पूर्वेण ङः यद्यपि कविकल्पद्रुमे घटादेः सानुबन्धत्वं दृश्यते तथापि पूर्वाचार्य्यकृमदर्शनात् मुग्धबोधस्य कविकल्पद्रुमात् प्राक् कृत-त्वेन भीषिचिन्तीत्यादौ आत्वर्घटादेरित्यस्य न वैयर्थ्यं रुजा-मिति पाठे तेनैव भिदादित्वात् ङः ॥ ७१ ॥ भ०

चिन्तेत्यादि। उपधानमुपधा परीक्षा आतश्चोपसर्ग इत्यङ् तत्परिशुद्धो हि भृत्यः कार्य्येषु नियुज्यते तदकरणादुप-धाया भेदोऽभाव तस्माद्भीरवः चिन्तावन्त इति कर्त्तव्यतामूढ़ाः कथां चक्रुः कृतवन्तः। कीदृशमित्याह अकृत्वा नृपतेः कार्य्यं पूजां लप्स्यामहे कथमिति नैवेत्यर्थः चिन्तादयः चिन्तिपूजी-त्यादिना अङन्ताः ॥ ७२ ॥ ज० म०

चिन्तेत्यादि। नृपतेःकार्य्यं अकृत्वा कथं वयं पूजां लप्स्या-महे अपितु अवज्ञाता एव भविष्याम इति कथां ते चक्रुः। कीदृशाः उपधाभेदभीरवः राज्ञा धर्मादिभिर्भृत्यानां या परीक्षा क्रियते सोपधा तस्या भेदः कार्य्यासामर्थ्येन भङ्गः तद्भी-रवः अतएव चिन्तावन्तः चिन्तिकथिपूजिभ्यो भीषिचिन्तीत्या-दिना ङः उपपूर्वात् धाञ आतोऽन्तः अङ्गेरिति ङः। उपधा-धर्माद्यैर्यत् परीक्षणमित्यमरः ॥ ७२ ॥ भ०

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



प्रायोपासनया शान्तिं मन्वानो बालिसम्भवः ।
युक्त्वा योगं स्थितः शैले विवृण्वंश्चित्तवेदनाम् ॥ ७३ ॥
प्रस्कन्दिकामिव प्राप्तो ध्यात्वा ब्रूते स्म जाम्बवान् ।
धिक् शालभञ्जिकाप्रख्यान् विषयान् कल्पनारुचीन् ॥७४॥

---

प्राय इत्यादि। उपासनेति ण्यासश्रन्थो युच् प्रायेण उपवासेनोपासना अनशनेनासनमित्यर्थः तया शान्तिं कल्याणं मन्वानोऽवगच्छन् उपायान्तराभावात् बालिसम्भवोऽङ्गदः योगश्चित्तवृत्तिनिरोधः तं युक्त्वा संबध्य शैले स्थितः चित्तवेदनां चित्तपीडां विवृण्वन् घट्टिविदिवन्दिभ्यो युग्वक्तव्य इति युच् ॥ ७३ ॥ ज० म०

प्राय इत्यादि। बालिसम्भवोऽङ्गदो योगं चित्तवृत्तिनिरोधं युक्त्वा आत्मना सह संबध्य शैले स्थितः किं कुर्वन् प्रायेण उपवासेन उपासनया स्थित्या तस्य सेवया वा तदाचरणरूपया शान्तिं कल्याणं मरणं वा मन्वानः मन्यमानः। प्रायश्चानशने मृत्यौ तुल्यबाहुल्ययोरपि। शान्तिः शमेऽपि कल्याणे इति च विश्वः। ञिलासङ् उपवेशे उपपूर्वोऽयं सेवायामपि ओपिः श्रन्थिग्रन्थीत्यादिना श्नः। चित्तवेदनां मनःपीडां विवृण्वन् प्रकाशयन् विदेः पूर्वेण श्नः ॥ ७३ ॥ भ०

प्रस्केत्यादि। त्वया का क्रिया कर्त्तव्येत्यन्यैः पृष्टः सन् जाम्बवान् ध्यात्वा विचिन्त्य ब्रूते स्म प्रस्कन्दिकामिव रोगविशेषमिव प्राप्तो यातः उत्साहाभावात् रोगाख्यायां ण्वुल् बहुलं शालभञ्जिका क्रीडाविशेषः संज्ञायामिति ण्वुल् नित्यं क्रीडेत्यादिना सः तत्प्रख्या विषया रूपादयः अतितुच्छत्वात् अतस्तान् धिक् किन्तु कल्पनारुचीन् कल्पनीयान् ॥७४॥ज०म०

प्रस्केत्यादि। त्वया किं कार्य्यमित्यन्यैः पृष्टो जाम्बवान्

यां कारिं राजपुत्त्रोऽयमनुतिष्ठति तां क्रियाम् ।
अहमप्यनुतिष्ठामि सोऽप्युक्त्वैवमुपाविशत् ॥ ७५ ॥
उवाच मारुतिर्वृद्धे सन्न्यासिन्यत्र वानरान् ।
अहं पर्य्यायसं प्राप्तां कुर्वे प्रायोपवेशिकाम् ॥ ७६ ॥

---

ऋक्षपतिर्ध्यात्वा ब्रूते स्म उक्तवान् प्रस्कन्दिकां क्षयरोगं प्राप्त इव उत्साहाभावात् स्कन्दिरशोषणे गत्यां नाम्नप्रत्येतिक् चेति रोगार्थे णकः स्त्रीत्वमभिधानात् काप्यनाशीरिति अत इत्वम्। किं ब्रूते स्म इत्याह विषयान् रूपादीन् धिक् यतः शालभञ्जिका नागरक्रीडाविशेषस्तत्तुल्यान् भन्जो धौ मोटने प्रस्कन्दिकावत् संज्ञायां णकः तुल्यत्वमाह कल्पनया विकल्पवशेन पक्षे स्वयं रचनया रुचिरभिलाषो यत्र तान् एतेन सर्वेषां काल्पनिकत्वमिति वेदान्तमतं दर्शितं कपेरंशत्वात् जोषिशन्यीति पनः कपः कृ पः ॥ ७४ ॥ भ०

यामित्यादि। अयं राजपुत्त्रोऽङ्गदो यां कारिं क्रियामनुतिष्ठति तां क्रियां अहमप्यनुतिष्ठामि विभाषाख्यानपरिप्रश्नयोरिञ्चेति करोतेरिञ् पक्षे कञः शचेति शः। सोऽप्येवमुक्त्वा उपाविशत् अनशनेन स्थितः ॥ ७५ ॥ ज० म०

यां केत्यादि। विषयाणां काल्पनिकत्वेन जीवनं विफलमिति यां कारिं क्रियां अयं राजपुत्त्रोऽङ्गदोऽनुतिष्ठति करोति अहमपि तां क्रियां प्रायोपासनां अनुतिष्ठामि इत्युक्त्वा सोऽपि जाम्बवान् उपाविशत् अनशने स्थितः कञः प्रश्नाख्याने निरिति निः ॥ ७५ ॥ भ०

उवाचेत्यादि। मारुतिर्वानरानुवाच वृद्धे जाम्बवति सन्न्यासिनि अनशनवति अहमप्यत्र शैले पर्य्यायेण परिपाट्या

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



अभावे भवतां योऽस्मिन् जीवेत्तस्यास्त्वजीवनिः।
इत्युक्त्वा सर्व एवास्थुर्बद्ध्वा योगासनानि ते ॥ ७७ ॥
अक्लेश्यमसिनाग्न्यन्तं कबन्धबधमभ्यधुः।
धिङ् नः प्रपतनं घोरं क्लेदान्तत्वमनाथवत् ॥ ७८ ॥

---

सम्प्राप्तां प्रायोपवेशिकाम् अनशनं कुर्वे पर्य्यायार्हेत्यादिना ख्वुल् ॥ ७६ ॥ ज० म०

उवाचेत्यादि। मारुतिर्हनूमान् वानरान् उवाच। किमुवाचेत्याह अत्र जाम्बवति वृद्धे सन्न्यासिनि त्यक्ताहारे सति अहमपि पर्य्यायेण क्रमेण प्राप्तां प्रायेण उपवासेन उपवेशिकां स्थितिं कुर्वे प्रायः स्याद्भोजनत्यागः सन्न्यासोऽनशनं स्मृतमिति हलायुधः। उपपूर्वाद्विशेः पर्य्यायेण क इति परः स्वमते त्वभावेत्यादौ स्त्र्यणक इत्यनेन स्त्रियां भावे णकः स्यादिति ज्ञापितम् ॥ ७६ ॥ भ०

अभावे इत्यादि। अभावे विनाशे भवतां योऽस्मिन् लोके जीवेत् तस्यास्त्वजीवनिः धिग्जीवितम् आक्रोशे नञ्यनिः एवमुक्त्वा सर्व एव अस्थुः स्थिताः तिष्ठतेर्गातिस्थेति सिचो लुक् बद्ध्वा योगासनानि विरचय्य पद्मासनादीनि ॥ ७७ ॥ ज० म०

अभावे इत्यादि। भवतामभावे विनाशेऽस्मिन् लोके यो जीवेत् तस्याजीवनिर्मरणं धिग्जीवनं वास्तु नञोऽन्याक्रोशेष्वीति अनिः। इत्युक्त्वा सर्व एव ते वानरा योगासनानि पद्मासनानि बद्ध्वा अस्थुः स्थिताः तिष्ठतेर्घ्रां भूस्थेति सेर्लुक् अत्र उस् उस्येचीत्यालोपः ॥ ७७ ॥ भ०

अक्लेश्येत्यादि। इतः स्त्रीलिङ्गभावं निवर्त्य कृदुदाक्रियते। कबन्धबधं योजनबाहोर्बधमभ्यधुः अभिहितवन्तः अभिपूर्वोधात्वभिधाने वर्त्तते। कीदृशम् अक्लेश्यं प्रयासरहितं कस्मात्

ततो मन्दगतः पक्षी तेषां प्रायोपवेशनम् ।
श्रुत्वा गीयमिवाशंसुर्महानायादशोभनः ॥ ७९ ॥

असिना सुखमरणात् तस्याग्न्यन्तम् अन्ते तस्याग्निरभूत् अस्माकं धिक् प्रपतनं विनाशं दुःखेन घोरत्वात् क्लेदोन्तत्वम् अन्ते पूतीभावस्तद्यत्रास्ति अर्श आदित्वादच् अनाथवत् अनाथानामिव अक्लेश्यप्रपतनशब्दौ भावसाधनौ कृत्यल्युटो बहुलमिति ॥७८॥ ज० म०

स्त्रीलिङ्गकृदधिकारं निवर्त्त्य कृदुच्यते । अक्लेश्यमित्यादि । तेकबन्धस्य योजनबाह्वोर्बधं मरणम् अभ्यधुः उक्तवन्तः अभिपूर्वधाञश्च्यां रूपम् अस्थुरितिवत् । कीदृशम् असिना अक्लेश्यं क्लेशाजनकं खड्गेन शीघ्रहननात् नातिदुःखमित्यर्थः अग्न्यन्तां दाहेन अग्नेरन्तोऽवसानं यत्र अतएव परकालेऽपि न दुःखदमिति भावः अनाथवत् नाथरहितानामिव नोऽस्माकं प्रपतनं मरणं धिक् इत्यप्यभ्यधुरिति सम्बन्धः यतो घोरम् उपवासदुःखबाहुल्यात् क्लेदान्तत्वं दाहाभावात् क्लेद एवान्ते यस्य तस्य भावः क्लेदान्तत्वं तद्विद्यतेऽस्येति अर्श आदित्वादः क्लेदस्यान्तत्वं यत्रेति वा क्लेदमन्तभूतं त्वचति संवृणोतीति गमादित्वाड्डः इति वा अस्माकं प्रपतनं क्लेदान्तत्वञ्चेत्युभयं धिक् घोरत्वादिह परत्र चेति केचित् न क्लिश्नातीत्यक्लेश्यः इस्युासोरिति ढश्चावविहितो ण्यण् कर्त्तोः कभाव इत्युत्तरत्र कर्त्तरि स्यात् यद्वा क्लेश्यं क्लेशः भावे ष्यण् न विद्यते क्लेश्यं यत्रेति विग्रहः प्रपतनमिति भावे घञल्लनटोऽघे इत्यनट् ॥ ७८ ॥ भ०

तत इत्यादि । ततोऽभिहितानन्तरं महान् पक्षी सम्पातिनामा जटायुर्भ्राता आयात् आगतः मन्दगतो मन्दगमनः

देहत्रश्चनतुण्डाग्रं तं विलोक्याशुभाकरम्।
पापगोचरमात्मानमशोचन् वानरा मुहुः॥ ८०॥

---

नपुंसके भावे क्तः आहिताग्निलात् परनिपातः तेषां यत् प्रायोपवेशनं तदशनीयमिव भोजनीयमिव कत्यस्युटो बहुलमिति कत्यः आशंसुः आशंसनशीलः अशोभनः शोभारहितः दावाग्निना प्लुष्टशरीरत्वात् ल्युडेति भावे ल्युट् कर्मणि च येनेत्येतत् परिहृत्योदाहृतत्वात्॥ ७९॥ ज० म०

तत इत्यादि। तदनन्तरं महान् पक्षी सम्पातिनामा तत्रायात् आगतः यातेर्ल्यां रूपम्। कीदृशः मन्दगतः मन्दं गतं गमनं यस्य गमेर्भावे क्तः येषां वानराणां यत् प्रायोपवेशनं तत् अशनीयमिव स्वभक्ष्यमिव तृप्तिजनकत्वात् आशंसुः आशंसनशीलः भावेऽनट् अनीयस्य कृत्तोः कभाव इत्युक्तेः करणे वानीयः तदा अशनीयं भोजनसाधनं अशोभनः शोभारहितः सूर्य्यतेजसा दग्धपक्षत्वात् नन्यादित्वात्कर्त्तरि अनः न विद्यते शोभनं यस्येति वा भावेऽनट्॥ ७९। भ०

देहेत्यादि। वृश्च्यते येन तुण्डाग्रेण करणाधिकरणयोश्चेति करणे ल्युट् देहस्य व्रश्चनमिति कृद्योगात् षष्ठी देहव्रश्चनं तुण्डाग्रं यस्य तं विलोक्य वानरा अशुभाकरं पापस्योत्पत्तिस्थानं आकर इवाकरः पुंसि संज्ञायां घः तत्र हि करणाधिकरणयोरिति वर्त्तते एवं उत्तरत्रापि चात्मनं पापगोचरं पापविषयं पापविषये पतिता वयमिति मुहुरशोचन् शोचितवन्तः गोचरसञ्चरेत्यधिकरणे निपातितः॥ ८०॥ ज० म०

देहेत्यादि। तं पक्षिणं विलोक्य वानराः पापगोचरं पापविषयमात्मानं मुहुर्वारं वारं अशोचन् पापविषयो ममात्मेति सर्वे ऊचुरित्यर्थः। कीदृशं पक्षिणं देहव्रश्चनतुण्डाग्रं

जटायुः पुण्यकृत् पक्षी दण्डकारण्यसञ्चरः ।
कृत्वा राघवकार्य्यं यः स्वरारूढोऽग्निसंस्कृतः ॥ ८१ ॥
नरकस्यावतारोऽयं प्रत्यक्षोऽस्माकमागतः ।
अचेष्टा यदिहान्यायादनेनास्यामहे वयम् ॥ ८२ ॥

---

वृश्चति अनेनेति व्रश्चनं करणेऽनट् देहस्य व्रश्चनं तुण्डाग्रं यस्य तं यद्वा देहं वृश्चति छिनत्तीति देहव्रश्चनं कभावेऽमी इति वचनात् कर्त्तरि अनट् नन्द्यादित्वाद्वा अनः अशुभाकरं अशुभस्य पापस्य आकरमुत्पत्तिस्थानं आकुर्वन्त्यस्मिन्निति सञ्ज्ञायामल् गावश्चरन्त्यस्मिन्निति गोचरोऽलन्तः स्वभावात् प्रत्यासन्नवाची ॥ ८० ॥ भ०

जटेत्यादि । कृत्वा राघवकार्य्यं अग्निसंस्कृतः अग्निना कृतसंस्कारः स्वः स्वर्गमारूढः जटायुः पुण्यकृत् सञ्चरत्यस्मिन्निति सञ्चरः पूर्ववत् निपातितः दण्डकारण्यं सञ्चरोऽवस्थानं यस्येति ॥ ८१ ॥ ज० म०

जटेत्यादि । जटायुः पक्षी पुण्यकृत् पुण्यं कृतवान् त्वासुमिति क्विप् स्वस्य तन् । कीदृशः दण्डकारण्यं सञ्चरः स्थानं यस्य स तथा सञ्चरत्यस्मिन्नित्याधारेऽल् यः राघवकार्य्यं सीताहरणविज्ञापनादिकं कृत्वा अग्निना संस्कृतः कृतसंस्कारः सन् स्वः स्वर्गमारूढः गत्यर्थाढेत्यादिना रुहेः कर्त्तरि क्तः हो ढः ढभादिति धः ष्टुभिरिति ढः ढ्रो ढ्रीति ढलुक् दीर्घश्च ॥ ८१ ॥ भ०

नरेत्यादि । अवतीर्य्यते येन कर्मणेति अवेस्तृस्त्रोर्घञ् स एवायं नरकस्यावतारः प्रत्यक्षोऽस्माकमागतः यद्यस्माद्वयमचेष्टाः निश्चलाः अनेन पक्षिणा अन्यायादयुक्त्या नीयते अनेनेति नि[illegible]ः अध्यायन्यायेति निपातनात् घञ् अस्यामहे भ[illegible]हे कर्मणि लट् ॥ ८२ ॥ ज० म०

हृदयोदङ्कसंस्थानं कृतान्तानायसन्निभम् ।
शरीराखनतुण्डाग्रं प्राप्यामुं शर्म दुर्लभम् ॥ ८३ ॥

---

नरेत्यादि । नरकमवतरति येनाधर्मेण स एव प्रत्यक्ष इन्द्रियग्राह्योऽयं पक्षिरूपोऽस्माकमागतः रूपकालङ्कारो वा पक्षिविशेषणं वा अवपूर्वात्तरतेः करणे घञ् नरकस्येति कर्मणि षष्ठी यद्यस्मात् इह प्रदेशे अनेन पक्षिणा अन्यायादनौचित्यादयुक्त्या वा वयमत्स्यामहे भक्षणीयाः यतोऽचेष्टाश्चेष्टारहिताः नीयतेऽनेनेति न्यायः निपूर्वादिणः करणे घञ् अदः कर्मणि ती ॥ ८२ ॥ भ०

हृदेत्यादि । अमुं पक्षिणं प्राप्य कीदृशं हृदयोदङ्कसंस्थानम् उदञ्चयते आकृष्यते अनेनेति उत्पूर्वादञ्चतेरुदङ्कोदक इति घञ् निपात्यते हृदयस्योदङ्कः संदंशः तत्संस्थानं तत्सदृशं कृतान्तानायसन्निभं यमजालतुल्यं तत्प्रविष्टस्य दुःखेन निर्गमत्वात् जालमानाय इति नयतेराङ्पूर्वात्करणे घञ् निपात्यते आखन्यते येन तुण्डाग्रेण खनो घच् शरीरस्याखनं तादृक् तुण्डाग्रं यस्येति प्राप्य शर्म सुखं दुर्लभं कृच्छ्रलभ्यम् ईषदित्यादिना खल् अत्र करणाधिकरणयोश्चेति निवृत्तं तयोरेव कृत्यक्तखलर्था इति योज्यम् उपसर्गात् खलघञोरिति प्राप्तस्य नुमः नसुदुर्भ्यामिति प्रतिषेधः ॥ ८३ ॥ ज० म०

हृदेत्यादि । अमुं पक्षिणं प्राप्य अस्माकं शर्म सुखं दुर्लभं दुःखेन लभ्यत इति ईषद्दुःसोरिति खल् । अमुं कीदृशं हृदयोदङ्कसंस्थानं हृदयमुदच्यते ऊर्द्धमाकृष्यते येन तादृशं संस्थानमाकृतिर्यस्य तं ऊर्द्धहृदयाकृतिमित्यर्थः हृदयोद्वेजकाकृतिमिति वा उत्पूर्वादञ्चतेः करणे घञ् चजोः कुगाविति कत्वं मत्यर्थस्याञ्चतेः क्षेमकत्वाभावात् अङ्कधातोरूपमित्यन्ये ।

ईषदाढ्यङ्करोऽप्येष न परत्राशुभक्रियः ।
अस्मानत्तुमितोऽभ्येति परिग्लानो बुभुक्षया ॥ ८४ ॥

कृतान्तानायसन्निभं यमजालसदृशं जाले प्रविष्टस्य दुःखेन निर्गम इति भावः । आनीयतेऽनेनेति आनायो जालं करणे घञ् । आनायः पुंसि जालं स्यादित्यमरः । शरीराखनतुण्डाग्रम् आखन्यते समन्ताद्विदार्य्यते येन तदाखनं करणेऽल् शरीरस्याखनं तुण्डाग्रं यस्य तम् आखरेति पाठे खनोडडरेति डरः ॥ ८३ ॥ भ०

ईषदित्यादि । य एष अस्मानत्तुमितः प्रदेशादभ्येति आगच्छति स परत्र परलोके ईषदाढ्यङ्करोऽपि अनाढ्यैरीषदाढ्योऽपि न कृतः अशुभेन कर्मणेत्यर्थात् कर्तृकर्मणोश्च भूकृञोरिति चूर्थे कर्मोपपदात् करोतेः खल् यतः परिग्लानो बुभुक्षया यो हि कर्मणा शुभेन ईषदाढ्यङ्करोऽपि न कृतः स कथं न बुभुक्षया पीड्यते परिग्लायतीति कर्त्तरि बहुलवचनात् ल्युट् निष्ठान्तो वा संयोगादेरित्यादिना निष्ठानत्वम् अशुभक्रियः सत्वद्रोहाभिरतत्वात् ॥ ८४ ॥ ज० म०

ईषदित्यादि । एष पक्षी बुभुक्षया परिग्लानः सन् अत्तुं भक्षयितुं इह प्रदेशे अभ्येति आभिमुख्येनागच्छति इत इति पाठे स्वस्थानादित्यर्थः न एष परत्र परलोके ईषदाढ्यङ्करोऽपि भविष्यति अनाढ्योऽयमीषदाढ्योऽपि न करिष्यते केनचित् कर्मणेत्यर्थः किंवा यस्मात् परलोके ईषदाढ्योऽपि न कृतः शुभकर्मणार्थात् तेनायं बुभुक्षया ग्लानः परलोके शुभकर्मणा यद्याढ्यः कृतः स्यात् तदा बुभुक्षया न पीडितः स्यादित्यर्थः ईषद्दुःसोरिति खल् खित्करणेन कर्त्तृकर्मणोर्व्यवधानमपि प्राप्तं तच्च ईषदाढ्यम्भवमित्युदाहरणेन स्पष्टीकृतं करोतेरि-

संप्राप्य वानरान् पक्षी जगाद मधुरं वचः ।
के यूयं दुरुपस्थाने मनसाप्यद्रिमूर्द्धनि ॥ ८५ ॥

इति कृदधिकारः ।

अथ प्रकीर्णकाः ।

आत्मनः परिदेवध्वे कुर्वन्तो रामसङ्कथाम् ।
समानोदर्य्यमस्माकं जटायुश्च स्तुथादरात् ॥ ८६ ॥

---

द्वाभूतप्रादुर्भावार्थत्वात् च्व्यर्थो लभ्यते परे तु सुदुरीषद्भ्यः कर्तृकर्मभ्यामभूततद्भावे भूकृञः खल्भावकर्मणोरित्याहुः । अशुभक्रियः अशुभकर्मा परद्रोहित्वात् परिग्लान इति कभावेऽमीति कर्त्तर्य्यनट् किंवा गत्यर्थाढेत्यादिना कर्त्तरि क्तः सुल्वाद्योदित्यादिना नत्वं इत्येवमशोचन् वानरा सुहुरित्यन्वयः ॥८४॥भ०

संप्रेत्यादि । वानरान् संप्राप्य पक्षी जगाद गदितवान् के यूयम् अद्रिमूर्द्धनि पर्वतशिरसि दुरुपस्थाने दुःखेनोपस्थातुं शक्ये मनसापि किं पुनः शरीरेण आतो युच् तत्रापि ईषदादयोऽनुवर्त्तन्ते कर्तृकर्मणोरिति न स्मर्य्यते । इति कृदधिकारः ॥ ८५ ॥ ज० म०

संप्राप्येत्यादि । वानरान् संप्राप्य पक्षी मधुरं वचो जगाद किन्तदित्याह के यूयमद्रिमूर्द्धनि पर्वतशिखरे स्थिताः मनसापि दुरुपस्थाने दुःखेनैवोपस्थातुं शक्ये किं पुनः शरीरेण आतोऽनोऽदरिद्र इति अनः । इति कृदधिकारः ॥८५॥ भ०

इतः प्रकीर्णकश्लोकानाह । आत्मेत्यादि । आत्मनः परिदेवध्वे शोचथ देवृदेवन इति भौवादिकः शसि न संयोगाद्वमन्तादित्यल्लोपो न भवति जटायुश्च समानोदर्य्यं भ्रातरमस्माकं समानोदरे शयित इति यत् आदरात् प्रस्तुथ प्रस्तुतिं

शङ्काधवित्रवचनं प्रत्यूचुर्वानराः खगम् ।
वयं शत्रुलवित्रेषोर्दूता रामस्य भूपतेः ॥ ८७ ॥
केनापि दौष्कुलेयेन कुल्यां माहाकुलीं प्रियाम् ।
हृतां माहाकुलीनस्य तस्य लिप्सामहे वयम् ॥ ८८ ॥

---

कुरुथ जटायुः पुख्यकृदित्यादिना रामसत्कथाञ्च कुर्वन्तः के यूयमिति ॥ ८६ ॥ ज० म०

अथ प्रकीर्णकाः । आत्मेत्यादि । यूयम् आत्मनः परिदेवस्ते विलपथ देहङ् देवने रामस्य सङ्कथां कुर्वन्तोऽस्माकं समानोदर्य्यं सहोदरं जटायुञ्च आदरेण स्तुथ जटायुः पुख्यकृदित्यादिना तत्स्तुतिं कुरुथ अतः के यूयमिति पूर्वेणान्वयः सम्बन्धः समानोदरे शयित इत्यर्थे ढघेकादिति यः रूपनामेति विकल्पविधानात् न समानस्य सादेशः ॥ ८६ ॥ भ०

शङ्केत्यादि । धुनोत्यपनयत्यनेनेति धवित्रं अर्त्तिलूधू इत्यादिना करणे इत्रः किमयं करिष्यतीति शङ्कया धवित्रं वचनं यस्य तं खगं वानराः प्रत्यूचुः शत्रुलवित्रा इषवो बाणा यस्य रामस्य भूपतेस्तस्य वयं दूताः पूर्ववदित्रं कृत्वा सः ॥ ८७ ॥ ज० म०

शङ्केत्यादि । वानराः खगं प्रत्यूचुः । कीदृशं किमयं खगः करिष्यति इत्येवंरूपायाः शङ्कायाः धवित्रम् अपनयनकारकं वचनं यस्य तादृशम् । किमित्याह वयं रामस्य भूपतेर्दूताः । कीदृशस्य शत्रूणां लवित्राश्छेदकरणानि इषवो यस्य धूञ्गिकम्पे लूञ्गिच्छिदि आभ्यां लृधूख्नेति करणे इत्रः ॥८७॥भ०

केनेत्यादि । तस्य रामस्य प्रियां केनापि दौष्कुलेयेन हृतां दुष्कुलस्यापत्यमिति दुष्कुलाड्ढञ् कुल्यां कुले साध्वीं तत्र साधुरिति यत् माहाकुलीं माहाकुलीनस्येति महाकुल-

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



त्रिंशत्तममहर्यातं मत्वा प्रत्यागमावधिम् ।
अकृतार्था विषीदन्तः परलोकमुपास्महे ॥ ८९ ॥

---

स्यापत्यमिति महाकुलादञ्खञाविति अञ्खञौ लिप्सामहे वयं लब्धुमिच्छामहे ॥ ८८ ॥ ज० म०

केनेत्यादि। तस्य रामस्य प्रियां वयं लिप्सामहे लब्धुमिच्छामः लभेः सनिमिमीत्यादिना इस् खिलोपश्च स्यादेरिति सो लोपः झप्झसोरिति षत्वम्। प्रियां कीदृशीं केनापि दौष्कुलेयेन दुष्कुलोत्पन्नेन हृतां दुष्कुलशब्दात् अश्वादित्वात् ष्णेयः निष्पतन्त्य इतिवत् मूर्द्धन्यः कुल्यां कुले साध्वीं ढघेकादिति यः माहाकुलीं महाकुलात् जनकात् जातां वाह्वाद्यत इति शिवादित्वात् ष्णः। तस्य कीदृशस्य महाकुलीनस्य महाकुलोत्पन्नस्य परमते महाकुलादपत्यार्थे णीनः ततः शिवादित्वात् ष्णः किंवा महाकुलाद्दशरथाज्जात इत्यर्थे ढघेकादिति णीनः ॥ ८८ ॥ भ०

त्रिंशदित्यादि। त्रिंशतः पूरणं विंशत्यादिभ्य इति तमट् त्रिंशत्तमं यदहः तत्प्रत्यागमावधिं प्रत्यागमनस्यावधिं यातं अतीतं मत्वा अकृतार्था अनिष्पादितप्रयोजना विषीदन्तो विषादं गच्छन्तो वयं परलोकमुपास्महे प्रायोपवेशनेन म्रियामहे ॥ ८९ ॥ ज० म०

त्रिंशदित्यादि। राज्ञा अस्माकं प्रत्यागमनस्यावधित्वेन निश्चितं त्रिंशतः पूरणं दिनं यातं गतं मत्वा वयं अकृतार्था अनिष्पादितस्वप्रयोजनाः सन्तः विषीदन्तो विषादं कुर्वन्तः प्रायोपवेशनया परलोकं उपास्महे गन्तुमिच्छामः त्रिंशच्छब्दात् विंशत्यादेर्वेति तमट् ॥ ८९ ॥ भ०

स्त्रियामहे न गच्छामः कौशल्यायनिवल्लभाम् ।
उपलभ्यामपश्यन्तः कौमारीं पततां वर ! ॥ ६० ॥
एते प्रकीर्णकाः ।

---

स्त्रियेत्यादि । हे पततां पक्षिणां वर ! स्त्रियामहे न गच्छामः कौमारीं अक्षतपूर्वदारपतिं लब्धवतीं कौमाराद-पूर्ववचन इति साधुः कौशल्यायनिवल्लभां कौशल्याया अपत्यं कौशल्यायनिः रामः कौशल्यकार्म्यार्याभ्यां चेति फिञ् फस्या-यनादेशः तस्य वल्लभां इष्टां उपलभ्यां प्रशस्तां पोरदुपधादिति यत् उपात् प्रशंसायामिति यत्प्रत्यये नुम् अपश्यन्तोऽनुपल-भमानाः । एते प्रकीर्णकाः ॥ ६० ॥ ज० म०

स्त्रियेत्यादि । हे पततां वर ! पक्षिणां श्रेष्ठ ! वयं स्त्रिया-महे न तु गच्छामः अर्थात् प्रभुपार्श्वं यतः कौशल्यायनिवल्लभां रामप्रियां अपश्यन्तः कौशल्याया अपत्यमिति नड़ादित्वात् फायनः ततः स्वार्थे ष्णिः । कीदृशीं उपलभ्यां स्तुत्यां पूशक-सहेति यः उपात् स्तुताविति नुण् कौमारीं जितकार्त्तिकेय-भार्य्यां अतिरूपवतीमित्यर्थः कुमारस्य कार्त्तिकेयस्य पत्नी कुमारी पत्नग्रामपालकान्तादिति ङीप् "स्कन्दो मन्दमतिर्विवा-हविमुखो धत्ते कुमारव्रतम्" इति काल्पनिकं न तु प्रकृतं देवसेना नामेन्द्रकन्या कार्त्तिकेयस्य पत्नी प्रसिद्धा । तथाहि "शतक्रतोरूपवती देवसेनेति वै सुता । सा महेन्द्रेण रत्यर्थं भार्य्यार्थेनोपपादिता ॥ इति स्कन्दपुराणीयं वचन-ममरकोषटीकायां मधुमाधवेन धृतम् । "अथोपयन्त्रा सदृशेन युक्तां स्कन्देन साक्षादिव देवसेनाम्" इति कालि-दासः । कुमारीं जयतीति ढक्केकादिति णः शित्ते त्रिः ययोर्लोपः षित्त्वाद्दीप् किंवा कौ पृथिव्यां मारीं माया

जगाद वानरान् पक्षी नाध्यगीढ्वं ध्रुवं स्मृतीः ।
यूयं सङ्कुटितुं यस्मात् कालेऽस्मिन्नध्यवस्यथ ॥ ९१ ॥

---

लक्ष्म्या रीर्गतिर्यस्यां लक्ष्मीरूपामित्यर्थः एतेनादरातिशय उक्तः । मा लक्ष्मीश्च प्रकीर्त्तिता । धने रा रीर्गतिः ख्याता रोदने च प्रकीर्त्तिता इति चैकाक्षरकोषः । बहुप्रेयसी इत्युदाहरता वृतः क इत्यस्य व्यभिचारो दर्शितः तेनात्र काभावः किंवा कुमार एव कौमारः स्वार्थे ष्णः कौमारस्य भार्य्यां रामस्य प्रथमपत्नीमित्यर्थः एतेनाप्यादरातिशय उक्तः अन्ये तु कुमारात् प्रथमपत्न्यां ष्ण इत्याहुः स्वमतेऽपि प्रथमपत्नीत्वमर्थाद्गम्यते । तथाहि कुमारशब्देन अकृतदारपरिग्रह उच्यते तदूढात्वेन प्रथमपत्नीत्वम् । एते प्रकीर्णकाः ॥ ९० ॥भ०

इतः क्तिदतिदेशमधिकृत्याह जगेत्यादि । ध्रुवं अवश्यं स्मृतिं स्मृतिशास्त्रं नाध्यगीढ्वं नाधीतवन्त इति पक्षी वानरान् जगाद विभाषालुङ्लृङोरिति विभाषागाङादेशः गाङ्कुटादिभ्य इति सिचो ङित्त्वं घुमास्थेतीत्वं धिचेति सिचो लोपः इणः षीढ्मिति मूर्द्धन्यः यस्माद्यूयमस्मिन् काले संकुटितुं अवसातुमध्यवस्यथ अभिप्रायं कुरुथ कुटादित्वात् ङित्त्वम् ॥ ९१ ॥ ज० म०

अथ क्तिदतिदेशाधिकारः । पाणिनिमते कुटादिसूत्रसमूहैः कानुबन्धत्वातिदेशात् स्वमते त्वगुणाधिकारः । जगेत्यादि । स पक्षी वानरान् जगाद । किमित्याह ध्रुवं निश्चितं उत्प्रेक्षे वा यूयं स्मृतीर्धर्मसंहिता नाध्यगीढ्वं नाधीतवन्तः इङध्या ध्वं गीङ्ष्टीथ्योर्वेति गीरादेशः र्धत्वान्न णुः धेसलोपो वेति सेर्लुक् टीठीधोढीति धस्य ढः यस्मादस्मिन् काले संकुटितुं मर्तुं यूयं अध्यवस्यथ इच्छथ कुटशिकौटिल्ये प्रभुकार्य्यं त्यक्त्वा

नायमुद्विजितुं कालः स्वामिकार्य्याद्भवादृशाम् ।
हृतभार्य्ये च्युते राज्याद्रामे पर्य्युत्सुके भृशम् ॥ ९२ ॥
यत्नं प्रोर्णुवितुं तूर्णं दिशं कुरुत दक्षिणाम् ।
प्रोर्णुवित्रीं दिवस्तत्र पुरीं द्रक्ष्यथ काञ्चनीम् ॥ ९३ ॥

---

मरणमेवात्र कौटिल्यं धातोरनेकार्थत्वाद्वा कुटां णुन्नीञ्णितीति नियमादगुणत्वं अध्यवपूर्वस्य षोयनाशे इत्यस्य यन्योत्शमादीति ओकारलोपः ॥ ९१ ॥ भ०

अयमेवावसितुं काल इति चेदाह नायमित्यादि । भवादृशां युष्मद्विधानां स्वामिकार्य्यादुद्विजितुं नायं कालः विज इडिति ङित्त्वं किमिति न भवतीति चेदाह राज्यात् च्युते भ्रष्टे रामे निर्वासितत्वात् तत्रापि हृतभार्य्ये भृशमत्यर्थं पर्य्युत्सुके सीतायाम् ॥ ९२ ॥ ज० म०

नायमित्यादि । भवादृशां युष्मद्विधानां सत्पुरुषाणां स्वामिकार्य्यात् उद्विजितुं चलितुं नायं कालः समयः । कुत इत्याह राज्यात् च्युते भ्रष्टे रामे तत्रापि हृतभार्य्ये भृशमत्यर्थं पर्य्युत्सुके च सति तु भार्य्यां युष्मद्वचनेन ज्ञातुमित्यर्थात् विजेर्णुर्निमीत्यगुणत्वम् ॥ ९२ ॥ भ०

यत्नमित्यादि । दक्षिणां दिशं प्रोर्णुवितुम् आच्छादयितुं तुमुन् तूर्णं शीघ्रं यत्नं कुरुत तस्यां दिशि पुरीं द्रक्ष्यथ काञ्चनीं प्राणिरजतादिभ्योऽञ् प्रोर्णुवित्रीम् अभिव्यापिनीं तृचि रूपं दिव आकाशस्य कर्मणि षष्ठी विभाषोर्णोरिति ङित्त्वपक्षे उवङ् अङित्त्वपक्षे च गुणः कुरुतेति सार्वधातुकमपिदिति ङित्त्वे विकरणस्य गुणो न भवति तस्य चार्द्धधातुकत्वात् अङित्त्वे धातोर्गुणः अत उत् सार्वधातुकमपिदिति ङित्त्वे विकरणस्य गुणो न भवति ॥ ९३ ॥ ज० म०

लङ्कां नाम्ना गिरेर्मूर्ध्नि राक्षसेन्द्रेण पालिताम् ।
निर्जित्य शक्रमानीता ददृशुर्यां सुरस्त्रियः ॥ ९४ ॥
बभूव याधिशैलेन्द्रं म्रदित्वेवेन्द्रगोचरम् ।
कुषित्वा जगतां सारं सैका शङ्के कृता भुवि ॥ ९५ ॥

---

यत्नमित्यादि। दक्षिणां दिशं प्रोर्णुवितुं आच्छादयितुं तूर्णं शीघ्रमेव यूयं यत्नं कुरुत तत्र दिशि काञ्चनीं स्वर्णनिर्मितां पुरीं द्रक्ष्यथ कीदृशीं दिव आकाशस्य प्रोर्णुवित्रीं अभिव्यापिकां कर्मणि षष्ठी ङिदिश्वोर्णोरिति ङित्त्वादगुणत्वे श्नुभ्वोरित्युव् पक्षे गुणः काञ्चनस्य विकार इत्यर्थे विकारसंघेति णः वर्द्धोऽकिज्जस इति दृशे ऋकारस्य रः ॥ ९३ ॥ भ०

लङ्कामित्यादि। यां पुरीं नाम्ना लङ्कां सुरस्त्रियो ददृशुः दृष्टवत्यः असंयोगाल्लिट् किदिति कित्त्वं तां यातेति वक्ष्यमाणेन सम्बन्धः। गिरेः सुवेलस्य मूर्ध्नि स्थितां राक्षसेन्द्रेण पालितामिति दुर्गमत्वमाख्यातं शक्रं निर्जित्य सुरस्त्रिय आनीता इति च रावणस्य माहात्म्यम् ॥ ९४ ॥ ज० म०

लङ्कामित्यादि। यां पुरीं नाम्ना लङ्कां सुरस्त्रियो ददृशुः तां द्रक्ष्यथेति पूर्वेण सम्बन्धः कित्ठीढीपमिति कित्त्वादगुणत्वं गिरेः सुवेलस्य मूर्ध्नि स्थिताम् आश्रयाधारसम्बन्धात् स्थितामिति लभ्यते राक्षसेन्द्रेण रावणेन पालितां रक्षिताम्। सुरस्त्रियः कीदृश्यः शक्रमिन्द्रं निर्जित्यानीताः राक्षसेन्द्रेण इत्यनुषञ्जनीयम् एतेन तस्य वीर्य्यमपि ज्ञापितम् ॥ ९४ ॥ भ०

बभूवेत्यादि। अधिशैलेन्द्रं शैलेन्द्रस्य सुमेरोरुपरि सप्तम्यर्थेऽव्ययीभावः इन्द्रगोचरमिन्द्रनिलयममरावत्याख्यं म्रदित्वेव तिरस्कृत्येव बभूव इन्धिभवतिभ्यां चेति कित्त्वं जगतां सारं कुषित्वा निष्कुष्य सैका भुवि कृता निर्मितेत्यहं शङ्के त

अमृड़ित्वा सहस्राचं क्लिशित्वा कौशले निजे ।
उदित्वालञ्चिरं यत्नात् सैका धात्रा विनिर्मिता ॥ ९६ ॥
मुषित्वा धनदं पापो यां गृहीत्वावसद् द्विषन् ।

---

यात मृदित्वा कुषित्वेति नक्वासेडिति क्त्त्वप्रतिषेधे प्राप्ते मृडमृदेत्यादिना कित्त्वम् ॥ ९५ ॥ ज० म०

बभूवेत्यादि । या पुरी शैलेन्द्रस्य सुमेरोरुपरि इन्द्रस्य गोचरं विषयं अमरावत्याख्यं मृदित्वा अभिभूय बभूव अधिशैलेन्द्रं सुरालयं वा सप्तम्यर्थेऽव्ययीभावः अहमेवं शङ्के तर्कयामि जगतां सारमुत्कृष्टभागं कुषित्वा आकृष्य सैवैका भुवि कृता निर्मिता विश्वकर्मणेत्यर्थात् सेमच्छुधकुषेत्यादौ चुधादिवर्जनात् कित्त्वम् ॥ ९५ ॥ भ०

अमृडीत्यादि । सहस्राचमिन्द्रमम्मृडित्वा असुखिनं कृत्वा निजैः आत्मीयैः कौशलैः चिरं क्लिशित्वा प्रयत्नं कृत्वा उदित्वा अभिधायालं पर्य्याप्तमेवं करिष्यामीति यत्नात् महता प्रयासेन सैका धात्रा विनिर्मिता पूर्ववत् कित्त्वम् ॥ ९६ ॥ ज० म०

अमृडीत्यादि । सहस्राचम् इन्द्रम् अमृडित्वा असुखिनं कृत्वा निजे आत्मीये कौशले नैपुण्ये चिरं क्लिशित्वा क्लेशमनुभूय अलं पर्य्याप्तमिवमेवं करिष्यामीत्युदित्वा कथयित्वा चिरकालेन यत्नात् सैका धात्रा विनिर्मिता इत्यपि अहं शङ्के इत्यनेनान्वयः । मृडगशसौदे वसोरस्येतीम् क्लिश्युज् चोपतापे पूर्क्लिशादित इति वेम् क्लिशूगश्रोविरोधे इत्यस्य तु वेमूदित्यादिना वदेवाचि सर्वत्र सेमच्छुधेत्यादिवर्जनात् कित्त्वं वदेर्यजादित्वाज्जिः कुशलस्य भावः कर्म वेति विकारसंघेति णः ॥ ९६ ॥ भ०

मुषित्वेत्यादि । मुषित्वा धनदं वैश्रवणं तस्मात् पुरं

तां रुदित्वेव शक्रेण यात लङ्कामुपेक्षिताम् ॥ ९७ ॥
विदित्वा शक्तिमात्मीयां रावणं विजिघृक्षवः।
उक्तं पिपृच्छिषूणां वो मास्म भूत सुषुप्सवः ॥ ९८ ॥

---

पुष्पकञ्च विमानमपहृतं पापः पापाचरणात् यां गृहीत्वा अवसत् उषितः द्विषन् शत्रुः शक्रेण रुदित्वेवोपेक्षितामव धीरितां रुदविदेति किच्वं तत्र चकारेण क्त्वानुवर्त्तते ॥९७॥ ज० म०

मुषीत्यादि। धनदं कुवेरं मुषित्वा वञ्चित्वा तत एव यां लङ्कां गृहीत्वा पापः कुत्सिताचारो द्विषन् शत्रूरावणोऽवसत् तां यूयं यात गच्छत कीदृशीं शक्रेण इन्द्रेण रुदित्वा क्रन्दित्वेव उपेक्षितां त्यक्तां न तु पारयित्वेति भावः। मुषगलुटने लघिर-रुदरोदे व्युडोवोहसादेरित्यादिना किच्वादगुणत्वं ग्रहेः सेमक्तुधेत्यादिना किच्वात् ग्रहस्वपाद्योरिति जिः ग्रहेरिमो घे इति दीर्घत्वम् ॥ ९७ ॥ भ०

विदीत्यादि। आत्मीयां शक्तिं सामर्थ्यं विदित्वा पूर्ववत् कित्वं रावणं विजिघृक्षवः विग्रहीतुमिच्छवः सुषुप्सवः शयितुमिच्छवो मास्म भूत न प्रमत्ता भवतेत्यर्थः रावणस्य बलीयस्त्वादिदमुक्तं मया वो युष्माकं पिपृच्छिषूणां प्रष्टु-मिच्छूनां अत्र रुदविदेति सनः किच्वे सम्प्रसारणं प्रच्छेः किरश्च पञ्चभ्य इतीडागमः ॥ ९८ ॥ ज० म०

विदित्वेत्यादि। आत्मीयां शक्तिं सामर्थ्यं विदित्वा ज्ञात्वा रावणं विजिघृक्षवो वि[illegible]यितुमिच्छवः सन्तो यूयं सुषुप्सवः शयितुमिच्छवो मास्म भूत सालस्या असावधानाश्च न भवतेत्यर्थः रावणस्य म[illegible]बलवत्त्वाच्च एतत् सर्वं पिपृच्छिषूणां प्रष्टुमिच्छूनां वो [illegible] कृते मया उक्तं एतेन

नाविविदिषुमभ्येति सम्पद्रुरुदिषुं नरम् ।
किं सुसुषिषुवद् यात द्विषो नापचिकीर्षया ॥ ८८ ॥
बुभुत्सवो द्रुतं सीतां भुत्सोऽहं प्रब्रवीमि वः ।

---

नापृष्टभाषणेऽनौचित्यं परिहृतं सम्बन्धविवक्षया षष्ठी विद-ज्ञाने व्युडोऽव इति कित्त्वं ग्रह उपादाने सन् नेमुगुहग्रह इति अनिम् ग्रहस्त्वपप्रच्छां जिरिति जिः णुर्नानिनीत्यगुणत्वं हो ढः झभान्तस्येति घत्वं षढोः कः इति कः क्रिलादिति षः सन्भि-त्वेति उः प्रच्छेः सनि स्मिङपूङित्यादिना इम् ॥८८॥ भ०

नावीत्यादि । वेदितुं ज्ञातुमिच्छुर्यो न भवति तं नर-मविविदिषुं रुरुदिषुं रोदितुमेषणस्वभावं सम्पद्विभूतिर्ना-भ्येति नागच्छतीति वो मयोक्तमिति योज्यं किन्न यात न गच्छत सुसुषिषुवत् चौरवदित्यर्थः पूर्ववत्कित्त्वं द्विषः शत्रोर-पचिकीर्षया अपकर्त्तुमिच्छया इको झलीति कित्त्वे गुणो न भवतीति अज्झनगमां सनीति दीर्घः ऋत ईद्धातोः ॥ ८८ ॥ ज० म०

नावीत्यादि । सम्पत् सम्पत्तिरविविदिषुं वेदितुं ज्ञातु-मनिच्छुं रुरुदिषुं अनध्यवसायात् रोदनेच्छुं नरं पुरुषं न अभ्येति न अभिगच्छति तेन ज्ञापनार्थं प्रब्रवीमि व इति वक्ष्य-माणेन सम्बन्धः द्विषः शत्रोरपचिकीर्षया अपकारेच्छया सुसु-षिषुवत् चौरवत् यूयं किं न यात तदैव सीतादर्शनसम्भवात् व्युडोऽव इत्यादिना विदरुदमुषः सनः कित्त्वादगुणत्वं कृञः सनि ग्रोऽज्झनिङ्गमामिति दीर्घः णुर्नानिमीत्यगुणत्वे ऋदि-रणाविति इर् व्यंनच्तयीति दीर्घः संख्याद इति अः ॥८८॥ भ०

बुभुत्सेत्यादि । बुभुत्सवो ज्ञातुमिच्छवः यदि सीतां बुधेः सनन्तादुलन्ताच्चेति कित्त्वं एकाच इति भषभावः तदा

मा च भुद्ध्वं मृषोक्तं नः कृषीढ्वं स्वामिने हितम् ॥ १०० ॥
समगध्वं पुरः शत्रोर्मोदयध्वं रघूत्तमम्।
नोपायंध्वं भयं सीतां नोपायंस्त दशाननः ॥ १०१ ॥

---

द्रुतं तां भुत्सीध्वं जानीतेति वो युष्मान् ब्रवीमि लिङ्सिचाविति कित्त्वं मृषोक्तं मिथ्योक्तं नोऽस्माकं माच भुद्ध्वं न जानीत अपितु सत्यं झलो झलीति सिचो लोपः झलां जश्झशि कित्वं पूर्ववत् अतो यूयं स्वामिने रामाय हितं कृषीढ्वं कुरुत उश्चेति कित्वं इणः षीध्वमिति मूर्द्धन्यः ॥ १०० ॥ ज० म०

बुभुदित्यादि। सीतां बुभुत्सवो बोद्धुमिच्छवो यूयं द्रुतं शीघ्रमेव भुत्सीध्वं जानीत इति वो युष्मान् अहं प्रकृष्टं ब्रवीमि अस्माकमुक्तं वचनं मृषा मिथ्या मास्म भुद्ध्वं न जानीत अपितु सत्यमेव अस्मद एकत्वे वा बहुत्वमभिधानात् स्वामिनो रामस्य हितं कृषीढ्वं कुरुत समार्थैनेत्यादिना षष्ठी स्वामिने इति पाठे शक्तार्थवषडिति चतुर्थी बुध्यौङ्अवेदने सनि णर्निमित्तगुणत्वं झभान्तस्येति भत्वं अन्यत्र ब्याः सीध्वं इगुकुमंढीति कित्त्वादगुणत्वं अपरत्र मायोगेऽमोऽभावः झस्लादिति सेर्लोपः कृञो ब्याः सीध्वं पूर्ववत् कित्वं टीठोढीधोढ़िति धस्य ढत्वम् ॥ १०० ॥ भ०

समेत्यादि। इदमहमाशंसे यदुत शत्रोः रावणस्य पुरः अग्रतः समगध्वं सङ्गता भवत आशंसायां भूतवच्चेति लुङ् समोगम्यृच्छीति तङ् वागम इति सिचः किच्चे अनुदात्तेत्यनुनासिकलोपः ह्रस्वादङ्गादिति सिचो लोपः मोदयध्वं रघूत्तमं हर्षयत तत्कार्य्यकरणात् मा च भयमुपायध्वं सूचयत भयं माकार्ष्टेत्यर्थः आङो यमहन इति तङ् यमोगन्धन इति सिचः किच्चे अनुनासिकलोपः गन्धनं सूचनं अन्यथा युष्मद्

ततः प्राखिषताद्रीन्द्रं महेन्द्रं वानरा द्रुतम् ।
सर्वे किलकिलायन्तो धैर्य्यञ्चाधिषताधिकम् ॥ १०२ ॥

---

गमितभयेषु नियतमसौ दशाननः सीतासुपायंस्त स्वीकृतवान् स्यात् तस्य दुर्वृत्तत्वात् आशंसायां भूतवच्चेति अनिष्टाशंसायां लुङ् उपाद्यमः स्वीकरण इति तङ् स्वीकरणत्वात् विवाहनमुक्तं विभाषोपयम इति अकित्त्वपक्षे रूपम् ॥ १०१ ॥ ज० म०

समित्यादि। इदमहमाशंसे यत् शत्रोः रावणस्य पुरोऽग्रतो यूयं समगध्वं सङ्गता भवत अभिधानादाशंसायां टौ आशंसायां भूतसामान्यविहिताश्चेति परः समोगम्यृच्छेति मं इगुकुर्मटीत्यादिना सिः कित्त्वात् वनतनाद्यनिमामिति मलोपः झस्त्वादिति सिलोपः। रघूत्तमं रामं यूयं मोदयध्वं हर्षयत तत्कार्य्यकरणात् भयं न उपायध्वं न सूचयत न कुरुतेत्यर्थः यमः सूचन इति सिः कित्त्वात् मलोपः आत्मनेपदाधिकारमध्ये यमः सूचन इत्यस्य करणादेव सूचनार्थे यम आत्मनेपदं किंवा उपयमो विवाह इत्यनेन मं तत्र विवाहः स्वीकारः उपादानः स्वीकरण इति परसूत्रं यमः सूचने वातूद्वाहे इत्यत्रापि उद्वाहः स्वीकारः स्वीकरणे वेति परसूत्रं स्वीकारार्थेन परिणयोऽपि गम्यते तदा भयं न उपायध्वं न स्वीकुरुत दशाननः सीतां न उपायंस्त विवाहेन न स्वीकृतवान् न स्वीकरोतु वा मत्राप्याशंसायां टौ वातूद्वाह इति कित्त्वाभावपक्षे मलोपाभावः इत्येवं जगाद वानरान् पक्षीत्यन्वयः ॥ १०१॥ भ०

तत इत्यादि। ततः सम्पातिवचनानन्तरं सर्वे वानरा महेन्द्रं पर्वतं प्राखिषत प्रस्थितवन्तः धैर्य्यञ्चाधिकमाधिषत

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



निकुञ्जे तस्य वर्त्तित्वा रम्ये प्रक्ष्वेदिताः परम् ।
मणिरत्नाधिशयितं प्रत्युदैक्षन्त तोयधिम् ॥ १०३ ॥

---

आहितवन्तः आत्मनि तिष्ठतेर्दधातेश्च स्थाघ्वोरिच्चेति कित्त्वमित्त्वञ्च तिष्ठतेः समवप्रविभ्यः स्थ इति तङ् किलकिलायन्तः किलकिलाध्वनिं कुर्वाणाः अव्यक्तानुकरणेत्यादिना डाच् तदन्तात् लोहितादिडाज्भ्यः क्यष् वा क्यष इति परस्मैपदम् ॥ १०२ ॥ ज० म०

तत इत्यादि । सम्पातिवचनानन्तरं सर्वे वानरा महेन्द्रं पर्वतं प्रास्थिषत प्रस्थितवन्तः द्रुतं शीघ्रं मुहुरिति पाठे किलकिलायन्त इत्यनेन सम्बन्धः प्रपूर्वात्तिष्ठतेः प्रतिज्ञानिर्णयेत्यादिना मं स्थादोङिरिति ङिरगुणत्वञ्च मान्तोऽदनत इत्यत् अधिकं धैर्य्यञ्च आत्मनि आधिषत आहितवन्तः धाञो ञित् अग्न्तेत्यादिना मं अन्यत् पूर्ववत् । कीदृशाः किलकिलायन्तः किलकिलाशब्दं कुर्वन्तः नैकाचोऽव्यक्तानुकरणादिति डाच् डित्वञ्च डाब्लोहितादेरिति क्यः पञ्च ॥ १०२ ॥ भ०

. निकुञ्जे इत्यादि । तस्य पर्वतस्य निकुञ्जे लतादिपिहितस्थाने वर्त्तित्वा स्थित्वा न क्त्वा सेडिति कित्त्वप्रतिषेधः परं प्रक्ष्वेदिता उच्चैरव्यक्तशब्दं कुर्वाणाः निष्ठाशीङिति कित्त्वप्रतिषेधः तोयधिं प्रत्युदैक्षन्त दृष्टवन्तः लङि रूपम् । कीदृशं मणिरत्नाधिशयियं क्तोऽधिकरणे चेति क्तः पूर्ववत् कित्त्वप्रतिषेधः । कीदृशं मणिरत्नाधिशयितं मणिर्यद्रत्नमिति स्त्रीरत्नादावपि रत्नशब्दस्य दृष्टत्वात् एकपदव्यभिचारे विशेषणविशेष्यभावः तस्याधिशयितमवस्थानमित्यर्थः । १०३ ॥ ज० म०

निकुञ्जे इत्यादि । तस्य पर्वतस्य निकुञ्जे लतादिपिहितस्थाने रम्यत्वात् वर्त्तित्वा स्थित्वा परमतिशयेन प्रक्ष्वे-

अमर्षितमिव घ्नन्तं तटाद्रीन् सलिलोर्मिभिः ।
श्रिया समग्रं द्युतितं मदेनेव प्रलोठितम् ॥ १०४ ॥

---

दिता अव्यक्तशब्दं कर्त्तुमारब्धा वानरास्तोयधिं समुद्रं प्रत्यु-देक्षन्त दृष्टवन्तः। कीदृशं मणिरत्नाधिशायितं मणिरत्नैर्मणि-श्रेष्ठैरधिशयितम् अधिष्ठितं कर्मक्रियेत्यादिना अधिपूर्वशीङ आधारस्य कर्मत्वात् कर्मणि क्तः आधारे क्त इति केचित् आञि श्विदकूजने घे चादिढे क्त इति कर्त्तरि क्तः भावादिर्ट वेति पक्षे इम् उभयत्र पूगोधूषेत्यादिना गुणः वर्त्तित्वे-त्यत्र सेमक्तधेत्यादिना कित्त्वनिषेधात् गुणः ॥ १०३ ॥ भ०

अमेत्यादि। सलिलोर्मिभिः कल्लोलैः तटाद्रीन् तटस्थान् पर्वतान् घ्नन्तं प्रत्युदैक्षन्त अमर्षितमिव ञ्मृषेस्तितिक्षायामिति कित्त्वप्रतिषेधः पश्चात् नञ्समः श्रिया हेतुभूतया समग्रं संपूर्णं द्युतितमिति कर्त्तरि निष्ठा यदि वा श्रिया कर्तृभूतया द्युतितं शोभितं अत्रेत्यत्याहृत्य तमैक्षन्तेति योज्यम्। एवञ्च कृत्वा उदुपधादित्यादिना भावे निष्ठायां विकल्पेन कित्त्वप्रतिषेधात् कित्त्वमुदाहृतं मदेनेव मत्ततयेव श्रिया हेतुभूतया प्रलोठितं घूर्णितुमारब्धं आदिकर्मणि निष्ठायामकित्त्वमुदाहृतम् ॥१०४॥ ज० म०

अमेत्यादि। तोयधिं प्रत्युदैक्षन्तेत्यत्रान्वयः सलिलो-र्मिभिर्जलवेगैस्तटाद्रीन् तटसम्बन्धिनः पर्वतान् घ्नन्तं अमर्षि-तमिव क्रुद्धमिव पूगोधूषेत्यादिना क्षमार्थस्य षो गुणः पश्चान्नञ्-समासः। ऊर्मिः स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोरिति मेदिनी। वीचिवाचित्वेऽत्र सलिलपदं स्वरूपकथनार्थं श्रिया हेतुभूतया समग्रं सम्पूर्णं यथा स्यात्तथा द्युतितं शोभमानं गत्यर्थाढेति कर्त्तरि क्तः दीपितुमारब्धं वा तदा भावादिर्वेी-

पूतं शीतैर्नभस्वद्भिर्ग्रन्थित्वेव स्थितं रुचः ।
गुम्फित्वेव निरस्यन्तं तरङ्गान् सर्वतो मुहुः ॥ १०५ ॥
वञ्चित्वाप्यम्बरं दूरं स्वस्मिंस्तिष्ठन्तमात्मनि ।
तृषित्वेवानिशं स्वादु पिबन्तं सरितां पयः ॥ १०६ ॥

---

टुङ्क्षोऽव्वत इति पक्षे गुणाभावः मदेन मत्ततयेव प्रलोठितं घूर्णितुमारब्धं सदा चञ्चलत्वात् आदिदे क्तः पूर्वेण पक्षे गुणः ॥ १० ४ ॥ भ०

पूतमित्यादि । नभस्वद्भिर्वायुभिः शीतैः पूतं पवित्रीकृतं पूङश्चेति विकल्पेनेट् अतएव पक्षे पूङः क्त्वानिष्ठयोः कित्त्व-प्रतिषेधोऽत्र न भवति तत्र सेडित्यनुवर्त्तते रुचो दीप्तीर्ग्रथित्वेव संदर्भ्येव स्थितं नोपधात्थफान्ताद्वेति कित्त्वप्रतिषेधपक्षे रूपं सर्वतस्तरङ्गान् गुम्फित्वेव निरस्यन्तं क्षिप्यन्तं नोपधादिति विकल्पेन कित्त्वप्रतिषेधः यत्रेत्यध्याहृत्य तमैक्षन्तेति योज्यम् ॥ १०५ ॥ ज० म०

पूतमित्यादि । शीतैः शीतलैर्नभस्वद्भिर्वायुभिः पूतं पवित्रीकृतं तोयधिं प्रत्युदैक्षन्तेत्यनेन सम्बन्धः पूङ्क्लिशवसेति इमोऽभावपक्षे पूङोष्टषेत्यादौ सेमग्रहणान्न गुणः नभः शब्दा-त्मोऽङ्मभ्रपाद्वतुरिति वतुः नदन्तसाविति पदत्वनिषेधात् सोर्विः फे इत्यस्य पदान्तविषयत्वात् विसर्गाभावः रुचो दीप्ती-र्ग्रन्थित्वेव स्थितं सर्वत्र दीप्तिमत्त्वात् उत्प्रेक्षेयं ग्रन्थकिग-सन्दर्भे थफान्ङ इति विकल्पेनाकित्त्वात् नलोपाभावः सर्वत्र तरङ्गान् गुम्फित्वेव मुहुः पुनः पुनर्निरस्यन्तं क्षिपन्तं गुन्फग्रग्रन्थे पूर्वेण पक्षे कित्त्वात् हस्तङ्नलोपः इति नलोपः ॥ १०५ ॥ भ०

वञ्चित्यादि । स्थित्यंनतिक्रमादम्बरं दूरं वञ्चित्वातिक्रम्य

द्युतित्वा शशिना नक्तं रश्मिभिः परिवर्द्धितम्।
मेरोर्जेतुमिवाभोगमुच्चैर्दिद्योतिषुं मुहुः॥ १०७॥

---

वञ्चित्वेति कित्त्वप्रतिषेधः स्वस्मिन्नात्मनि स्वरूपे तिष्ठन्तं अत्र नश्छव्यप्रशानीति नकारस्य रुत्वं पूर्वस्य त्वनुनासिकादेशः तृषित्वेव तृषित इव भूत्वा तृषिमृषीत्यादिना प्रतिषेधः ततसलिलस्य अस्वादुत्वात् सरितां पयः स्वादु पिबन्तं अनिशमजस्रम्॥ १०६॥ ज० म०

वञ्चित्वेत्यादि। पुनः कीदृशं तोयधिं अम्बरमाकाशं वञ्चित्वापि अतिक्रम्यापि स्वस्मिन् स्वकीये आत्मनि स्वरूपे तिष्ठन्तं मर्य्यादानतिक्रमात् पृथ्व्या उच्चोऽपि भूत्वा तां नातिक्रामतीति भावः वन्चुगत्यां तृषमृषकृषेत्यादिना विकल्पेनाकित्त्वात् नलोपाभावः तृषित्वेव अनिशं सततं स्वादु मधुरं सरितां पयो नदीनां जलं पिबन्तं स्वजलस्य चारत्वात् वितृषापिपासायां पूर्वेण कित्त्वादगुणत्वम्॥ १०६॥ भ०

द्युतीत्यादि। शशिना नक्तं रात्रौ द्युदित्वा दीप्तिमता भूत्वा रश्मिभिः परिवर्द्धितं वृद्धिं नीतं सन्तं तोयधिं मेरोराभोगं महत्त्वं जेतुमिव मुहुरुच्चैर्दिद्योतिषुं वर्द्धितुमिच्छुमित्यर्थः अनेकार्थत्वाद्धातूनां द्युतित्वा दिद्योतिषुमिति रलो व्युपधादिति कित्त्वाकित्त्वे तत्र द्युकारोपधादिकारोपधाच्च रलन्ताद्धलादेर्धातोः परौ क्त्वासनौ वा न कितौ भवत इति सूत्रार्थः॥ १०७॥ ज० म०

द्युतित्वेत्यादि। पुनः कीदृशं तोयधिं शशिना नक्तं रात्रौ द्युतित्वा दीप्तिमता सता रश्मिभिः परिवर्द्धितं वृद्धिं नीतं द्युतल्टङ् दीप्तौ व्युङोऽवोहसादेरिति वा कित्त्वात् गुणाभावः मेरोराभोगं परिपूर्णतां जेतुमिव तत उच्चैरधिकं मुहुः पुनः

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



विलोक्य सलिलोच्चयानधिसमुद्रमभ्रंलिहान्
भ्रमन्मकरभीषणं समधिगम्य चाधः पयः ।
गमागमसहं द्रुतं कपिवृषाः परिप्रेषयन्
गजेन्द्रगुरुविक्रमं तरुमृगोत्तमं मारुतिम् ॥ १०८ ॥

इति भट्टिकाव्येऽधिकारकाण्डे द्वितीयः काव्यस्य
सप्तमः सर्गः ॥ ७ ॥

---

पुनः दिद्योतिषुं द्योतनमिच्छन्तं उच्चैर्भूत्वा द्युतिमिच्छन्तं वा धातोरनेकार्थतया उच्चैरूर्द्धं वर्द्धितुमिच्छन्तमिति केचित् द्युतेः सनि द्युत्स्वाप्योरिति खेर्जिः पूर्वेण पक्षे कित्त्वाभावात् गुणः ॥ १०७ ॥ भ०

विलोक्येत्यादि । कपिवृषाः कपिमुख्या मारुतिं हनूमन्तं द्रुतं परिप्रेषयन् व्यसर्जयन् परिप्रपूर्वादिषुगताविल्यस्मात् हेतुमण्ण्यन्तात् लङि रूपम्। किं कृत्वेत्याह विलोक्य सलिलोच्चयान् सलिलोर्मीन् ऊर्द्ध्वञ्चोयत इत्येरच् अधिसमुद्रं समुद्रस्योपरि अभ्रंलिहान् दूरमुच्छ्रितान् अधश्च पयः समधिगम्य ज्ञात्वा कीदृशं भ्रमद्भिर्मकरैर्भीषणं भयानकं भीषयतीति नन्द्यादित्वात् ल्युः गमागमसहं गमनागमनयोग्यं मारुतिं गजेन्द्रस्येव गुरुर्विक्रमो यस्य तरुमृगेषु वानरेषूत्तममिति सप्तमीति योगविभागात् सः । इति ङित्त्वातिदेशाधिकारः ॥१०८॥ ज०म०

इति भट्टिकाव्यटीकायां जयमङ्गलायामधिकारकाण्डे द्वितीयः परिच्छेदः काव्यस्य सीतान्वेषणाख्यः सप्तमः सर्गः ।

विलोक्येत्यादि । अधिसमुद्रं समुद्रस्योपरि सलिलोच्चयान् तरङ्गान् अभ्रंलिहान् अत्युच्छ्रितान् विलोक्य अधश्च पयो जलं भ्रमद्भिरितस्ततो गच्छद्भिर्मकरैर्जलजन्तुविशेषैर्भीषणं भयानकं

## अष्टमः सर्गः।

अगाधत ततो व्योम हनूमानुरुविग्रहः।
अत्यशेरत तद्वेगं न सुपर्णार्कमारुताः॥ १॥

---

समधिगम्य ज्ञात्वा भयात् स्वयं गन्तुमशक्ताः कपिद्विषाः कपि-श्रेष्ठा मारुतिं हनूमन्तं द्रुतं परिप्रैषयन् व्यसर्जयन् परि-प्रपूर्वादिषुगताविव्यस्मात् प्रेरणे अरन्तात् घी मारुतिं कीदृशं गमने चागमने च समर्थं गजेन्द्रस्येव ऐरावतस्येव गुरुर्विक्रमो यस्य तं अतएव तरुमृगेषु वानरेषु उत्तमं श्रेष्ठं ऊर्द्धं चीयत इत्यल् उच्चयः अधिसमुद्रमिति सप्तम्यर्थेऽव्ययीभावः अभ्रंलिहा-निति तृभृहृदृजीत्यादिना अभिधानादसंज्ञायामपि खः गुणा-भावोऽप्यभिधानात् भीषणमिति नन्द्यादित्वादनः कभावेऽमी इत्यनेन वा अनट्। इति किदतिदेशाधिकारः॥१०८॥ भ०

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मज-श्रीभरतसेनविरचितायां मुग्धबोधिन्यां भट्टिटीकायां अधिकारकाण्डे सप्तमः सर्गः।

---

आत्मनेपदमधिकृत्याह अगाधतेत्यादि। ततो विसर्जनान-न्तरं हनूमान् समुद्रलङ्घनाय व्योमाकाशमगाधत प्रस्थितवान् गाधृप्रतिष्ठालिप्सयोरित्यस्माल्लङ् अनुदात्तङित इति अनुदा-त्तत्वादात्मनेपदं उरुविग्रहः कामरूपित्वात् तदानीमुत्पादित-विपुलकायः तस्य चोत्पततो वेगं गरुडादित्यपवनाः नात्यशे-रत नातिशयितवन्तः। ङित्वात्तङ् शीङोरुट् शीङः सार्व-धातुके गुणः॥ १॥ ज० म०

आत्मनेपदाधिकारः स च स्वमते साधिकारः। अगेत्यादि।

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



अभायत यथार्केण सुप्रातेन शरन्मुखे ।
गम्यमानं न तेनासीदगतं क्रामता पुरः ॥ २ ॥

---

ततः प्रेषणानन्तरं हनूमान् समुद्रलङ्घनाय व्योम आकाशमगाधत प्रस्थितवान् गाङ्कुटादिभ्योऽञ्णिन्ङित् इति ङित्त्वात् नवशः पमि इति सं अगाहतेति पाठे ङागाहविलोडे इत्यस्मात् धौ उक्तविग्रहः कामरूपित्वात्तदानीमुत्पादितमहाशरीरः सुपर्णार्कमारुता गरुडसूर्य्यवायवोऽपि तस्य हनूमतो वेगं न शत्यशेरत नातिचक्रमुः शीङ्लभिस्वप्ने त्वानुबन्धत्वादादादिकः ङानुबन्धात्स शीङो रे ग्रुरिति गुणः मान्तो रमिति रम् मान्तोऽदन्त इति अत् । शोभनानि पर्णानि पत्त्रा यस्य हिरण्मयत्वात् स सुपर्णः ॥ १ ॥ भ०

अभेत्यादि । यथा अर्केण सुप्रातेन सुप्रभातेन नीहाराद्यभावात् शोभनं प्रातरनेनेति सुप्रातः सुश्वेति समासान्तनिपातनं शरन्मुखे शरदारम्भे अभायत दीप्यते स्म भावकर्मणोरिति भावे तङ् तद्वत्तेनाभायत पुरोऽग्रतो यदर्केण गम्यमानमवष्टभ्यमानं वर्त्मेत्यर्थात् कर्मण्यात्मनेपदं तेन हनूमता क्रामता गच्छता शितिक्रम इति दीर्घत्वं नागतमासीत् अपितु सर्वमेव गतमिति ॥ २ । ज० म०

अभेत्यादि । शरन्मुखे शरदारम्भे सुप्रातेन सुप्रभातेनार्केण यथा अभायत दीप्यते स्म तथा तेन हनूमता अभायतेति सम्बन्धः भातेर्भावे घ्या मं शोभनं प्रातरस्येति सोः श्वःप्रातश्चा इ इति परः स्वमते प्रातरेव प्रातं स्वार्थे णः व्यटेर्लोप इति टिलोपः तेन समासः पुरोऽग्रतोऽर्केण गम्यमानं वर्त्मेत्यर्थाव क्रामता गच्छता तेन हनूमता अगतं नासीत् किन्तु गतमेव

वियति व्यत्यतन्वातां मूर्त्ती हरिपयोनिधी ।
व्यत्यैतांश्चोत्तमं मार्गमर्केन्द्रेन्दुनिषेवितम् ॥ २ ॥

---

तेजसा वेगेन च हनूमतः सूर्य्यसाम्यमुक्तं गमेः कर्मणि प्रानः ॥ २ ॥ भ०

वियेत्यादि । हरिपयोनिधी हनूमत्समुद्रौ मूर्त्ती स्वदेहौ वियत्याकाशे व्यत्यतन्वातां व्यतिविस्तारितवन्तौ तनोतेर्लङ् कर्त्तरि कर्मव्यतीहार इत्यात्मनेपदं उत्तमञ्च मार्गं अर्केन्द्रेन्दुनिषेवितं व्यत्येतां व्यतिगतवन्तौ इणः परस्य लङ् कर्मव्यतीहार इत्यात्मनेपदं प्राप्तं न गतिहिंसार्थेभ्य इति गत्यर्थत्वात् प्रतिषिद्धं तेन तसस्तामादेशः तत्र हरेर्गच्छतः पुरतो यस्मिन् वियत्प्रदेशे स्वमूर्त्तिं विस्तारितुमवसरो भविता तत्र पयोनिधिरुर्मिभिः स्वमूर्त्तिं वितस्तार पयोनिधेश्च वेलातटङ्गच्छतो यत्र स्वमूर्त्तिं वितस्तार तथा पयोनिधेर्व्वमार्गं गन्तुमवसरो भविता हरिरुत्पत्य तं मार्गं गन्तुमैच्छत् यश्च हरेर्मार्गं गन्तुमवसरो भविता तं मार्गं पयोनिधिरभ्रंलिहैरुर्मिभिरैच्छत् यत्र यत्क्रियावसरे क्रियां करोति स तत्र तत्क्रियाकारीत्युच्यते यथा देवदत्तसाध्यां क्रियां यज्ञदत्तः कुर्वन् तत्कारीत्युच्यते तमश्चेतरेणेतरसम्बन्धिन्याः क्रियायाः करणात् अन्यतरसम्बन्धिन्याश्चेतरकरणात् सम्भवति कर्मव्यतीहारः ॥ २ ॥

ज० म०

वियतीत्यादि । हरिपयोनिधी हनूमत्समुद्रौ वियत्याकाशे मूर्त्ती स्वदेहौ व्यत्यतन्वातां अन्योन्यं विस्तारितवन्तौ तनदुञ्विस्तृतौ व्यतीहारे गतिहिंसेत्यादिना मं सूर्य्येन्द्रचन्द्रनिषेवितं अतएव उत्तमं मार्गं आकाशं तौ व्यत्यैतां परस्परं

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



व्यतिजिग्ये समुद्रोऽपि न धैर्य्यन्तस्य गच्छतः ।
अगच्छच्चास्य न गतं प्रचण्डोऽपि प्रभञ्जनः ॥ ४ ॥
व्यतिघ्नतीं पथि घ्नन्तं राक्षसीं पवनात्मजः ।
जघानाविश्य वदनं निर्यान् भित्त्वोदरं द्रुतम् ॥ ५ ॥

---

जग्मतुः व्यतीहारे गतिहिंसाशब्दार्थहसान्येति गत्यर्थादिवर्ज-नात् न व्यतीहारे मं इणो घ्यां रूपम् ॥ ३ ॥ भ०

व्यतीत्यादि । तस्य हरेर्गच्छतः स्वदेहस्याल्पतां कर्त्तुं योऽवसरो भावी तत्र समुद्रो नातिशयधैर्य्यं कृतवान् तेन तस्य धैर्य्यं न जितं तदानीं तस्योद्धतकल्लोलत्वात् अपिशब्दाच्च हनूमानपि समुद्रस्य शान्तत्वं कर्त्तुं योऽवसरो भावी तत्र नातिशयधैर्य्यं कृतवान् तेन तस्य धैर्य्यं वा न जितं तदानीं तस्य विपुलकायत्वात् तदेवं हनूमतः समुद्रो हनूमानपि समुद्रस्य धैर्य्यं न व्यतिजिग्ये नाभिबभूव एकवचनस्य प्रत्येकाभिसम्बन्धात् कर्मव्यतीहारे पूर्ववदात्मनेपदं सँल्लिटोर्जेरिति कुत्वं यस्य हनूमतो गतं गमनं प्रचण्डोऽपि महान् प्रभञ्जनो वायुर्न-अत्यगच्छत् न प्राप्तवान् ॥ ४ ॥ ज० म०

व्यतीत्यादि । गच्छतस्तस्य हनूमतो धैर्य्यं समुद्रोऽपि न व्यतिजिग्ये नाभिभूतवान् निर्भयत्वात् अपिशब्दात् सोऽपि समुद्रस्य धैर्य्यं न व्यतिजिग्ये उद्वेगात् द्वोऽभोऽपि मर्य्यादाबन्धनात् एकवचनेऽपि उभयोरुभयापेक्षित्वाद्व्यतीहारः जेर्गिः सन्लिटोरिति ग्यादेशः प्रचण्डोऽपि प्रभञ्जनो वायुरस्य हनूमतो गतं गमनं न अगच्छत् न प्राप्तवान् तस्यातिवेगत्वात् अस्तीति स्वभावक्तेति भावक्तेन योगे कर्त्तरि षष्ठी ॥ ४ ॥ भ०

तस्यातिजवेन गच्छतः पथि राक्षसी संप्राप्ता तामसौ व्यापादितवानित्याह व्यतीत्यादि । हनिष्यामि एनमिति

अन्योन्यं स्म व्यतियुतः शब्दान् शब्दैस्तु भीषणान् ।
उदन्वांश्चानिलोद्भूतो म्रियमाणा च राक्षसी ॥ ६ ॥

---

राक्षस्या यो वधकरणावसरः तत्र घ्नन् यः कश्चित् प्राप्तः तस्यैनां हनिष्यामीति यो वधकरणावसरः तत्र घ्नतीन्तदेवमितरेतर-क्रियाकरणेन व्यतिघ्नतीं राक्षसीं न गतीत्यादिना हिंसार्थत्वादात्मनेपदप्रतिषेधः तां पवनात्मजो हनूमान् जघान । कथं वदनमाविश्य उदरं भित्त्वा द्रुतं निर्यान् निर्गच्छन् यातेः शतरि रूपम् ॥ ५ ॥ ज० म०

व्यतीत्यादि । पवनात्मजो हनूमान् गच्छन्नेव पथि संप्राप्तां राक्षसीं जघान । किं कुर्वन् द्रुतं वदनं प्रविश्य उदरं भित्त्वा विदार्य्य निर्यान् निर्गच्छन् यातेः शत्रः । कीदृशीं घ्नन्तं जनं व्यतिघ्नतीं अन्योन्यं घ्नतीं हिंसार्थवर्जनात् व्यतीहारेऽपि न मं ॥ ५ ॥ भ०

अन्योन्यमित्यादि । अन्योन्यमित्यन्योन्यस्येत्यर्थः कर्मव्यतीहारे सर्वनाम्नो द्वे भवतोऽसमासवच्च बहुलं यदा नासमासवत् तदा पूर्वपदस्योत्तरपदस्य च प्रथमैकवचने स्त्रीनपुंसकयोरामभाव इति वक्तव्यम् । अन्योन्यस्य सम्बन्धिभिः शब्दैः उदन्वद्राक्षस्यौ शब्दान् भीषणानात्मीयान् व्यतियुतः स्म मिश्रितवन्तौ युमिश्रण इत्यस्माल्लट् स्म इति भूते लट् इतरेतरेत्यादिना कर्मव्यतीहार आत्मनेपदप्रतिषेधः । तत्रोदन्वतः शब्दकरणाद्यो भीषणशब्दमिश्रणावसरो भावी तत्र राक्षसी म्रियमाणा शब्दान् भीषणानुदन्वच्छब्दैर्युयाव राक्षस्याः शब्दकरणाद्यो भीषणशब्दमिश्रणावसरो भावी तत्रोदन्वानिलोद्भूतः शब्दान् भीषणान् राक्षसीशब्दैर्युयाव ॥६॥ ज० म०

अन्योन्यमित्यादि । तदानीं हनूमद्वेगेनानिलोद्भूत उद-

न्यविक्षत महाग्राहसङ्कुलं मकरालयम्।
सैका बह्वनां कुर्वाणा नक्राणामाश्रितम्भवम् ॥ ७ ॥
कृतेनोपकृतं वायोः परिक्रीणानमुत्थितम्।
पित्रा संरक्षितं शक्रात् स मैनाकाद्रिमैक्षत ॥ ८ ॥

---

न्वान् समुद्रः म्रियमाणा राक्षसौ उभावेतौ शब्दैर्भीषणान् शब्दान् अन्योन्यं व्यतियुतः स्म संमिश्रितवन्तौ युलमिश्रणे कौ स्नेनातीत इति कौ अन्योन्यार्थे इत्युक्ते व्यतीहारेऽपि सम् अन्योन्यार्थं इति ज्ञापकात् व्यतीहारेऽन्योन्यादयो मनीषादित्वान्निपातिताः उदकस्य वतौ लोकोपचारादुदनादेशः उदन्शब्दोऽप्यस्ति उक्तं हि पदादयः पृथक् शब्दा इत्येके इति ॥ ६ ॥ भ०

न्यवीत्यादि। महद्भिर्ग्राहैः सङ्कुलं मकरालयं समुद्रं न्यविक्षत प्रविष्टवती नेर्विंश इत्यात्मनेपदं शल इगुपधादनिटः क्सः बह्वनां नक्राणामेकापि सती स्वाश्रितं भवं सुष्ठु तृप्तिं कुर्वाणा आश्रिते भुव इति भावे खच् ॥ ७ ॥ ज० म०

न्यवीत्यादि। राक्षसी एकापि सती बह्वनां नक्राणां कुम्भीराणाम् आश्रितं भवं सुष्ठु तृप्तां महाशरीरत्वात् कुर्वाणा मकरालयं समुद्रं न्यविक्षत प्रविष्टवती विपराजीत्यादिना निपूर्वविशतेर्मं हशषोऽनिमिजुक इति सक्। कीदृशं महद्भिर्ग्राहैर्जलजन्तुभिः सङ्कुलं व्याप्तम् आङ्पूर्वोश्नातिस्तृप्त्यर्थः भावघेत्वाश्रितादभुव इति खः ॥ ७ ॥ भ०

कृतेत्यादि। स हनूमान् समुद्रादुत्थितं मैनाकाद्रिमैक्षत वायोरुपकृतमुपकारकृतेन प्रत्युपकारेण परिक्रीणानं परिक्रयं विचिन्वन्तं परिव्यवेभ्यः क्रिय इत्यकर्त्रभिप्रायविषयम् आत्मनेपदं पित्रा वायुना रक्षितं शक्रात् तेन हि पक्षच्छेदकाले

खं पराजयमानोऽसावुन्नत्या पवनात्मजम् ।
जगादाद्रिर्विजेषीष्ठा मयि विश्रम्य वैरिणम् ॥ ९ ॥
फलान्यादत्स्व चित्राणि परिक्रीडस्व सानुषु ।
साधु संक्रीडमानानि पश्य वृन्दानि पक्षिणाम् ॥ १० ॥

---

महता वेगेन समुद्रं नीत्वा रक्षित इति श्रूयते ॥ ८ ॥ ज० म०

कृते इत्यादि। स हनूमान् समुद्रादुत्थितं मैनाकनामानमद्रिम् ऐक्षत दृष्टवान् ईक्षङ्दर्शने ङानुबन्धात्मम्। कीदृशं शक्रात् पक्षच्छेदोद्यतात् पित्रा वायुना संरक्षितम् अतएव वायोरुपकृतम् उपकारं कृतेन प्रत्युपकारेण परिक्रीणानं परिवर्त्तयन्तं विपराजीति परिपूर्वक्रीञो मं शानः ॥८॥ भ०

खमित्यादि। असावद्रिः उन्नत्या उन्नततया खं पराजयमानोऽभिभवन् पवनात्मजं जगाद। मयि विश्रम्य स्थित्वा वैरिणं शत्रुं विजेषीष्ठाः त्वमभिभूयाः आशिषि लिङ् उभयत्रापि विपराभ्यां जेरिति तङ् ॥ ९ ॥ ज० म०

खमित्यादि। असौ अद्रिः पवनात्मजं जगाद। कीदृशः सन् उन्नत्या उच्चतया खमाकाशं पराजयमानः अभिभवन् विपराजीति मं। किं जगादेत्याह मयि विश्रम्य विश्रामं कृत्वा वैरिणं विजेषीष्ठाः अभिभूयाः क्याशिषि पूर्ववन्मं ॥९॥ भ०

फलानीत्यादि। चित्राणि नानाविधानि फलानि आदत्स्व गृहाण आङोदोनास्यविहरण इत्यात्मनेपदं सानुषु ममैकदेशेषु परिक्रीडस्व विहर पक्षिणाञ्च वृन्दानि साधु शोभनम् अनुक्रीडमानानि विहरन्ति सन्ति पश्य उभयत्र क्रीडोऽनुसम्परिभ्यश्चेति तङ् ॥ १० ॥ ज० म०

फलेत्यादि। चित्राणि अद्भुतानि फलानि त्वमादत्स्व

क्षणं भद्रावतिष्ठस्व ततः प्रस्थास्यसे पुनः ।
न तत् संस्थास्यते कार्य्यं दक्षेणोरीकृतं त्वया ॥ ११ ॥
त्वयि नस्तिष्ठते प्रीतिस्तुभ्यं तिष्ठामहे वयम् ।
उत्तिष्ठमानं मित्रार्थे कस्त्वां न बहु मन्यते ॥ १२ ॥

---

गृहाण आदाणोऽस्वप्रसारे इति मं आमन्त्रणे गौ स्नाद्यो-रित्यालोपः मम सानुषु एकदेशेषु परिक्रीडस्व विहर पर्य्यत्ववाङः क्रीड इति मं पक्षिणां वृन्दानि पश्य । कीदृशानि साधु शोभनम् अनुक्रीडमानानि विहरन्ति पूर्ववन्मं ॥ १० ॥ भ०

क्षणमित्यादि । हे भद्र ! कल्याण ! क्षणमवतिष्ठस्व ततः पश्चात् प्रस्थास्यसे यास्यसि यच्च कार्य्यं करणीयं दक्षेणानलसेन त्वया ऊरीकृतमङ्गीकृतं न च संस्थास्यते अपितु निष्पत्स्यत एवेत्यर्थः सर्वत्र समवप्रविभ्यः स्थः इति तङ् ॥ ११ ॥ ज० म०

क्षणमित्यादि । हे भद्र ! कल्याणयुक्त ! त्वं क्षणम् अवतिष्ठस्व ततः पुनः प्रस्थास्यसे यास्यसि दक्षेण अनलसेन त्वया ऊरीकृतम् अङ्गीकृतं कार्य्यं न च संस्थास्यते न नाशं गमिष्यति सम्पत्स्यत एवेति भावः प्रतिज्ञानिर्णयेत्यादिना अवसंप्रपूर्व-तिष्ठतेर्मं ॥ ११ ॥ भ०

त्वयीत्यादि । त्वयि विषये अस्माकं प्रीतिरस्ति तेन संशये अस्माभिरन्यो निर्णेता नान्वेषणीयः किन्तु नोऽस्माकं प्रीतिरेव निर्णयं पश्यन्ती त्वयि तिष्ठते प्रकाशनस्थेयाख्ययो-श्चेत्यात्मनेपदं विवादपदनिर्णेता स्थेय उच्यते तुभ्यन्तिष्ठामहे वयमिति त्वयि विषये अस्माकं चेतो वर्त्तत इति स्वाभिप्रायं तुभ्यं तिष्ठामहे स्वाभिप्रायं निवेदयाम इत्यर्थः अत्र प्रकाशनञ्च स्वाभिप्रायकथनं श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमान इति सम्प्रदानसंज्ञायां चतुर्थी । कस्मादेवं मां श्लाघस इति चेदाह

ये सूर्य्यमुपतिष्ठन्ते मन्त्रैः सन्ध्यात्रयं द्विजाः ।
रक्षोभिस्तापितास्तेऽपि सिद्धिं ध्यायन्ति तेऽधुना ॥ १३ ॥

---

उत्तिष्ठमानं यतमानम् उदोऽनूर्द्ध्वकर्मणीत्यात्मनेपदं कस्त्वां न बहु मन्यते न श्लाघते ॥ १२ ॥ ज० म०

त्वयीत्यादि । त्वयि नोऽस्माकं प्रीतिस्तिष्ठते निश्चयेनास्ति तद्विषयेऽस्माकं प्रीतिरस्ति न वेति सन्देहे अस्माभिरन्यो निर्णेता नान्वेषणीयः किन्त्वस्माकं प्रीतिरेव त्वां निर्णेतारं करोतीति निर्णयार्थोऽत्र स्थाधातुः त्वमस्मदाप्तो न वेत्यत्र त्वद्विषये प्रीतिर्निर्णयं करोतीत्यन्ये । वयं तुभ्यं तिष्ठामहे स्थित्वा स्वाभिप्रायं प्रकाशयामः प्रकाशार्थोऽत्र स्थाधातुः यस्मैदित्सेत्यादिना संप्रदानत्वं प्रतिज्ञानिर्णयेत्यादिना मं अत्र प्रकाशः स्वाभिप्रायकथनम् । कथं मह्यं श्लाघसे इत्याह मित्रार्थे रामार्थे उत्तिष्ठमानं यतमानं त्वां को न बहु मन्यते न श्लाघते अपितु सर्व एव उदोऽनूर्द्ध्वेहे इति मम् ॥ १२ ॥ भ०

ये इत्यादि । ये द्विजा मन्त्रैः करणभूतैः सूर्य्यमुपतिष्ठन्ते प्रत्युपासते उपान्मन्त्रकरण इत्यात्मनेपदं सन्ध्यात्रयं त्रिसन्ध्यम् अत्यन्तसंयोगे द्वितीया तेऽपि रक्षोभिस्तापिताः उपद्रुताः अधुना ते सिद्धिं ध्यायन्ति किं पुनरहं यत्ते पितुः सुहृत् तदेव दर्शयन्नाह ॥ १३ ॥ ज० म०

ये इत्यादि । ये द्विजा ब्राह्मणा मन्त्रैः करणभूतैः सन्ध्यात्रयं व्याप्य सूर्य्यमुपतिष्ठन्ते उपासते मन्त्रेणोपादिति मं तेऽपि द्विजा रक्षोभिस्तापिता उपद्रुताः सन्तः अधुना इदानीं तव सिद्धिं ध्यायन्ति चिन्तयन्ति अहन्तु तव पितुः सुहृत् सुतरां तथेति भावः यद्वा द्विजानुकूलत्वादपि त्वं श्लाघ्य इति भावः । सन्ध्यात्रयमिति सदाध्वादीति द्वितीया ॥ १३ ॥ भ०

अव्यग्रमुपतिष्ठस्व वीर ! वायोरहं सुहृत् ।
रविर्वितपतेऽत्यर्थमाश्वस्य मयि गम्यताम् ॥ १४ ॥
तीव्रमुत्तपमानोऽयमशक्यः सोढुमातपः ।
आघ्नान इव सन्दीप्तैरलातैः सर्वतो मुहुः ॥ १५ ॥

---

अव्येत्यादि । हे वीर ! अव्यग्रमनाकुलं मय्युपतिष्ठस्व सन्निहितो भव अकर्मकाच्चेत्यात्मनेपदं यतो वायोस्तव पितुरहं सुहृत् रविरत्यर्थं वितपते दीप्यते उद्विभ्यामित्यात्मनेपदं तत्राकर्मकादिति वर्त्तते तस्मादाश्वस्य विश्रस्य गम्यताम् ॥ १४ ॥ ज० म०

अव्येत्यादि । हे वीर ! अव्यग्रमनाकुलं यथा स्यात्तथा त्वमुपतिष्ठस्व सन्निहितो भव अढादिति मं यतोऽहं वायोस्तव पितुः सुहृन्मित्रम् विश्रामौचित्यं दर्शयति रविरत्यर्थं वितपते दीप्यते व्युत्तप इति मं अढत्वात् अतएव मयि आश्वस्य प्राणनिर्वृतिं प्राप्य त्वया गम्यताम् ॥ १४ ॥ भ०

तीव्रेत्यादि । तीव्रं सुष्ठु उत्तपमानः दीप्यमानः आतपः सोढुमशक्यः पूर्ववदात्मनेपदं अलातैः उल्मुकैः सन्दीप्तैः सर्वत आघ्नान इव ताडयन्निव आङो यमहन इत्यविवक्षितकर्मकत्वादात्मनेपदं गमहनेत्युपधालोपः होहन्तेरिति कुत्वम् ॥ १५ ॥ ज० म०

तीव्रेत्यादि । पुनर्विश्रामौचित्यमाह । तीव्रमुत्तपमानो दीप्यमानोऽयमातपः सोढुं न शक्यः पूर्ववत् मं सन्दीप्तैरलातैरङ्गारैर्मुहुर्वारं वारं सर्वत आघ्नान इव ताडयन्निव आत्माङ्ढादढाच्चाहनयम इति मं अविवक्षितकर्मत्वात् अङ्गारोऽलातमुल्मुकमित्यमरः । आलातैरिति पाठे स्वार्थे ष्णः । विद्यादलातमालातमिति द्विरूपकोषः ॥ १५ ॥ भ०

संशृणुष्व कपे ! मत्कैः सङ्गच्छस्व वनैः शुभैः ।
समारन्त ममाभीष्टाः सङ्कल्पास्त्वय्युपागते ॥ १६ ॥
के न संविद्रते वायोर्मैनाकाद्रिर्यथा सखा ।
यत्नादुपाह्वये प्रीतः संह्वयस्व विवर्चितम् ॥ १७ ॥

---

संशृणुष्वित्यादि । हे कपे ! संशृणुष्व आकर्णय समोगमृच्छीत्यादिविषयचितकर्मकत्वादात्मनेपदं शुभैः शोभमानैः इगुपधलक्षणः कः वनैर्मत्कैः मत्स्वामिकैः अहं स्वामी येषामिति स एषां ग्रामणीरिति कः प्रत्ययोत्तरपदयोश्चेति मदादेशः सङ्गच्छस्व सङ्गतो भव पूर्ववदात्मनेपदं समारन्त ममाभीष्टा इति ममाभिप्रेता ये सङ्कल्पा अभिप्रायाः कदा नु मे सुहृत्तया वा कश्चिदेष्यति यस्याहमुपयोगी स्यामिति ते समारन्त आगताः त्वय्युपागते सति अर्त्तेर्लुङि पूर्ववदात्मनेपदं सर्त्तिशास्त्यर्त्तिभ्य इत्यङि ऋदृशोऽङि गुणः आडजादीनां भाषाविषयस्य प्रयोगः ॥ १६ ॥ ज० म०

समित्यादि । हे कपे ! संशृणुष्व आकर्णय मत्कैर्मत्स्वामिकैः शुभैः शोभमानैर्निर्भयत्वेन कल्याणयुक्तैर्वा वनैः सह सङ्गच्छस्व सङ्गतो भव अहं स्वामी येषामिति विकारसंघेत्यादिना कः समि मानोत्यर्थे वा त्वयि उपागते सति ममाभीष्टा वाञ्छिताः सङ्कल्पा अभिप्रायाः सुहृद्दर्शनादिरूपाः समारन्त सङ्गतवन्तः ऋगतौ सर्वत्र समोगमृच्छ इत्यादिना सं श्रोः श्रुर्षे इति श्नुः जिश्व वक्तास्येत्यादिना अर्त्तेर्ङः दृश्योर्णुरिति गुणः ॥ १६ ॥ भ०

न चैवं मिथ्या वायुर्मे सुहृदित्याह के नेत्यादि । वायोर्मैनाकाद्रिर्यथा सखेति के न संविद्रते जानन्ति वेत्तेः पूर्ववदात्मनेपदं वेत्तेर्विभाषेति रुट् तस्मात् प्रीतः सन् अहं यत्ना-

द्यामिवाह्वयमानन्तमवोचद् भूधरं कपिः ।
उपकुर्वन्तमत्यर्थं प्रकुर्वाणोऽनुजीविवत् ॥ १८ ॥
कुलभार्य्यां प्रकुर्वाणमहं द्रष्टुं दशाननम् ।
यामि त्वरावान् शैलेन्द्र ! मा कस्यचिदुपस्कृथाः ॥ १९ ॥

---

दुपाह्वये भवन्तमाह्वयामि ततः संह्वयस्व कथय विवक्षितम-भिप्रेतं निसमुपविभ्यो ह्वः इत्यकर्त्रभिप्राये लट्लोटोरात्मने-पदं ततोऽकर्मकादिति निवृत्तं सामान्येन विधानम् ॥ १७ ॥ ज० म०

केनेत्यादि । मत्पितुः सखा त्वमसीति किं प्रमाणमित्या-शङ्क्याह मैनाकाद्रिर्वाय्योर्यथा सखा तथा के जना न संविद्रते न जानन्ति अपितु सर्व एव समोगमृच्छेति मं अविवक्षित-कर्मत्वात् मान्तोरमिति रम् अतएवाहं प्रीतः सन् यत्नादुपा-ह्वये त्वामाह्वयामि त्वमपि विवक्षितं वक्तुमिष्टं संह्वय संकथय इति जगादाद्रिरिति सम्बन्धः निसंव्यपह्व इति मं ॥१७॥ भ०

द्यामित्यादि । द्यामिवाकाशमिवाह्वयमानं महत्तया स्पर्द्धमानं स्पर्द्धायामाङ् इत्यात्मनेपदं अत्यर्थमुपकुर्वन्तं आति-थ्येन तमीदृशं भूधरमवोचत् कपिः प्रकुर्वाणः सेवमानोऽनु-जीविवत् भृत्यवत् गन्धनेत्यादिना सेवने तङ् ॥१८॥ ज० म०

द्यामित्यादि । कपिर्हनूमान् तं भूधरं मैनाकं पर्वतं अवोचत् उक्तवान् कीदृशं द्यामाकाशमाह्वयमानमिव महत्-त्वेन स्पर्द्धमानमिव स्पर्द्धायामाङ इति मं अत्यर्थमुपकुर्वाण-मुपकारोद्यतम् । कीदृशः कपिः अनुजीविवत् भृत्यवत् प्रकुर्वाणः सेवमानः सूचनावक्षेपणेत्यादिना सेवायां मं ॥१८॥ भ०

कुलेत्यादि । अहं दशाननं द्रष्टुं यामि कुलभार्य्यां प्रकु-र्वाणं कुलनारीमभिगच्छन्तं तस्यां सहसा प्रवर्त्तमानमित्यर्थः

योऽपचक्रे वनात्सीतामधिचक्रे न यं हरिः ।
विकुर्वाणः स्वरानद्य बलं तस्य निहन्म्यहम् ॥ २० ॥

---

साहसिक्ये तङ् त्वरावान् त्वरायुक्तः अतः हे शैलेन्द्र ! मा कस्यचिदशनपानादिकस्य उपस्कृथाः अतिशयवन्तं मा कार्षीरित्यर्थः माङि लुङ् प्रतियत्ने तङ् तनादिभ्यस्तथासो- रिति सिचो लुक् उपात् प्रतियत्न इति सुट् कस्यचिदिति कृञः प्रतियत्न इति कर्मणि षष्ठी ॥ १९ ॥ ज० म०

कुलेत्यादि । किमवोचदित्याह हे शैलेन्द्र ! अहं त्वरायुक्तः सन् दशाननं द्रष्टुं यामि । कीदृशं कुलभार्य्यां कुलपालिकां प्रकुर्वाणं साहसेनाभिगच्छन्तं तस्यां साहसात् प्रवर्त्तमानमि- त्यर्थः सूचनावक्षेपणेत्यादिना साहसे मं । कुलस्त्री कुलपालि- केत्यमरः । अतएव कस्यचित् मा उपस्कृथाः कस्यापि दृश्यस्य भोज्यस्य पेयस्य वा मदर्थे प्रतियत्नं न कुरु पूर्वेण प्रतियत्ने मं सतो गुणान्तराधानं प्रतियत्नः उत्कर्षसमीहा प्रतियत्नमिति केचित् । सम्परिः सुमुपादिति सुम् झस्खाज्झसीति सेर्लोपः कस्यचिदिति समार्थेनेत्यादिना कर्मणि षष्ठी एधोदकस्योप- स्कुरुत इत्युदाहरता प्रतियत्ने कृञः कर्मणि न द्वितीया इति सूचितं गुणोत्कर्षे कृञः कर्मणि षष्ठीति परः ॥ १९ ॥ भ०

योऽपेत्यादि । यः सीतामपचक्रे अभिबभूव अवक्षेपणे तङ् वनादिति वनमुपगम्य ल्यब्लोपे कर्मणि पञ्चमी । यं हरि- रिन्द्रो नाधिचक्रे न प्रसेहे अधेः प्रसहन इति तङ् तस्य बलं दशाननस्य सामर्थ्यं कीदृशं स्वरान् विकुर्वाणं विविधान् स्वरान् कुर्वाणं वेः शब्दकर्मण इति तङ् तस्य दशाननस्य बलं निहन्मि ॥ २० ॥ ज० म०

य इत्यादि । यो वनात् सीतामपचक्रे प्रतिभूतवान्

विकुर्वे नगरे तस्य पापस्याद्य रघुद्विषः ।
विनेष्ये वा प्रियान् प्राणानुदानेष्येऽथवा यशः ॥ २१ ॥
विनेष्ये क्रोधमथवा क्रममाणोऽरिसंसदि ।

---

सूचनावक्षेपणेत्यादिना अवक्षेपणे मं सूचने ममिति केचित् तदापकारं प्रयुज्य हिंसां सूचयतीत्यर्थः वनादिति हेतौ पञ्चमी वनं प्राप्येति यवर्थे वा हरिरिन्द्रो यं नाधिचक्रे नाभिभूतवान् अधेः शक्ताविति मं शक्तिरभिभवः तस्य दशाननस्य बलं शक्तिमहमद्य निहन्मि । कीदृशः स्वरान् विविधान् कुर्वाणः द्वितीयान्तपाठे यमित्यस्य विशेषणं शब्दढ़ाढाद्देरिति मं ॥ २० ॥ भ०

विकुर्वे इत्यादि । तस्य रघुद्विषो रामशत्रोः पापस्य नगरे पुर्य्यां अहमद्य विकुर्वे विविधं चेष्टे अकर्मकाच्चेति तङ् तत्र विकुर्वाणो यदि वा प्रियानपि प्राणान् स्वाम्यर्थे विनेष्ये अपनेष्यामि सम्माननेत्यादिना व्यये तङ् यतो धर्मादिषु विनियोगो व्ययः यशो वा उदानेष्ये ऊर्द्धं नेष्यामि तस्यापकारकरणात् अत्रोत्सञ्जने तङ् उत्सञ्जनमुत्क्षेपणम् ॥ २१ ॥ ज० म०

विकुर्वे इत्यादि । तस्य पापाचारस्य रघूणां रामादीनां द्विषो रावनस्य नगरे लङ्कायाम् अहमद्य विकुर्वे विविधं चेष्टे शब्दढ़ाढ़ाद्देरिति अकर्मकत्वान्मं तत्र च विकुर्वाणोऽहं प्रियानपि प्राणान् वा विनेष्ये स्वाम्यर्थे त्यक्ष्यामि सम्मानोत्सञ्जनेत्यादिना व्ययार्थे मं व्ययो धर्मादिषु विनियोगः अथवा यश उदानेष्ये ऊर्द्धं नेष्यामि पूर्वेण क्षेपणे मं ॥ २१ ॥ भ०

विनेष्ये इत्यादि । यदि वा क्रोधमात्मनो विनेष्ये अपनेष्यामि कर्तृस्थेचेति तङ् कर्तृस्थस्य क्रोधकर्मणोऽशरीरत्वात् अत्र व्ययो न सम्भवतीति अरिसंसदि शत्रुसभायां क्रममाणः

इत्युक्त्वा खे पराक्रंस्त तूर्णं सूनुर्नभस्वतः ॥ २२ ॥
परीक्षितुमुपाक्रंस्त राक्षसी तस्य विक्रमम् ।
दिवमाक्रममाणेव केतुताराभयप्रदा ॥ २३ ॥

---

अप्रतिबन्धेन प्रवर्त्तमानः वृत्तिसर्गेत्यादिना वृत्तौ तङ् वृत्तिप्रतिबन्धः इत्येवमुक्त्वा सूनुर्नभस्वतः वायोस्तनयः खे तूर्णं पराक्रंस्त शीघ्रमुत्सेहे उपपराभ्यामित्यनेन सर्गे तङ् सर्ग उत्साहः ॥ २२ ॥ ज० म०

विनेष्ये इत्यादि । अथवा क्रोधं विनेष्ये अपनेष्यामि शत्रुहननात् घस्यामूर्त्तढ़ादिति मं अमूर्त्तमशरीरं कर्त्तृस्थादुक्तकर्मकाद्विपूर्वं नीञ आत्मनेपदमिति विद्यासागरः । सम्मतेऽपि शब्दढाढ़ाद्वेरित्यतो मण्डूकप्लुत्या वेरित्यनुवर्त्तते इति वाच्यं क्रोधं विनयत इत्युदाहरणदर्शनात् । अन्ये तु विपूर्वत्वं न वदन्ति तन्न साधु "विगणय्य नयन्ति पौरुषं विजितक्रोधरया जिगीषवः" इत्यादिदर्शनात् । किं कुर्वन् अरिसंसदि शत्रुसभायां क्रममाणः अप्रतिबन्धेन चेष्टमानः वृत्त्युत्साहेत्यादिना मं वृत्तिरप्रतिबन्धः इत्येवमुक्त्वा नभस्वतो वायोः सूनुः पुत्रो हनूमान् खे आकाशे तूर्णं शीघ्रं पराक्रंस्त उत्साहं चकार पूर्ववोत्साहे मं आस्फालनरूपोऽत्रोत्साहः सुक्रमोऽमि इति नेम् ॥ २२ ॥ भ०

परीत्यादि । तस्य हनूमतो विक्रमं शौर्य्यं परीक्षितुं राक्षसी उपाक्रंस्त उत्सेहे पूर्ववत्तङ् दिवमाक्रममाणेव यथा केतुः स्वर्भानुः तारा नभस्युद्गच्छति भयङ्करा आङ उद्गम इति तङ् यत्र हि ज्योतिरुद्गमन इत्युक्तं केतुतारायाश्च ज्योतिःस्वभावत्वात् ॥ २३ ॥ ज० म०

परीत्यादि । तस्य हनूमतो विक्रमं शौर्य्यं परीक्षितुं

जले विक्रममाणाया हनूमान् शतयोजनम् ।
आस्यं प्रविश्य निरगादणूभूयाप्रचेतितः ॥ २४ ॥
द्रष्टुं प्रक्रममाणोऽसौ सीतामम्भोनिधेस्तटम् ।
उपाक्रंस्ताकुलं घोरैः क्रममाणैर्निशाचरैः ॥ २५ ॥

---

राक्षसी उपाक्रंस्त उत्सहते स्म पूर्ववत् सं दिवमाकाशमाक्रममाणा उद्गमपूर्वकं प्राप्नुवती केतुस्वभावा तारेव भयप्रदा भयं प्रददातीति हनजनादिति डः आङो भोद्गम इति सं आक्रामति धूमः खमित्यत्र उद्गमो न विवक्षते किन्तु व्याप्तिमात्रम् ॥ २३ ॥ भ०

जले इत्यादि। विक्रममाणायाः पद्भ्यां विचरन्त्याः वेः पादविहरण इति तङ् जलग्रहणात् गतिविशेषं दर्शयति आस्यं शतयोजनं शतं योजनानि यस्य प्रमाणतः तदणूभूय सूक्ष्मीभूय प्रविश्य निरगात् निर्गत उदरं विदार्य्येत्यर्थात् अप्रचेतितः अविज्ञातः ॥ २४ ॥ ज० म०

जले इत्यादि। जले विक्रममाणायाः पद्भ्यां विहरन्त्या राक्षस्याः शतयोजनमास्यं प्रविश्य हनूमान् अणूभूय सूक्ष्मीभूय अप्रचेतितस्तया अपरिज्ञातः सन् निरगात् निर्गतः कर्णपथेनेत्यर्थात् उदरं भित्त्वेत्यन्ये। तत्तु रामायणविरुद्धं शतं योजनानि प्रमाणतो यस्येति विग्रहः वेः पद्भिरिति सं पद्भिरिति बहुत्वनिर्देशेन पादमात्रस्य करणत्वे वेःक्रमोऽममिति बोध्यं न तु साधु विक्रमते वाजीत्युदाहरणदर्शनात् बहुपादकरणत्वं वाच्यं वेः पद्भ्यामिति कातन्त्रसूत्रे द्वित्वमुपलक्षणं तेन तन्मते साधु विक्रमते वाजीत्यादि सिद्धम् ॥ २४ ॥ भ०

द्रष्टुमित्यादि। असौ हनूमान् सीतां द्रष्टुं प्रक्रममाणः आरभमाणः आदिकर्म यथा भोक्तुं प्रक्रमते इति उदधेस्तटमु-

आत्मानमपजानानः शशमात्रोऽनयद्दिनम् ।
न्यास्थे रात्राविति प्राज्ञः प्रत्यज्ञास्त क्रियापटुः ॥ २६ ॥

पाक्रंस्त गन्तुं प्रारब्धवानित्यर्थः ततश्च प्रोपयोरादिकर्मणि समानार्थत्वात् प्रोपाभ्यां समार्थाभ्यामिति तङ् । घोरैः रौद्रैः निशाचरैराकुलं व्याप्तं तटं क्रममाणैः इतस्ततो गच्छद्भिः अनुपसर्गाद्वेति तङ् ॥ २५ ॥ ज० म०

द्रष्टुमित्यादि । असौ हनूमान् निर्गतः सन् सीतां द्रष्टुं प्रक्रममाण आरभमाण उदधेस्तटमुपाक्रंस्त गन्तुमारभते स्म । यद्यपि भोक्तुमुपक्रमते इत्यादावारम्भमात्रमुपक्रमेरर्थस्तथापीह गमनारम्भो वाच्यः लाक्षणिकत्वात् द्रष्टुमित्यस्यानुषङ्गेण अम्भोनिधेस्तटमुपाक्रंस्तेति वा प्रोपादारम्भे इति तं घोरैर्भयानकैर्निशाचरैराकुलं व्याप्तं क्रममाणैरितस्ततो गच्छद्भिः वागैरिति मम् ॥ २५ ॥ भ०

आत्मेत्यादि । मा कश्चित् द्राक्षीदिति तथाविधमात्मानं शरीरमवजानानः अपह्नुवानः अपह्नवे ज्ञ इति तङ् यो हि शशमात्रो भूत्वा स्थितः तेन कथमात्मा लोके नापलपितः स्यात् अनयद्दिनं अगमयद्दिवसं न्यास्थे रात्राविति प्रत्यज्ञास्त प्रतिज्ञातवानित्यर्थः सम्प्रतिभ्यामनाध्यान इत्यात्मनेपदं लुङो भवति आत्मानञ्चोत्कण्ठनं न्यास्थे इत्यकर्मकाच्चेत्यकर्मकक्रियावचनत्वादात्मनेपदं प्राज्ञः क्रियापटुरिति बुद्धिकौशलं कर्मकौशलञ्च दर्शयति ॥ २६ ॥ ज० म०

आत्मानमित्यादि । असौ शशमात्रः शशपरिमाणो भूत्वा दिनमनयत् गमयामास दघ्नमात्रद्वयषट्माने इति मात्रट् । कथं तथाविधस्याल्पकायत्वमित्याह आत्मानमपजानानः अपह्नुवानः निह्नवे ज्ञ इति मं रात्रावहं न्यास्थे इति प्रत्यज्ञास्त

सञ्ज्ञानानान् परिहरन् रावणानुचरान् बहून् ।
लङ्कां समाविशद्रात्रौ वदमानोऽरिदुर्गमाम् ॥ २७ ॥
कञ्चिन्नोपावदिष्टासौ केनचिद् व्यवदिष्ट न ।
शृण्वन् संप्रवदमानाद्रावणस्य गुणान् जनात् ॥ २८ ॥

---

प्रतिज्ञातवान् संप्रतेरस्मृताविति मं ज्ञास्ये इति श्रद्धादिति मं अविवक्षितकर्मत्वात् जिज्ञासन्तेत्यादिना वा प्राज्ञः क्रियापटुरिति पदद्वयेन बुद्धिकौशलं क्रियाकौशलञ्च दर्शितम् ॥ २६ ॥ भ०

सञ्ज्ञेत्यादि । रावणस्यार्थेषु कार्य्येषु ये चरन्तीति चरेष्टः तान् बहून् सञ्ज्ञानानान् चेतयतः परिहरन् अनाध्याने तङ् रात्रौ लङ्कां समाविशत् प्रविष्टवान् अरिदुर्गमां राक्षसदुर्गमां वदमानो भासमानः भासनोपसम्भाषेत्यादिना आत्मनेपदम् ॥ २७ ॥ ज० म०

समित्यादि । असौ हनूमान् रात्रौ लङ्कायां समाविशत् प्रविष्टवान् कीदृशः वदमानः शोभमानो वदन् शोभोपलक्षितं शोभाहेतुकं वा यथा स्यात्तथा कथयन् वा ज्ञानयत्नप्रलोभे वद इति मं ज्ञानपदेन ज्ञानपूर्वकत्वात् शोभाप्युच्यत इति कातन्त्रटीकायां व्याख्यातत्वात् प्रकाशनादौ वद इति क्रमदीश्वरसूत्रदर्शनाच्च शोभा च वदत्यर्थस्य लक्षणभावेन हेतुभावेन वा विशेषणं न तु तन्मात्रं वाच्यमिति न्यासः । बहून् रावणस्यानुचरान् सेवकान् परिहरन् कीदृशान् सञ्ज्ञानानान् चेतयमानान् संप्रतेरस्मृताविति मं कीदृशीं लङ्कां अरिदुर्गमां शत्रुभिर्दुष्प्रापाम् ॥ २७ ॥ भ०

कञ्चिदित्यादि । असौ प्रविष्टः सन् न कञ्चिदुपावदिष्ट उपसान्त्वितवान् उपसम्भाषायां तङ् केनचिद्व्यवदिष्ट न न

जल्पितोत्क्रुष्टसङ्गीतप्रनृत्तस्मितवल्गितैः ।
घोषस्यान्ववदिष्टेव लङ्का पूतक्रतोः पुरः ॥ २९ ॥

---

भाषितवान् विमतौ तङ् विमतिर्नानामतिः संशृखन् आकर्णयन् जनात् प्रवदमानात् रावणस्य सम्बन्धिनो गुणान् सम्भूय भाषमाणान् व्यक्तवाचामित्यात्मनेपदं जनानां व्यक्तवाक्यम् ॥ २८ ॥ ज० म०

किञ्चिदित्यादि। असौ हनूमान् प्रविष्टः सन् न किञ्चिदुपावदिष्ट न किञ्चित् प्रलोभनवाक्यं भाषते स्म ज्ञानयत्नेत्यादिना प्रलोभे मं केनचित् सह न व्यवदिष्ट नानामतिपूर्वकं विचित्रं न भाषते स्म विमतिपूर्वकं विचित्रकथनमत्र वदत्यर्थः विमतिव्यक्तसहोक्तयोरिति विमतौ मं संप्रवदमानात् सम्भूय व्यक्तं भाषमाणात् जनात् रावणस्य गुणान् शृखन् पूर्वेण व्यक्तसहोक्तौ मम् ॥ २८ ॥ भ०

जल्पीत्यादि। पूतक्रतोरिन्द्रस्य या पूः तस्या अमरावत्याः सम्बन्धिनो घोषस्यान्ववदिष्टेव लङ्का अनुशब्दः सादृश्ये सदृशं वादं कृतवती तैर्जल्पितादिभिः उभयत्रापि जल्पितादिघोषस्य तुल्यत्वात् लङ्केति तत्स्थो जन उच्यते तेन व्यक्तवाग्विषयत्वात् अनोरकर्मकादिति तङ् तत्र व्यक्तवाचामिति अनुवर्त्तते न समुच्चारण इति ॥ २९ ॥ ज० म०

जल्पितेत्यादि। लङ्का जल्पितादिभिः पूतक्रतोरिन्द्रस्य पुरोऽमरावत्या घोषस्य शब्दस्य अन्ववदिष्टेव सदृशभाषणं कृतवतीव उभयत्रापि जल्पितादिघोषणानां तुल्यत्वात् अनुशब्दः सदृशभाषणद्योतकः। तद्गतजनानां भाषणेन तद्भाषणमुत्प्रेच्यते अनोरढादिति मं अनुपूर्वादकर्मकाद्वदेरुक्तौ व्यक्तवाचामात्मनेपदमिति केचित् तन्मते लङ्काशब्देन लक्षणया

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



ऐद्विप्रवदमानैस्तां संयुक्तां ब्रह्मराक्षसैः ।
तथावगिरमाणैश्च पिशाचैर्मांसशोणितम् ॥ ३० ॥
यथास्वं सङ्गिरन्ते स्म गोष्ठीषु स्वामिनो गुणान् ।

---

लङ्कास्थितजन उच्यते व्यक्तवाचामिति तु वोपदेवेन नाङ्गीकृतं अनोरकर्मक इति कातन्त्रसूत्रेऽपि व्यक्तवाचामित्यस्य सम्बन्धो नाङ्गीकृतः। जल्पितं व्यक्तभाषणं उत्क्रुष्टमाह्वानं सङ्गीतं सम्यक् गानं प्रनृत्तं नर्त्तनशब्दः स्मितं हास्यशब्दः वल्गितं मत्तवचनम् ॥ २९ ॥ भ०

ऐदित्यादि। तां ब्रह्मराक्षसैः संयुक्तां हनूमानैत् जगाम इणो लङि रूपम्। विप्रवदमानैः परस्परविरुद्धार्थाभिधायिभिः विप्रलापात्मके व्यक्तवाचां समुच्चारणे विभाषाविप्रलाप इति तङ् तथा पिशाचैर्मांसशोणितमवगिरमाणैः भक्षयद्भिः संयुक्तां गिरतेरभ्यवहारार्थत्वादवाद्ग्र इति तङ् मांसशोणितमिति जातिरप्राणिनामित्येकवद्भावः ॥ ३० ॥ ज० म०

ऐदित्यादि। हनूमान् तां लङ्कां ऐत् गतवान् इणो ग्यां रूपम्। कीदृशीं ब्रह्मस्वरूपैस्तत्सम्बन्धिभिर्वा राक्षसैः संयुक्तां कीदृशैः विप्रवदमानैः सम्भूय विरुद्धप्रलापिभिः एको यादृक् वदति अपरस्तादृक् न वदति वितण्डां कुर्वद्भिरित्यर्थः तद्योगे वेति मं तद्योग इति तयोः पूर्वोक्तयोः विमतिव्यक्तसहोक्त्योर्योगे युगपत्प्रवृत्तौ विमतिरिह विरुद्धप्रलापमात्रं तथा पिशाचैः संयुक्तां कीदृशैर्मांसशोणितञ्चावगिरमाणैर्भक्षयद्भिः अवाङ्गितत्तेरिति मं मांसशोणितमिति समाहारद्वन्द्वः पिशितमश्नातीति पिशाचो मनीषादिस्तालव्यवान् ॥ ३० ॥ भ०

यथेत्यादि। ब्रह्मराक्षसाः पिशाचाश्च यथास्वं आत्मीयस्य स्वामिनो गुणान् गोष्ठीषु गोष्ठीमध्ये सङ्गिरन्ते स्म अभ्युपगत-

पानशौण्डाः पथः क्षीबा वृन्दैरुदचरन्त च ॥ २१ ॥
यानैः समचरन्तान्ये कुञ्जराश्वरथादिभिः ।
संप्रायच्छन्त वन्दीभिरन्ये पुष्पफलं शुभम् ॥ २२ ॥

---

वन्तः समः प्रतिज्ञान इति तङ् पानशौण्डाः पानासक्ताः क्षीबा मत्ताः सन्तः पथो मार्गानुदचरन्त उत्क्रम्य गच्छन्ति स्म उदश्चरः सकर्मकादिति तङ् वृन्दैरिति सम्भूयेत्यर्थः ॥ २१ ॥ ज० म०

यथेत्यादि। ब्रह्मराक्षसाः पिशाचाश्च यथास्वं स्वीयस्य स्वामिनो गुणान् गोष्ठीषु गोष्ठीमध्ये सङ्गिरन्ते स्म अभ्युपगतवन्तः समः प्रतिज्ञायामिति मं पाने शौण्डा आसक्ताः अतएव क्षीवाः मत्ताः सन्तः वृन्दैः सम्भूय पथो मार्गान् उदचरन्त उत्क्रम्य जग्मुः उच्चरः सढादिति मम् ॥ २१ ॥ भ०

यानैरित्यादि। अन्ये यानैः कुञ्जरादिभिः समचरन्त सञ्चरन्ते स्म समस्तृतीयायुक्तादिति तङ्। अन्ये वन्दीभिरानीताभिः सम्प्रदाने तृतीया अशिष्टव्यवहारतृतीया चतुर्थ्यर्थे भवतीति वचनाद्वन्दीभ्य इत्यर्थः पुष्पफलं शोभनं सम्प्रायच्छन्त ददति स्म दानश्च सा चेच्चतुर्थ्यर्थे इति तङ् पुष्पफलमिति जातेरेकवद्भावः ॥ २२ ॥ ज० म०

यानैरित्यादि। अन्ये कुञ्जरादिभिर्यानैः समचरन्त सञ्चरन्ते स्म समस्त्र्येति मं अन्ये शुभं शोभनं पुष्पं फलञ्च वन्दीभिः हठहृतस्त्रीभिः संप्रायच्छन्त संप्रददुः सन्दानोभेऽधर्मे नित्यमिति सम्प्रदाने तृतीया वन्दीभिः सह विहरणेच्छया ताभ्यो ददुरित्यधर्मः दानः सा चेच्च्यर्थे इति मं सेत्यनेन समस्त्र्ये त्यस्मात् त्री आकृष्यते ॥ २२ ॥ भ०

अभिद्योतिष्यते रामो भवन्तमचिरादिह ।
उद्गूर्णबाणः संग्रामे यो नारायणतः प्रति ॥ ८९ ॥

---

परिस्त्रीं जातमन्मथः अत्र वीप्सायां कर्मप्रवचनीयत्वम् ॥ ८८॥
ज० म०

आरामेत्यादि । हे पाप ! दुराचार ! आरामदर्शनात् रामदर्शनं यावत् स्त्रियः प्रति लक्ष्यीकृत्य विद्योतस्व शोभस्व पूर्ववत् सीमार्थाङ्योगे पञ्चमी धिक्समयेत्यादिना चिह्नार्थप्रतियोगि द्वितीया । त्वं कीदृशः सद्वृत्तान् सदाचारान् अनुदुर्वृत्तः दुश्चरित्रः सदाचारेषु कथञ्चित् प्रकारं द्रोहादिकमापन्नो दुर्वृत्तो भवसीत्यर्थः पूर्ववदित्यम्भावार्थानुयोगे द्वितीया इत्यम्भावः कस्यचित् प्रकारस्यापत्तिः स्त्रीः परि लक्ष्यीकृत्य स्त्रीषु कथञ्चित्प्रकारं विहारित्वादिकमापन्नो वा जातकामः पूर्ववच्चिह्नार्थे इत्यम्भावार्थे वा परियोगे द्वितीया वीप्सायां परिशब्दस्य कर्मप्रवचनीयत्वमिति जयमङ्गला न युक्ता वीप्सायां द्वित्वं लोकतः प्रसिद्धमिति टीकायामुक्तत्वात् क्वचित् सम्बुद्ध्यन्तमिदं विशेषणद्वयं दृश्यते ॥ ८८ ॥ भ०

अभीत्यादि । भवन्तमभि भवन्तं लक्ष्यीकृत्य अभिरभाग इति कर्मप्रवचनीयत्वं अचिरादिह लङ्कायां रामो द्योतिष्यते असह्यतेजा भविष्यति य उद्गूर्णबाणः उद्यतबाणः सङ्ग्रामे नारायणतः प्रति तेन तुल्यः प्रतिनिधिः प्रति प्रतिनिधीति प्रतिनिधौ कर्मप्रवचनीयत्वं प्रतिः प्रतिनिधि प्रतिदाने च यस्मादिति पञ्चमी प्रतियोगे पञ्चम्यास्तसिः मुख्यसदृशः प्रतिनिधिः ॥ ८९ ॥ ज० म०

अभीत्यादि । भवन्तमभि लक्ष्यीकृत्य रामोऽचिरादिह लङ्कायां द्योतिष्यते असह्यतेजा भविष्यतीत्यर्थः पूर्ववत् चिह्नार्था-

कुतोऽधियास्यसि क्रूर ! निहतस्तेन पत्रिभिः ।
न सूक्तं भवतात्युग्रमतिरामं मदोद्धत ! ॥ ९० ॥
परिशेषं न नामापि स्थापयिष्यति ते विभुः ।
अपि स्थाणुं जयेद्रामो भवतो ग्रहणं कियत् ॥ ९१ ॥

---

भियोगे द्वितीया यो रामः संग्रामे उद्गूर्णबाणः उद्यतकाण्डः सन् नारायणतः प्रति तेन तुल्यः अन्यारभ्येत्यादिना प्रतिनिध्यर्थप्रतियोगे पञ्चमी प्रसक्तेरिति पञ्चम्यास्तस् ॥ ८९ ॥ भ०

कुत इत्यादि। हे क्रूर ! तेन रामेण उद्गूर्णबाणेन पत्रिभिः शरैः निहतः सन् कुतोऽधियास्यसि केन प्रकारेण निःसरिष्यसि अधिपरी अनर्थकाविति अधेः कर्मप्रवचनीयसंज्ञा धात्वर्थव्यतिरेकेणार्थस्यानभिधानादनर्थकत्वं संज्ञा च गत्युपसर्गसंज्ञाबाधनार्था तेन तिङि चोदात्तवतीति निघाताभावो द्रष्टव्यः पञ्चमी च प्रश्नाख्यानयोरित्युपसंख्यानात् भवति किमिति हनिष्यतीति चेत् यतो भवता न सूक्तं प्रशस्तमुक्तं सुः पूजायामिति कर्मप्रवचनीयत्वं गतिरनन्तर इति स्वराभावः अत्युग्रमतिरौद्रं अतिरामं राममधिक्षिप्य काकुत्स्थमधन्यमिति अतिरतिक्रमणे चेति कर्मप्रवचनीयत्वं चकारात् पूजायाञ्च तत्र चाप्युक्तमिति प्रयोगः हे मदोद्धत ! ॥९०॥ ज० म०

कुत इत्यादि। हे क्रूर ! तेन रामेण संग्रामे पत्रिभिः शरैर्निहतः सन् कुतस्त्वं अधियास्यसि सर्वतोभावेन कस्मात् निःसरिष्यसि हे मदोद्धत ! अतिरामं राममतिक्रम्य अवक्षिप्य अत्युग्रं अतिरौद्रं भवता न सूक्तं न शोभनमुक्तं रामाक्षेपकं तव पूर्ववचनं मिथ्यैवेति भावः धिक्समयेत्यादिना अतियोगे द्वितीया ॥ ९० ॥ भ०

परीत्यादि। रामो विभुः प्रभुः ते परिशेषं नामापि

अपिस्तुह्यपिसेधास्मांस्तथ्यमुक्तं नराशन ! ।
अपि सिञ्चेः कृशानौ त्वं दर्पं मय्यपि योऽभिकः ॥९२॥

संज्ञामपि न स्थापयिष्यति किमु देहं अपिः पदार्थेत्यादिना पदार्थे कर्मप्रवचनीयसंज्ञा पदस्य देहस्याप्रयुज्यमानस्यार्थे अपिशब्दो वर्त्तते अपि स्थाणुं जयेद्रामो यमाराध्याधिपत्यं प्राप्तवानसि तमपि स्थाणुं महादेवं जेतुं सम्भाव्यते भवतो ग्रहणं कियत् वस्त्वेव न भवति अत्र सम्भावनायां कर्मप्रवचनीयत्वं सम्भावने लिङ् उपसर्गबाधनत्वात् संज्ञाया उपसर्गात्-सुनोतीत्यादिना षत्वं न भवति ॥ ९१ ॥ ज० म०

परीत्यादि। स प्रभूरामस्ते तव परिशिष्टं नामापि संज्ञामपि न स्थापयिष्यति किं पुनः शरीरं अत्रापिशब्देन देहस्य समुच्चयात् "अत्रार्चायां स्वती नातिक्रमेऽतिः पर्य्यधी गतौ। अपिः पदार्थसंभाव्यगर्हानुज्ञासमुच्चये", इत्यनेनोपसर्गत्वाभावः तेन व्यस्यन्यनुकारेत्यादिना न समासः धातुपूर्वत्वनियमाभावः गौकःस्तुस्तुभेत्यादिना न षत्वञ्च परेस्त्वेतदर्थं कर्मप्रवचनीय-संज्ञा कृता कुतस्तस्यैवं सामर्थ्यमित्याह रामः स्थाणुमपि जयेत् यमाराध्य त्वमाधिपत्यं प्राप्तवान् तमपि स्थाणुं महादेवं स जयेदिति सम्भाव्यते अपिशब्दः सम्भावनाया द्योतकः तत्रैव त्वौ तेन रामेण बलाद्भवतो ग्रहणं कियत् अल्पायास-साध्यमेव पूर्ववत् षत्वनिषेधः ॥ ९१ ॥ भ०

अपीत्यादि। हे नराशन ! मया तथ्यमुक्तं यन्नामापि न स्थापयिष्यतीति अस्मानपि स्तुहि साधूक्तमिति प्रशंस सेद्ध-पिचेति अपिति ङित्त्वादगुणाभावः अपिसेध निगृहाण यथेच्छं तथा क्रियतां मया तु सत्यमेवोक्तमिति भावः। अत्रानुपसर्गे कामचारानुज्ञाने कर्मप्रवचनीयसंज्ञा। किञ्च कृशानावग्नौ

अधिरामे पराक्रान्तमधिकर्त्ता स ते स्वयम् ।
इत्युक्त्वा मैथिली तूष्णीमासाञ्चक्रे दशाननम् ॥ ९३ ॥

---

दर्पं अपिसिञ्चेः चरेस्त्वं अत्र गर्हायां लिङ् रूपं योऽयं मय्यपि मद्विषयेऽपि अभिकः कामयिता अनुकाभिकेत्यादिना निपातितः उपसर्गसंज्ञाबाधनार्थत्वात् स्तौतिसेधिसिचां षत्वं न भवति ॥ ९२ ॥ ज० म०

अपीत्यादि । हे नराशन ! परिशेषं न नामापि स्थाय-यिष्यतीति तथ्यं सत्यमेव मयोक्तं त्वमस्मान् अपि स्तुहि साधूक्त-मिति प्रशंस अपिसेध निगृहाण यथा तवेच्छा तथैव क्रियतां मया तु सत्यमेवोक्तमिति भावः । अत्रापिशब्दः समुच्चयेऽनुज्ञायां वा पूर्ववत् षत्वनिषेधः ष्टुञ्‌स्तुतौ पिधूशिविशास्ते द्वौ रूपम् । त्वं कृशानौ वक्ष्यावेव दर्पं अपिसिञ्चेः मुञ्च अत्रापिशब्दो गर्हायां पूर्ववत् षत्वनिषेधः । यद्यपि जात्वपिभ्यां सदाचेपे इति काल-सामान्ये गर्हायां को विहिता तथापि पदसंस्कारात् विधौ खो अग्रतः स्यात् । अत्र दर्पशब्देन दर्पजनकत्वाद्रेत उच्यते । यस्त्वं मय्यपि मद्विषये अभिकः कामुकः ॥ ९२ ॥ भ०

अधीत्यादि । पराक्रान्तस्य शौर्य्यस्य राम ईश्वितेत्यस्मिन्नर्थ अधिरामे पराक्रान्तं नपुंसके भावे क्तः अधिरीश्वर इति स्वस्वामिसम्बन्धे अधेः कर्मप्रवचनीयसंज्ञा यस्मादधिकमि-त्यादिना सप्तमी । यस्त्वेवं स रामस्ते स्वयमधिकर्त्ता करिष्यति अत्र कर्मण्येव द्वितीया न कर्मप्रवचनीययुक्त इति विभाषाकृ-ञीति या संज्ञा तस्या गत्युपसर्गसंज्ञाबाधनार्थत्वात् संज्ञापचे तिङि चोदात्तवतीति निघाताभावो द्रष्टव्य इति एवमुक्त्वा दशाननं मैथिली तूष्णीमासाञ्चक्रे तूष्णीं स्थितवती । इति कर्मप्रवचनीयाधिकारः ॥ ९३ ॥ ज० म०

ततः खड्गं समुद्यम्य रावणः क्रूरविग्रहः ।
वैदेहीमन्तरा क्रुद्धः क्षणमूचे विनिश्वसन् ॥ ९४ ॥

---

अधीत्यादि । रामः पराक्रमस्य स्वामीत्यर्थे अधिरामे अधिकेश्वरार्थोपाधिभ्यामिति सप्तमी पराक्रान्तमिति भावे क्तः अधिरामे पराक्रान्तं यथा भवति तथा स रामस्ते तव क्षयं अधिकर्त्ता अधिकं करिष्यति स्वकीयपराक्रमेण क्षयं करिष्यतीत्यर्थः इति दशाननमुक्त्वा मैथिली तूष्णीं मौनेन आसाञ्चक्रे स्थितवती विंजादीत्याम् । इति कर्मप्रवचनीयाधिकारः ॥ ९३ ॥ भ०

इतः प्रभृत्यनभिहित इत्यधिकृत्य विभक्तिविधानमाह । तत इत्यादि । ततः सीतावचनादुत्तरकालं रावणः खड्गं समुद्यम्य उत्क्षिप्य कर्मणि द्वितीया क्रूरविग्रहः दुष्प्रेक्ष्यत्वात् वैदेहीमन्तरा क्रुद्धः वैदेह्या मध्ये कुपितः अन्तरान्तरेण युक्त इति षष्ठ्यपवादात् द्वितीया अन्तराशब्दो मध्यमाधेयप्रधानमाचष्टे आधेयश्चात्र क्रुद्धो रावणः क्षणमूचे उक्तवान् उक्तिक्रियया क्षणस्य कालस्य साकल्येन सम्बन्धात् कालाध्वनोरिति द्वितीया विनिश्वसन् क्रोधात् ॥ ९४ ॥ ज० म०

अथानभिहिताधिकारः । अथानभिहित इत्यधिकृत्य पाणिनिना या द्वितीयादिविभक्तयो विहितास्ताः कथ्यन्ते समतेऽनभिहिताधिकाराभावेऽपि उक्ते कर्मादौ प्रथमा स्यात् पारिशेष्यादनभिहित इत्यवगम्यते । तत इत्यादि । सीतावचनानन्तरं रावणः क्रूरविग्रहो रोषात् दुष्प्रेक्ष्यशरीरः सन् खड्गमुद्यम्य उत्क्षिप्य क्षणं विनिश्वसन् ऊचे । कीदृशः वैदेहीमन्तरा सीताया मध्ये क्रुद्धः मध्यभागं छेत्तुमुद्यत इत्यर्थः किंवा रावणपरिजनश्चेत्यन्तराश्चाक्षाश्चे वैदेहीं रावणः परिज-

चिरेणानुगुणं प्रोक्ता प्रतिपत्तिपराङ्मुखी ।
न मासे प्रतिपत्तासे मां चेन्मर्त्तासि मैथिलि ! ॥९५॥

---

नश्चान्तरा क्रुद्धः वैदेह्या रावणपरिजनस्य चान्तरामध्ये कुपितः सन्नित्यर्थः खड्गमिति कर्मणि द्वितीया अन्तराशब्दो मध्यार्थः तद्योगे धिक्समयेत्यादिना द्वितीया क्षणमिति सदाध्वादिव्याप्ताविति द्वितीया विनिश्वासक्रियया वचनेन वा तस्यातिसंयोगसम्बन्धात् ॥ ९४ ॥ भ०

चिरेत्यादि । हे मैथिलि ! चिरेणापि कालेनानुगुणमनुकूलं मया प्रोक्तापि सती प्रतिपत्तिपराङ्मुखी उक्तस्यार्थस्यानुष्ठानं प्रतिपत्तिः तस्यां पराङ्मुखी इदानीं यदि त्वं मासे त्रिंशद्दिवसलक्षणे मां न प्रतिपत्तासे नाङ्गीकरिष्यसि तदा मर्त्तासि मरिष्यसि उभयमपि लुटि रूपं तत्र चिरेण प्रोक्तेत्यपवर्गे तृतीया विवक्षितार्थप्रकाशनं फलं तस्य प्राप्तौ तत्क्रियापरिसमाप्तिरपवर्ग इति मां मासेन प्रतिपत्तासे इति सप्तमी पञ्चम्यौ कारकमध्य इति सप्तमी कर्मकर्त्रोः कारकयोर्मध्यत्वात् मासस्य ॥ ९५ ॥ ज० म०

चिरेणेत्यादि । हे मैथिलि ! चिरेण कालेन मयानुगुणं अनुकूलं प्रोक्तापि तस्योक्तस्य पतिपत्तिरनुमतिस्ततः पराङ्मुखी त्वमधुना चेद्यदि मासे त्रिंशद्दिनपरिमिते काले मां न प्रतिपत्तासे नाङ्गीकरिष्यसि तदा मर्त्तासि मरिष्यसि खड्गप्रहारेणेत्यर्थात् मास इति व्याप्यविवक्षया न द्वितीया सत्यामपि व्याप्तौ निर्धारे अधिकेन क्रियान्तः कालाध्वनोश्च पी चेति सप्तमी आद्यैका वचनक्रिया अपरा च प्रतिपत्तिक्रिया तन्मध्ये मासः कालस्तेन तद्विषयः मासे अनतिक्रान्ते सतीत्यध्याहृत्य पदं साधितं श्रीपतिः प्रतिपूर्वपदो मृङश्च द्यां रूपम् ॥९५॥स०

प्रायुङ्क्त राक्षसीर्भीमा मन्दिराय प्रतिव्रजन् ।
भयानि दत्त सीतायै सर्वा यूयं कृते मम ॥ ९६ ॥
गते तस्मिन् समाजग्मुर्भयाय प्रति मैथिलीम् ।
राक्षस्यो रावणप्रीत्यै क्रूरश्चोचुरलं मुहुः ॥ ९७ ॥

---

प्रायुङ्क्तेत्यादि । रावणो राक्षसीर्भीता भयानकाः प्रायुङ्क्त समादिष्टवान् लङि रूपं मन्दिराय प्रतिव्रजन् गृहाय प्रतिव्रजन् गत्यर्थकर्मणीत्यादिना तु चतुर्थी कर्मप्र वचनीयाधिकार एव दर्शितत्वात् किमादिशदित्याह सर्वा यूयं सीतायै भयानि दत्त लोटि रूपं चतुर्थी सम्प्रदाने सम्पूर्व्याद्दत्य प्रकर्षेण दीयत इति सम्प्रदानं मम कृते मदनुग्रहनिमित्तम् ॥ ९६ ॥ ज० म०

प्रायुङ्क्तेत्यादि । रावणो मन्दिराय प्रतिव्रजन् गृहं प्रति गच्छन् भीमा भयानका राक्षसीः प्रायुङ्क्त समादिष्टवान् गत्यर्थसन्यढे इति कर्मणि चतुर्थी । किमादिशदित्याह । सर्वा यूयं मम कृते मन्निमित्तं मत्कार्य्याय वा सीतायै भयानि दत्त प्रयच्छत सम्प्रदाने चतुर्थी । यद्यपि स्वस्वत्वध्वंसपूर्वेत्यादिलक्षणं दानं भयस्य न सम्भवति आरोपणार्थ एव ददातिस्तथापि दित्साशब्दस्य विवक्षामात्रवचनत्वात् साधुत्वं कृते शब्दो निमित्तार्थोऽव्ययः क्विपि तादर्थ्ये वा चतुर्थी ॥ ९६ ॥ भ०

गते इत्यादि । तस्मिन् रावणे गते सति राक्षस्यः समाजग्मुः सम्भूय गताः समोगम्यृच्छीत्यादिना आत्मनेपदं न भवति आङा व्यवहितत्वात् मैथिलीं प्रति लक्षीकृत्य भयाय सीतायै भयं दातुं क्रियार्थोपपदस्य कर्मणि स्थानिन इति चतुर्थी ददातेः क्रियार्थोपपदस्य स्थानिनः प्रयुज्यमानस्य भयं कर्म क्रिया चात्र समागमः तत्रोपपदं क्रियार्थमिति क्रूरश्च

रावणाय नमः कुर्य्याः स्यात् सीते ! स्वस्ति ते ध्रुवम् ।
अन्यथा प्रातराशाय कुर्य्याम त्वामलं वयम् ॥ ९८ ॥

---

भयानकं मुहुः प्रतिक्षणं अलं पर्य्याप्तमूचुः उक्तवत्यः रावणप्रीत्यै रावणस्यैवं प्रीतिः स्यादिति तुमर्थाच्च भाववचनादिति चतुर्थी क्रियायां क्रियार्थायामिति तुमुना समानार्थत्वात् भाववचनाच्चेत्यनेन विहितस्य क्तिनः क्रियार्थं उपपदं क्रूराभिधानम् ॥ ९७ ॥ ज० म०

गते इत्यादि । तस्मिन् रावणे गते सति मैथिलीं प्रति लक्षीकृत्य भयाय सीतायै भयं दातुं राक्षस्यः समाजग्मुः आङ्व्यवधानात् समोगम्यृच्छेति न मं भयायेति नित्यं कर्मणि तुमोऽप्रयोगिन इति चतुर्थ्यर्थं परसूत्रं स्वमते तादर्थ्ये एव मैथिलीमिति धिक्समयेत्यादिना प्रतियोगे द्वितीया । अथ रावणप्रीत्यै क्रूरं कठोरं अलं अत्यर्थं मुहुर्वारं वारं ऊचुः क्रूरमिति क्रियाविशेषणे द्वितीया ॥ ९७ ॥ भ०

रावेत्यादि । हे सीते ! रावणाय नमः कुर्य्याः रावणं नमस्कुरु एवञ्च सति ते तुभ्यं स्वस्ति कल्याणं ध्रुवं स्यात् युष्मच्छब्दस्य चतुर्थ्येकवचनान्तस्य ते आदेशः नमस्कृत्वेति पाठान्तरं तत्र नमस्कृत्वा स्थितायै तुभ्यमित्यध्याहृत्य योज्यं अन्यथा ह्यसमानकर्तृकत्वात् क्त्वाप्रत्ययो न घटते नमस्कृत्येति पाठान्तरं साक्षात्प्रभृतिषु नमःशब्दस्य विकल्पेन गतिसंज्ञा गत्यभावपक्षे नित्यं गतिसमासाभावे ल्यबादेशः नमस्पुरसोर्गत्योरिति विसर्जनीयस्य सकारादेशश्च न सम्भवतीति अन्यथेति यदि न नमस्कुर्य्याः तदा अलम्प्रातराशाय प्रातर्भोजनाय त्वां कुर्य्याम वयमित्यूचुः नित्यं ङित इति सलोपः रावणायेत्यादिषु नमःस्वस्तीत्यादिना चतुर्थी ॥ ९८ ॥ ज० म०

तृणाय मत्वा ताः सर्वा वदन्तीस्त्रिजटावदत् ।
आत्मानं हत दुर्वृत्ताः ! स्वमांसैः कुरुताशनम् ॥ ९९ ॥

रावणायेत्यादि । किमूचुरित्याह हे सीते ! त्वं रावणाय नमः प्रणामं कुर्य्याः तेनैव ध्रुवं ते तुभ्यं स्वस्ति कुशलं स्यात् शक्तार्थवषडित्यादिना नमःस्वस्तियोगे चतुर्थी नमःशब्दोऽयं यदा वाचक एव तदा तद्योगे चतुर्थीति बोध्यं नारायणं नमस्कृत्येत्यादिषु नमःशब्दो द्योतकः कृञेव प्रणामं वक्ति तेन तद्योगे न चतुर्थी किन्तु द्वितीया नमस्कुर्य्या इति सकारवत्पाठे हस्तेपाणावित्यादिना साक्षादादित्वात् पक्षे समासः सेतुकखपफे वेति पक्षे विसर्गस्य सकारः । नमस्कृत्येति पाठे स्थिताया इत्यध्याहार्य्यं विष्णुं नत्वा स्तौतीत्युदाहरणेन एककर्तृकधातुद्वययोगे पूर्वकाले क्त्वाचो ज्ञापितत्वात् अन्यथा यदि रावणं न प्रणमसि तदा प्रातराशाय प्रातर्भोजनायालं समर्था त्वां वयं कुर्य्याम प्रातर्भोक्ष्याम इत्यर्थः अलंशब्दः शक्तार्थस्तेन तद्योगे चतुर्थी ॥ ९८ ॥ भ०

तृणेत्यादि । अथानन्तरं राक्षसीर्वदन्तीः त्रिजटा रावणस्वसा अवदत् उक्तवती तृणाय मत्वा तृणमिव सङ्गण्य मन्यकर्मण्यनादर इति चतुर्थी तत्र कुत्सितग्रहणं कर्त्तव्यमित्युक्तं इह मा भूत् तृणं मत्वेति किमवदत् आत्मानं हत मारयत दुर्वृत्ताः दुराचाराः स्वमांसैः कुरुताशनमिति करणे तृतीया ॥ ९९ ॥ ज० म०

तृणायेत्यादि । इति वदन्तीस्ताः सर्वा राक्षसीस्तृणाय मत्वा तृणवन्मत्वा त्रिजटा नाम राक्षसी वक्ष्यमाणमवदत् गत्यर्थमन्यढे इति अवज्ञाबोधकत्वात् कर्मणि चतुर्थी राक्षसीशब्दो नावज्ञाबोधकः तेन तच्छब्दात् कर्मणि न चतुर्थी

अद्य सीता मया दृष्टा सूर्य्यं चन्द्रमसा सह ।
स्वप्ने स्पृशन्ती मध्येन तनु: श्यामा सुलोचना ॥ १०० ॥
तास्तया तर्जिता: सर्वा मुखैर्भीमा यथागतम् ।
ययु: सुषुप्सवस्तल्पं भीमैर्वचनकर्म्मभि: ॥ १०१ ॥

---

किन्तु द्वितीया। किमवददित्याह हे दुर्वृत्ता: ! दुराचारा: ! यूयं आत्मानं हत मारयत स्वकीयैर्मांसैरशनं भोजनं कुरुत. यत: सीताभोजनोद्यता: करणे तृतीया वनतनाद्यनिसामिति हन्तेर्नलोप: ॥ ९८ ॥ भ०

किमर्थमेवमाहेत्याह अद्येत्यादि। स्वप्ने मया अद्य सीता दृष्टा कर्त्तरि तृतीया सूर्य्यं स्पृशन्ती चन्द्रमसा सह सहयोगे तृतीया सूर्य्याचन्द्रमसाविति रामलक्ष्मणाविति भाव: मध्येन तनु: तन्वी इत्थम्भूतलक्षणे तृतीया वोतोगुणवचनादिति ङीव्- भावपक्षे रूपम् श्यामा वर्णेन सुलोचना शोभननेत्रा ॥ १०० ॥ ज० म०

अद्येत्यादि। अद्य स्वप्ने मया सीता दृष्टा कर्त्तरि तृतीया। कीदृशी चन्द्रमसा सह सूर्य्यं स्पृशन्ती एतादृश: स्वप्न: सास्रा-ज्यलक्षणमिति केचित्। सूर्य्याचन्द्रमसाविव रामलक्ष्मणावि-त्याशय इति जयमङ्गला सहवारणेति सहयोगे तृतीया मध्येन तनू: तन्वी भेदके तृतीया श्यामा "शीते सुखोष्णसर्वाङ्गी ग्रीष्मे या सुखशीतला। तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कथ्यते ॥" श्यामवर्णेत्यन्ये। सुलोचना शोभननेत्रा ॥१००॥ भ०

ता इत्यादि। ता राक्षस्यस्तया त्रिजटया तर्जिता भर्त्सिता: सुषुप्सव: स्वप्तुमिच्छवस्तल्पं शयनीयं ययुर्गता: यथागतं यतो यतस्तस्मादुत्थायायाता: यथासादृश्य इति वीप्सायामव्ययी-भाव: मुखैर्भीमा रौद्रा: मुखानां विकृतत्वात् येनाङ्गविकार

गतासु तासु मैथिल्या: संजानानोऽनिलात्मज: ।
आयातेन दशास्यस्य संस्थितोऽन्तर्हितश्चिरम् ॥ १०२ ॥

---

इति तृतीया भीमैर्वचनकर्मभि: उपलक्षिता: इत्थम्भूते तृतीया ॥ १०१ ॥ ज० म०

ता इत्यादि। ता: सर्वा राक्षस्य: तया त्रिजटया तर्जिता भर्त्सिता सत्य: सुषुप्सव: शयितुमिच्छवस्तल्पं ययु: यथागतं यस्माद्यस्मात् उत्थायागतास्तत्र तत्रैव वीप्सायामव्ययीभाव: मुखैर्भीमा: मुखविकारोपलक्षिता: भेदके तृतीया येनाङ्गे-नाङ्गिनो विकृतिर्लक्ष्यते तस्मादिति पर: भीमैर्वचनकर्मभिरु-पलक्षिता: विशेषणे तृतीया। तल्पं शय्याट्टदारेष्वित्यमर: ॥ १०१ ॥ भ०

गतेत्यादि। तासु राक्षसीषु गतासु अनिलात्मजो हनू-मान् रामसङ्कथां प्रास्तावीदिति वक्ष्यमाणेन सम्बन्ध: मैथिल्या सञ्जानान: इयं सेत्यवगच्छन् संज्ञोऽन्यतरस्यामिति कर्मणि तृतीया सम्प्रतिभ्यामिति तङ् दशास्यस्यायातेनागमनेन हेतुना चिरमन्तर्हितो निलीन: स्थित: हेताविति तृतीया ॥ १०२ ॥ ज० म०

गतास्वित्यादि। तासु राक्षसीषु गतासु सतीषु अनिला-त्मजो हनूमान् रामसङ्कथां प्रास्तावीत् प्रावर्त्तयदिति वक्ष्य-माणश्लोकेनान्वय:। कीदृश: मैथिल्या सञ्जानान: सैवेय-मित्यवगच्छन् संज्ञोऽस्मृताविति कर्मणि तृतीया सम्प्रते-रस्मृताविति म दशास्यास्यायातेनागमनेन हेतुना अन्त-र्हितो विलीन: सन् चिरं संस्थित: हेतौ तृतीया त्यभाव-क्तेति दशास्यात् कर्त्तरि षष्ठी सम्बन्धविवक्षया वा ॥१०२॥ भ०

ऋणाद् बद्ध इवोन्मुक्तो वियोगेन क्रतुद्विषः ।
हेतोर्बोधस्य मैथिल्याः प्रास्तावीद्रामसङ्कथाम् ॥ १०३ ॥
तं दृष्ट्वाचिन्तयत् सीता हेतोः कस्यैष रावणः ।
अवरुह्य तरोरारादेति वानरविग्रहः ॥ १०४ ॥

---

ऋणादित्यादि । ऋणाद्धेतोर्बद्धः इवोन्मुक्तो यथा स्थानान्तरं गतवान् अकर्त्तृकऋण इति पञ्चमी ऋणस्याकर्त्तृहेतुत्वात् ऋणेन बन्धित इवेति नोक्तं अप्रयोजकं कर्त्तृत्वाद्दृणस्य उन्मुक्तः क्रतुद्विषो रावणस्य वियोगेन विश्लेषेण विभाषागुणेऽस्त्रियामिति पक्षे तृतीयोदाहृता न पञ्चमी वियोगस्य गुणपदार्थत्वात् । सङ्कथां प्रास्तावीदित्याह हेतोर्बोधस्य मैथिल्याः एष रामदूत इति मैथिल्या बोधोऽवगमः स्यात् षष्ठी हेतुप्रयोगे इति बोधशब्दस्य षष्ठी प्रास्तावीदिति स्तुसुधूञ्भ्यः परस्मैपदेष्विटि नेटीति हलन्तलक्षणाया वृद्धेः प्रतिषेधः नेगन्तलक्षणायाः ॥ १०३ ॥ ज० म०

ऋणादित्यादि । हनूमान् कीदृशः क्रतुद्विषो रावणस्य वियोगेन विश्लेषेण हेतुना उन्मुक्तः स्वच्छन्दः यथा ऋणाद्धेतोर्बद्धः सन् उन्मुक्तः स्थानान्तरं गतस्तद्वत् हेतौ पञ्चमी तृतीया च दर्शिता । किमर्थं रामसङ्कथां प्रास्तावीदित्याह एष रामदूत इति मैथिल्या यो बोधस्तस्य हेतोस्तदर्थं प्रयोजनमपि हेतुरुच्यते तदुद्देशेन कार्य्योत्पत्तेः तृतीयाऽर्थाद्योर्थैकक्तोरिति षष्ठी सुस्तुधोः सेरिस्ये इतीम् व्रजवदेति वृद्धिः ॥ १०३ ॥ भ०

तमित्यादि । तं हनूमन्तं रामं स्तुवन्तं दृष्ट्वा सीता अचिन्तयत् कस्य हेतोः रावणो वानरविग्रहः सन् ऐति आयाति आङ्पूर्वस्येणो रूपं सर्वनाम्नस्तृतीया चेति षष्ठी किंशब्दस्य सर्वनामत्वात् आरात् अन्तिके तरोरिति अन्यारा-

पूर्वस्मादन्यवद्भाति भावाद्दाशरथिं स्तुवन्।
ऋते क्रौर्य्यात् समायातो मां विश्वासयितुं नु किम्॥१०५॥

---

दित्याराच्छब्दयोगे पञ्चमी अवरुह्यावतीर्य्येति अवरोहणापेक्ष-येत्यपादाने पञ्चमी अपेक्षा व्यायौगपद्याभावादुपपदविभक्तेः कारकविभक्तिर्बलीयसी आराद्योगे न वर्त्तते ॥१०४॥ ज० म०

तमित्यादि। तं रामं स्तुवन्तं हनूमन्तं दृष्ट्वा सीताचिन्तयत्। किं चिन्तितवतीत्याह कस्य हेतोः किमर्थं रावणोऽयं वानरमूर्त्तिः सन् अवरुह्य वृक्षान्तरादर्थात् तरोरारात् तदाश्रितवृक्षस्य समीपे ऐति आगच्छति आङ्पूर्वं इणगतौ कस्य हेतोरिति च्यादयोऽर्थार्थैकत्वे: अस्तुसर्वा इति षष्ठी तरोरित्यावृत्त्या उभयत्र सम्बन्धादेकत्रापादाने पञ्चमी अपरत्र अन्यारभ्येत्यादिना इयमेवोदाहृतं अपादानपञ्चम्याः कारकाधिकारे दर्शितत्वात्तरोरित्यस्यावरुह्येत्यनेन सम्बन्धो न विवक्षितः आरादित्यनेनैव सम्बन्ध इति केचित् उपपदविभक्तेः कारकविभक्तिर्गरीयसीत्यपादान एव पञ्चमीति केचित् ॥१०४॥ भ०

पूर्वेत्यादि। पूर्वस्माद्रावणादन्यवद्भाति च्यायते अन्येन तुल्यं वर्त्तते इति कृत्वा अन्यशब्दयोगे पञ्चमी यतो भावात् स्नेहाद्दाशरथिं स्तुवन् किन्तु क्रौर्य्यादृते क्रौर्य्यं वर्जयित्वा ऋतेशब्दयोगे पञ्चमी मां विश्वासयितुं सम्भावयितुं किमागत इत्यचिन्तयत्॥ १०५ ॥ ज० म०

पूर्वस्मादित्यादि। अयं पूर्वस्माद्रावणादन्य इव भाति प्रकाशते अन्यारभ्येति पञ्चमी। कुत इत्याह भावादभिप्रायाद्धेतोर्दाशरथिं स्तुवन् हेतौ पञ्चमी क्रौर्य्यात् ऋते रामविषये क्रूरतां विना मां विश्वासयितुं किन्नु समायातः नु वितर्के ऋतेयोगे पूर्ववत् पञ्चमी। भावः स्वभावेऽभिप्राये चेष्टासत्ता-

इतरो रावणादेष राघवानुचरो यदि।
सफलानि निमित्तानि प्राक् प्रभातात्ततो मम ॥ १०६ ॥
उत्तराहि वसन् रामः समुद्राद्रक्षसां पुरम्।
अवैल्लवणतोयस्य स्थितां दक्षिणतः कथम् ॥ १०७ ॥

---

त्वजन्मसु। क्रियालीलापदार्थेषु द्व्वजन्तुविभूतिष्विति विश्वः ॥ १०५ ॥ भ०

इतर इत्यादि। यदि रावणादितरः प्रतियोगी राघवानुचरः राघवार्थकारी इतरयोगे पञ्चमी ततो मम सफलानि स्वप्नलक्षणानि दर्शनादीनि निमित्तानि प्राक् प्रभातात् आदित्योदयात् पूर्वस्मिन् काले अन्यस्य हि प्रभातादुत्तरकालं सफलानि उत्तरपदयोगे पञ्चमी ॥ १०५ ॥ ज० म०

इतर इत्यादि। एष यदि रावणादितरोऽन्यः राघवानुचरः रामप्रयोजनकारी भवेत् मम प्राक् प्रभातात् सूर्य्योदयात् पूर्वकाले यानि शुभस्य निमित्तानि स्वप्नदर्शनादीनि तानि मम सफलानि स्युः इतरशब्दोऽन्यार्थः तद्योगे दिक्शब्दयोगे च पञ्चमी दिक्शब्दाद्दिग्देशकालेऽस्तातस्य लुक् च ॥१०६॥भ०

उत्तरेत्यादि। रामदूतोऽयमिति न सम्भाव्यते यतः समुद्रादुत्तरा या दिक् तस्यामुत्तराहि वसन् रामः आहिचदूरे उत्तराच्चेति तत्राहिप्रत्ययान्तेन उत्तराहिशब्देन योगे समुद्रादिति पञ्चमी लवणतोयस्य लवणसमुद्रस्य दक्षिणतो दक्षिणस्यां दिशि स्थितां रक्षसां पुरीं लङ्कां कथमवैत् ज्ञातवान् दक्षिणत इति दक्षिणोत्तराभ्यामतसुच् तदन्तेन योगे षष्ठ्यतसर्थप्रत्ययेनेति षष्ठी ॥ १०७ ॥ ज० म०

उत्तरेत्यादि। अथ रामदूतोऽयं न सम्भाव्यते यतः इतः समुद्रादुत्तरस्यां दिशि वसन् रामो लवणतोयस्य समुद्रस्य

दण्डकान् दक्षिणेनाहं सरितोऽद्रीन् वनानि च ।
अतिक्रम्याम्बुधिञ्चैत्र पुंसामगममाहृता ॥ १०८ ॥
पृथङ्नभस्वतश्चण्डाद् वैनतेयेन वा विना ।
गन्तुमुत्सहते नेह कश्चित् किमुत वानरः ॥ १०९ ॥

---

दक्षिणस्यां दिशि स्थितां रक्षसां पुरं लङ्कां कथमवैत् ज्ञातवान् दक्षिणोत्तरादाहीति सप्तम्या आहि अन्यारभ्येति दिक्शब्द-योगे पञ्चमी तसूक्तेरिति सप्तम्यास्तस् तद्योगे समार्थेनेत्यादिना षष्ठी ॥ १०७ ॥ भ०

दण्डेत्यादि । दण्डकानामदूरे या दक्षिणा दिक् तस्या-मिति एनबन्यतरस्यामिति सप्तम्यन्तादेनप्प्रत्ययः तदन्तेन योगे एनपा द्वितीयेति द्वितीया दक्षिणेन दण्डकानां दक्षि-णस्यां दिशि सरितोऽद्रीन् वनानि च अम्बुधिं चातिक्रम्य पुंसा-मगमगम्यं अहृत्वदनिखिगमश्चेत्यप् अहमाहृता आनीता तत्कथमवैदित्यचिन्तयत् ॥ १०८ ॥ ज० म०

दण्डकानित्यादि । दण्डकाया अदूरे दक्षिणस्यां दिशि स्थितानि सरितोऽद्रीन् वनानि च अम्बुधिञ्चातिक्रम्य पुंसा-मगममविज्ञातं यथा स्यात्तथाहमाहृता पुंसामगम्यं देशं प्रापिता वा न विद्यते गमो ज्ञानं यत्र तत्कथमवैदिति सम्बन्धः वनोऽपीति सप्तम्या एनः तद्योगे धिक्समयेत्यादिना द्वितीया एनोऽपञ्चम्या इति परस्परसात् "कृत्तद्धितसमासाना-मभिधानं नियामकम्" इत्युक्तेरदूरार्थमपि बोध्यं दण्डकाशब्दो-वनेऽपि स्त्रीलिङ्गः नित्यबहुवचनान्तः पुंलिङ्ग इत्यन्ये तन्मते दण्डकानिति पाठः ॥ १०८ ॥ ज० म०

पृथगित्यादि । नभस्वतो वातात् चण्डात् पृथक् वायुं त्यक्त्वा वैनतेयेन वा विना गरुडं वा वर्जयित्वा पृथग्विनेत्या-

इति चिन्तावतीं कृच्छ्रात् समासाद्य कपिद्विपः।
मुक्तां स्तोकेन रक्षोभिः प्रोचेऽहं रामकिङ्करः॥ ११० ॥
विप्रकृष्टं महेन्द्रस्य न दूरं विन्ध्यपर्वतात्।
नानभ्यासे समुद्रस्य तव माल्यवति प्रियः॥ १११ ॥

---

दिना तृतीयापञ्चम्यौ इह लङ्कायां कश्चित् गन्तुं नोत्सहते किमुत वानरः॥ १०९॥ ज० म०

पृथगित्यादि। चञ्चान्नभस्वतो वातात् पृथगन्यः वैनतेयेन गरुड़ेन वान्यः कश्चिदिह गन्तुं न उत्सहते किं पुनर्वानरः इत्येवमचिन्तयदिति सम्बन्धः पृथक्शब्दोऽन्यार्थस्तेन तद्योगे विनायोगे च अन्यारभ्येत्यादिना पञ्चमी। नभस्वन्तं वैनतेयञ्च वर्जयित्वेत्यर्थ इति केचित्। किमुतेत्यव्ययं पुनरर्थे॥ १०९॥ म०

इतीत्यादि। एवमुक्तेन प्रकारेण चिन्तावतीं कपिद्विपो हनूमान् कृच्छ्रात् समासाद्य कथमप्युपगम्य अहं रामकिङ्करः रामप्रेषणकर इति प्रोचे मुक्तां स्तोकेनाल्पेन रक्षोभिः कर्तृभिः करणेन च स्तोकाल्पेत्यादिना तृतीयापञ्चम्यौ कृच्छ्रस्तोकयोरसत्ववचनयोः करणत्वात्॥ ११०॥ ज० म०

इतीत्यादि। कपिद्विपः कपिश्रेष्ठो हनूमान् तां सीतां कृच्छ्रात् चिरकालान्वेषणेन समासाद्य प्राप्य अहं रामस्य किङ्करः परिचारक इति प्रोचे वदति स्म। कीदृशीं एवमुक्तप्रकारेण चिन्तायुक्तां रक्षोभिः स्तोकेनाल्पेन मुक्तां त्यक्तां करणे कतिपयस्तोकाल्पकृच्छ्रादसत्त्व इति सूत्रेण विभाषया पञ्चमीमाह परः स्वमते कृच्छ्रादिति हेतौ पञ्चमी स्तोकेनेति करणे तृतीया॥ ११०॥ म०

यदि त्वं रामकिङ्करः क्वासावित्याह विप्रेत्यादि। माल्य-

असंप्राप्ते दशग्रीवे प्रविष्टोऽहमिदं वनम् ।
तस्मिन् प्रतिगते द्रष्टुं त्वामुपाक्रंस्यचेतितः ॥ ११२ ॥

वति पर्वते तव प्रियो रामः महेन्द्रस्य पर्वतस्य विप्रकृष्टं दूरं विन्ध्यपर्वताच्च न दूरं दूरान्तिकार्थैः षष्ठ्यन्यतरस्यामिति षष्ठीपञ्चम्यौ महेन्द्रपर्वतविन्ध्ययोर्दूरविप्रकृष्टयोस्तु दूरान्तिकार्थेभ्यो द्वितीया चेति द्वितीया नानभ्यासे न दूरे समुद्रस्य दूरान्तिकार्थैरिति षष्ठी माल्यवति सप्तम्यधिकरणे चेति सप्तमी चकारात् दूरान्तिकार्थेभ्यश्च यस्य च भावेनेत्यनेनानभ्यास इति सप्तमी ॥ १११ ॥ ज० म०

विप्रेत्यादि। यदि त्वं रामकिङ्करस्तदा क्वासावित्यत इदमुच्यते तव प्रियो माल्यवति पर्वते वर्त्तते महेन्द्रस्य पर्वतविशेषस्य न विप्रकृष्टं न दूरं विन्ध्यनाम्नः पर्वतात् न दूरं समुद्रस्य नानभ्यासे न दूरे वारादर्थैरिति विन्ध्यपर्वतशब्दात् पक्षे पञ्चमी तदप्रवृत्तिपक्षे सम्बन्धे षष्ठ्येव आरादर्थैरिति दूरान्तिकार्थैः दूरान्तिकार्थादसत्त्वेऽमृटाङसिङस्चेति परः स्मरते विप्रकृष्टादयो देशार्थत्वे विवक्षिताः स्थितिक्रियात्वर्थाल्लभ्यत एव तेनास्तीत्यध्याहारात् देशाध्वकालभावं वाढेरिति पाक्षिककर्मत्वं कर्मत्वाभावपक्षे सप्तमी ॥ १११ ॥ भ०

असमित्यादि। दशवदने असंप्राप्ते अप्रविष्टे अहमचेतितः सन् इदं वनमशोकवनिकाख्यं प्रविष्ट इति तस्मिन् प्रतिगते त्वां द्रष्टुमुपाक्रंसि समुत्सहे स्म यस्य च भावेनेति सप्तमी कपेः प्रवेशोपक्रमयोः रावणसंप्राप्तिप्रतिगमनक्रियाभ्यां लक्ष्यमाणत्वात् उपाक्रंसीति उपपराभ्यामित्यनेन वृत्यादिषु सर्ग उत्साहे क्रमेस्तङ् उत्तमपुरुषैकवचनम् इट् स्नुक्रमोरनात्मनेपदनिमित्त इति सिच् इट् न भवति ॥ ११२ ॥ ज० म०

तस्मिन् वदति रुष्टोऽपि नाकार्षं देवि! विक्रमम्।
अविनाशाय कार्य्यस्य विचिन्वानः परापरम्॥ ११३॥
वानरेषु कपिः स्वामी नरेष्वधिपतेः सखा।

---

असमित्यादि। रावणे असंप्राप्ते अनायाते सति अहमचेतितोऽज्ञातः सन्निदं वनं प्रविष्टः प्रवेशस्य गतिविशेषत्वात् गत्यर्थाढेति कर्त्तरि क्तः तस्मिन् प्रतिगते सति त्वां द्रष्टुं साक्षात्कर्त्तुम् अहम् उपाक्रंसि उद्यतोऽस्मि प्रोपादारम्भ इति मं व्यां सिः उपाक्रंसि उत्साहं कृतवानस्मीति वार्थः वृत्त्युत्साहतायन इति मं कालभावाधारमिति उभयत्र भावे सप्तमी॥ ११२॥ भ०

यद्यादावेव प्रविष्टोऽसि तर्हि किमिति स्वकर्म न दर्शितवानसीत्याह तस्मिन्नित्यादि। हे देवि! तस्मिन् वदति रुष्टोऽपि विक्रमं नाकार्षं तं तथा वदन्तमनादृत्य विक्रमं नाकार्षमित्यर्थः षष्ठी चानादर इति चकारात्सप्तमी किमर्थं कार्य्यस्य सन्देशकथनादेरविनाशाय विचिन्वानः परापरं पौर्वापर्य्यं निरूपयन् कर्त्तभिप्राये तङ्॥ ११३॥ ज० म०

तस्मिन्नित्यादि। हे देवि! तस्मिन् रावणे वदति वदन्तं तम् अनादृत्य रुष्टोऽप्यहं विक्रमं नाकार्षं न कृतवान् स्वामीश्वराधिपतीत्यादिना अनादरे सप्तमी तस्मिन् वदति सतीति भावे सप्तमीति विद्यासागरः। कुत इत्याह यतोऽहं कार्य्यस्य सन्देशकथनस्य अविनाशाय अविघाताय परापरं विचिन्वानः परं यद्भविष्यति विरोधादि अपरञ्च यद्भूतं सन्देशकथनार्थमागमनादि तत्सर्वं विचारयन् उत्तरे सति कथं न पूर्वस्य बाध इति चिन्तयन्॥ ११३॥ भ०

कथं वानरस्त्वं तस्य किङ्कर इत्याह वानरेत्यादि। वान-

जातो रामस्य सुग्रीवस्ततो दूतोऽहमागतः ॥ ११४ ॥
ईश्वरस्य निशाटानां विलोक्य निखिलां पुरीम् ।
कुशलोऽन्वेषणस्याहमायुक्तो दूतकर्मणि ॥ ११५ ॥
दर्शनीयतमाः पश्यन् स्त्रीषु दिव्यास्वपि स्त्रियः ।
प्राप्तो व्यालतमान् व्यस्यन् भुजङ्गेभ्योऽपि राक्षसान् ॥११६॥

---

रेषु स्वामी यः कपिः सुग्रीवः स नरेष्वधिपतिः रामस्य सखा जातः स्वामीश्वरेत्यादिना षष्ठीसप्तम्योर्विधानात् सप्तम्युदाहृता ततोऽहं दूत आगतः ॥ ११४ ॥ ज० म०

रामस्यानुचरो वानरः कथमित्याह वानरेष्वित्यादि । वानराणां कपिः सुग्रीवो नराणामधिपतिः रामस्य सखा जातः ततोऽहं दूत आगतः स्वामीश्वराधिपतीति सप्तमी ॥११४॥ भ०

आगत्य च लङ्कां प्रविश्य इहायात इत्याह ईश्वरस्येत्यादि । निशाटानां राक्षसानामीश्वरस्य दशाननस्य अत्र षष्ठ्युदाहृता पुरीं निखिलां निःशेषां विलोक्य किं तत्र वर्त्तत इति प्राप्त इति वक्ष्यमाणेन सम्बन्धः कुशलोऽन्वेषणस्याहं सीताया अन्वेषणस्य निपुणः आयुक्तो दूतकर्मणि दूतकर्मणि दूतक्रियायां व्यापृतः आयुक्तकुशलाभ्यामिति षष्ठीसप्तम्यौ ॥ ११५ ॥ ज० म०

ईश्वरस्येत्यादि । निशाटानां राक्षसानां ईश्वरस्य रावणस्य निखिलां समस्तां पुरीं विलोक्य अहं प्राप्त इत्यग्रिमश्लोकेनान्वयः । कीदृशः अन्वेषणस्य कुशलः सीतान्वेषणनिपुणः दूतकर्मणि आयुक्तः तत्परः स्वामीश्वराधिपतीत्यादिना षष्ठीसप्तम्यौ ॥ ११५ ॥ भ०

दर्शेत्यादि । तत्र दिव्यास्वपि स्त्रीषु मध्ये दर्शनीयतमाः स्त्रियः पश्यन् यतश्च निर्द्धारणमिति सप्तमी दर्शनीयतमत्वेन

भवत्यामुत्सुको रामः प्रसितः सङ्गमेन ते ।
मघासु कृतनिर्वापः पितृभ्यो मां व्यसर्जयत् ॥ ११७ ॥

गुणेन पृथक्करणात् भुजङ्गेभ्योऽपि व्यालतमान् हिंस्रान् राक्षसान् व्यस्यन् अपक्षिपन् पञ्चमीविभक्ते इति पञ्चमी भुजङ्गेभ्यो राक्षसानां विभागात् प्राप्तो देव्याः पादमूलमित्यर्थात् ॥ ११६ ॥ ज० म०

दर्शेत्यादि । दिव्यास्वपि स्त्रीषु मध्ये दर्शनीयतमाः स्त्रियः पश्यन् भुजङ्गेभ्योऽपि व्यालतमान् अतिहिंस्रान् राक्षसान् व्यस्यन् अवक्षिपन् अहं प्राप्तो देव्याः स्थानमित्यर्थात् गम्यते । स्त्रीष्वित्यत्र दर्शनीयतमत्वेन गुणेन समुदायादेकदेशस्य निर्द्धारणात् स्वामीश्वराधिपतीत्यादिना निर्द्धारे सप्तमी भुजङ्गेभ्य इत्यत्र पञ्चमीव्यतिरेके इति सूत्रेण पञ्चमीमाह परः व्यतिरेको हीनाधिकभाव इति परः स्वमते निर्द्धारेऽधिकेनेत्यादिना निर्द्धारे पञ्चमी केनचिद्गुणेन समानधर्मिभ्यो यत् पृथक्करणं स निर्द्धारः भुजङ्गराक्षसयोस्तु सधर्मित्वं व्यालत्वेन वासवता अपि क्वचित् पञ्चमीत्यनेन निर्द्धारे पञ्चमीमाहुः ॥ ११६ ॥ भ०

किमवस्थो राम इत्याह, भवेत्यादि । भवत्यां त्वयि उत्सुकः उन्मनाः रामः तव सङ्गमेन प्रसितः प्रसक्तः प्रसितोत्सुकाभ्यां तृतीया चेति चकारात्सप्तमी मघाभिर्युक्तः कालः तत्समीपे चन्द्रमसो वर्त्तमानत्वात् नक्षत्रेण युक्तः काल इत्यण् तस्य लुबविशेष इति लुप् तस्मिन् काले पितृभ्यः कृतनिर्वापः दत्तदानः मां व्यसर्जयत् नक्षत्रे च लुपीति सप्तमी तत्रापि लुपि युक्तवद्व्यक्तिवचन इति स्त्रीलिङ्गबहुवचने भवतः व्यसर्जयदिति विग्रव्दात् प्रातिपदिकेत्यादिना प्रातिपदिकमात्रे प्रथमा ॥ ११७ ॥ ज० म०

अयं मैथिल्यभिज्ञानं काकुत्स्थस्याङ्गुरीयकः ।
भवत्याः स्मरतात्यर्थमर्पितः सादरं मम ॥ ११८ ॥

---

भवत्यामित्यादि । रामो मां व्यसर्जयत् प्रास्थापयत् कीदृशः सन् भवत्यां त्वयि उत्सुकः उन्मनाः तव सङ्गमेन प्रसितः प्रसक्तः प्रसितोत्सुकाभ्यां तृतीयासप्तम्याविति परः स्मृमते विषयविवक्षया सप्तमी करणत्वविवक्षया तृतीया मघासु मघानक्षत्रयुक्तकाले पितृभ्यः कृतनिर्वापः कृतदानः काले सप्तमी मघाशब्दस्य तद्युक्तकालवाचित्वं कालवाचिनो नक्षत्रादित्युक्तेरेव गम्यते लोकोपचारात् कालेऽपि स्त्रीलिङ्गत्वं बहुवचनान्तत्वञ्च परे तु मघानक्षत्रेणेन्दुयुक्तेन युक्तः काल इत्यर्थे टण्तन्लुक् च प्रकृतिवल्लिङ्गवचने इति स्त्रीत्वं बहुवचनत्वञ्चाहुः ॥११७॥ भ०

सन्देहनिवृत्त्यर्थं चाभिज्ञानं दर्शयन्नाह, अयमित्यादि । काकुत्स्थस्यायमङ्गुलीयकोऽभिज्ञानं चिह्नमयमभिज्ञानमिति लिङ्गाधिके प्रातिपदिकमात्रे प्रथमा मैथिलीति सम्बोधनाधिके सम्बोधने चेति सामन्त्रितं सम्बुद्धिश्चात्रैव द्रष्टव्यं काकुत्स्थस्येति षष्ठी शेष इति षष्ठी भवत्या अत्यर्थं स्मरता मम सादरमर्पितम् अधीगर्थेत्यादिना स्मरणार्थे कर्मणः शेषविवक्षायां षष्ठी ॥ ११८॥ ज० म०

सन्देहनिरासार्थमाह अयमित्यादि । हे मैथिलि ! अयं काकुत्स्थस्य रामस्य अङ्गुलीयकः आभरणविशेषोऽभिज्ञानं चिह्नं स्वार्थसम्बुद्ध्यर्थं इति लिङ्गार्थे सम्बोधने च प्रथमा काकुत्स्थस्येति सम्बन्धे षष्ठी अत्यर्थं भवतीं स्मरता रामेण सादरं यथा स्यात्तथा मम समर्पितः भवत्या इति समार्थेनेत्यादिकर्मणि षष्ठी अन्ये तु कर्मणो वा दयादेः स्मृत्यर्थस्य चेत्यादिविशेषसूत्रैः कर्मणि षष्ठीमुक्त्वा कर्मादिविषयेऽप्य-

रामस्य दयमानोऽसावध्येति तव लक्ष्मणः ।
उपास्कृषातां राजेन्द्रावागमस्येह मा त्रसीः ॥ ११९ ॥

---

विवक्षिते कर्मादौ सम्बन्धविवक्षायां षष्ठेत्यनेनान्यत्रापि षष्ठीं स्वीकुर्वन्ति विशेषसूत्रविषयादन्यत्रापि दृष्टत्वात् ममेत्याधारे सम्बन्धविवक्षा अङ्गुलौ भवति तिष्ठतीति ढचेकादिति ईयः तदन्तस्य वाच्यलिङ्गत्वात् अलङ्कारशब्दस्य गम्यमानत्वात् पुंस्त्वमुदाहृतम् अङ्गुलीयकमूर्मिकेत्यमरेण सामान्यत्वात् नपुंसकं प्रयुक्तम् ॥ ११८ ॥ भ०

रामेत्यादि । असौ लक्ष्मणो रामस्य दयमानो रामं रक्षन् शुचं मा कार्षीरिति दयतेः कर्मणि षष्ठी तवाध्येति त्वां स्मरति अधीगर्थे षष्ठी । आश्वासनार्थमाह मा त्रसीः उद्वेगं मा कार्षीः त्रसेरीदित्वान्निष्ठायामिट्प्रतिषेधात् सिच इट् भवति यतो राजेन्द्रौ रामलक्ष्मणौ इहागमस्यागमनस्य भावे अप् उपास्कृषातां प्रतियत्नं कृतवन्तौ आगमनस्य निश्चितत्वात् तस्यैव सुग्रीवसख्येन गुणाधानात् तेन कृतः प्रतियत्न इति कर्मणि षष्ठी प्रतियत्ने लुङ् तङ् सुट् ॥ ११९ ॥ ज० म०

रामेत्यादि । असौ लक्ष्मणो रामस्य दयमानः शोकापनोदनेन रामं प्रतिपालयन् तव अध्येति त्वां स्मरति पूर्ववत् कर्मणि षष्ठी । आश्वासार्थमाह राजेन्द्रौ क्षत्रियश्रेष्ठौ तौ इहागमस्य उपास्कृषातां आगमनमुपस्कृतवन्तौ अतो मा त्रसीः भयं न कुरु सूचनावक्षेपणेत्यादिना प्रतियत्ने मं सम्परेः समुपादित्यादिना सुम् सतो गुणान्तराधानं प्रतियत्नः निश्चितत्वात् सत एव गमनस्य सुग्रीवसख्येन गुणान्तरस्योत्कर्षस्याधानात् पूर्ववत्कर्मणि षष्ठी कृञः प्रतियत्ने कर्मणि षष्ठीति परः त्रसी उद्वेगे टी ॥ ११९ ॥ भ०

रावणस्येह रोक्ष्यन्ति कपयो भीमविक्रमाः ।
धृत्या नाथस्व वैदेहि ! मन्योरुज्जासयात्मनः ॥ १२० ॥
राक्षसानां मयि गते रामः प्रणिहनिष्यति ।
प्राणानामपणिष्टासौ रावणस्वामिहानयन् ॥ १२१ ॥

---

रावेत्यादि । इह लङ्कायां कपयो भीमविक्रमाः असह्यपराक्रमाः रावणस्य रोक्ष्यन्ति सरोगं रावणं करिष्यन्ति भीमविक्रमा इति गुणप्रधानो निर्देशः ततश्च विक्रमे रुजः भावकर्तृकत्वात् रुजार्थानां भाववचनानामज्वर इति षष्ठी अतो हे वैदेहि ! धृत्या नाथस्व आशंसस्व धृतिं लभस्वेत्यर्थः आशिषि नाथ इति कर्मणि षष्ठी आशिषि नाथ इत्युपसंख्यानात्तङ् मन्योरुज्जासयात्मनः मन्युं नाशय जसु हिंसायां ताडने च चौरादिकस्य हिंसार्थत्वात्तेन जासिनिप्रहणेति कर्मणि षष्ठी ॥ १२० ॥ ज० म०

रावणस्येत्यादि । इह लङ्कायां कपयो भीमपराक्रमाः सन्तो रावणस्य रोक्ष्यन्ति रावणं पीडयिष्यन्ति रुजो भङ्गे ती कर्मणि षष्ठी । अन्ये तु रुजार्थस्य भावकर्तृत्वे इति सूत्रेण कर्मणि षष्ठ्या उदाहरणार्थं कपयस्तत्सम्बन्धिनो भीमा विक्रमाश्च इह रावणस्य रोक्ष्यन्तीत्यन्वयं कुर्वन्ति हे वैदेहि ! धृत्या नाथस्व धृतिर्भूयादित्यात्मन्याशिषं कुरु धृतिं लभस्वेति भावः कर्मणि षष्ठी आशिषि नाथ इति षष्ठ्यर्थं परसूत्रं ग्रपथाशीरित्यादिना मं आत्मनो मन्योरुज्जासय आत्मनः शोकं नाशय जसकबधे कर्मणि षष्ठी जासिनिप्रहननाटिक्राथिपिषां हिंसायामिति षष्ठ्यर्थं परसूत्रम् ॥ १२० ॥ म०

राक्षेत्यादि । मयि गते रामो राक्षसानां प्रणिहनिष्यति राक्षसान् मारयिष्यति पूर्ववत् कर्मणि षष्ठी निप्रहण इति

अदेवीद् बन्धुभोगानां प्रादेवीदात्मसम्पदम् ।
शतकृत्वस्तवैकस्याः स्मरत्यह्नो रघूत्तमः ॥ १२२ ॥

---

सङ्घातविगृहीतविपर्यस्तग्रहणमित्युक्तं नेर्गदेत्यादिना णत्वं किञ्च प्राणानामपणिष्टायमिति अयं रावणस्त्वामिहानयन् प्राणानपणिष्ट विक्रीतवान् व्यवहृञ्पणोः समर्थयोरिति षष्ठी प्राणानामपणायिष्टेति पाठान्तरं तदयुक्तं स्तुत्यर्थस्य पणेस्तत्र ग्रहणात् गुपूधूपेत्यादिना आयप्रत्ययो न भवति ॥१२२॥ज०म०

राक्षसानामित्यादि। मयि गते सति रामो राक्षसानां प्रणिहनिष्यति राक्षसान् मारयिष्यति प्राग्वन्नो ण इति नेर्णत्वं कर्मणि षष्ठी। असौ रावणस्त्वामिह लङ्कायामानयन् प्राणानामपणिष्ट प्राणान् विक्रीतवान् व्यवहृञ्पणोर्व्यवहारे इति षष्ठ्यर्थं परसूत्रं तत्र व्यवहारे इति क्रयविक्रयलक्षणे द्यूतक्रियायाञ्चेति व्याख्यातं पणङ्व्यवहृतौ स्तुतौ वारे इत्यनेन कमऋत इत्यादिसूत्रविहिता णिङीयङाया विभाषिताः तेन पक्षे नायप्रत्ययः अपणिष्टेति चिन्त्यमिति विद्याविनोदस्य प्रलपितं व्यवस्थितवाधिकारादायादयोऽसार्वधातुके वा भवन्तीति पक्षे नायप्रत्यय इति विद्यासागरेणोक्तत्वात् स्वमतं युक्तमेव ॥ १२१ ॥ भ०

अदेवीदित्यादि। न केवलं प्राणानपणिष्ट बन्धुभोगानामदेवीत् बन्धुभोगान् विक्रीतवान् दिवस्तदर्थस्येति षष्ठी दिवो व्यवहारत्वात् प्रादेवीदात्मसम्पदं विक्रीतवान् विभाषोपसर्गे इति पक्षे द्वितीया प्रशब्देन युक्तत्वात् रामानुरागं पुनर्दर्शयन्नाह रघूत्तमः स्मरति अधीगर्थेति षष्ठी अह्न इति एकस्मिन्नप्यह्नि कृत्वोऽर्थप्रयोगकालेऽधिकरणे इति षष्ठी॥ १२२ ॥ ज० म०

तवोपशायिका यावद्राक्षस्यश्चेतयन्ति न।
प्रतिसंदिश्यतां तावद्भर्त्तुः शार्ङ्गस्य मैथिलि!॥ १२३॥

---

अदेवीदित्यादि। न केवलं प्राणानामपरिशिष्टासौ रावणो बन्धून् भोगांश्च अदेवीत् क्रीतवान् त्यक्तवानिति यावत् कर्मणि षष्ठी आत्मसम्पदमपि प्रादेवीत् विक्रीतवान् कर्मणि द्वितीया परे तु व्यवहारे सोपसर्गस्य दिवः कर्मणि वा षष्ठी नित्यन्त्व-नुपसर्गस्येत्याहुः। अथ संक्षिप्य पुनरपि रामानुरागं दर्शयति अह्नः शतकृत्वो दिवसे शतं वारान् राम एकस्यास्तव एकां त्वां स्मरति चकृत्वस् वारे इति शतशब्दात् चकृत्वस् तद्योगे स्वामीश्वराधिपतीत्यादौ सुजर्थैरिति अहन्शब्दात् षष्ठी तवेति कर्मणि षष्ठी॥ १२२॥ भ०

एवं तामाश्वास्य सन्देशं दापयितुमाह तवेत्यादि। हे मैथिलि! तवोपशायिका परिपाट्या शयनं याभिः राक्षसीभिः सहेत्यर्थात् पर्य्यायार्हणोत्पत्तिषु ण्वुच यावन्न चेतयन्ति न प्रतिबुध्यन्ते तावत् प्रतिसन्दिश्यतां प्रतिसन्देशो दीयतां शार्ङ्गस्य भर्त्तुः शार्ङ्गं धनुर्धारयतो रामस्य तव शार्ङ्गस्येति यथाक्रमं कर्तृकर्मणोः कृतीति षष्ठी॥ १२३॥ ज० भ०

तवेत्यादि। हे मैथिलि! तवोपशायिका पर्य्यायशयनं याभिः राक्षसीभिः सहेत्यर्थात् पर्य्यायप्राप्त्या ताश्च राक्षस्यो यावन्न चेतयन्ति न प्रतिबुध्यन्ते तावत् शार्ङ्गस्य भर्त्तुर्धनुर्धार-यतो रामस्य प्रतिसन्दिश्यतां प्रतिसन्देशो दीयतां इत्येवं हनूमान् प्रोचे इति पूर्वेण सम्बन्धः उपपूर्वशीङ् पर्य्यायशयन-वाचकः अस्त्यणकेति ज्ञापकात् भावे णकः स्त्रीत्वञ्च ढघेकृती-त्यादिना तवेत्यत्र कर्त्तरि षष्ठी शार्ङ्गस्येत्यत्र कर्मणि तव उप

पुरः प्रवेशमाश्चर्य्यं बुद्धा शाखामृगेण सा।
चूडामणिमभिज्ञानं ददौ रामस्य सम्मतम्॥ १२४॥

---

समीपे शायिकाः शयानाः राक्षस्यः कर्त्तरि षक इति केचित् चिक्कसंज्ञाने सुभ्र्यो ञिः॥ १२३॥ भ०

पुर इत्यादि। शाखामृगेण मर्कटेन पुरो लङ्कायाः दुष्प्रवेशायाः प्रवेशः तमाश्चर्य्यमद्भुतं बुद्धा सा सीता चूडामणिमभिज्ञानं ददौ सर्वसुक्तमस्य सम्भाव्यते इति उभयप्राप्तौ कर्मणीति षष्ठी प्रवेश इत्युभयप्राप्तौ क्तिति लङ्काहनूमतोः कर्मकर्तृत्वात् रामस्य सम्मतं प्रियं मतिबुद्धीत्यादिना वर्त्तमाने निष्ठा नलोकेति षष्ठीप्रतिषेधे प्राप्ते क्तस्य च वर्त्तमान इति षष्ठी॥ १२४॥ ज० म०

पुर इत्यादि। शाखामृगेण वानरेण पुरो लङ्कायाः प्रवेशमाश्चर्य्यं बुद्धा मत्वा सा सीता चूडामणिमभिज्ञानं शिरोरत्नं स्वकीयचिह्नं ददौ रामस्य सम्मतं रामेण मन्यमानं ज्ञायमानं सदा स्मरणात् ज्ञार्चेच्छार्थेति वर्त्तमाने क्तः तद्योगे कासुकसङ्घार्थक्ते इति कर्त्तरि षष्ठी प्रपूर्वविशेर्घञ् तद्योगे ढघेक्ततीति पुर इत्यत्र कर्मणि षष्ठी क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते इति न्यायात् शाखामृगेणेत्यत्र ढघेक्ततीत्यनेन षष्ठीविषयेऽपि साधनहेत्वित्यादिना कर्त्तरि तृतीया इति केचित्। वस्तुतस्तु यत्रैकक्रद्योगे कर्त्तरि कर्मणि च षष्ठ्या विषयः स्यात् तत्र ढघेक्ततीत्यादिना कर्मणि नित्यं षष्ठी ल्यभावक्तेत्यादौ सढ इत्यनेन तु कर्त्तरि विभाषया षष्ठी सटेषष्ठी योग्यकर्मवत् क्तति प्रयुज्यमाने इत्यर्थः। यत्तु कर्तृकर्मप्राप्तौ कर्मण एवैकक्रतीति षष्ठ्यर्थं क्रमदीश्वरस्य सूत्रं तत्तु प्रायिकं अनात् क्रद्धि-

रामस्य शयितं भुक्तं जल्पितं हसितं स्थितम् ।
प्रक्रान्तञ्च मुहुः पृष्ट्वा हनूमन्तं व्यसर्जयत् ॥ १२५ ॥
असौ दधदभिज्ञानं चिकीर्षुः कर्म दारुणम् ।
गामुकोऽप्यन्तिकं भर्त्तुर्मनसाचिन्तयत् क्षणम् ॥ १२६ ॥

---

वेत्यपरे इति तेनैव पश्चादुक्तम् । शब्दानामनुशासनमाचार्य्येणाचार्य्यस्येत्याद्युदाहरन्ति प्राञ्चः ॥ १२४ ॥ भ०

रामेत्यादि । रामस्य अभिज्ञानं दत्त्वा शयितादिकं मुहुः पृष्ट्वा हनूमन्तं व्यसर्जयत् प्रेषितवती तस्य शयितं शयनस्थानं किं भूमौ शेते अन्यत्रेति वा भुक्तं भोजनस्थानं किं गृहे भुङ्क्ते मुनिजनगृहे वेति जल्पितं मन्त्रस्थानं किं रहसि मन्त्रयते प्रकाशे वेति हसितं हसनस्थानं किं शृङ्गारवस्तुनि हसति वीरवस्तुनि वेति स्थितं निवासस्थानं किं गुहायां तिष्ठत्युत तरुतले वेति प्रक्रान्तं प्रचंक्रमणस्थानं अनुनासिकेत्यादिना दीर्घः किं अङ्गेन क्रमते अन्यत्र वेति एषां ध्रौव्यगतिप्रत्यवसानार्थत्वात् क्तोऽधिकरणे वेति क्तः तस्य प्रयोगे अधिकरणवाचिनश्चेति षष्ठी ॥ १२५ ॥ ज० म०

रामस्येत्यादि । अभिज्ञानं दत्त्वा रामस्य शयितादि मुहुर्वारं वारं पृष्ट्वा सीता हनूमन्तं व्यसर्जयत् प्रेषितवती शयितं शयनस्थानं भूमिः शय्या वेति भुक्तं भोजनस्थानं स्वगृहं मुनिगृहं वेति जल्पितं मन्त्रणास्थानं रहः प्रकाशितं वा हसितं हास्यस्थानं शृङ्गारवस्तु वीरवस्तु वा स्थितं वासस्थानं तरुतलं गृहादिकं वा प्रकान्तं चंक्रमणस्थानं अङ्गणं वनं वा सर्वत्र ध्रौव्यगत्यदनार्थादिति आधारे क्तः तद्योगे कामुकसङ्कार्थक्तो इति कर्त्तरि षष्ठी सम्बन्धविवक्षया वा ॥ १२५ ॥ भ०

असावित्यादि । असौ हनूमान् दधत् धारयन्नभिज्ञानं

कृत्वा कर्म यथादिष्टं पूर्वकार्य्याविरोधि यः ।
करोत्यभ्यधिकं कृत्यं तमाहुर्दूतमुत्तमम् ॥ १२७ ॥
वैदेहीं दृष्टवान् कर्म कृत्वान्यैरपि दुष्करम् ।

---

चिह्नं कर्तृकर्मणोः कृतीति षष्ठ्यां प्राप्तायां न लोकेति लप्रयोगे प्रतिषेधः ल इति शानच्नादयो गृह्यन्ते दारुणमशोकवनिकाभङ्गादिकं कर्म चिकीर्षुः कर्त्तुमिच्छुः उकारप्रश्लेषात् षष्ठ्याः प्रतिषेधः भर्त्तुः स्वामिनः अन्तिकं समीपं गामुकोऽपि गमनशीलोऽपि उकप्रयोगे प्रतिषेधः मनसा क्षणं चिन्तितवान् वक्ष्यमाणं कर्म ॥ १२६ ॥ ज० म०

. असावित्यादि । असौ हनूमान् अभिज्ञानं चिह्नं दधत् धारयन् दारुणं कर्म चिकीर्षुः कर्त्तुमिच्छुः भर्त्तुः रामस्य अन्तिकं समीपं गामुको गमनशीलोऽपि क्षणं मनसाचिन्तयत् वक्ष्यमाणमिति योज्यं दधेद्वतीति सूत्रे व्यादिवर्जनात् न कर्मणि षष्ठी ॥ १२६ ॥ भ०

कृत्वेत्यादि । यो दूतो यथोद्दिष्टं कर्म कार्य्यं कृत्वा अत्र कृत्वेत्यव्ययप्रयोगे प्रतिषेधः तत उत्तरकालं पूर्वकर्माविरोधि पूर्वकृतस्य कार्य्यस्य यदविरोधि तदधिकं करोति तमुत्तमं दूतमाहुर्विदुर्नीतिविद इति शेषः मया च यथोद्दिष्टं सीतान्वेषणं कृतमिति भावः ॥ १२७ ॥ ज० म०

कृत्वेत्यादि । यो दूतो यथादिष्टमाज्ञानतिक्रमेण कार्य्यं कृत्वा पूर्वकार्य्याविरोधि अधिकं कार्य्यान्तरं करोति तमुत्तमं दूतमाहुर्नीतिविद इति शेषः तस्मात् सीतान्वेषणमादिष्टं कर्म कृत्वा अधिकमपि करिष्यामीत्यग्रिमश्लोके वक्ष्यति कृत्वेति अव्यवर्जनात् न तद्योगे षष्ठी ॥ १२७ ॥ भ०

तदेव च दर्शयन्नाह वैदेहीमित्यादि । अहमद्य तावद्वै-

यशो यास्याम्युपादाता वार्त्तामाख्यायकः प्रभोः ॥ १२८ ॥
राक्षसेन्द्रस्य संरक्ष्यं मया लव्यमिदं वनम् ।
इति संचिन्त्य सदृशं नन्दनस्याभनक् कपिः ॥ १२९ ॥

---

देहीं दृष्टवान् निष्ठाप्रयोगे प्रतिषेधः अन्यदपि कार्य्यमतिदुष्करं कृत्वा खलप्रयोगे प्रतिषेधः ततो यश उपादाता आत्मसात्कर्त्ता इदमतिदुष्करं तेन कृतमिति तृन्नन्तस्य प्रयोगे प्रतिषेधः वार्त्तामाख्यायकः प्रभोर्वार्त्तामाख्याता स्यातिभविष्यदधिकारात्तुमखुलौ क्रियायामिति ण्वुल् अकेनोर्भविष्यदाधमर्ण्ययोरिति प्रतिषेधः ॥ १२८ ॥ ज० म०

वैदेहीमित्यादि । वैदेहीं दृष्टवानहं अन्यैरतिदुष्करं कर्म वक्ष्यमाणं वनभङ्गादि कृत्वा यश उपादाता उपादानशीलः सन् प्रभोः समीपे वार्त्तामाख्यायकः आख्यातुं यास्यामि तावतुखलर्थशीलार्थतृणां योगे षष्ठीनिषेधो दर्शितः आख्यायक इति अस्य्यणकेत्युक्तेस्तृन्ण्वकौ घे इति विधानादन्यत्रापि ण्वको भवतीति ज्ञापितं तेनात्र तुमर्थे ण्वको बोध्यः किंवा तृन् ण्वकौघे इत्यनेनैव ण्वकः तत्र कालस्याविशेषात् सर्वस्मिन् काले तौ भवत इति प्राप्तं अत्र तु भविष्यत्कालो विवक्षितः आख्यायकः आख्यास्यन्नित्यर्थः क्वचिदपवादविषयेऽप्युत्सर्गोऽपि प्रवर्त्तते इति न्यायात् षष्ठीविषयेऽपि द्वितीया । परे तु क्रियार्थाद्भविष्यतीति सूत्रेण ण्वकं ण्वकस्तुमर्थे प्राय इति सूत्रेण षष्ठीनिषेधश्चाहुः प्रायोग्रहणात् क्वचित् षष्ठीमपि ॥१२८॥भ०

राक्षेत्यादि । इदं वनमशोकवनिकाख्यं राक्षसेन्द्रस्य संरक्ष्यं रक्षार्हं अर्हे कृत्यः ऋहलोर्ण्यत् तन्मया लव्यं लवनीयं कृत्यानां कर्त्तरि वेति षष्ठीतृतीये कर्त्तरि भवतः इत्येवं सञ्चिन्त्य कपिर्नन्दनस्य वनस्य सदृशं तुल्यं तुल्यार्थैरिति पक्षे षष्ठी अभ-

राघवाभ्यां शिवं दूतस्तयोरहमिति ब्रुवन् ।
हितो भनज्मि रामस्य कः किं ब्रूतेऽत्र राक्षसः ॥ १३० ॥

---

नक्, भग्नवान् भञ्जेर्लङि श्नान्नलोप इति नलोपे हल्ङ्यादिलोपे जश्त्वे चर्त्वे च रूपम् ॥ १२९ ॥ ज० म०

राक्षेत्यादि। इदं वनं राक्षसेन्द्रस्य संरक्ष्यं सम्यक् रक्षार्हं मया लव्यं छेदनीयं इति सञ्चिन्त्य नन्दनस्य इन्द्रवनस्य सदृशं तद्वनं कपिर्हनूमान् अभनक् भग्नवान् भन्जेर्ध्यां रुधादित्वात् श्नम् लव्यभावक्तेति ल्ययोगे कर्त्तरि विभाषया षष्ठी समार्थेनेति समार्थेन षष्ठी ॥ १२९ ॥ भ०

राघेत्यादि। राघवाभ्यां रामलक्ष्मणाभ्यां शिवं भद्रमस्तु तयोर्हनूमान् दूतो हितो रामस्य भनज्मीदं वनं एवञ्च क्रियमाणे को भवतां मध्ये राक्षसः किं ब्रूते इत्येवं ब्रुवन् बभञ्ज पवनात्मजो रिपुवनमिति वक्ष्यमाणेन सम्बन्धः राघवाभ्यां शिवं हितो रामस्येति चतुर्थी चाशिष्येत्यादिना षष्ठीचतुर्थ्यौ। इति विभक्त्यधिकारः ॥ १३० ॥ ज० म०

राघवाभ्यामित्यादि। हे राक्षसाः ! राघवाभ्यां रामलक्ष्मणाभ्यां शिवं भूयादिति शेषः शक्तार्थवषडित्यादिना हितार्थत्वात् शिवशब्दयोगे चतुर्थी तत्र हि शक्त इत्यनेन शक्तार्थानां अलंप्रभुप्रोथपर्य्याप्तसमर्थादीनां ग्रहणं अर्थशब्दः प्रयोजनवाची तेन प्रयोजनार्थानां ग्रहणं हितमित्यनेन हितार्थानां भद्रशोभनशिवादीनां कल्याणपर्य्यायपठितानां अन्येषाञ्च साध्वादीनां ग्रहणं हितार्थत्वेन स्वस्तिशब्दे गृहीतेऽपि स्वस्तिशब्दग्रहणं समार्थेनेत्यादिना हितार्थत्वेन प्राप्तषष्ठ्या अप्रहत्यर्थं अतएव स्वस्तिवर्जं कुशलार्थैरिति विभाषया चतुर्थ्यर्थं परसूत्रं एवं सुखार्थानां मुत्प्रीत्यादीनां ग्रहणं अतएव सुखाय साधुः

विलुलितपुष्परेणुकपिशं प्रशान्तकलिकापलाशकुसुमं
कुसुमनिपातविचित्रवसुधं सशब्दनिपतद्द्रुमोत्कशकुनम् ।
शकुननिनादनादिककुब्विलोलविपलायमानहरिणं
हरिणविलोचनाधिवसतिं बभञ्ज पवनात्मजो रिपुवनम्॥१३१॥

इति भट्टिकाव्येऽष्टमः सर्गः ।

---

क्षत्रिय इत्युदाहृतं रामस्य हितः सन् इदं वनं भनज्मि समार्थेनेति सम्बन्धे हितयोगे च षष्ठी एवं क्रियमाणे अत्र कर्मणि को राक्षसः किं ब्रूते इति ब्रुवन् पवनात्मजो रिपुवनं बभञ्जेत्यग्रिमश्लोकेनान्वयः ॥ १३० ॥ भ०

विलुलितेत्यादि । कीदृशं बभञ्ज विलुलितानां पुष्पाणां रेणुभिः कपिशं पिङ्गं प्रशान्ता अवसन्नाः कलिकाः पलाशानि पत्राणि कुसुमानि च यत्र कुसुमानां निपातेन विचित्रा वसुधा यत्र सशब्दैर्निपतद्भिर्द्रुमैरुत्का उन्मनसः शकुना यत्र शकुनानां पलायमानानां निनादेन नादिताः सञ्जातनादाः ककुभो दिशो यत्र विलोला व्याकुला विपलायमाना हरिणा यत्र हरिणस्येव लोचने यस्याः सीतायाः तस्या अधिवसतिं निवासम् । इत्यनभिहिताधिकारः ॥ १३१ ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायां अधिकारकाण्डे तृतीयः परिच्छेदः । काव्यस्याशोकवनिकाभङ्गो नामाष्टमः सर्गः ।

विलुलितेत्यादि । पवनात्मजो रिपुवनं बभञ्ज । कीदृशं विलुलितानां विघटितानां पुष्पाणां रेणुभिः कपिशं पिङ्गलं प्रशान्तानि अवसन्नानि कलिकाः पत्राणि पुष्पाणि च यत्र कुसुमानां निपातेन विचित्रा वसुधा यत्र सशब्दैः सशब्दं वा निपतद्भिर्द्रुमैरुत्काः स्थानान्तरं गन्तुमुन्मनसः शकुनाः

# नवमः सर्गः ।

अथ प्रकीर्णकाः ।

द्रुभङ्गध्वनिसंविग्नाः कुवत्पक्षिकुलाकुलाः ।
अकार्षुः चण्डाचर्य्यो रावणस्य निवेदनम् ॥ १ ॥

---

पक्षिणो यत्र शकुनानां पलायमानानां निनादेन नादिताः सञ्जातनादाः शब्दायमानीकृता वा ककुभो दिशो यत्र विलोला व्याकुलाः सन्तो विपलायमाना हरिणा यत्र हरिणस्येव विलोचने यस्याः सीतायास्तदधिवसतिं तन्निवासस्थानम् ॥ १३१ ॥ भ०

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मज-
श्रीभरतसेनकृतायां मुग्धबोधिन्यां भट्टिटीकाया-
मधिकारकाण्डेऽष्टमः सर्गः ।

---

अत्रान्तरे प्रकीर्णकश्लोकानाह द्रुभङ्गेत्यादि । चण्डाचर्य्यः निशाचर्य्यः चरेष्टः रावणस्य निवेदनमकार्षुः कृतवत्यः वक्ष्यमाणप्रकारेण द्रुभङ्गध्वनिसंविग्नाः शाखाभङ्गशब्देन सन्त्रस्ताः ओविजीभयचलनयोः ओदितश्चेति निष्ठानत्वं नुवत्पक्षिकुलाः कूजद्भिः पक्षिकुलैः व्यस्तमानसाः कुशब्दे तौदादिकस्तस्य उवङादेशः ॥ १ ॥ ज० म०

द्रुभङ्गेत्यादि । सीतासन्निधिस्थाः चण्डाचर्य्यो राक्षसो रावणस्य निवेदनं वक्ष्यमाणं अकार्षुः कृतवत्यः कृजष्टी अनुस्विद्वेरित्युस् । कीदृश्यः द्रूणां वृक्षाणां भङ्गशब्दैः संत्रस्ताः विजङ्घीशोभीकम्पे ओदित्त्वात् क्तस्य नः कुवद्भिः शब्दायमानैः पक्षिणां कुलैः समूहैराकुला व्यस्तचित्ताः कुङशब्दे कुलचेत्या-

यदताप्सीच्छनैर्भानुर्यत्रावासीन्मितं मरुत् ।
यदाप्यानं हिमोस्रेण भनक्त्युपवनं कपिः ॥ २ ॥
ततोऽशीतिसहस्राणि किङ्कराणां समादिशत् ।
इन्द्रजित्सूर्विनाशाय मारुतेः क्रोधमूर्च्छितः ॥ ३ ॥

---

दादिकात् शब्दः कुशब्दे तौवादिक इति जयमङ्गलायां प्रमादस्तस्यात्मनेपदित्वात् शपो गुणित्वाच्च । कूजत्यचिकुला इति क्वचित् पाठः ॥ १ ॥

यदित्यादि । यद्वनं भानुः शनैर्मन्दमताप्सीत् तपति स्म हलन्तलक्षणा वृद्धिः मरुत् मितं स्तोकमवासीत् वाति स्म हिमोस्रेण शिशिररश्मिना आप्यानं वृद्धिं नीतं प्यायतेर्लोपो-र्व्योर्वलीति यलोपः ओदित्त्वान्नत्वं तदुपवनं कपिर्भनक्ति चूर्ण-यतीति निवेदनमकार्षुः ॥ २ ॥ ज० म०

निवेदनमाह यदित्यादि । यदुपवनं भानुः शनैर्मन्दं अताप्सीत् तपति स्म व्रजवदेति व्रिः अनिम्त्वात् यत्रोपवने वायुर्मितमल्पं अवासीत् वाति स्म यमरमेति इम्सनौ यदुपवनं हिमोस्रेण चन्द्रेण आप्यानं वृद्धं ओप्यायीङ् वृद्धौ कर्त्तरि क्तः र्व्योर्लोप इति यलोपः । किरणोस्रमयूखांशुगभस्तिघृणिधृष्णाय इत्यमरः । तदुपवनं कपिर्भनक्ति इति निवेदनमकार्षुरिति पूर्वेण सम्बन्धः ॥ २ ॥ भ०

तत इत्यादि । निवेदनानन्तरमिन्द्रजित्सूः रावणः इन्द्र-जितं सूते इति सत्सूद्विषेत्यादिनानुपसर्गे क्विप् मारुते-र्हनूमतो विनाशाय किङ्कराणां अशीतिसहस्राणि समा-दिशत् समादिष्टवान् किं कुर्वन्ति दिवाविभेत्यादिना टच् क्रोधमूर्च्छितः क्रोधोद्धतः मूर्च्छेः समुच्छ्राये वर्त्तमान-त्वात् ॥ ३ ॥ ज० म०

शक्त्यृष्टिपरिघप्रासगदामुद्गरपाणयः ।
व्यश्नुवाना दिशः प्रापुर्वनं दृष्टिविषोपमाः ॥ ४ ॥
दध्वान मेघवद्भीममादाय परिघं कपिः ।
नेदुर्दीप्तायुधास्तेऽपि तडित्वन्त इवाम्बुदाः ॥ ५ ॥

---

तत इत्यादि । ततोऽनन्तरमिन्द्रजित्सूः रावणः क्रोधेन मूर्च्छितः सञ्जातमूर्च्छः सन् मारुतेर्हनूमतो विनाशाय किङ्कराणाम् अशीतिसहस्राणि समादिशत् आज्ञापयत् । इन्द्रजितं सूते इति क्विप् ॥ ३ ॥ भ०

शक्तीत्यादि । ते किङ्करा वनं प्रापुः प्राप्तवन्तः शक्त्यादयः प्रहरणविशेषाः पाणौ येषामिति प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः व्यश्नुवानाः दिशो व्याप्नुवन्तः अशू व्याप्तौ स्वादिकः दृष्टिविषोपमा भुजङ्गवत् दृष्ट्यैव विनाशयन्त इत्यर्थः ॥ ४ ॥ ज० म०

शक्तीत्यादि । शक्त्यादयः पाणौ येषां ते किङ्करा वनं प्रापुः दिशो व्यश्नुवाना व्याप्नुवन्तः अशूङ्ल व्याप्तिसंहत्योः दृष्टिविषैः सर्पविशेषैरुपमा येषां ते दृष्टिर्दर्शनं विषोपमा विषमिव येषामिति वा ॥ ४ ॥ भ०

दध्वेत्यादि । कपिर्भीमं परिघं भयानकमर्गलमादाय मेघवद्दध्वान ध्वनति स्म तेऽपि किङ्कराः तडित्वन्त इवाम्बुदाः नेदुः नदन्ति स्म किङ्कराणां कृष्णत्वात् मेघैः सादृश्यम् आयुधानाञ्च तडितेति ॥ ५ ॥ ज० म०

दध्वानेत्यादि । कपिर्हनूमान् भीमं भयानकं परिघं लौहवन्मुद्गरमादाय गृहीत्वा मेघ इव दध्वान ध्वनशब्दे तेऽपि दीप्तप्रहरणा राक्षसास्तडिद्युक्ता मेघा इव नेदुः शब्दितवन्तः ॥ ५ ॥ भ०

कपिनाम्भोधिधीरेण समगंसत राक्षसाः ।
वर्षास्वुद्धततोयौघाः समुद्रेणेव सिन्धवः ॥ ६ ॥
लाङ्गूलमुद्धतं धुन्वन्नुद्वहन् परिघं गुरुम् ।
तस्थौ तोरणमारुह्य पूर्वं न प्रजहार सः ॥ ७ ॥

एते प्रकीर्णकाः ।

सिचि वृद्ध्यधिकारमाह ।

अक्षारिषुः शराम्भांसि अस्मिन् रक्षःपयोधराः ।

---

कपीत्यादि । कपिना अम्भोधिधीरेण क्षोभ्यत्वात् राक्षसाः समगंसत सङ्गताः समोगमीत्यादिना तङ् लुङ् यथा सिन्धवो नद्यः उद्धततोयौघाः उद्भिन्नजलपूराः समुद्रेण सङ्गच्छन्ते ॥ ६ ॥ ज० म०

कपिनेत्यादि । ते राक्षसाः समुद्रवद्धीरेण कपिना समगंसत मिलिता बभूवुः समोगमृच्छेति मं मान्तोऽदनते इत्यतादेशः यथा वर्षास्वुद्धतजलपूराः सिन्धवो नद्यः समुद्रेण सङ्गता भवन्ति ॥ ६ ॥ भ०

लाङ्गूलेत्यादि । स हनूमान् लाङ्गूलं पुच्छमुद्धतं उत्क्षिप्तं धुन्वन् धूञ् कम्पन इति स्वादौ पठितः परिघं गुरुम् उद्वहन् तोरणमारुह्य तस्थौ न तु पूर्वं प्रजहार प्रहृतवान् शूराणां पश्चात् प्रहारित्वात् ॥ ७ ॥ ज० म०

एते प्रकीर्णकाः ।

लाङ्गूलेत्यादि । स हनूमान् तोरणं बहिर्द्वारमारुह्य उद्धतमुत्क्षिप्तं लाङ्गूलं धुन्वन् कम्पयन् गुरुं परिघम् उद्वहन् धारयन् तस्थौ पूर्वं न प्रजहार शूराणां पश्चात् प्रहारित्वात् ॥ ७ ॥ भ०

एते प्रकीर्णकाः ।

इतः परं सिचि वृद्धिमधिकृत्याह अक्षेत्यादि । तस्मिन्

न चाह्वालीन्न चाव्राजीत्त्रासं कपिमहीधरः॥ ८॥
अवादीत्तिष्ठतेत्युच्चैः प्रादेवीत् परिघं कपिः।
तथा यथा रणे प्राणान् बहूनामग्रहीद् द्विषाम्॥ ९॥

---

वने रक्षःपयोधराः रक्षांसि पयोधरा इव शराश्मांसि शरान् अश्मांसीव अक्षारिषुः क्षरितवन्तः क्षरतिरकर्मकः क्षरेत् क्षुतजवृत्तिरित्यादिप्रयोगेषु दृश्यते इह तु सकर्मको विवक्षितः। कपिर्महीधर इव न चाह्वालीत् न चलितवान् द्वयोरप्यतो हलादेर्लघोरिति विकल्पे प्राप्ते अतो लान्तस्येति सिचि वृद्धिः नाव्राजीत् त्रासं भयञ्च न जगाम महीधरतुल्यत्वात् नेटीति प्रतिषेधस्यातो हलादेर्लघोरिति विकल्पिते वदव्रजेत्यादिना वृद्धिः॥ ८॥ ज० म०

अथ सिचि वृद्ध्यधिकारः लभते सिच् सिः। अक्षेत्यादि। तस्मिन् कपौ रक्षांसि पयोधरा इव शरानश्मांसीव अक्षारिषुः क्षिप्तवन्तः किन्तु कपिर्महीधर इव न च अह्वालीत् नैव चलितवान् न च त्रासमव्राजीत् प्राप्तवान् क्षर्जसञ्चलने ह्वलह्मलचाले व्रजगतौ सर्वत्र व्यां सिः व्रजवदेति व्रिः॥ ८॥ म०

अवेत्यादि। तत उत्तरकालं कपिस्तिष्ठत मा पलायध्वमिति उच्चैस्तानवादीत् पूर्ववद्वृद्धिः तथा तेन प्रकारेण परिघं परिघेण प्रादेवीत् विजिगीषते स्म दिवः कर्म चेति परिघस्य कर्मसंज्ञा दिवेर्नेटीति वृद्धिप्रतिषेधः यथा बहूनां द्विषां शत्रूणां प्राणान् अग्रहीत् निगृहीतवान् अतो हलादेरिति विकल्पे प्राप्ते ह्यन्तक्षणश्वसु इति प्रतिषेधः॥ ९॥ ज० म०

अवादीदित्यादि। अतः परं यूयं तिष्ठत मा पलायध्वमित्युच्चैर्महता ध्वनिना कपिरवादीत् उक्तवान् पूर्ववद्वृद्धिः परिघेण तथा तेन प्रकारेण प्रादेवीत् क्रीडति स्म जेतुमैच्छद्वा

व्रणैरवमिषूरक्तं देहैः प्रौर्णाविषुर्भुवम् ।
दिशः प्रौर्णविषुश्चान्ये यातुधाना भवद्भियः ॥ १० ॥
अक्लाषिषुश्च्युतोत्साहा भिन्नदेहाः प्रियासवः ।
कपेरत्रासिषुर्नादान् मृगाः सिंहध्वनेरिव ॥ ११ ॥
इति सिचि वृद्ध्यधिकारः ।

---

दिव्युजिगीषेच्छापणिद्युती क्रीडागत्योः टौ णुर्घूङ इति णुः दिवोधेवेति करणे द्वितीया यथा रणे बहूनां शत्रूणां प्राणान् अग्रहीत् अपहृतवान् हसादेः सेम इति हान्तवर्जनान्न व्रिः ॥ ९ ॥ भ०

व्रणैरित्यादि । यातुधाना राक्षसा व्रणैः प्रहारमार्गैः रक्तं शोणितमवमिषुः वमन्ति स्म ह्यन्तेति वृद्धिप्रतिषेधः देहैर्भुवं प्रौर्णाविषुः छादितवन्तः अन्ये यातुधानाः भवद्भियः भवन्ती भीर्येषामिति भयात्पलायमानाः दिशः प्रौर्णविषुः छादितवन्तः ऊर्णोतेर्विभाषेति विकल्पः ऊर्णोर्विभाषोर्णोरित्यङित्त्वपक्षे द्रष्टव्यः ङित्त्वे गुणवृद्धिप्रतिषेधात् ॥ १० ॥ ज० म०

व्रणैरित्यादि । यातुधाना व्रणैः प्रहारमार्गैरक्तं अवमिषुः वमन्ति स्म पूर्ववन्मान्तवर्जनान्न व्रिः देहैर्भुवं प्रौर्णाविषुः आच्छादितवन्तः भवन्ती विद्यमाना भीर्भयं येषां तेऽन्ये यातुधाना दिशः प्रौर्णविषुः पलायन्ते स्मेत्यर्थः ऊर्णुञाच्छादने णुवन्निष्यामिति वृद्धिरावादेशश्च ॥ १० ॥ भ०

अक्लेत्यादि । च्युतोत्साहाः निरुत्साहाः अराविषुः स्नुताः स्म इति शब्दितवन्तः यतः प्रियासवः प्रियप्राणाः कपेः सत्त्वान्विनो नादादत्रासिषुः त्रस्ताः उभयत्रापि नेटीति प्रतिषिद्धो-

मायानामीश्वरास्तेऽपि शस्त्रहस्ता रथैः कपिम् ।
प्रत्याववृतिरे हन्तुं हन्तव्या मारुतेः पुनः ॥ १२ ॥

---

ऽतो हलादेरिति विकल्पः । इति सिचि वृद्ध्यधिकारः ॥ ११ ॥ ज० म०

अक्षेत्यादि । प्रिया असवः प्राणा येषां ते यातुधाना भिन्नदेहा विदीर्णशरीरा भूत्वा निरुत्साहा निःस्पृहाः सन्तः अक्षाणिषुः स्वनाः स्म इति शब्दितवन्तः क्षणशब्दे हसादेः सेम इति पक्षे व्रिः कपेर्नादात् अत्रासिषुः त्रस्ताः पूर्ववत्पक्षे व्रिः यथा सिंहस्य ध्वनेर्मृगास्त्रस्यन्ति । इति सिचि वृद्ध्यधिकारः ॥ ११ ॥ भ०

इत इट्प्रतिषेधमधिकृत्याह मायेत्यादि । अथानन्तरं राक्षसा ये दिशो गताः ते कपिं हन्तुं पुनः प्रत्याववृतिरे प्रतिनिवृत्ताः मायानामीश्वराः प्रभवः स्थेशेति वरच् नेड्वशिकृतीति नेट् आर्द्धधातुकेत्यादिना प्राप्तत्वात् रथैस्तत्र गताः सन्तः शस्त्रहस्ताः शस्त्राणि हस्तेषु येषामिति हनिकुशेत्यादिना स्मेरौणादिकः क्थन् रथाः चमिचमीत्यादिना शसेरौणादिकस्त्रन् हसिमृग्वञ्चेत्यादिना हसेस्तन् तयोस्तितुत्रेत्यादिना इट्प्रतिषेधः हन्तव्या मारुतेरिति हनूमतो बधार्हः कृत्यानां कर्त्तरि वेति षष्ठी एकाच इत्यादिना इट्प्रतिषेधः हन्तेर्नमान्तेष्वनिट्त्वात् ॥ १२ ॥ ज० म०

इत इट्प्रतिषेधाधिकारः । मायानामित्यादि । अथानन्तरं ये दिशः प्रीर्णविषुः ते कपिं हन्तुं रथैः पुनः प्रत्याववृतिरे प्रत्यागताः प्रतिनिवृत्ता हनत्वौ गतौ बधे वसोरस्येमनौदित इति औदिद्वर्जनादनिम् । कीदृशास्ते मायानामीश्वराः प्रभवः यायायभासकस इति वरः हवत्रेति नेम् शस्त्रं हस्ते

तांश्चेतव्यान् क्षितौ श्रित्वा वानरस्तोरणं युतान् ।
जघानाधूय परिघं विजिघृक्षून् समागतान् ॥ १३ ॥
संजुगुक्षव आयूंषि ततः प्रतिरुरुक्षवः ।
रावणान्तिकमाजग्मुर्हतशेषा निशाचराः ॥ १४ ॥

---

येषां ते तथा शस्यते हन्यतेऽनेनेति शस्त्रं शसवधे त्रासुसिति त्रः पूर्ववन्नेम् मारुतेर्हनूमतो हन्तव्याः हन्तुं शक्याः त्यभावेति पक्षे कर्त्तरि षष्ठी ॥ १२ ॥ भ०

तांश्चेतेत्यादि । समुदिता एकस्यामिव वेलायां मया हन्तव्या इति वानरस्तोरणमाश्रितवान् स तोरणं श्रित्वा तान् राक्षसान् विजिघृक्षून् विगृहीतुमिच्छून् युतान् समुदितान् समागतान् ढौकितान् क्षितौ पृथिव्यां चेतव्यान् पुञ्जीकर्त्तव्यान् जघान हतवान् परिघमाधूय परिभ्राम्य तत्र चेतव्यानिति एकाच इतीट्प्रतिषेधः क्षिताविति क्तिच्क्तौ च संज्ञायामिति क्तिच् तितुत्रेत्यादिना इट् प्रतिषेधः श्रित्वा युतानिति श्रुकः कितीट्प्रतिषेधः विजिघृक्षूनिति सनि ग्रहगुहोश्चेति तत्र रुदविदेति सनः कित्त्वं ग्रहिज्येति सम्प्रसारणं ढत्वकत्वषत्वानि ॥ १३ ॥ ज० म०

तानित्यादि । तोरणं श्रित्वा परिघमवधूय परिभ्राम्य वानरस्तान् राक्षसान् जघान । कीदृशान् क्षितौ चेतव्यान् पुञ्जीकर्त्तव्यान् युतान् एकीभूतान् विजिघृक्षून् विग्रहं कर्त्तुमिच्छून् समागतान् मिलितान् चिञस्तव्यः नेमिकाजादित्यादिना इण्निषेधः श्रुदुश्रिवृर्णोरिति श्रियुभ्यां नेम् नेमुगुहग्रह इति ग्रहेः सनि नेम् गमेरोदित्वान्नेम् ॥ १३ ॥ भ०

संजित्यादि । तत उत्तरकालं ये हतशेषा निशाचराः ते संजुगुक्षव आयूंषि जीवितानि गोहितुमिच्छवः गुहेः पूर्ववत्

एकेन बहवः शूराः साविष्काराः प्रमत्तवत्।
वैमुख्यञ्चक्रमित्यूचैरूचुर्दशमुखान्तिके ॥ १५ ॥
मांसोपभोगसंशूनानुद्विग्नांस्तानवेत्य सः।

---

प्रतिषेधः रावणान्तिकमाजग्मुः आमताः प्रतिरूरूषवः वक्ष्यमाणमर्थं कथयितुमिच्छवः अत्रापि पूर्ववत् प्रतिषेधः तत्र चकारेणोगन्तानां सनि समुच्चितत्वात् ॥ १४ ॥ ज० म०

समित्यादि। ततोऽनन्तरं हतशेषा निशाचरा रावणस्य समीपमासेदुः समाजग्मुः। कीदृशाः आयूंषि जीवितानि गोपायितुमिच्छवः गुहूञ्च संवृतौ सन् नेसुगुहग्रह इति नेम् प्रतिरूरूषवः वक्ष्यमाणं कथयितुमिच्छवः रुशब्दनौ पूर्ववन्नेम् ॥ १४ ॥ भ०

एकेनेत्यादि। वयं बहवः शूराः साविष्काराः साहङ्कारा अपि सन्तः एकेनापि कपिना हेतुभूतेन वैमुख्यं चक्रम पराङ्मुखत्वमनुष्ठितवन्तः प्रमत्तवत् मद्यपानमत्ता इव एवञ्च चित्तव्याक्षेपादुत्तमपुरुषे लिटि कृते क्रम इत्यादिना इट्प्रतिषेधः नियमित इति एवं दशमुखान्तिके उच्चैरूचुः ॥ १५ ॥ ज० म०

एकेनेत्यादि। एकेन कपिना हेतुना बहवोऽपि समर्था अपि प्रमत्ता इव साहङ्कारा अपि वैमुख्यं विमुखतां चक्रम विमुखा सवामः स्मेत्यर्थात् इति ते हतशेषाः निशाचरा रावणस्य समीपे ऊचुः नेमसुमिति नेम् परमते अस्मदि वाच्ये चित्तविक्षेपार्थे टी तदर्थसूचनाय प्रमत्तवदित्युक्तं मद्यपानां हि चित्तविक्षेपः सम्भवत्येव स्वमते सर्वत्र टी दुर्निवारा ॥ १५ ॥ भ०

मांसेत्यादि। स दशमुखस्तानुद्विग्नान् भीतानवेत्य ज्ञात्वा

उद्वृत्तनयनो मित्रान्मन्त्रिणः स्वान् व्यसर्जयत् ॥ १६ ॥
प्रमेदिताः सपुत्रास्ते सुस्वान्ता वाढविक्रमाः ।
अम्लिष्टनादा निरगुः फाण्टचित्रास्त्रपाणयः ॥ १७ ॥

---

स्वानात्मीयान् मन्त्रिणो व्यसर्जयत् प्राहिणोत् । कीदृशांस्तान् मांसोपभोगसंशूनान् मांसोपभोगेन स्थूलवपुषः उभयत्रापि श्वीदितो निष्ठायामितीट्प्रतिषेधः तत्र श्वयतेर्यजादित्वात् संप्रसारणं हल इति संप्रसारणस्य दीर्घः द्वयोरप्योदित्त्वान्निष्ठा-नत्वं उद्वृत्तनयनो रोषात् निष्क्रान्ततारकः यस्य विभाषे-तीट्प्रतिषेधः वृतेरुदित्त्वात् मित्रान् स्निग्धान् मन्त्रिणः आदि-तश्चेतीट्प्रतिषेधः रदाभ्यामिति निष्ठानत्वम् ॥ १६ ॥ ज० म०

मांसेत्यादि । तान् राक्षसान् उद्विग्नान् त्रस्तान् अवेत्य ज्ञात्वा स रावणो मन्त्रिणो व्यसर्जयत् । कीदृशान् मांसोप-भोगेन संशूनान् स्थूलान् मित्रान् स्निग्धान् । स कीदृशः उद्वृ-त्तनयनः उद्घूर्णितनेत्रः क्रोधवशात् ट्वायोश्वोर्गतिवृद्ध्योः नेमडी-श्वीदिति नेम् यजादित्वात् ग्रहस्वपाद्योरिति जिः जिर्घोऽन्त्यः सूत्वाद्योदिति ओदित्त्वात् क्तस्य नः विजडीशोभीकम्पे ईदि-त्त्वात् पूर्ववन्नेम् वृतुङवल्टवर्त्तने पूक्लिशुदित इत्यनेन वेम्त्वात् पूर्ववत् नेम् इर्मिद्याल्लृमिदाञिङच इति चकारात् स्नेहने आदित इति नेम् ॥ १६ ॥ भ०

प्रमे इत्यादि । ते मन्त्रिणः सपुत्राः पुत्रैः सह निरगुः निर्गताः इणो गा लुङि प्रमेदिताः स्निग्धीभवितुमारब्धाः आदि-कर्मणि निष्ठा ततो विभाषाभावादिकर्मणोरिति प्रतिषेधः इट्पक्षे निष्ठा शीङित्यादिना किच्चप्रतिषेधात् गुणः सुस्वान्ताः स्वामिनि कल्याणमनसः वाढविक्रमाः भृशपराक्रमाः अम्लि-ष्टनादाः विस्पष्टवाचः मन्त्रिणां वाग्मित्वात् फाण्टचित्रास्त्रपा-

तान् दृष्ट्वातिदृढान् धृष्टान् प्राज्ञान् परिवृढाज्ञया ।
कष्टं विनर्दतः क्रूरान् शस्त्रघुष्टकरान् कपिः ॥ १८ ॥

षयः यदश्टतपिष्टं कषायं उदकसम्पर्कमात्रादभिव्यक्तरसं ईषदुष्णं तदल्पप्रयाससाध्यत्वात् अनायाससाध्यं फाण्टमित्युच्यते तेन चित्राणि रञ्जितानि शस्त्राणि पाणौ येषामिति । स्वान्तादयः क्षुब्धेत्यादिना निपातिताः ॥ १७ ॥ ज० म०

अमे इत्यादि । ते मन्त्रिणः सपुत्राः पुत्रैः सह निरगुर्निर्गतवन्तः इषव्यां रूपम् । कीदृशाः अमेदिनाः वहिर्गमनसमये भार्य्यादीन् प्रति स्नेहं कर्त्तुमारब्धवन्तः राजप्रसादात् स्निग्धा भवितुमारब्धा विविधोपभोगेन प्रीता भवितुमारब्धा वा भावादिढे वेति पक्षे इम् सुस्वान्ताः शोभनमनसः वाढ़विक्रमाः भृशपराक्रमाः अक्लिष्टनादाः विस्पष्टवाचः मन्त्रिणां वाग्मित्वात् फाण्टचित्रास्त्रपाणयः फाण्टेन कषायभेदेन चित्राणि अस्त्राणि पाणौ येषां ते तथा क्षुब्धवाढेत्यादिना स्वनवाहृस्नेच्छकिफणां स्वान्तवाढक्लिष्टफाण्टा निपातिताः पुनातीति पुत्रः पूादेः स्र इत्यस्य योगविभागेन क्रुस्वत्वान्न गुणः इवव्रतेरिति नेम् ॥ १७ ॥ भ०

तानित्यादि । तान् दृष्ट्वा कपिः आर्दिददिति वक्ष्यमाणेन सम्बन्धः । किम्भूतान् धृष्टान् धृष्णोतीति धृष्टः धृषीशसीवैयात्य इतीट्प्रतिषेधः अतिदृढान् बलवतः दृढस्थूलबलयोरिति निपातनं परिवृढाज्ञया परिवृढस्य प्रभोराज्ञया प्राज्ञान् प्रभौ परिवृढ इति निपातनं कष्टं विनर्दतः कृच्छ्रं ध्वनतः गम्भीररवञ्च कृच्छ्रगहनयोः कष इतीट्प्रतिषेधः क्रूरान् हिंस्रान् शस्त्रघुष्टकरान् घुषिरविशब्दने इतीट्प्रतिषेधः ॥ १८ ॥ ज० म०

तानित्यादि । कपिर्हनूमान् तान् राक्षसान् दृष्ट्वा द्रुतं आर्दि-

अव्यर्णो गिरिकूटाभानभ्यर्णानार्दिदद् द्रुतम् ।
वृत्तशस्त्रान् महारम्भानदान्तांस्त्रिदशैरपि ॥१९॥ युग्मकम्॥
दमितारिः प्रशान्तौर्जानादापूरितदिङ्मुखः ।
जघान रुषितो रुष्टांस्त्वरितस्तूर्णमागतान् ॥ २० ॥

---

दर्दित्यग्रिमश्लोकेनान्वयः। कीदृशान् अतिदृढान् बलवत्तरान् धृष्टान् प्रगल्भान् परिवृढस्य प्रभोराज्ञया प्राप्तान् कष्टं कृच्छ्रं श्रोतृदुःखदं विनर्दतः शब्दायमानान् क्रूरान् हिंस्रान् शस्त्रैर्घुष्टौ घोषणां प्राप्तः सततधारणात् घृष्टौ वा करौ येषां तान् पूर्ववत् इह वृषवृहकषघुषां क्तो निपातः ॥ १८ ॥ भ०

अव्यर्ण इत्यादि। अव्यर्णोऽपीड़ितः अर्दैः संनिविभ्य इतीट्प्रतिषेधः गिरिकूटाभान् महागिरिसदृशप्रमाणान् अभ्यर्णान्विदूरान् अभेश्चाविदूर्य्ये इतीट्प्रतिषेधः द्रुतमार्दिदत् हिंसितवान् अर्दैः स्वार्थिकण्यन्तस्य लुङि रूपम्। वृत्तशस्त्रोऽधीतशस्त्रविद्यः णेरध्ययने वृत्तमिति इड़भावो णिलुक् च निपात्यते। महारम्भान् अनल्पव्यापारान् त्रिदशैरप्यदान्तान् अशमितान् वादान्तेत्यादिना इड़भावो णिलुक् च निपात्यते ॥ १९ ॥ ज० म०

अव्यर्ण इत्यादि। गिरिकूटाभान् पर्वतशृङ्गसदृशान् अभ्यर्णान् समीपगतान् वृत्तशस्त्रान् अधीतशस्त्रविद्यान् महारम्भान् कृतव्यूहत्वात् त्रिदशैर्देवैरपि अदान्तान् अदमितान्। कपिः कीदृशः अव्यर्णः अपीड़ितः अर्दैः क्तो नेमसन्निव्यर्दे इति नेम् क्षुब्धवाढेत्यादिना सामीप्ये अभिपूर्वादर्देर्ण्यन्तवृतेरध्ययने च निपातितः ज्ञप्तदमेर्दान्तशान्तेत्यादिना निपातः ॥१९॥ भ०

दमीत्यादि। ये तु प्रशान्तौजसः शमितबलाः सन्तो रुष्टाः

तेषां निहन्यमानानां संघुष्टैः कर्णभेदिभिः ।
अभूदभ्यमितत्रासमाक्रान्ताशेषदिग्जगत् ॥ २१ ॥

---

तूर्णमागताः तान् कपिर्जघान व्यापादितवान् प्रतापाद्दाम्य-न्तोऽरयो दमिता येन दमितारिः प्रशान्तं शत्रूणामोजो येन स प्रशान्तौजाः नादापूरितदिङ्मुखं तस्य हृष्टत्वात् रुषितः क्रुद्धः त्वरितः ससम्भ्रमः अत्र दमितप्रशमितपूरिताः ण्यन्ताः वादान्तेत्यादिना विकल्पितेटः रुष्टरुषितत्वरिताः रुष्यमत्वरे-त्यादिना ॥ २० ॥ ज० म०

दमीत्यादि । कपिस्तूर्णं शीघ्रं आगतान् राक्षसान् त्वरितः सन् जघान । कीदृशः दमिता उपशमिता अरयः शत्रवो येन स तथा नादैरापूरितं दिङ्मुखं येन रुषितः क्रुद्धः । कीदृशान् प्रशान्तोर्जान् उपशमितबलान् रुष्टान् क्रुद्धान् जन्त-शमेः क्तः इम्लोपो ञेरिति ञिलोपः जन्तदमेर्दान्तशान्तेत्या-दिना निपातः रुषत्वरिभ्यां क्तस्य वा रुषामित्यादिना विभा-षित इम् त्वरेरनिम्पक्षे श्रिवावमवेत्यादिना ऊट् ॥ २० ॥ भ०

तेषामित्यादि । तेषां रक्षसां निहन्यमानानां संघुष्टैः शब्दैः कर्णभेदिभिः बाधिर्य्यकरैः अभ्यमितत्रासं अभिगतत्रासं जग-दभूत् आक्रान्ताः अशेषा दिशो यस्मिन् जगति संघुष्टाभ्यमि-ताक्रान्ताः रुष्यमत्वरेति विकल्पितेटः ॥ २१ ॥ ज० म०

तेषामित्यादि । हनूमता निहन्यमानानां तेषां राक्षसानां संघुष्टैः शब्दैः जगत् भुवनं अभ्यमितत्रासं प्राप्तभयं अभूत् । कीदृशैः कर्णभेदिभिः श्रोत्रविदारिभिः । कीदृशं आक्रान्ता आशब्दिता अशेषा दिशो यत्र तत्तथा सम्पूर्वंघुष अम् आङ्-पूर्वक्रमाश्च वा रुषामित्यादिना क्तवत्वोर्वेम्त्वम् ॥ २१ ॥ भ०

भयसंहृष्टरोमाणस्ततस्तेऽपचितद्विषः ।
क्षणेन क्षीणविक्रान्ताः कपिनानेषत क्षयम् ॥ २२ ॥

इतीट्प्रतिषेधाधिकारः ।

हत्वा रक्षांसि लवितुमक्रमीन्मारुतिः पुनः ।
अशोकवनिकामेव निगृहीतारिशासनः ॥ २३ ॥

---

भयेत्यादि। ततस्ते राक्षसाः कपिना क्षणेन क्षयं विनाशमनेषत नीताः कर्मणि लुङ्। भयसंहृष्टरोमाणः भयोद्गतरोमाञ्चाः हृषेर्लोमस्विति विभाषितेट्। अपचितद्विषः अपचितानां पूजितानां ऋषीणां शत्रवः अपचितश्चेति निपातः। क्षीणविक्रान्ताः क्षीणं विक्रान्तं पराक्रमो येषां क्षियो दीर्घादिति निष्ठातकारस्य नः ॥ २२ ॥ ज० म०

भयेत्यादि। ततोऽनन्तरं कपिना ते राक्षसाः क्षणेन क्षयं अनेषत प्रापिताः कर्मणि टी सुर्लुङ इति णुः मान्तोऽदनत इत्यटादेशः न्यादिजन्ताढगत्यर्था इति मुख्यकर्मोक्तम्। कीदृशाः भयेन संहृष्टानि उद्गतानि रोमाणि येषां वाऽषामहृषेति वेम् अपचितानां पूजितानां मुन्यादीनां द्विषः शत्रवः नेमिकाजिति नेम्। क्षीणं विक्रान्तं पराक्रमो येषां क्षेः पूर्ववन्नेम् क्षेर्घोढे इति दीर्घत्वे सूल्वाद्योदित्वादिना क्तस्य नः क्रमुगताविव्यस्य पूक्लिशदित इत्यनेन वेम्त्वात् नेम् डीश्वीदिति नेम् जमुङभस्य णाविति घः। इतीट्प्रतिषेधाधिकारः ॥ २२ ॥ भ०

इतः प्रभृतीटमधिकृत्याह हत्वेत्यादि । रक्षांसि हत्वा मारुतिरशोकवनिकामेव पुनर्लवितुं छेत्तुं आर्द्धधातुकस्येट् अक्रमीत् मतवान् स्नुक्रमोरनात्मनेपदनिमित्त इतीट्। निगृहीतारिशासनः ध्वस्तारिव्यवस्थः ग्रहो लिटि दीर्घं इतीटो दीर्घत्वम् ॥ २३ ॥ ज० म०

आवरीतु मिवाकाशं वरितुं वीनिवोत्थितम्।
वनं प्रभञ्जनसुतो नादयिष्ट विनाशयन्॥ २४॥
वरिषीष्ट शिवं क्षिप्यन् मैथिल्याः कल्पशाखिनः।
प्रावारिषुरिव क्षौणीं क्षिप्ता वृक्षाः समन्ततः॥ २५॥

---

अथेडधिकारः। हत्वेत्यादि। रक्षांसि हत्वा निगृहीत-रावणाज्ञो मारुतिर्हनूमान् पुनरप्यशोकवनिकामिव लवितुं छेत्तुं अक्रमीत् जगाम लूञ्गिच्छिदि वस्तोरस्येतीम् क्रमिष्टी लुङ्क्रमोऽस्म इति इम् मान्तवर्जनात् हसादेः सेम इति न व्रिः ग्रहेरिसो घंत्वम्॥ २३॥ भ०

आवेत्यादि। प्रभञ्जनसुतो हनूमान् वनमशोकवनिकाख्यं विनाशयन् नादयिष्ट दयां न कृतवान् लुङि रूपम्। आका-शमावरीतुमिव अवष्टब्धमिवोत्थितं वीन् पक्षिणो वरितुं प्रार्थ-यितुमिवोत्थितं आगच्छत नान्यत्र यात इहैव फलवृद्धिं प्राप्स्य-थेति आवरीतुं वरितुमिति वृतो वेति विकल्पेनेटो दीर्घत्वम्॥ २४॥ ज० म०

आवेत्यादि। प्रभञ्जनसुतो हनूमान् वनं विनाशयन् न अदयिष्ट दयां न कृतवान्। कीदृशं आकाशं आवरीतुं आच्छा-दयितुमिव वीन् पक्षिणो वरितुं प्रार्थयितुमिव उत्थितं अत्यु-च्चत्वात् उच्चत्वोत्प्रेक्षा नेमिकाजित्यादौ वृवर्जनादिम् वृतोविमो घं इति वा दीर्घः॥ २४॥ भ०

वरीत्यादि। ये कल्पशाखिनः कल्पवृक्षाः स्वर्गादादाया-रोपितास्तानुन्मूल्य यथास्थानं क्षिप्यन् मैथिल्याः शिवं कल्याणं वरिषीष्ट प्रार्थितवान् मैथिल्या भद्रमस्त्वित्याशंसावचने लिङ् न लिङीति दीर्घप्रतिषेधः। अन्ये च वृक्षास्तेन समन्ततः क्षिप्ताः सन्तः क्षौणीं पृथ्वीं प्रावारिषुरिवाच्छादितवन्त इव

संवुवूर्षुः स्वमाकूतमाज्ञां विवरिषुं द्रुतम् ।
अवरिष्टाक्षमक्षम्यं कपिं हन्तुं दशाननः ॥ २६ ॥

तेषामनाच्छादितत्वादित्यर्थः सिचि वृद्धिः परस्मैपदेष्विति वृद्धिः ॥ २५ ॥ ज० म०

वरीत्यादि। हनूमान् मैथिल्याः शिवं मङ्गलं वरिषीष्ट प्रार्थितवान् आशिषि टौ स्वाव्वृद्दृदुरिति पक्षे इम् अठोढीपसेरिति नेमो दीर्घः। किं कुर्वन् ये कल्पवृक्षाः स्वर्गादानीयाशोकवनिकायामारोपितास्तानुन्मूल्य यथास्थानं क्षिप्यन्ननुप्रेरयन् शिवशब्दस्य हितार्थत्वात् समार्थैनेत्यादिना मैथिल्या इत्यत्र षष्ठी। अन्ये वृक्षाः समन्ततस्तेन क्षिप्ताः क्षौणीं भूमिं प्रावारिषुरिव आच्छादितवन्त इव स्या अनि रूपं पूर्ववत् नेमो घः ॥ २५ ॥ भ०

समित्यादि। रामदूतेन कपिना कर्मेदृशं कृतमिति स्वमाकूतमभिप्रायं संवुवूर्षुः संवरीतुमिच्छुः दशाननो द्रुतमाज्ञां विवरिषुः प्रकटितुमिच्छुः अक्षं स्वसुतमवरिष्ट प्रार्थितवान् कर्त्रभिप्राये तङ्। किमर्थं कपिं हन्तुं हनिष्यामीति अक्षम्यं क्षन्तुमशक्यं पोरदुपधादिति यत् संवुवूर्षुः विवरिषुरिति उगन्तत्वात् सनि ग्रहगुहोश्चेति चकारेणेट्प्रतिषेधे प्राप्ते इट् सनि वेति विभाषेट् तत्रानिट्पक्षे इको झलीति कित्त्वे उदोष्ठ्यपूर्वस्येत्युत्वपक्षे गुण एव ॥ २६ ॥ ज० म०

समित्यादि। अथ दशाननो द्रुतं कपिं हन्तुं अक्षनामानं कुमारं अवरिष्ट प्रार्थितवान् पक्षे इमो घीभावः। कीदृशं अक्षम्यं न क्षमार्हं कीदृशः कपिमात्रेण रामदूतेनैवं कृतमिति स्वमाकूतं स्वकीयमाशयं संवुवूर्षुः संवरीतुमिच्छुः आज्ञां विवरिषुः हे अक्ष! आगच्छ आगच्छ कपिर्हन्यतामित्याज्ञां विवरीतुं

ऊचे संवरिषीष्टास्त्वं गच्छ शत्रोः पराक्रमम् ।
ध्वृषीष्ठा युधि मायाभिः स्वरिता शत्रुसम्मुखम् ॥ २७ ॥
द्रुतं संस्वरिषीष्ठास्त्वं निर्दयः प्रधनोत्तमे ।

---

प्रकटयितुमिच्छुः स्याद्यृदृहुरिति इटः सनो वेम् अनिम्पक्षे घोंऽज्झनिङ्गमामिति दीर्घत्वे गुर्णानिमिसनीत्वगुत्वात् ऋदिरणावित्युर् ॥ २६ ॥ भ०

ऊचे इत्यादि। किमित्याह त्वं गच्छ शत्रोः पराक्रमं संवरिषीष्ठाः सञ्छादय आशिषि लिङ्सिचोरात्मनेपदेष्विति इटो विभाषेट् उश्चेतीट् पक्षे न कित्त्वम्। ध्वृषीष्ठाः युधि मायाभिः कर्तृभूताभिः त्वं कुटिलीक्रषीष्ठाः ध्वृ इच्छने इर्च्छा-कौटिल्ये तस्य चोदात्तत्वात् आशिषि कर्मणि लिङ् ऋतश्च संयोगादेरिति विभाषेट् अनिट्पक्षे उश्चेति कित्त्वं स्वरिता उप-तापयिता शत्रुसम्मुखं शत्रोरग्रतः अतो द्रुतं स्वरिषीष्ठा इति वक्ष्यमाणेन योज्यं स्वृशब्दोपतापयोरित्यस्य स्वरतिसूतिसूयेत्या-दिना विभाषेट् लिङ्सिचोरिति नानुवर्त्तते ॥ २७ ॥ ज० म०

विवरणमाह ऊचे इत्यादि। दशानन ऊचे। किमित्याह हे अत्त! त्वं गच्छ गत्वा शत्रोः कपेः पराक्रमं संवरिषीष्ठाः आच्छादय आशिषि टौ पूर्ववत् पक्षे इम्। त्वं युधि संग्रामे मायाभिः कर्त्रीभिः ध्वृषीष्ठाः कुटिलीक्रषीष्ठाः ध्वृ कौटिल्ये कर्मणि टौ स्याद्यृदृहुरिति पक्षे इमोऽभावे इगुङ्मढौस्वनिम इति कित्त्वान्न गुणः। त्वं कीदृशः शत्रुसम्मुखं यथा स्यात्तथा स्वरिता शत्रोरग्रत उपतापयितेत्यर्थः किंवा शत्रुसंमुखं शत्रूणां प्रधानं स्वरिता उपतापनशीलः। मुखमाद्ये प्रधाने चेत्यमरः। स्वृ शब्दोपतापयोः वेसूदित्स्वरेति पक्षे इम् ॥ २७ ॥ भ०

द्रुतमित्यादि। संस्वरिषीष्ठाः उपतापय निर्भयः सन्

स मायानामगात् सीता कपेर्विधवितुं द्युतिम् ॥ २८ ॥
विगाढारं वनस्यासौ शत्रूणां गाहिता कपिः ।
अक्षं रधितुमारेभे रद्धा लङ्कानिवासिनाम् ॥ २९ ॥
निष्कोषितव्यान्निष्कोष्टुं प्राणान् दशमुखात्मजात् ।

---

आशिषि लिङ् समोगमृच्छीत्यात्मनेपदं अत्र ऋतश्चेतीट् प्रधनोत्तमे संग्रामवरे एवमुक्तः सन् स मायानां सोता जनकः कपेर्द्युतिं तेजो विधवितुमपनेतुमगात् गतः सोता धवितुमिति स्वरतीत्यादिसूत्रेण विभाषेट् ॥ २८ ॥ ज० म०

द्रुतमित्यादि। त्वं प्रधनोत्तमे महायुद्धे निर्भयः सन् द्रुतं संस्वरिषीष्ठाः उपतापय शत्रुमित्यर्थात् समोगमृच्छेति मं एवमुक्तः सोऽक्षः कपेर्द्युतिं तेजो विधवितुं अपनेतुं अगात् गतः। कीदृशः मायानां सोता जनकः सूधुञां पूर्ववत् पक्षे इम् ॥ २८ ॥ भ०

विगेत्यादि। असौ कपिः वनस्य विगाढा अवलोडयिता अरं शीघ्रं शत्रूणां गाहिता विनाशयिता कर्मणि षष्ठी ऊदित्वाद्विभाषेट् स्वरतीत्यादिना अक्षं रधितुं हिंसितुमारेभे प्रवृत्तः लङ्कानिवासिनां रक्षसां रद्धा हिंसिता रधादिभ्यश्चेति विभाषेट् ॥ २९ ॥ ज० म०

विगेत्यादि। असौ हनूमान् अक्षं रधितुं हिंसितुं आरेभे प्रवृत्तः। कीदृशः अरं शीघ्रं वनस्य विगाढा विलोडयिता शत्रूणां गाहिता नाशयिता लङ्कानिवासिनां रद्धा हन्ता गाहूविलोडे इत्यस्य ऊदित्वात् रधहती इत्यस्य च रधादित्वात् पूर्ववद्विभाषया इम् ॥ २९ ॥ भ०

निष्क इत्यादि। दशमुखात्मजादक्षात् प्राणान्निष्कोषितव्यान् अपनेतव्यान् अपनयार्हान् निष्कोष्टुं अपनेष्यामीति

आदाय परिघं तस्थौ वनान्निष्कुषितद्रुमः ॥ ३० ॥
एष्टारमेषिता संख्ये सोढारं सहिता भृशम् ।
रेष्टारं रेषितुं व्यास्यद्रोष्टाक्षः शस्त्रसंहतीः ॥ ३१ ॥
शस्त्रैर्दिदेविषुं संख्ये दुद्यूषुः परिघं कपिः ।
अर्दिधिषुर्यशः कीर्त्तिमोर्त्सुं वृक्षैरताडयत् ॥ ३२ ॥

---

परिघमादाय तस्थौ निरः कुष इति विभाषेट् निष्कुषितद्रुमः वनादपनीतवृक्षः इषिष्ठायामितीट् ॥ ३० ॥ ज० म०

निष्क इत्यादि। दशमुखात्मजात् अक्षात् निष्कोषितव्यान् आकर्षणयोग्यान् प्राणान् निष्कोष्टुं अपहर्त्तुं परिघं आदाय गृहीत्वा कपिः तस्थौ। कीदृशः वनात् निष्कुषिता आकृष्टा द्रुमा वृक्षा येन पूर्ववत् निःपूर्वकुषो वेम् नेम्डीश्वीदिद्वेम् इति क्तेनेम् निषेधस्तत्र निष्कुषवर्जनात् ॥ ३० ॥ भ०

एष्टेत्यादि। कपिं युद्धस्येष्टारं एषिता एषणशीलोऽक्षः ताच्छील्ये तृन् न लोकेति षष्ठीप्रतिषेधः सोढारं प्रहरणस्य सहितारं सहिता भृशं सहनशीलः रेष्टारं हिंसकं रेषितुं हिंसितुं रोष्टा रोषणशीलः शस्त्रसंहतीर्व्यास्यत् क्षिप्तवान् लङि रूपं सर्वत्र तीषसहेत्यादिना वेट् ॥ ३१ ॥ ज० म०

एष्टेत्यादि। अक्षः संख्ये युद्धे रेष्टारं हिंसकं हनूमन्तं रेषितुं हिंसितुं शस्त्रसमूहान् व्यास्यत् क्षिप्तवान् असु क्षेपे धो। कीदृशं एष्टारम् इच्छाशीलं युद्धस्येत्यर्थात् सोढारं सहनशीलं भृशमत्यर्थं सोऽपि एषिता एषणशीलः सहिता सहनशीलः रोष्टा रोषणशीलः इषुषुवाञ्छे सहजङ्शक्तौ रिषवधे रुषञि च चकारात् वधे वेम्सहेत्यादिना वेम् ॥ ३१ ॥ भ०

शस्त्रैरित्यादि। कपिः अर्दिधिषुः यशो वर्द्धितुमिच्छुः परिघं दुद्यषुः परिघेण क्रीड़ितुमिच्छुः अक्षं वृक्षैरताड़यत्

भूयस्तं धिप्सुमाहूय राजपुत्त्रं दिदम्भिषुः ।
अहंस्ततः स मूर्च्छावान् संशिश्रीषुरभूद्ध्वजम् ॥ ३३ ॥

---

हतवान् कीदृशं शस्त्रैर्दिदेविषुं क्रीड़ितुमिच्छुं कीर्त्तिमीर्त्सुं वर्द्धितुमिच्छुं दिवेरिवन्तस्य ऋधुवृद्धावित्यस्य च सनीवन्तर्द्धे-त्यादिना विभाषितेट् तत्र दिवेरिडभावपक्षे च्छोः शूट् ऋधे-राप्ज्ञप्यधामीदितीत्वम् अभ्यासलोपश्च ॥ ३२ ॥ ज० म०

शस्त्रैरित्यादि। कपिः संख्ये युद्धे वृक्षैरक्षमताड़यत्। अक्षं कीदृशं शस्त्रैर्दिदेविषुं क्रीड़ितुमिच्छन्तम् ईर्त्सुं वर्द्ध-यितुमिच्छुम्। कपिः कीदृशः परिघेण दुद्यूषुः क्रीड़ितुमिच्छुः दिवोर्थेवेति करणे द्वितीया यशोऽर्दिधिषुः वर्द्धयितुमिच्छुः दिव्युक्रीडादौ भ्रस्जश्रिस्वृयूर्णुभरेत्यादिना इवन्तत्वात् सनो वेम् इमोऽभावपक्षे च्छोः शूटावित्यादिना ऊट् ऋधुवृद्धौ पूर्वेण सनो वेम् नाजन्तादेराद्विर्द्विरित्यकारास्य स्यादौ नवद्रोऽये इति रेफस्य च न द्वित्वं अनिस्पक्षे ज्ञापर्धापामीर्थ्य इति ईर खिल्लोपश्च अन्तर्भूतण्यर्थोऽत्र बोध्यः ॥ ३२ ॥ भ०

भूय इत्यादि। तं राजपुत्रं अक्षं धिप्सुं दम्भितुं वञ्च-यितुमिच्छुं भूयः पुनरपि दिदम्भिषुः वञ्चयितुमिच्छुः आहू-यागच्छेत्यहन् हतवान् ततः सोऽक्षः मूर्च्छावान् मूर्च्छायुतः ध्वजमात्मीयं संशिश्रीषुः संश्रयितुमिच्छुः अभूत् भूतः अत्र दम्भेः श्रयतेश्च सनीवन्तर्द्धेतीट् अत्र श्रयतेरनिट्पक्षे अज्झन-गमां सनीति दीर्घः द्वितीयस्य च दम्भ इच्च अभ्यासलोपः दम्भे र्हल्ग्रहणस्य जातिपरत्वात्क्त्विमिति कित्त्वे अनुनासिक-लोपः एकाचो वश इति भष् खरि चेति चर्त्त्वम् ॥३३॥ ज० म०

भूय इत्यादि। कपिस्तमक्षं आहूय आगच्छ युद्धे इत्युक्त्वा भूयः पुनरपि अहन् हन्तेर्घ्नौ। कीदृशं धिप्सुं दम्भं कर्त्तुमिच्छुं

आश्वस्याच्चः क्षणाल्लोकान् विभ्रक्षुरिव तेजसा ।
रुषा विभ्रज्जिषुप्रख्यं कपिं बाणैरवाकिरत् ॥ ३४ ॥
संयुयूषुं दिशो बाणैरक्षं यियविषुर्द्रुमैः ।
कपिर्मायामिवाकार्षीद्दर्शयन् विक्रमं रणे ॥ ३५ ॥

---

सच दिदम्भिषुः दम्भं कर्त्तुमिच्छुः ततः प्रहारानन्तरं सोऽक्षो ध्वजं संशिश्रीषुः आश्रयितुमिच्छुः सन् मूर्च्छावान् मूर्च्छितो-ऽभूत् भ्रस्जश्रीत्यादिना दम्भेः श्रयतेश्च सनो वेम् दम्भेरनिम्-पक्षे दम्भोयाविति अच ईत्वं खिलोपश्च अनकारनिर्देशात् नस्य लोपः झभान्तस्येति दस्य धः श्रयतेर्घोऽज्झनिङ्गमामिति दीर्घः ॥ ३३ ॥ म०

आश्वस्येत्यादि । क्षणात् क्षणमात्रेणाश्वस्य संज्ञां लब्ध्वा लोकान् जनान् तेजसा क्रोधोत्थेन विभ्रक्षुरिव अथ स कपिं बाणैरवाकिरत् सञ्छादितवान् । कीदृशं विभ्रज्जिषुप्रख्यं अग्नितुल्यं विभ्रज्जिषुः विभ्रक्षुरिति सनीवन्तर्द्धेत्यादिना विभाषेट् तत्रानिट्पक्षे स्कोरिति सलोपः व्रश्चेति षः इट्पक्षे सकारस्य जश्त्वं श्चुत्वञ्च ॥ ३४ ॥ ज० म०

आश्वस्येत्यादि । ततोऽक्षः क्षणात् आश्वस्य चेतनां प्राप्य बाणैः कपिमवाकिरत् आच्छादितवान् । कीदृशः तेजसा लोकान् विभ्रक्षुरिव क्रोधलक्षणमत्र तेजः रुषा क्रोधेन विभ्र-ज्जिषुप्रख्यं अग्नितुल्यं भ्रस्जश्रीति भ्रस्जेः सनि वेम् ॥३४॥भ०

समित्यादि । बाणैर्दिशः संयुयूषुं मिश्रयितुमिच्छुं अक्षं कपिः द्रुमैर्यियविषुः योतुमिच्छुर्मायामिवेन्द्रजालमिवाकार्षीत् कृतवान् रणे विक्रमं दर्शयन् यौतेः सन् सनीवन्तर्द्धेति विभाषेट् ओः पुयण्ज्यपर इतीत्वं अज्झनगमां सनीति दीर्घः ॥ ३५ ॥ ज० म०

वानरं प्रोर्णुनविषुः शस्त्रैरक्षो विदिद्युते ।
तं प्रोर्णुनूषुरुपलैः स वृक्षैराबभौ कपिः ॥ २६ ॥
स्वां जिज्ञापयिषू शक्तिं बुभूर्षू नु जगन्ति किम् ।
शस्त्रैरित्यक्षपातां तौ पश्यतां बुद्धिमाहवे ॥ २७ ॥

---

समित्यादि । कपिः रणे विक्रमं दर्शयन् मायामिव चकार्षीत् इन्द्रजालमिव दर्शितवानित्यर्थः । कीदृशः द्रुमैरक्षं यियविषुः मिश्रयितुमिच्छुः । अक्षं कीदृशं बाणैर्दश दिशः संयुयूषुं मिश्रयितुमिच्छुं भ्रस्जश्रीति वेम् ॥ २५ ॥ भ०

वानरमित्यादि । वानरं प्रोर्णुनविषुः छादयितुमिच्छुरक्षः विदिद्युते विद्योतते स्म द्युतिस्वाप्योरिति सम्प्रसारणं कपिरपि तमक्षं उपलैर्वृक्षसहितैः प्रोर्णुनूषुः संवरीतुमिच्छुराबभौ भाति स्म ऊर्णोतेः पूर्ववद्विभाषेट् इट्पक्षे गुणः अन्यत्र अज्झनेति दीर्घः उभयत्र नन्द्रा इति रेफो न द्विरुच्यते ॥ २६ ॥ ज० म०

वानरमित्यादि । अक्षः शस्त्रैर्वानरं प्रोर्णुनविषुः आच्छादयितुमिच्छुः सन् विदिद्युते दीप्तः द्युत्स्वाप्योः खेर्जिः कपिरपि वृक्षसहितैरुपलैः पाषाणैस्तमक्षं प्रोर्णुनूषुः आच्छादयितुमिच्छुः सन् आबभौ दीप्यते स्म ऊर्णुञ् आच्छादने भ्रस्जश्रीत्यादिना वेम् ॥ २६ ॥ भ०

स्वामित्यादि । तौ कपिराक्षसौ किं स्वां शक्तिं जिज्ञापयिषू बोधयितुमिच्छू इव बुभूर्षू त्रिजगन्ति किं नु त्रैलोक्यं शस्त्रेण भर्त्तुं पूरयितुमिच्छू इत्येवं बुद्धिमाहवे पश्यतां प्रेक्षकाणां अक्षपातां कृतवन्तौ जिज्ञापयिषू बुभुर्षू इति विभाषेट् अत्र भृञभरण इति भौवादिकस्य ग्रहणं सनीवन्तर्द्धेति सूत्रे भरेति शपा निर्देशात् ॥ २७ ॥ ज० म०

स्वामित्यादि । तौ कपिराक्षसौ पश्यतां जानानां आहवे

मायाभिः सुचिरं क्लिष्ट्वा राक्षसोऽक्लिशितक्रियम् ।
संप्राप्य वानरं भूमौ पपात परिघाहतः ॥ ३८ ॥
पवितोऽनुगुणैर्वातैः शीतैः पूत्वा पयोनिधौ ।
बभञ्जाध्युषितं भूयः क्षुधित्वा पत्रिभिर्वनम् ॥ ३९ ॥

---

युद्धे इति बुद्धिमकृषातां चक्रतुः कीदृशीं बुद्धिमित्याह किन्नु किमु एतौ स्वां शक्तिं ज्ञापयितुमिच्छू जगन्ति त्रिभुवनानि शस्त्रैर्बुभूषू पूरयितुमिच्छू अपिभूभ्यां भ्रस्जश्रीत्यादिना सनो वेम् भ्रभौवादिकः सूत्रे भरेति निर्देशात् ॥ ३७ ॥ भ०

मायेत्यादि । राक्षसो मायाभिः सुचिरं क्लिष्ट्वा क्लेशं कृत्वा वानरं अक्लिशितक्रियमनभिभूतव्यापारं सम्प्राप्य परिघाहतः भूमौ पपात क्लिशः क्वानिष्ठयोरिति विभाषेट् ॥ ३८ ॥ ज०म०

मायाभिरित्यादि । राक्षसोऽक्षो मायाभिः सुचिरं क्लिष्ट्वा क्लेशं प्राप्य अक्लिशितक्रियं अनभिभूतव्यापारं वानरं सम्प्राप्य परिघेणाहतः सन् भूमौ पपात क्लिशेः पूक्लिशुदित इति क्वाचो वेम् पूक्लिशवमजपेति क्तक्तवत्वोर्वेम् ॥ ३८ ॥ भ०

पवीत्यादि । कपिरपि पयोनिधौ पूत्वा स्नात्वा अनुगुणैरनुकूलैः शीतैर्वातैः पवितः पवित्रीकृतः पूङश्चेति विभाषेट् भूयः पुनर्वनं बभञ्ज । कीदृशं पत्रिभिः पक्षिभिः क्षुधित्वा क्षुधितैर्भूत्वा अध्युषितं कृतनिवासं वसतिक्षुधोरितीट् ॥ ३९ ॥ ज०म०

पवित इत्यादि । कपिः क्षुधित्वा क्षुधितो भूत्वा पयोनिधौ पूत्वा स्नात्वा फलादिकं भुक्त्वा चेत्यर्थात् शीतलैरनुगुणैर्वातैः पवितस्त्यक्तश्रमः सन् भूयः पुनरपि तद्वनं बभञ्ज भग्नवान् । कीदृशं पत्रिभिः पक्षिभिरध्युषितं अधिष्ठितं क्षणं भङ्गाभावात् पूजः पूक्लिशवमेति क्तक्तवत्वोर्वेम् पूशीङ्पेत्यादिना

उच्चैरञ्चितलाङ्गूलः शिरोऽञ्चित्वेव संवहन् ।
दधद्विलुभितं वातैः केशरं वह्निपिङ्गलम् ॥ ४० ॥
जरित्वेव जवेनान्ये निपेतुस्तस्य शाखिनः ।
व्रश्चित्वा विवशानन्यान् बलेनापातयत्तरून् ॥ ४१ ॥

---

णः पूज्जिश्युदित इति क्वाचो वेम् वसेः क्षुधेश्च क्षुधवसपूजार्थाश्च इतीम् ॥ ३९ ॥ भ०

उच्चैरित्यादि । उच्चैरूर्द्धं अञ्चितं पूजितं लाङ्गूलं पुच्छं यस्य शोभनविन्यासेन स्थितत्वात् शिरोऽञ्चित्वेव संवहन् अनम्रत्वात् पूजयित्वेव शिरो बिभ्राणः अञ्चेः पूजायामिति विभाषेट् वह्निपिङ्गलञ्च केशरं सटां दधत् बिभ्रत् वातैर्विलुभितं आकुलितं लुभोविमोहन इतीट् विमोहनमाकुलीकरणम् ॥ ४० ॥ ज० म०

उच्चैरित्यादि । कपिः कीदृशः उच्चैरञ्चितलाङ्गूलः ऊर्द्धम् अञ्चितं पूजितं लाङ्गूलं पुच्छं यस्य स तथा शिरोऽञ्चित्वेव अनम्रत्वात् पूजयित्वेव संवहन् बिभ्राणः वातैर्विलुभितं चञ्चलीकृतं वह्निवत् पिङ्गलं केशरं दधत् धारयन् ईदृशो वनं बभञ्जेति पूर्वेणान्वयः क्षुधवसपूजार्थाश्चागाध्यार्थलुभ इति इम् नेदित् पूजार्थाञ्चोरिति नलोपाभावः ॥ ४० ॥ भ०

जरीत्यादि । तस्य कपेर्जवेन वेगेन अन्ये शाखिनः जरित्वेव जीर्णा इव भूत्वा निपेतुः अन्यांस्तरून् बलेन व्रश्चित्वा छित्त्वा विवशान् स्रस्तपल्लवानपातयत् पातितवान् जृव्रश्चोः क्त्वीटि ॥ ४१ ॥ ज० म०

जरित्वेत्यादि । अन्ये शाखिनः तस्य कपेर्जवेन वेगेन जरित्वेव जीर्णा इव भूत्वा निपेतुः निपतितवन्तः अन्यान् विवशान् अनायत्तान् तरून् बलेन व्रश्चित्वा छित्त्वा कपिर-

दमित्वाप्यरिसङ्घातानश्रान्त्वा कपिकेशरी ।
वनं चचार कर्त्तिष्यन्नर्त्स्यन्निव निरङ्कुशः ॥ ४२ ॥
पारं जिगमिषन् सोऽथ पुनरावर्त्स्यतां द्विषाम् ।
मत्तद्विरदवद्रेमे वने लङ्कानिवासिनाम् ॥ ४३ ॥

---

पातयत् पातयामास जृभ्रशो न जिरिति इम् जिनिषेधश्च ॥ ४१ ॥ भ०

दमीत्यादि । कपिकेशरी हनूमान् अरिसङ्घातान् दमित्वा उपशमं नीत्वा अश्रान्त्वा अपरिश्रान्तो भूत्वा वनं चचार उदितो वेति विकल्पेनेट् । निरङ्कुशः निरवग्रहः कर्त्तिष्यन् छेत्स्यन् नर्त्स्यन्निव नर्त्तुकाम इव सेसिचीत्यादिना विभाषेट् ॥ ४२ ॥ ज० म०

दमित्वेत्यादि । कपिकेशरी हनूमान् शत्रुसमूहान् दमित्वा नाशयित्वापि अश्रान्त्वा अश्रान्तो भूत्वा वनं कर्त्तिष्यन् छेत्स्यन् नर्त्स्यन्निव नर्त्तितुकाम इव निरङ्कुशो निरवग्रहः सन् चचार बभ्राम दम्भु इशमे असुभ्य इत्त पःखेदयोरुदित्वात् पूक्लिशुदित इति वेम् कृतीश्रपच्छिदि नृत्यनृत्से अनयोर्नृत्-कृदिति वेम् ॥ ४२ ॥ भ०

पारमित्यादि । अथ स कपिर्द्विषां पारं जिगमिषन् गन्तुमिच्छन् गमेरिट् परस्मैपदेषु पुनरावर्त्स्यतां प्रतीपीभविष्यतां नवृद्भ्य इतीट्प्रतिषेधः वृद्भ्यः स्यसनोरिति परस्मैपदं लङ्कानिवासिनां वने मत्तद्विरद इव रेमे क्रीडितवान् ॥ ४३ ॥ ज० म०

पारमित्यादि । अथानन्तरं स हनूमान् पुनरावर्त्स्यतां प्रत्यागमिष्यतां लङ्कानिवासिनां द्विषां शत्रूणां पारमन्तं गन्तुं इच्छुः सन् वने मत्तहस्तीव रेमे क्रीडति स्म गमोऽमि

यद्यकल्प्स्यदभिप्रायो योद्धुं रक्षःपतेः स्वयम् ।
तमप्यकर्त्स्यं मद्याहं वदन्नित्यचरत् कपिः ॥ ४४ ॥
हते तस्मिन् प्रियं श्रुत्वा कल्प्ता प्रीतिं परां प्रभुः ।
तोषोऽद्यैव च सीतायाः परश्चेतसि कल्प्स्यति ॥ ४५ ॥

---

स इति गच्छतेरिम् वृद्भ्यो नेम् पे इति वृतेर्नेम् अतएव पम् ॥ ॥ ४३ ॥ भ०

यदीत्यादि । रक्षःपतेः रावणस्य स्वयं योद्धुं यद्यभिप्रायोऽकल्प्स्यत् समपत्स्यत् तासि च क्लृप इति चकारात् स्यकारे च नेट् तदा तमप्यहमकर्त्स्यम् उत्सारयामि अहमद्येति एवं वदन् कपिर्वनमचरत् सेसिचीत्यादिना विभाषेट् अकल्प्स्यदकर्त्स्यमिति च लिङ्निमित्त इति लृङ् हेतुहेतुमद्भावश्च लिङो निमित्तम् ॥ ४४ ॥ ज० म०

यदीत्यादि । यदि रक्षःपतेः रावणस्य स्वयं योद्धुमभिप्रायोऽकल्प्स्यत् कल्पिष्यते तमप्यद्याहमकर्त्स्यं अच्छेत्स्यम् इति वदन् कपिरचरत् चरति स्म क्लृपूङ्क्लृचकल्पने पूर्ववत् वृतादित्वात् स्यस्य नेम् कृतीशपच्छिदि नृतृकृदिति वेम् ॥ ४४ ॥ भ०

हते इत्यादि । हते तस्मिन् रक्षःपतौ प्रियं श्रुत्वा प्रभुः रामः परां प्रीतिं कल्प्ता जनयिता अत्रान्तर्भावितो ण्यर्थः धातोरकर्मकत्वात् सीतायाश्चाद्यैव चेतसि तोषः परो महान् कल्प्स्यति सम्पत्स्यते तासि च क्लृप इतीट्प्रतिषेधः लुटि च क्लृप इति परस्मैपदम् ॥ ४५ ॥ ज० म०

हते इत्यादि । तस्मिन् रावणे हते सति प्रियं श्रुत्वा प्रभुः रामः परां प्रीतिं कल्प्ता प्राप्स्यति नेम्पेद्या इति तेनैव पं किञ्च अद्यैव च अधुनैव च सीतायाश्चेतसि परस्तोषः कल्-

आहूय रावणोऽवोचदथेन्द्रजितमन्तिकात्।
वने मत्त इव क्रुद्धो गजेन्द्रः प्रधनेष्वटन्॥ ४६॥
ययाथ त्वं द्विषामन्तं भूयो यातासि चासकृत्।
अशक्थ जेतुं त्वं देवान् मायाः सस्मर्थ संयति॥ ४७॥

---

स्यति भविष्यति पूर्ववत् वृतादित्वात् स्वस्य नेम् इति वदन् कपिरचरदिति पूर्वेणान्वयः॥ ४५॥ भ०

आहूयेत्यादि। अथ रावणः इन्द्रजितमाहूय अन्तिकमवोचत् किमवोचदित्याह वने मत्त इव यथा गजेन्द्रो मत्तः क्रुद्धो वने पर्य्यटन् द्विषामन्तं गतवान् तथा त्वं प्रधनेषु संग्रामेष्वटन् द्विषामन्तं ययाथेति वक्ष्यमाणश्लोकेनान्वयः॥४६॥ ज० म०

आहूयेत्यादि। अथानन्तरं अन्तिके समीपे इन्द्रजितमाहूय रावणोऽवोचत् उक्तवान्। किमवोचदित्याह त्वं क्रुद्धः सन् प्रधनेषु युद्धेषु अटन् परिभ्रमन् वने गजेन्द्र इव द्विषामन्तं ययाथेत्यग्रिमश्लोकेनान्वयः मदोभिर्यञ्जिह्वर्षे नेम्डीश्वीदिति ईदित्त्वान्नेम् सूत्वाद्योदित्यादौ मदवर्जनान्न क्तस्य नः क्रुध्त्यौ कोपे औदित्त्वान्नेम्॥ ४६॥ भ०

ययेत्यादि। न केवलं ययाथ भूयः पुनरपि यातासि यास्यसि यातेः क्तादिनियमात् प्राप्तस्येटः अचस्तास्वत्थल्यनिटो नित्यमिति प्रतिषेधः तस्य हि तासौ नित्यमनिट्त्वं अजन्ता धातवोऽनुदात्त इति वचनात् देवान् जेतुं त्वमसकृत् बहुधा अशक्थ शक्तोऽसि उपदेशे त्वत इति थलीट्प्रतिषेधः शकेस्तासौ नित्यानिट्त्वं शकिस्तु कान्त इति वचनात् मायाश्च कूटयुद्धानि संयति युद्धे सस्मर्थ ज्ञातवानसि ऋतो भारद्वाजस्येतीट्प्रतिषेधः॥ ४७॥ ज० म०

ययाथेत्यादि। असकृत् वारंवारं द्विषामन्तं ययाथ प्राप्त-

त्वं ससर्जिथ शस्त्राणि दद्रष्ठारींश्च दुःसहान्।
शस्त्रैरादिथ शस्त्राणि त्वमेव महतामपि ॥ ४८ ॥
स त्वं हनिष्यन् दुर्बुद्धिं कपिं व्रज ममाज्ञया।
मा नाज्ञीराक्षसीर्मायाः प्रस्तावीर्मा न विक्रमम् ॥ ४९ ॥

---

वानसि सृजदृशजिति वेम्त्वं भूयः पुनरपि यातासि च यास्यसि च नेमिकाजिति नेम्त्वं देवान् जेतुं शशक्थ शक्तो भूतोऽसि सृजदृशजिति वेम् संयति युद्धे माया बह्वीः सस्मर्थ स्मृतवानसि नेस्मृतस्थप इति नेम् ॥ ४७ ॥ अ०

त्वमित्यादि। शस्त्राणि त्वं ससर्जिथ छिन्नवानसि अरींश्च दुःसहान् युध्यतः दद्रष्ठ दृष्टवानसि न पलायितोऽसि विभाषासृजिदृशोरिति थलि विभाषेट् अनिट्पक्षे सृजिदृशोर्झल्यमकिति षत्वष्टुत्वे महतामपि मध्ये त्वमेव शस्त्राणि परकीयानि शस्त्रैः स्वैरादिथ जग्धवानसि इड़त्यर्तिव्ययतीनामित्यादेरिट् ॥ ४८ ॥ ज० स०

त्वमित्यादि। त्वं शस्त्राणि च ससर्जिथ छिन्नवानसि सृजदृशेति वेम् दुःसहानरीन् दद्रष्ठ दृष्टवानसि पूर्ववद्वेम्त्वात् पक्षेऽनिम् शच्छाजिति षड् वर्द्रोऽकिदिति ऋतोरः स्वकीयैः शस्त्रैः त्वमेवाद्वितीयः महतामिन्द्रादीनामपि शस्त्राणि आदिथ भक्षितवानसि सृजदृशेत्यादौ अदवर्जनान्नेमसुमित्यादिना नियमात् नित्यमिम् ॥ ४८ ॥ भ०

स त्वमित्यादि। स त्वमेवंविधः कपिं दुर्बुद्धिं चपलत्वाद्धनिष्यन्निति मदाज्ञया व्रज ऋद्धनोऽस्य इतीट् वक्ष्येकाजिति सूत्रत्रयं नोदाहृतं फलादेशस्य छन्दोविषयत्वात् राक्षसीं मायां मा नाज्ञीः मा न व्यक्तीकुरु अपितु व्यक्तीकुर्वित्यर्थः

मा न सावीर्महास्त्राणि मा न धावीररिं रणे ।
वानरं मा न संयंसीर्व्रज तूर्णमशङ्कितः ॥ ५० ॥

---

अञ्जेः सिचीतीट् विक्रमं न मा प्रस्तावीः मा न प्रादुरभूश्च स्नुसुधुञ्भ्य इतीट् ॥ ४९ ॥ ज० म०

स त्वमित्यादि । स एवंविधः प्रसिद्धस्त्वं दुष्टमतिं कपिं हनिष्यन् विनाशयिष्यन् ममाज्ञया व्रज गच्छ स्वस्वर्द्धन इति इम् राक्षससम्बन्धिनीर्मायां मा न आञ्जीः व्यक्तीकरिष्यसि अपित्ववश्यमेव अन्जूधजिव्यक्तिगतिम्रक्षणे ऊदित्वाद्वेमत्वे अन्जः सेरिसिति नित्यमिम् विक्रमं मा न प्रस्तावीः न न प्रस्तुतं करिष्यसि अपित्ववश्यमेव सुस्तुधोः सेरितीम् व्रजवदेति व्रिः मायोगे इमोऽभावः माटौ वेति सदा टौ च ॥ ४९ ॥ म०

मामनेत्यादि । रणे महास्त्राणि मा न सावीः मा नः प्रसुहि मा न सुश्चेत्यर्थः षुप्रसवैश्वर्य्ययोरित्यस्य रूपं अरींश्च मा न धावीः मा न कम्पय अपितु भीषयस्वेत्यर्थः पूर्ववदिट् वानरं मा न संयंसीः मा न बधीः यमरमेत्यादिना सगिटौ समुदाङ्भ्यो यम इति तङ् न भवति तत्राकर्मकादिति वर्त्तते यत एवं तस्मादशङ्कितस्तूर्णं व्रज ॥ ५० ॥ ज० म०

मा नेत्यादि । महास्त्राणि मा न सावीर्न न सन्धास्यसि अपितु सन्धानं करिष्यस्येव रणे अरिं शत्रुं मा न धावीर्न न कम्पयिष्यसि अपित्ववश्यमेव वानरं मा न संयंसीः बद्धं न न करिष्यसि अपित्ववश्यमेव तस्मात्त्वं निर्भयः सन् तूर्णं शीघ्रं व्रज गच्छ षुञ्नसन्धाक्लेदपीडामन्थे धुञ्नकम्पे आभ्यां सुस्तुधोः सेरितीम् यमौ उपरतौ संपूर्वो बन्धनार्थः यमरमेति इम्सनौ जिन्ज्रन्तेत्यादौ अग्रन्योत्समायस इति न मं कर्त्तुः

अनंसीच्चरणौ तस्य मन्दिरादिन्द्रजिद् व्रजन्।
गते तस्मिन्नुपारंसीत् संरम्भाद्रक्षसां पतिः॥ ५१॥
इन्द्रजिद्विक्रमाभिज्ञो मन्वानो वानरं जितम्।
संसिस्मयिषमाणोऽगान्मायां व्यञ्जिजिषुर्द्विषः॥ ५२॥

---

फलवत्त्वाभावात् इति रावणोऽवोचदिति पूर्वेण सम्बन्धः॥ ५०॥ भ०

अनमित्यादि। एवमुक्त इन्द्रजित् मन्दिरात् व्रजन् गमिष्यन् वर्त्तमानसामीप्ये वर्त्तमानवदिति लट् तस्य पितुश्चरणावनंसीत् नतवान् पूर्ववत्सगिटौ गते तस्मिन् रक्षसां पतिः रावणः संरम्भात् क्रोधात् उपारंसीत् निवृत्तवान् पूर्ववत्सगिटौ रमेरुपाच्चेति तिप्॥ ५१॥ ज० म०

अनंसीदित्यादि। एवमुक्त इन्द्रजित् मन्दिरात् व्रजन् गच्छन् तस्य रावणस्य चरणौ अनंसीत् प्रणनाम तस्मिन्निन्द्रजिति गते सति रक्षसां पतिः रावणः संरम्भात् क्रोधात् उपारंसीत् निवृत्तः उभयत्र यमरमनमेति इम्सनौ॥ ५१॥ भ०

इन्द्रेत्यादि। वानरं जितं मन्वानोऽवगच्छन् यतो विक्रमाभिज्ञः अगात् गतवान् द्विषः शत्रून् संसिस्मयिषमाणः उपहसितुमिच्छन् पूर्ववत्सन इति तङ् मायां व्यञ्जिजिषुः व्यक्तीकर्त्तुमिच्छुः स्मिपूङ्रञ्ज्वशासनीतीट् तत्राञ्जेर्नन्द्रा इति नकारो न द्विरुच्यते॥ ५२॥ ज० म०

इन्द्रजिदित्यादि। इन्द्रजित् स्वविक्रमाभिज्ञः अतएव वानरं जितमभिभूतं मन्वानो जानन् द्विषः शत्रोः संसिस्मयिषमाणः उपहसितुमिच्छुः सन् मायां व्यञ्जिजिषुर्व्यक्तीकर्त्तुमिच्छुः सन् अगात् गतः स्मिङ्पूङित्यादिना स्मिङोऽनजस्य सन इम् द्विष इति सम्बन्धे षष्ठी॥ ५२॥ भ०

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



जगत् पिपविषुर्वायुः कल्पान्त इव दुर्द्धरः ।
लोकानाशिशिषोस्तुल्यः कृतान्तस्य विपर्य्यये ॥ ५३ ॥
वने चिकरिषोर्वृक्षान् बलं जिगरिषुः कपेः ।
लसद्विचित्रशस्त्रौघः संग्रामो मूर्त्तिमानिव ॥ ५४ ॥

जगदित्यादि । कल्पान्ते युगान्ते वायुरिव दुर्द्धरः जगत् पिपविषुः पवितुमुत्क्षेप्तुमिच्छुः विपर्य्यये विनाशकाले लोकानाशिशिषोः भक्षयितुमिच्छोः कृतान्तस्य तुल्योऽगादिति पूर्वेण सम्बन्धः पूर्ववदिट् ॥ ५३ ॥ ज० म०

जगदित्यादि । कीदृशः जगत् भुवनं पिपविषुः पवितुमुत्क्षेप्तुमिच्छुः कल्पान्ते वायुरिव दुर्द्धरः धर्त्तुमशक्यः विपर्य्यये जगतां विनाशकाले लोकान् आशिशिषोः व्याप्तुमात्मसात्कर्त्तुमिच्छोः कृतान्तस्य यमस्य तुल्यः ईदृश इन्द्रजिदगादिति पूर्वेणान्वयः पूङ्शोधे अशूङ्व्याप्तिसंहत्योः आभ्यां सनः स्मिङ्पूङित्यादिना इम् आशिशिषोर्भक्षयितुमिच्छोरिति केचित् तन्न साधु सूत्रे अशू इत्यूदनुबन्धनिर्देशात् ॥ ५३ ॥ भ०

वने इत्यादि । वने वृक्षांश्चिकरिषोः विक्षेप्तुमिच्छोः कपेर्बलं सामर्थ्यं जिगरिषुः अपनेतुमिच्छुः कृग्रोरुगन्तत्वात् सनि ग्रहगुहोश्चेति प्रतिषेधे प्राप्ते इञ्मनि वेति विकल्पे किरश्च पञ्चभ्य इतीट् किरतेरिटो दीर्घत्वं नेच्छन्तीति न दीर्घः लसन् शोभमानो विविधो बहुप्रकारः शस्त्राणामायुधानामोघः समूहो यस्य स मूर्त्तिमान् शरीरी संग्राम इव इन्द्रजिदगादिति पूर्वेणान्वय इत्यर्थः ॥ ५४ ॥ ज० म०

वने इत्यादि । पुनः कीदृशः वने वृक्षान् चिकरिषोर्विक्षेप्तुमिच्छोः कपेर्बलं सामर्थ्यं जिगरिषुर्भक्षयितुं नाशयितुमिच्छुः लसन् दीप्यमानो विचित्रो नानाविधः शस्त्रसमूहो

रोदिति स्मेव चायाति तस्मिन् पक्षिगणः शुचा ।
मुक्तकण्ठं हतान् वृक्षान् बन्धून् बन्धोरिवागमे ॥ ५५ ॥
आश्वसीदिव चायाति तद्वेगपवनाहतम् ।
विचित्रस्तवकोद्भासि वनं लुलितपल्लवम् ॥ ५६ ॥

---

यस्य मूर्त्तः संग्राम इव इन्द्रजिदगादिति पूर्वेण सम्बन्धः कृषविच्छेपि गृधनिगरस्रे आभ्यां सनः पूर्ववदिम् ॥ ५४ ॥ भ०

रोदीत्यादि। तस्मिन्निन्द्रजिति आयात्यागच्छति सति पक्षिगणः हतान् वृक्षान् कपिनाशितान् शुचा शोकेन मुक्तकण्ठं सशब्दं नामग्राहं रोदिति स्मेव रुदितवानिव नामग्रहणपूर्वया रोदनक्रियया व्याप्यमानत्वात् वृक्षाणां कर्मसंज्ञा रुदादिभ्य इतीट् बन्धून् बन्धोरिव यथा बन्धोरागमने कश्चित् बन्धून् रोदिति ॥ ५५ ॥ ज० म०

रोदितीत्यादि। तस्मिन्निन्द्रजिति आयाति आगच्छति सति पक्षिगणः शुचा शोकेन मुक्तकण्ठं सशब्दं यथा स्यात्तथा हतान् हनूमता विनाशितान् वृक्षान् रोदिति स्मेव क्रन्दति स्मेव यथा बन्धोरागमने लोको हतान् बन्धून् रोदिति सशब्दरोदनक्रियायां रुदिः सकर्मकः रुङ्गोऽयोहस्येतीम् हनलौ गतौ वधे औदित्त्वान्नेम् ॥ ५५ ॥ भ०

आश्वेत्यादि। तस्मिन्नायाति वनं तद्वेगपवनाहतं सत् आश्वसीदिव सञ्जीवितमिव खडि रूपं यतो विचित्रस्तवकोद्भासि लुलितपल्लवञ्च जातं पूर्ववदिट् ॥ ५६ ॥ ज० म०

आश्वसीदित्यादि। तस्मिन्नायाति सति वनञ्च आश्वसीदिव सञ्जीवितमिव श्वसप्लुप्राणने घी रुदाद्यस्तीति ईम्। कीदृशं तस्य हनूमतो वेगवायुना आहतम् आश्वस्ततामाह

न प्राणिषि दुराचार ! मायानामीशिषे न च ।
नेडिषे यदि काकुत्स्थं तमूचे वानरो वचः ॥ ५७ ॥

इतीडधिकारः ।

ससैन्यश्छादयन् संख्ये प्रावर्त्तिष्ट तमिन्द्रजित् ।
शरैः क्षुरप्रैर्मायाभिः शतशः सर्वतो मुहुः ॥ ५८ ॥

---

विचित्रेण स्तवकेनोल्लासमानं शयहादित्वान्नेम् लुलितं मनोहरं पल्लवं यस्य तत् तथा ॥ ५६ ॥ भ०

न प्रेत्यादि । वानरस्तमागच्छन्तमिदं वचनमूचे हे दुराचार ! न प्राणिषि न जीवसि अनघेत्यस्य रूपं पूर्ववदिट् अनितेरिति णत्वं न च मायानामीशिषे नेशिता भवसि ईशः स इति ईट् अधीगर्थेति कर्मणि षष्ठी यदि काकुत्स्थं नेडिषे न स्तौषि ईडजनोर्ध्वे चेति चकारात् सेचेतीट् ॥ ५७ ॥ ज० म०

इतीडधिकारः ।

न प्रेत्यादि । वानरो हनूमान् तमिन्द्रजितं वच ऊचे । किं वच इत्याह हे दुराचार ! त्वं काकुत्स्थं यदि नेडिषे न स्तौषि तदा न प्राणिषि न जीवसि न च मायानामीशिषे मायानामीश्वरो न भविष्यसि माया यथेष्टं न च विनियोक्ष्यसे इति वा कर्मणि षष्ठी धातूनामनेकार्थत्वात् विनियोगार्थता वर्त्तमानसामीप्येऽपि वर्त्तमानवद्विवक्ष्यत इति न्यायात् सर्वत्र लौ अनघ्लुप्राणने रुदादिभ्योऽय इति इम् ईडलङ्स्तुतौ आभ्यां सध्वोरस्येमिति इम् ॥ ५७ ॥ भ०

इतीडधिकारः ।

इदानीं विसर्जनीयस्य स इत्यधिकृत्याह, सेत्यादि । इन्द्रजित् ससैन्यः सबलः तं वानरं सर्वतः शरैः क्षुरप्रैः भल्लैः छादयन् मुहुः क्षणं मायाभिः शतशोऽनेकधा संख्ये प्रावर्त्तिष्ट

वानरः कुलशैलाभः प्रसह्यायुधशीकरम् ।

---

प्रवृत्तः लुङि रूपं तत्र ससैन्यश्छादयन् इति विसर्जनीयस्य स इति सत्वं छकारे परे श्चुत्वं शरैः क्षुरप्रैरिति सत्वापवादः शर्परे खरि विसर्जनीयस्य विसर्जनीयः विसर्जनीयस्य विकारनिवृत्त्यर्थः मायाभिः शतशः सर्वत इति वाशरीति विकल्पः विसर्जनीयः सकारो वा ॥ ५८ ॥ ज० म०

अतः परं विसर्जनीयसत्वाधिकारः । सकारपदमादेशमात्रोपलक्षणं लभते विसन्ध्यधिकारः । ससैन्य इत्यादि । इन्द्रजित् ससैन्यः सैन्यैः सह शरैः क्षुरप्रैश्च सर्वतो मुहुर्वारं वारं तं वानरं छादयन् संख्ये युद्धे मायाभिः शतशः शतं शतं वारान् प्रावर्त्तिष्ट प्रवृत्तः ससैन्यश्छादयन्नित्यत्र वेः सोऽपसन्तेच्छते इति विसर्गस्य सः स्तुश्चुभिरिति तालव्यत्वं शरैः क्षुरप्रैरित्यत्र कखपफयोर्मुन्याविल्यस्य न विषयः अशमन्त इत्यस्यानुवर्त्तनात् विभक्तिव्यत्ययेन अशसन्तयोरिति कखपफयोर्विशेषणात् परे तु शषपरयोः ख्याञि च न स्यादिति जिह्वामूलीयनिषेधं षस्परयोर्न स्यादित्यनेन उपध्मानीयनिषेधश्चाह: क्षुरप्रैर्मायाभिरित्यत्र रिचोऽवे इति विसर्गस्य रेफः यद्यपि रवे इति कृते इष्टसिद्धिः स्यात्तथापि इच इति कृतस्य साफल्यमाह देवीदासचक्रवर्त्ती यथा क्वचिदपवादविषयेऽप्युत्सर्गोऽपि प्रवर्त्तत इति न्यायात् अभोभगोऽघोभ्योऽवे लुवित्यादिसूत्रविषये प्रवृत्त्याशङ्कानिरासः तेन हि न्यायेन दधिना पतिनेत्यादिसिद्धं मायाभिः शतश इत्यत्र शसिशसित्यस्य विषयः सर्वतो मुहुरित्यत्र अतोऽड्व्युरित्यस्य विषयः ॥ ५८ ॥ भ०

वानेत्यादि । वानरः कुलशैलाभः संग्रामे स्थिरत्वात्

रक्षस्पाशान् यशस्काम्यंस्तमस्कल्पानदुद्रुवत् ॥ ५९ ॥
धनुष्पाशभृतः संख्ये ज्योतिष्कल्पोऽर्ककेशरः ।

आयुधं शीकरमिव नैरन्तर्य्येण पतनात् प्रसह्याभिभूय कुःपौः कःप्वौ चेति जिह्वामूलीयोपाध्मानीयौ रक्षस्पाशान् कुत्सितराक्षसान् पाय्येपाशपस्वार्थिका अपि प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते यशस्काम्यन् आत्मनो यश इच्छन् अत्र तकारे परतोनश्छव्यप्रशानिति नुत्वं विसर्जनीयसकारौ च पूर्वस्यानुनासिकः तमस्कल्पान् ईषदसमाप्ततमसः कुःप्वोरपवादः सोपदादाविति सकारः तत्र पाशकल्पकाम्येष्विति परिगणनं अदुद्रुवत् ढौकते स्म णिश्रीत्वादिना चङ् ॥ ५९ ॥ ज० म०

वानर इत्यादि । वानरः कुलपर्वततुल्यः क्लेशरहितत्वात् आयुधं शीकरमिव नैरन्तर्य्येण पतनात् प्रसह्य सोढ्वा रक्षस्पाशान् कुत्सितरक्षांसि अदुद्रुवत् ढौकते स्म द्रावितवानित्यर्थः द्रुगतौ टौ णिश्रिश्रुद्रुकम इति अङ् । कीदृशः यशस्काम्यन् आत्मनो यश इच्छतीति खेः काम्यक् स्वेच्छायामिति काम्यक् ततः शतः । कीदृशान् तमस्कल्पान् अन्धकारतुल्यान् त्यादेश्चोने इति कल्पः कुत्सितानि रक्षांसि रक्षस्पाशाः पाशः कुत्सायामिति पाशः पुंस्त्वमभिधानात् राजानमिच्छति राजीयतीत्यादिषु नोलुप्फेधावित्यनेनैवेष्टसिद्धौ नलोपार्थं नलोपः क्यङे इति कृतं ज्ञापयति लुप्तविभक्तिकस्य विरामाश्रितकार्य्यस्यानित्यमिति तेन रक्षस्पाशादिषु विसर्गाभावः किंवा रक्षस्पाशादयो मनीषादित्वात् सिद्धाः किंवा सेतुकखपफे वेत्यस्य योगविभागात् वाशब्दस्य व्यवस्थावाचित्वाच्च पाशकाम्यकल्पेषु विसर्गस्य नित्यं सकारः ॥ ५९ ॥ भ०

धनुरित्यादि । धनुष्पाशभृतः कुत्सितधनुर्धरान् राक्षसान्

दुधाव निर्नमस्कारान् राक्षसेन्द्रपुरस्कृतान् ॥ ६० ॥
स्वामिनो निष्क्रयं गन्तुमाविष्कृतबलः कपिः ।
रराज समरे शत्रून् घ्नन् दुष्कृतवहिष्कृतः ॥ ६१ ॥

---

ज्योतिष्कल्पोरुकेशरः अग्नितुल्यबृहत्सटो वानरः इणः ष इति पाशादिष्वेव विसर्जनीयस्य षत्वं दुधाव कम्पितवान् यस्मान्निर्नमस्कारान् अप्रणामान् राक्षसेन्द्रेणेन्द्रजिता पुरस्कृतान् अग्रतः स्थापितान् नमस्पुरसोर्गत्योरिति विसर्जनीयस्य सकारः इण उत्तरस्य तु विसर्जनीयस्य स एवाधिक्रियते तत्र नमःशब्दस्य साक्षात्प्रभृतिषु पाठात् पुरःशब्दस्य पुरोऽव्ययमिति गतिसंज्ञा ॥ ६० ॥ ज० म०

धनुरित्यादि। वानरः संख्ये युद्धे तान् राक्षसान् दुधाव कम्पितवान् धुनञ्कम्पे ठौ कीदृशान् धनुष्पाशभृतः निन्दितधनुर्द्धरान् पूर्ववत्पाशः निर्नमस्कारान् नमस्कारवर्जितान् अप्रशस्तानित्यर्थः राक्षसेन्द्रपुरस्कृतान् इन्द्रजिताऽग्रतः स्थापितान्। कीदृशः ज्योतिस्कल्पोरुकेशरः अग्नितुल्यवर्णविपुलसटः पूर्ववत् कल्पः सर्वत्र पूर्ववत् विसर्गाभावः वेः सकारो वा तस्येणात्परस्य सस्य षत्वमभिनिष्पतन्त्य इत्यत्र व्याख्यातम् ॥ ६० ॥ भ०

स्वामीत्यादि। स्वामिनः सुग्रीवस्य निष्क्रयमानृण्यं गन्तुं शत्रून् घ्नन् विनाशयन् कपिः समरे रराज आविस्कृतबलः प्रकटितसामर्थ्यः दुष्कृतवहिष्कृतः दुष्कृतं पापं वहिष्कृतमनेनेति वाहिताग्न्यादिषु द्रष्टव्यं सर्वत्र इउदुपधस्य चेत्यनेनाप्रत्ययविसर्जनीयस्य षत्वम् ॥ ६१ ॥ ज० म०

स्वामीत्यादि। कपिः समरे संग्रामे शत्रून् घ्नन् विनाशयन् रराज दीप्यते स्म कीदृशः स्वामिनः सुग्रीवस्य निष्क्रय-

चतुष्काष्ठं क्षिपन् वृक्षान् तिरस्कुर्वन्नरीन् रणे ।
तिरष्कृतदिगाभोगो ददृशे बहुधा भ्रमन् ॥ ६२ ॥
द्विष्कुर्वतां चतुष्कुर्वन्नभिघातं नगैर्द्विषाम् ।
वहिष्करिष्यन् संग्रामाद्रिपून् ज्वलनपिङ्गलः ॥ ६३ ॥

---

मानृष्यं गन्तुं आविष्कृतं प्रकाशितं बलं सामर्थ्यं येन तादृशः दुष्कृतेन पापेन वहिष्कृतस्त्यक्तः निष्पाप इत्यर्थः दुष्कृतं वहिष्कृतं येनेति वा पूर्वनिपातस्यानियमात् क्वचित् क्तान्तस्य परनिपातः आहिताग्न्यादिर्वेति परः दुर्निराविर्वहिःप्रादुश्चतुरां षः कखपफे इति परसूत्रदर्शनात् निष्क्रयादिषु से तु कखपफे वेत्यस्य वाशब्दस्य व्यवस्थावाचित्वात् नित्यं सकारो बोध्यः विकल्पेऽपि न क्षतिः दुःखं दुष्खञ्चेति द्विरूपदर्शनात् मूर्द्धन्यषत्वं पूर्ववत् ॥ ६१ ॥ भ०

चतुरित्यादि। चतस्रः काष्ठा दिशो यस्मिन् क्षेपण इति क्रियाविशेषणं पूर्ववत् षत्वं चतसृषु दिक्षु वृक्षान् रणे भ्रमन् एकोऽपि बहुधा ददृशे दृष्टः कपिः क्षिपन्निति तौदादिकः अरींस्तिरस्कुर्वन् अभिभवन् तिरष्कृतदिगाभोगः अपनीतदिग्विस्तरः तिरसोऽन्यतरस्यामिति पक्षे षत्वम् ॥ ६२ ॥ ज० म०

चतुरित्यादि। स एकः कपिः रणे भ्रमन् बहुधा ददृशे जनैरित्यर्थात्। किं कुर्वन् चतुष्काष्ठं वृक्षान् क्षिपन् चतस्रः काष्ठा दिश आधारत्वेन यस्मिन् क्षेपणे क्रियाविशेषणमिदं चतसृषु दिक्षु वृक्षान् क्षिपन्नित्यर्थः अरीन् शत्रून् तिरस्कुर्वन् अभिभवन् तिरष्कृतदिगाभोगः आच्छादितदिग्विस्तरः पूर्ववद्विभाषया विसर्गस्य सकारः ॥ ६२ ॥ भ०

द्विष्कुर्वत्यादि। असौ कपिराटीदिति वक्ष्यमाणेन सम्बन्धः कीदृशः द्विष्कुर्वतां द्वौ वारावभिघातं कुर्वतां द्विषां चतुष्कुर्वन्

ज्योतिष्कुर्वन्निवैकोऽसावाटीत् संख्ये परार्द्ध्यवत् ।
तमनायुष्करं प्राप शक्रशत्रुर्धनुष्करः ॥ ६४ ॥

---

चतुरो वारान् नगैर्वृक्षैरभिघातं कुर्वन् द्विस्त्रिश्चतुरिति कृत्वोऽर्थे इति विसर्जनीयस्य वा षत्वं अरीन् संग्रामाद्वहिष्करिष्यन् अपनेष्यामीति इसुसोः सामर्थ्ये इति विसर्जनीयस्य षत्वं पक्षे सामर्थ्यं चात्र इग्रपेक्षानैकार्थीभावः वहिष्करिष्यन्निति द्वयोः परस्परव्यपेक्षत्वात् ॥ ६३ ॥ ज० म०

द्विरित्यादि । असौ कपिराटीदित्यग्रिमश्लोकेनान्वयः । किं कुर्वन् द्वौ वारौ अभिघातं कुर्वतां द्विषां नगैः पर्वतैश्चतुरो वारान् अभिघातं कुर्वन् द्विस्त्रिश्चतुःकृत्वोऽर्थे इति सूत्रेण विभाषया कस्कादित्वाद्रूपद्वयमिति परः स्वमते हस्तेपाणा-वित्यादिना साक्षादादित्वात् वा समासः। समासे सेतु कखेति रूपद्वयं निर्विरोधं एवमसमासेऽपि कखपफे वेत्यस्य योग-विभागः कार्य्यः समासपक्षे षत्वं व्याख्यातमेव असमासेऽपि किलादित्यस्य योगविभागात् षत्वं मनीषादित्वाद्वा संग्रामात् अरीन् शत्रून् वहिष्करिष्यन् पूर्ववत् वेः सः षत्वञ्च ज्वलनवत् वह्निवत् पिङ्गलः ॥ ६३ ॥ भ०

ज्योतिरित्यादि । एकोऽपि ज्वलनपिङ्गलः ज्योतिष्कुर्व-न्निव अग्निं दीपयन्निव पूर्ववत् पक्षे विसर्जनीयस्य षः परार्द्ध्य-वत् दिव्य इव परार्द्धो द्युलोकः ब्रह्माण्डसम्बन्धिन ऊर्ध्वभा-गस्योत्कृष्टत्वात् तत्र भव इति परावराधमेति यत् संख्ये संग्रामे आटीत् परिचक्राम इट इटीति सिचो लोपः तं वानर-मनायुष्करं प्राणापहारिणं शक्रशत्रुरिन्द्रजित् प्राप प्राप्तवान् धनुष्करः धनुः करे यस्येति नित्यं समासेत्यादिना षत्वम् ॥६४॥ ज० म०

अस्यन्नरुष्करान् बाणान् ज्योतिष्करसमद्युतिः ।
यशस्करो यशस्कामं कपिं बाणैरताडयत् ॥ ६५ ॥
चकाराधस्पदं नासौ चरन् वियति मारुतिः ।
मर्माविद्भिस्तमस्काण्डैर्विध्यमानोऽप्यनेकधा ॥ ६६ ॥

इति सत्वाधिकारः ।

---

ज्योतिरित्यादि। एकोऽसौ कपिः संख्ये परार्द्ध्यवत् अत्युत्कृष्टसंख्याविशेषावच्छिन्नवत् ज्योतिष्कुर्वन् आटीत् परिचक्राम परार्द्ध्यवत् दिव्यवदिति जयमङ्गला तं कपिं शक्रशत्रुरिन्द्रजित् प्राप। कीदृशं न आयुः करोतीत्यनायुष्करम् कीदृशः धनुः करे यस्य स तथा पूर्ववद्वेः सः षत्वञ्च इसुसन्तयोः कखपफयोर्नित्यमिति परः ॥ ६४ ॥ भ०

अस्यन्नित्यादि। बाणानरुष्करान् व्रणजनकान् दिवाविभेत्यादिना टः अस्यन् क्षिपन् ज्योतिष्करसमद्युतिः ज्योतिष्करणशीलः आदित्यः कृञोहेत्वित्यादिना टः तेन तुल्य इत्यर्थः पूर्ववत् षत्वं यशस्करो यशोजननशीलः इन्द्रजित् यशस्कामं यशसि कामोऽस्येति तं कपिं बाणैरवाकिरत् अताडयत् अतः कृकमीत्यादिना न व्ययविसर्जनीयस्य सत्वम् ॥ ६५ ॥ ज० भ०

अस्यन्नित्यादि। इन्द्रजिदरुष्करान् व्रणजनकान् बाणान् अस्यन् क्षिपन् बाणैः कपिमताडयत् ज्योतिष्करस्य सूर्यस्य समा द्युतिर्यस्य यशस्करो यशोजननशीलः। कीदृशं कपिं यशस्कामं यशसि कामो यस्य सर्वत्र पूर्ववद्वेः स इणात् षत्वञ्च अरुर्ज्योतिर्यशश्च करोतीति स्कुष्टः ॥ ६५ ॥ भ०

चकारेत्यादि। असौ मारुतिर्वियति चरन् अधस्पदं पृथिव्यां पदं न चकार। अधस्पदमिति मयूरव्यंसकादित्वात्सः

पुरुहूतद्विषो धूर्षु युक्तानच्चस्य वाजिनः।
आयूंषि त्वक्षु निर्भिद्य प्राभञ्जनिरमोचयत्॥ ६७॥

कस्कादिषु चेति षत्वं मर्माणि विध्यन्तीति क्विप् नहिवृती-त्यादिना पूर्वपदस्य दीर्घत्वम् ॥६६॥ ज० म०

इति षत्वसत्वाधिकारः।

चकारेत्यादि । असौ मारुतिर्हनूमान् वियति आकाशे चरन् मर्माणि विध्यद्भिः कालायसघटितत्वात् तमस्तुल्यैः काण्डैः शरैरनेकधा विध्यमानस्ताड्यमानोऽपि अधस्पदं पृथिव्यां पदं न चकार पूर्ववद्वेः सः अधःशिरसोः पदे तमसस्तु काण्डे नित्यं विसर्गस्य सकारः इति परः॥ ६६ ॥ भ०

इति विसर्जनीयसत्वाधिकारः।

इतः प्रभृति अपदान्तस्य मूर्द्धन्य इत्यधिकृत्याह पुरुहूते-त्यादि। पुरुहूतद्विषः इन्द्रजितः सम्बन्धिनो यानस्य रथस्य धूर्षु युक्तान् वाजिनः त्वक्षु चर्मसु निर्भिद्य प्राभञ्जनि-र्मारुतिरायूंषि जीवितानि अमोचयत् त्याजितवान् धूर्षु त्वक्ष्विति आदेशप्रत्यययोरिति षः प्रत्ययसकारत्वात् तत्र हि इण्कोरिति वर्त्तते परेण च णकारेण प्रत्याहारः आयूंषीति नुम् विसर्जनीयेत्यादिना सहेः साटः स इति छन्दोविषयत्वा-न्नोदाहृतं ततः छन्दसि सह इति ख्विप्रत्ययस्य विधानात् एवञ्च पृतनाषाड्द्विष इति पाठान्तरमयुक्तम्॥ ६७ ॥ज० म०

अथ मूर्द्धन्यषत्वाधिकारः। पुरुहूतेत्यादि। प्रभञ्जन-स्यापत्यं हनुमान् पुरुहूतद्विषः शक्रशत्रोर्मेघनादस्य यानस्य रथस्य धूर्षु भारेषु युक्तान् वाजिनोऽश्वान् त्वक्षु चर्मसु निर्भिद्य आयूंषि अमोचयत् त्याजयामास घोऽऔजेरिति सूत्रे उप-सर्जनीभूतार्था अपि शब्दार्थादयो गृह्यन्ते इति तु शाब्दर्ष-

सुषुपुस्ते यदा भूमौ रावणिः सारथिं तदा ।
आहर्त्तुमन्यानशिषत् प्रोषितत्रासकर्कशः ॥ ६८ ॥
प्रतुष्टुषुः पुनर्युद्धमासिषञ्जिषिषुर्भयम् ।

योर्निवहो: प्रतिषेधेन ज्ञापितं तेन वाजिनां प्रयोज्यानां कर्मत्वं अत्र हि सुचिर्मुक्तिपूर्विकायां गतौ वर्त्तते अतएवा-मोचयत् मोचनेन भवान्तरसगमयदित्यर्थः किलादित्यादिना धूष्विंत्यत्र रेफात् आयूंषीत्यत्र नुवि व्यवधानेऽपि त्वच्चि-त्यत्र ककारात् सस्य षत्वं पुरुहृतेत्यत्र पृतनाषाडिति कचि-त्पाठः ॥ ६७ ॥ भ०

सुष्विल्यादि । ते यदा भूमौ सुषुपुः निपेतुः आदेशसकार-त्वात् पूर्ववत् षत्वं तदा रावणिरन्यानश्वानाहर्त्तुमानेतुं सार-थिमशिषत् आदिष्टवान् सर्त्तिशास्त्यर्त्तिभ्यश्चेत्यङ् शासइदङ्हलोरिति इकारः शासिवसीति षत्वं प्रोषितत्रासः प्रोषितादूरादुपगत-भयः कर्कशश्च रौद्रः प्रोषित इति यजादित्वात् सम्प्रसारणं षत्वं पूर्ववत् ॥ ६७ ॥ ज० म०

सुषुपुरित्यादि । ते वाजिनो यदा भूमौ सुषुपुः निषेदुः ञिष्वपो शये स्वाद्यादिषु इति मूर्द्धन्यस्य दन्त्यत्वं ततः किलादिति सस्य कृतत्वात् षत्वं तदा तस्मिन् काले रावण-स्यापत्यमिन्द्रजित् अन्यानश्वानाहर्त्तुं सारथिं अशिषत् आदि-ष्टवान् । कीदृशः प्रोषितोऽपगतस्त्रासो यस्येति बहुव्रीहिः स चासौ कर्कशश्चेति पश्चात्कर्मधारयः प्रोषितत्रासेन कर्कशो वा शास्तेः शाशलिदुद्युदिति ङः शासुङिति इत् वसेः त्रुधवसेति क्तस्य इम् यहस्वपाद्योरिति ञिः किलादित्यादौ शासवस्इति षत्वम् ॥ ६८ ॥ भ०

प्रत्वित्यादि । अश्वा आनीता इति पुनरपि युद्धं प्रतुष्टुषुः

आतस्थौ रथमात्मीयानुत्सिसाहयिषन्निव ॥ ६९ ॥
बलान्यभिषिषिचन्तं तरुभिः कपिवारिदम् ।
विजिगीषुः पुनश्चक्रे व्यूहं दुर्जयमिन्द्रजित् ॥ ७० ॥

---

प्रस्तोतुमारब्धुमिच्छुः सन् अज्झनगमां सनीति दीर्घः सनाशंसभिक्षउः नलोकेति षष्ठीप्रतिषेधः रथमातस्थौ आरूढवान् भयमासिषञ्जयिषुः संश्लेषयितुमिच्छुः हनूमता तत्र स्तौतेः सनि षत्वभूते सञ्जेश्च स्तौतिण्योरिति अभ्यासादुत्तरस्य षत्वं आत्मीयान् भृत्यानुत्सिसाहयिषन्निव उत्साहयितुमिच्छन्निव युध्यध्वमिति स्तौतीत्यादिना षत्वे प्राप्ते सः स्विदित्यादिना षकारस्य सत्वम् ॥ ६९ ॥ ज० म०

प्रतुष्टुषुरित्यादि। इन्द्रजित् पुनः सज्जीभूतं रथमातस्थौ आश्रितवान्। कीदृशः युद्धं प्रतुष्टुषुः प्रस्तोतुमारब्धुमिच्छुः भयं आसिषञ्जयिषुः हनूमतो भयमासञ्जयितुं संश्लेषयितुं इच्छुः आत्मीयान् अनुचरान् उत्सिसाहयिषन्निव उत्साहयितुमिच्छन्निव जिस्वोः स्वेरित्यादिना षत्वभूते सनि स्वेः षत्वं तत्रैव सहवर्जनात् उत्सिसाहयिषन्नित्यत्र न षत्वम् ॥ ६९ ॥ भ०

बलेत्यादि। कपिवारिदं कपिं वारिदमिव बलान्यभिषिषिचन्तं तरुभिः अभिषेक्तुं छादयितुमिच्छन्तं स्थादिष्वभ्यासेत्यादिना तु सकारस्याभ्याससकारस्य च षत्वं तमेवंविधं कपिं विजिगीषुर्विजेतुमिच्छुः इन्द्रजित् सन्लिटोर्जेति कुत्वं पुनर्व्यूहं बलसन्निवेशं दुर्जयाख्यं चक्रे हस्त्यश्वादिसैनिकानां मण्डलस्थित्या विरच्यते ॥ ७० ॥ ज० म०

बलानीत्यादि। तरुभिर्बलानि अभिषिषिचन्तं छादयितुमिच्छन्तं अतएव कपिं वारिदमिव जेतुमिच्छुरिन्द्रजित् पुनर्व्यूहं बलविन्यासं चक्रे दुर्जयं जेतुमशक्यं व्यूहस्य कपेर्वा

अभिष्यन्तः कपिं क्रोधादभ्यषिञ्चन्निवात्मनः ।
सम्प्रहारसमुद्भूतैरक्तैः कोष्णैरसुस्रुतैः ॥ ७१ ॥
संग्रामे तानधिष्ठास्यन् निषद्य पुरतोरणम् ।
अविषीदन्नवष्टब्धान् व्यष्टब्धान्नरविष्वणान् ॥ ७२ ॥

---

विशेषणं अभिपूर्वसिचः सनः षत्वे ञिस्त्वोः खेरिति नियमेन क्विलादित्यादिना गीक इत्यादिना च प्राप्तं षत्वं बाध्यते प्रकृतेर्बाधितत्वात् गीक इत्यादिना खेः सकारस्यापि न षत्वमिति केचित् ञिस्त्वोः खेरित्यनेन खिनिमित्तं षत्वं बाध्यते तेन प्रकृतेः सस्य न षत्वं खेस्तु गीक इत्यादिना षत्वं भवत्येवेति केचित् । वस्तुतस्तु षत्वभूते सनि खिनिमित्तस्यैव षस्य निषेधः न तु गिनिमित्तस्य तेनोभयत्र गीक इति षत्वम् ॥ ७० ॥ भ०

अभीत्यादि । राक्षसाः क्रोधादात्मनोऽभिष्यन्तः अन्तं नयन्तः षोऽन्तकर्मणीत्यस्य शतरि ओतः श्यनीत्योकारलोपः उपसर्गादिति षत्वं सम्प्रहारसमुद्भूतैः रक्तैः कोष्णैरीषदुष्णैः असुस्रुतैः व्रणान्निर्गतैः कपिमभ्यषिञ्चन्निव अभिषिक्तवन्त इव लङि रूपं प्राक्सितादड्व्यवायेऽपीति षत्वम् ॥ ७१ ॥ ज० म०

अभीत्यादि । राक्षसाः क्रोधादात्मनो अभिष्यन्तोऽन्तं नयन्तः सम्यक् प्रहारजातैः ईषदुष्णैर्व्रणच्युतैः रक्तैः कपिं अभ्यषिञ्चन्निव अभिषिक्तवन्त इव षोयनाशे शद्धः अभिषोसिचोर्गीकः स्तुस्तुभषो इत्यादिना षत्वम् ॥ ७१ ॥ भ०

संग्रामे इत्यादि । ये प्राणिनः अभिषिञ्चन्ति तान्नरविष्वणान् राक्षसान् संग्रामे अधिष्ठास्यन् अस्वतन्त्रीकरिष्यन् कपिः उपसर्गादिति षत्वं पुरतोरणं पुरद्वारं व्यष्टब्धात् आश्रितवान् निषद्य तत्रैव पुरतोरणे स्थित्वा प्राणिनो मा प्रविक्षुरिति

विषह्य राक्षसाः क्रुद्धाः शस्त्रजालमवाकिरन्।
यन्न व्यषहतेन्द्रोऽपि कपिः पर्य्यषहिष्ट तत्॥ ७३॥

---

अविषीदन् विषादमगच्छन् निषद्य विषीदन्निति सदिरप्रतेरिति षत्वम् अवष्टब्धान् अविदूरान् अवाच्चालम्बनाविदूर्य्ययोरिति षत्वं व्यष्टभ्नादिति अड्व्यवाये वेस्तम्भेरिति षत्वं स्तम्भुस्तुन्भु इत्यादिना श्नाप्रत्ययः सशब्दायामभ्यवहारक्रियायां स्वनतिर्वर्त्तते नराणां विष्वणा इति सः नरान् सशब्दमभ्यवहरन्त इत्यर्थः वेश्चस्वनोऽसभोजन इति षत्वम्॥ ७२॥ ज० म०

संग्रामे इत्यादि। हनूमान् संग्रामे निषद्य स्थित्वा अविषीदन् विषण्णो न भवन् तान् राक्षसान् अधिष्ठास्यन् अभिभविष्यन् पुरतोरणं पुरीवहिर्द्वारं व्यष्टभ्नात् आक्रान्तवान् पुरतोरणमधिष्ठास्यन् तान् व्यष्टभ्नादिति वा। कीदृशान् अवष्टब्धान् निकटस्थान् ऊर्जितवान् वा नरविष्वणान् मनुष्यं भुञ्जानान् अधिस्थानिविषदविस्तम्भान्नार्थविस्वानां गौक इत्यादिना षत्वं अवष्टब्धानिति गौक इत्यादौ अवस्वनेत्यस्य योगविभागार्थात् क्वचिदन्नार्थादन्यत्रापि षत्वं मनीषादित्वाद्वा अवात् स्तम्भेरोर्जित्याश्रयनिकटभोजनेष्विति परः॥ ७२॥ भ०

विषेत्यादि। विषह्य सोढ्वा कपिचेष्टितमित्यर्थात् सात्पदाद्योरिति प्रतिषेधे प्राप्ते परिनिविभ्य इति षत्वं राक्षसाः क्रुद्धाः शस्त्रजालमवाकिरन् विक्षिप्तवन्तः लङि रूपं यच्च शस्त्रजालमिन्द्रोऽपि न व्यषहत न सोढवान् सः लङि रूपं तत्कपिः पर्य्यषहिष्ट लुङि रूपं सहेः सिवादीनामित्यादिना विभाषा षत्वम्॥ ७३॥ ज० म०

विषह्येत्यादि। राक्षसा विषह्य सोढ्वा हनूमतः प्रहारमित्यर्थात् क्रुद्धाः सन्तः शस्त्रजालं शस्त्रसमूहं नैरन्तर्य्येण सर्वतो-

विष्यन्दमानरुधिरो रक्तविस्यन्दपाटलान् ।
विष्कन्तॄन् परिघेणाहन्नविस्कन्ता कपिर्द्विषः ॥ ७४ ॥
मेघनादः परिष्कन्दन् परिस्कन्दन्तमाश्वरिम् ।
अबध्नादपरिस्कन्दं ब्रह्मपाशेन विस्फुरन् ॥ ७५ ॥

---

विक्षेपात् जालमिव अवाकिरन् विच्छिन्नवन्तः घ्यां रूपं यत् शस्त्रजालं इन्द्रोऽपि न व्यषहत न विसोढवान् कपिस्तत् शस्त्रजालं पर्य्यषहिष्ट परिसोढवान् घ्यां रूपं विषह्येत्यत्र गीक इत्यादिना षत्वं व्यसहतेत्यत्र पर्य्यसहिष्टेत्यत्र च निविपरि-सन्जेत्यादिना पाक्षिकषत्वम् ॥ ७३ ॥ भ०

विष्येत्यादि । विष्यन्दमानरुधिरः क्षरद्रक्तः कपिः परिघेणाहन् ताडितवान् द्विषः शत्रून् रक्तविस्यन्दप्राटलान् रक्तस्रुतिलोहितान् अनुपर्य्यभिनिविभ्यः स्यन्दतेरिति विभाषाषत्वं रक्तस्याप्राणित्वात् विष्कन्तॄन् विविधं स्कन्तुं गन्तुं शीलमेषा-मिति तृन् अविस्कन्ता कपिः अगमनशीलः स्थानशील इत्यर्थः वेः स्कन्देरनिष्ठायामिति विभाषाषत्वम् ॥ ७४ ॥ ज० म०

विष्येत्यादि । कपिर्द्विषः शत्रून् परिघेण अहन् ताड़ित-वान् । कीदृशः विष्यन्दमानरुधिरः क्षरद्रक्तः अविस्कन्ता अवि-चलनशीलः कीदृशान् रक्तविस्यन्दप्राटलान् रक्तस्रुतिलोहितान् विष्कन्तॄन् विविधगतिशीलान् स्यन्दूङ्स्रवणे स्कन्दिरो शोषणे गत्यां अनयोः सस्य विस्कम्भानिर्वविस्वित्यादिना पक्षे षत्वं स्यन्देः कर्तृ रक्तं तेनाप्राणिकर्तृकत्वं स्कन्देस्तृन् झप-झसोरिति दस्य तः सवर्गात् सवर्गस्य सवर्गे लुग्वेति सूत्रेण पक्षे दलोपमाहुः परे स्वमते मनीषादित्वात्तद्रूपमपि ॥७४॥भ०

मेघेत्यादि । मेघनाद इन्द्रजित् परिष्कन्दन् परितो भ्रमन् परिस्कन्दन्तं परिभ्रमन्तमरिं कपिं ब्रह्मपाशेन ब्रह्मणा दत्तेन

विस्फुलङ्गिर्गृहीतोऽसौ निष्फुलः पुरुषाशनैः ।
विष्कम्भितुं समर्थोऽपि नाचलद् ब्रह्मगौरवात् ॥ ७६ ॥
क्षषीढ्वं भर्त्तुरानन्दं मा न प्रोढ्वं द्रुतं वियत् ।
वानरं नेतुमित्युच्चैरिन्द्रजित् प्रावदत् स्वकान् ॥ ७७ ॥

---

पाशेन शीघ्रमबध्नात् बद्धवान् लङि आप्रव्यये रूपं परेश्वेति वा षत्वं अपरिस्कन्दं अवाच्यभरतत्वात् तेन परिस्कन्दः प्राच्यभरतेष्विति निपातनं विस्फुरन् दर्पादुद्गच्छन्नित्यर्थः स्फुरति-स्फुलत्योरिति विभाषाषत्वम् ॥ ७५ ॥ ज० म०

मेघेत्यादि । मेघनाद इन्द्रजित् परिष्कन्दन् परितो भ्रमन् परिस्कन्दन्तं परितो भ्रमन्तमरिं हनूमन्तं ब्रह्मपाशेन आशु शीघ्रं अपरिस्कन्दं निश्चलं यथा स्यात्तथा अबध्नात् बद्धवान् न विद्यते परिस्कन्दश्चलनं यस्मात् बन्धनात् क्रियाविशेषणं अरेर्विशेषणमिति केचित् । विस्फुरन् कोपात् हर्षाद्वा कम्पमानः परिस्कन्दविस्फुरोः सस्य विस्कम्भानिर्वेत्यादिना विभाषया षत्वम् ॥ ७५ ॥ म०

विष्फुलेत्यादि । असौ कपिः पुरुषाशनैः राक्षसैः विस्फुलद्भिः हर्षाच्चलद्भिर्गृहीतः निष्फुलः सतेजाः निस्फुलेति विभाषाषत्वं विष्कम्भितुं व्यापारितुं समर्थोऽपि ब्रह्मगौरवान्नाचलत् न चलितः मा भून्मोघो ब्राह्मः पाश इति वेष्कम्भातेरिति षत्वम् ॥ ७६ ॥ ज० म०

विष्फुलेत्यादि । असौ कपिर्विस्फुलद्भिर्हर्षाच्चलद्भिः पुरुषाशनैः राक्षसैः गृहीतोऽपि निष्फुलो निष्कम्पः विष्कम्भितुं व्यावर्त्तितुं समर्थोऽपि ब्रह्मगौरवात् नाचलत् न चलितवान् विस्कम्भेत्यादिना विष्कम्भः षत्वं नित्यं स्फुरस्फुलोस्तु विभाषितम् ॥ ७६ ॥ म०

गतमङ्गुलिषङ्गं त्वां भीरुष्ठानादिहागतम् ।
खादिष्याम इति प्रोचुर्नयन्तो मारुतिं द्विषः ॥ ७८॥

---

क्षषीत्यादि । भर्त्तुः रावणस्य आनन्दं क्षषीढ्वं कुरुध्वं लिङि रूपं अतो वानरं द्रुतं नेतुं वियदाकाशं मा न प्रोढ्वं मा नोत्पतिष्ट माङि लुङ् इणः षीध्वमिति धकारस्य मूर्द्धन्य-ढकारः इत्येवमुच्चैरिन्द्रजित् स्वकान् भृत्यान् प्रावदत् वदेर्लङि रूपम् ॥ ७७ ॥ ज० म०

क्षषीढ्वमित्यादि । यूयं भर्त्तुः रावणस्य आनन्दं क्षषीढ्वं कुरुध्वं क्या रूपं इगुडुर्मढोति कित्त्वान्न गुणः टोठोढोधोढि च इति धस्य ढत्वं क्विलादिति षः वानरं नेतुं द्रुतं यूयं वियदाकाशं मा न प्रोढ्वं न न गच्छत अपितु प्रोढ्वं प्रुप्लुङ्च सर्पणे मायोगे टो सिः गुणः धेसलोपो वेति पक्षे सिलोपः टोठोढो-धोढि च इति धस्य ढत्वं इत्युक्तं इन्द्रजित् स्वकान् आत्मीयान् उच्चैर्महता ध्वनिना प्रावदत् प्रोक्तवान् ॥ ७७ ॥ भ०

गतमित्यादि । अङ्गुलीनां सङ्गः अङ्गुलीषङ्गः तं गतं प्राप्तं हस्तप्राप्तमित्यर्थः समासेऽङ्गुलेः सङ्ग इति षत्वं भीरोः कातरस्य यत् स्थानं तस्माद्भीरुष्ठानादिहागतं भीरोः स्थानमिति षत्वं खादिष्याम इति प्रोचुः द्विषो राक्षसा मारुतिं नयन्तो नेष्यन्तः वर्त्तमानसामीप्ये भविष्यति लट् ॥ ७८ ॥ ज० म०

गतमित्यादि । मारुतिं नयन्तो राक्षसा इति प्रोचुः उक्तवन्तः । किमित्याह त्वां वयं खादिष्यामः कीदृशं त्वां अङ्गुलेः सङ्गं गतं प्राप्तं हस्तप्राप्तमित्यर्थः भीरोः रामस्य स्थानादिह लङ्कायामागतं समासेऽङ्गुलेः सङ्गस्य भीरोः स्थानस्य चेति षत्व-मिति पूरः स्वमते क्विलादित्यस्य योगविभागात् प्रासवसङ्गल-

अग्निष्टोमादिसंस्थेषु ज्योतिष्टोमादिषु द्विजान्।
योऽरक्षीत् तस्य दूतोऽयं मानुषस्येति चावदन् ॥७९॥
नासां मातृष्वसेय्याश्च रावणस्य लुलाव यः।
मातुः स्वसुश्च तनयान् खरादीन् विजघान यः ॥८०॥

---

आढाश्चेत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वादन्येषामपीत्यर्थोद्वा मनीषादित्वाद्वा ॥ ७८ ॥ भ०

अग्नीत्यादि। अग्निष्टोमादिसंस्थेषु सद्दश्चेषु ज्योतिष्टोमादेषु यो द्विजानरक्षीत् तस्य मानुषस्यायं दूत इति चावदन् नयन्तो द्विषः अग्नेस्तुत्स्तोमसोमाः ज्योतिरायुषस्तोम इति षत्वम् ॥ ७९ ॥ ज० म०

अग्नीत्यादि। अग्निष्टोमादिसद्दश्चेषु ज्योतिष्टोमादिषु यज्ञेषु यो द्विजान् अरक्षीत् आदिशब्दाद्वाजपेयादेर्ग्रहणं आयुर्ज्योतिरग्निभ्यः स्तोमस्येति षत्वमिति परः स्वमते मनीषादित्वात् तस्य मानुषस्यायं दूत इति च ते द्विषोऽवदन् ॥ ७९ ॥ भ०

नासामित्यादि। रावणस्य या मातुः स्वसा भगिनी सा मातृष्वसा मातृपितृभ्यामिति षत्वं तस्या अपत्यं मातृष्वसेयी मातृष्वसुश्चेति ठगन्तलोपौ तस्या यो नासां लुलाव मातुः स्वसुश्च तनयान् खरादीन्निजघान मातृपितृभ्यामन्यतरस्यामिति षत्वाभावपक्षे विभाषास्वसृपत्योरिति षष्ठ्या अलुक् ॥ ८० ॥ ज० म०

नासामित्यादि। यो रावणस्य मातृष्वसेय्या मातृष्वसुर्दुहितुः सूर्पणखाया नासां लुलाव छिन्नवान् मातृस्वसृशब्दात् दवसादित्वात् ण्येयः मनीषादित्वादन्तलोपः आदिसस्य षत्वञ्च मातृपितृभ्यां स्वसुरिति परः। यो मातुः स्वसुश्च मातुर्भगिन्याश्च तनयान् पुत्रान् खरादीन् निजघान तस्य

प्रादुःषन्ति न संत्रासा यस्य रक्षःसमागमे।
तस्य क्षत्रियदुःषूतेरयं प्रणिधिरागतः॥ ८१॥
दृष्ट्वा सुषुप्तं राजेन्द्रं पापोऽयं विषमाशयः।
चारकर्मणि निष्णातः प्रविष्टः प्रमदावनम्॥ ८२॥

---

दूतोऽयमिति सम्बन्धः स्वसुर्वा मातृपितृभ्यामिति विभाषया षत्वमिति परः स्वमते मनीषादित्वात्॥ ८०॥ भ०

प्रादुरित्यादि। यस्य रक्षःसमागमे सन्त्रासाः भयानि न प्रादुःषन्ति न प्रादुर्भवन्ति उपसर्गप्रादुर्भ्यामित्यादिना दुःश-ब्दादुत्तरस्यास्ति सकारस्य श्नसोरल्लोप इत्यल्लोपे कृते षत्वं प्रादुः-सकारस्य च ष्टुत्वं तस्य क्षत्रियदुःषूतेः दुष्टु त्वस्यायं प्रणिधिरा-गत इति चावदन् नयन्तः सूयत इति सूतिः दुर्निन्दायामिति सूतेः सकारस्य सुविनिर्दुर्भ्य इति षत्वम्॥ ८१॥ ज० म०

प्रादुरित्यादि। रक्षसां समागमे यस्य सन्त्रासा न प्रादुः-षन्ति न प्रादुर्भवन्ति प्रादुर्गौक इति षत्वं तस्य क्षत्रियदुःषूतेः प्राणिधिश्वरोऽयमागतः विनिस्तुदुर्भ्यः सूतिसमसुपामिति षत्व-मितिपरः स्वमते मनीषादित्वात्॥ ८१॥ म०

दृष्ट्वेत्यादि। राजेन्द्रं रावणं दृष्ट्वा प्रमदावनं प्रविष्टः सुषुप्तं गाढनिद्रं वच्यादिना सम्प्रसारणं पापोऽयं विषमाशयः सुपोत्यादिना षत्वं चारकर्मणि निष्णातः कुशलः निनदीभ्यां स्नातेः कौशल इति षत्वम्॥ ८२॥ ज० म०

दृष्ट्वेत्यादि। अयं पापो दुराचारो राजेन्द्रं रावणं दृष्ट्वा प्रमदावनं प्रविष्टः। कीदृशं राजेन्द्रं सुषुप्तं गाढ़निद्रितं विस्ल-क्षानिर्वेविसुनिर्दुःस्वप इति षत्वम्। कीदृशः विषमाशयः कुटिलहृदयः विषमित्यत्र मनीषादित्वात् षत्वं चारकर्मणि

सुप्रतिष्णातसूत्राणां कपिष्ठलसमत्विषाम् ।
स्थितां वृत्ते द्विजातीनां रात्रावैक्षत मैथिलीम् ॥ ८३ ॥

कुलकम् ।

सर्वनारीगुणैः प्रष्ठां विष्टरस्थां गविष्ठिराम् ।
शयानां कुष्ठले तारां दिविष्ठामिव निर्मलाम् ॥ ८४॥

---

निष्णातः कुशलः निनदीभ्यां स्नः कौशले इति षत्वमिति परः स्नमते मनीषादित्वात् ॥ ८२ ॥ भ०

सुप्रेत्यादि। येषां द्विजातीनां सुप्रतिष्णातानि ग्रन्थतोऽर्थतश्च निश्चितानि सूत्राणि तेषां सुप्रतिष्णातसूत्राणां सूत्रं प्रतिष्णातमिति निपातनं कपिष्ठलसमत्विषां कपिष्ठलो नाम द्विजर्षभो गोत्रप्रवर्त्तकः कपिष्ठलो गोत्र इति साधुः तत्तुल्यतेजसां द्विजातीनां वृत्ते चरिते स्थितां मैथिलीम्। ऐक्षत ॥ ८३ ॥ ज० म०

सुप्रेत्यादि। अयं रात्रौ द्विजातीनां वृत्ते स्थितां मैथिलीं ऐक्षत दृष्टवान् घ्यां रूपम्। कीदृशानां सुप्रतिष्णातं ग्रन्थतोऽर्थतश्च विशुद्धं गोभिलादिसूत्रं येषां मनीषादित्वात् सूत्रे प्रतिस्ना तस्य षत्वं कपिष्ठलसमत्विषां कपिष्ठलाख्यस्य ऋषेः समा त्विट् येषां मनीषादित्वात् गोत्रे कपेः स्थलस्य सस्य षत्वम् ॥ ८३ ॥ भ०

कीदृशीमित्याह सर्वेत्यादि। यावन्तो नारीगुणाः तैः प्रष्ठां अग्रगामिनीं प्रष्ठोऽग्रगामिनीति साधुः विष्टरस्थामासनस्थां वृक्षासनयोर्विष्टर इति साधुः गविष्ठिरां वाचिस्थिरां गवियुधिभ्यामिति षत्वं अस्मादेव वचनात् सप्तम्या अलुक् कुष्ठले शयानां कौ स्थले भूतले शुद्धे विकुशमित्यादिना षत्वं दिविष्ठां दिवि तिष्ठतीति सुपि स्थ इति कः तत्पुरुषे कृति

सुषाम्नीं सर्वतेजःसु तन्वीं ज्योतिष्टमां शुभाम् ।
निष्टपन्तीमिवात्मानं ज्योतिःसात् कुर्वतीं वनम् ॥८५॥

बहुलमिति सप्तम्या अलुक् गगनस्थां तारामिव निर्मलाम् अम्बाम्बेत्यादिना षत्वम् ॥ ८४ ॥ ज० म०

सर्वेत्यादि । मैथिलीं कीदृशीं सर्वनारीगुणैः प्रष्ठां यावन्तो नारीगुणास्तैरग्रगामिनीं मनीषादित्वात् प्रात्स्थोऽग्रगे षत्वं विष्टरस्थाम् आसनस्थां मनीषादित्वाद् वृक्षासनयोर्विष्टर इति रूपसिद्धिः । गविष्ठिरां वाचिस्थिरां सप्तमीतत्पुरुषः अभिधानान्न ङेर्लोपः मनीषादित्वात् गवियुधिभ्यां स्थिरस्य षत्वं कुष्ठले भूस्थले शयानां मनीषादित्वात् शमिपरिविकुभ्यः स्थलस्य षत्वं दिविष्ठां तारामिव निर्मलां दिवि तिष्ठतीति सुपजनादिति डः अभिधानात् सप्तम्या अलुक् स्त्रियामाप् मनीषादित्वात् षत्वम् ॥ ८४ ॥ भ०

सुषेत्यादि । शोभनं साम यस्या इति विगृह्य अन उपधालोपिनोऽन्यतरस्यामिति ङीप् सुषामादिषु चेति षत्वं सुष्ठु प्रियंवदामित्यर्थः तन्वीं कृशां शुभां कल्याणीं सर्वतेजःसु ज्योतिष्टमां अतिशयेन ज्योतिष्मतीं हृस्वात्तादौ तद्धित इति षत्वम् एवञ्च कृत्वा निष्टपन्तीमिवात्मानं सकृज्ज्वलयन्तीमिवात्मानं निसस्तपतावनासेवन इति षत्वं वनं ज्योतिःसात् कुर्वन्तीम् अज्योतिर्ज्योतिः कुर्वाणां कार्त्स्न्येन दीपयन्तीमित्यर्थः कार्त्स्न्ये सातिप्रत्ययः तत्र नुमि विसर्जनीयस्येत्यादिना प्राप्तस्य षत्वस्य सात्पदाद्योरिति प्रतिषेधः युष्मदित्यादिनोदाहृतं छान्दसत्वात् ॥ ८५ ॥ ज० म०

सुषाम्नीमित्यादि । पुनः कीदृशीं मैथिलीं सुषाम्नीं प्रियंवदां शोभनं साम यस्या इति नान्तत्वात् स्त्रियासी[illegible]

मधुसाङ्गूतकिञ्जल्कपिञ्जरभ्रमराकुलाम् ।
उल्लसत्कुसुमां पुण्यां हैमरत्नलतामिव ॥ ८६ ॥
विलोचनाम्बु मुञ्चतीं कुर्वाणां परिसेसिचाम् ।
हृदयस्येव शोकाग्निसन्तप्तस्योत्तमव्रताम् ॥८७॥

---

निःसुदुर्भ्यः सामसेधसन्धीनामिति षत्वमिति परः स्वमते मनोषादित्वात् तन्वीं कृशां गुणाद्बोत इति पच्चे ङीप् सर्वज्योतिःसु मध्ये ज्योतिष्टमां प्रकृष्टप्रकाशरूपां लीकोर्षादिति षत्वं शुभां कल्याणयुक्ताम् आत्मानं निष्टपन्तीमिव सन्तत्तापयन्तीमिव हनूमद्दर्शनात् तापस्य नैरन्तर्य्याभावात् निरस्तपौसक्तस्सेवने इति षत्वमिति परः स्वमते मनोषादित्वात् तापस्य सक्तसेवनमत्र विवच्चितं वनं ज्योतिःसात् कुर्वतीं कात्स्न्येंन दीपयन्तीमित्यर्थः कात्स्न्यगायत्योः सम्पद्यकादाविति चसात् क्विलादित्यादौ साद्वर्जनात् न षत्वम् ॥ ८५ ॥ भ०

मध्वित्यादि। मधुसाङ्गूतकिञ्जल्कं कात्स्न्येंन मधुतामापन्नं यत्किञ्जल्कं पुष्पकेसरं तन्मधुसाङ्गूतकिञ्जल्कम् आदेशप्रत्यययोरिति प्राप्तस्य पूर्ववत्प्रतिषेधः तेन पिञ्जराः पिङ्गलाः ये भ्रमराः तैराकुलाम् उल्लसत्कुसुमां चलत्पुष्पां हैमरत्नलतामिव यथा हैमरत्नमयों कल्पतरुलतां पुण्यां पवित्रां तद्वत्तामपीत्यर्थः ॥ ८६ ॥ ज० म०

मधुसादित्यादि। पुनः कीदृशीं हैमरत्नलतामिव कल्पतरुलतामिव पुण्यां पवित्राम् उत्तमामित्यर्थः हैमरत्नलतां कीदृशीं कात्स्न्येंन मधुतामापन्नेन किञ्जल्केन पुष्पकेसरेण पिङ्गला ये भ्रमरास्तैराकुलां व्याप्ताम् अत्रापि साद्वर्जनान्न षत्वम् उल्लसत्कुसुमां राजत्पुष्पाम् ॥ ८६ ॥ भ०

विलोचेत्यादि। विलोचनाम्बु अस्तु मुञ्चन्तीं विच्चिपन्तीं

दृष्ट्वा तामभनग्वृक्षान् द्विषो घ्नन् परिसेधतः।
परितस्तान् विचिक्षेप क्रुद्धः स्वयमिवानिलः ॥ ८८ ॥
अप्रतिस्तब्धविक्रान्तमनिस्तब्धो महाहवे।

---

हृदयस्य शोकाग्निसन्तप्तस्य परिसेसिचां भृशं निर्वाणमिव कुर्वाणामैक्षतेति पूर्वेण सम्बन्धः सिचेर्यङन्तात् स्त्रीलिङ्गे भावे अकारप्रत्ययः उपसर्गादित्यादिना अभ्यासव्यवायेऽपि प्राप्तस्य षत्वस्य सिचो यङीति प्रतिषेधः उत्तमव्रतां पतिव्रतात्वात् ॥ ८७ ॥ ज० म०

विलोचनेत्यादि। विलोचनाम्बु मुञ्चन्तीं अस्रु क्षिपन्तीं शोकरूपाग्निसन्तप्तस्य हृदयस्य परिसेसिचां पुनःपुनरतिशयेन वा सेचनं कुर्वाणामिव अग्निनिर्वाणाय जलसेकः क्रियते इत्युत्प्रेक्षा सिचो यङ्लुकि संस्यादः इति अः स्त्रियामाप् शीक इत्यादौ अयङ्सिचेति यङ्वर्जनान्न षत्वम् उत्तमव्रतां पतिव्रतात्वात् ईदृशीं मैथिलीमैक्षतेति सम्बन्धः ॥८७॥ भ०

दृष्ट्वेत्यादि। तां दृष्ट्वा वृक्षानभनक् चूर्णितवान् द्विषः शत्रून् परिसेधतः आगच्छतः घ्नन् हिंसन् पूर्ववत् प्राप्तस्य सेधतेर्गताविति प्रतिषेधः परितश्च समन्तादुद्विचिक्षेप उन्मूलितवान् लिटः संयोगादित्वादकित्त्वे गुणः क्रुद्धः स्वयमिव साक्षादिवानिलः ॥ ८८ ॥ ज० म०

दृष्ट्वेत्यादि। अयं तां सीतां दृष्ट्वा वृक्षान् अभनक् भग्नवान्। किं कुर्वन् द्विषः शत्रून् घ्नन् हिंसन्। कीदृशान् परिसेधतः सर्वतो गच्छतः शीक इत्यादौ अगतिसेधेति गत्यर्थवर्जनात् न षत्वं अयं तान् वृक्षान् परितः समन्तात् प्रचिक्षेप क्षिप्तवान् क्रुद्धः सन् स्वयं साक्षात् अनिल इव ॥ ८८ ॥ भ०

अप्रेत्यादि। घनध्वनिर्मेघनादः अनिस्तब्धोऽनभिभूतः

विसोढवन्तमस्त्राणि व्यतस्तम्भद् घनध्वनिः ॥ ८९ ॥
ते विज्ञायाभिसोष्यन्तं रक्षैरक्षांसि सव्यथाः ।
अन्यैरप्यायतं निन्युर्वरत्राशृङ्खलादिभिः ॥ ९० ॥

---

अप्रतिस्तब्धविक्रान्तं अनभिभूतविक्रमं कपिं स्तम्भेरिति प्राप्तस्य षत्वस्य प्रतिस्तब्धनिस्तब्धौ चेति प्रतिषेधनिपातनं अस्त्राणि महाहवे विसोढवन्तं सोढ इति प्रतिषेधः व्यतस्तम्भत् निष्पादितवान् एवं नयन्तोऽवदन्निति योज्यं स्तम्भेर्ण्यन्तस्य स्तम्भसिवुसहाञ्चङीति षत्वप्रतिषेधः ॥ ८९ ॥ ज० म०

अप्रे त्यादि । घनध्वनिर्मेघनादः अप्रतिस्तब्धविक्रान्तं अनभिभूतविक्रमं हनूमन्तं व्यतस्तम्भत् निश्चलं कृतवान् कीदृशः अनिस्तब्धः अनभिभूतः । कीदृशं महायुद्धे शस्त्राणि विसोढवन्तं सहेः क्तवतुः वेमसहेति वेमत्वात् नेम्डीश्चोदिति नेम् हो ढः सहवहोऽदोढीति ओत्वं गीक इत्यादौ अनोङ्सहेति ओङ्वर्जनान्न षत्वं स्तम्भेः प्रेरणे ञिः ञिश्रीत्यङ् गीक इत्यादौ अनङ्स्तम्भेति अङ्वर्जनान्न षत्वं प्रतिस्तब्धनिस्तब्धयोः प्रतिनिशब्दौ उपसर्गप्रतिरूपकौ तेन गीक इत्यादिना न षत्वं प्रतिनिभ्यां स्तब्धस्येति षत्वनिषेधार्थपरसूत्रम् ॥ ८९ ॥ भ०

ते इत्यादि । राक्षसाः ये मारुतिं नेष्यन्तः रक्षैः रक्षांसि विसोष्यन्तं अभिषेक्ष्यन्तं कपिं सुनोतेः स्यसनोरिति षत्वं यद्याक्रक्ष्यमाणो न नीयेत अवश्यं राक्षसान् रक्षैः सोष्यतीति विज्ञाय सव्यथाः सभयाः सन्तः अन्यैरपि वरत्राशृङ्खलादिभिः रायतं दीर्घं निन्युः बध्नन्ति स्म णहबन्धन इत्यस्य लिटि रूपम् ॥ ९० ॥ ज० म०

ते इत्यादि । ते मारुतिं नयन्तो राक्षसा विज्ञाय हनु-

विषसादेन्द्रजिद् बुद्धा बन्धे बन्धान्तरक्रियाम् ।
दिव्यबन्धो विषहते नापरं बन्धनं यतः ॥ ९१ ॥

इति षत्वाधिकारः ।

मुष्णन्तमिव तेजांसि विस्तीर्णोरस्थलं पुरः ।
उपसेदुर्दशग्रीवं गृहीत्वा राक्षसाः कपिम् ॥ ९२ ॥

---

मत्पराक्रममित्यर्थात् सव्यथाः सभयाः सन्तः ब्रह्मास्त्रबन्धे सत्यपि अन्यैरपि वरत्राशृङ्खलादिभिरायतं दीर्घं कपिं मेवुः बध्नन्ति स्म भवनद्दे नद्दो बन्धनं त्वचां रूपम् । कीदृशं रक्तैः स्वगात्रसम्भवैः रक्षांसि अभिसोष्यन्तं अभिषेक्ष्यन्तं गीक इत्यादौ अस्यान्तसुञेति स्यान्तवर्जनान्न षत्वं वरत्रा चर्मरज्जुः ॥ ९० ॥ भ०

विषेत्यादि । बन्धे दिव्ये बन्धान्तरक्रियां बन्धनविशेषकरणं बुद्धा इन्द्रजित् विषसाद विषादमुपगतः नियतं दिव्यबन्धं मुक्तवानिति यतो दिव्यबन्धो नापरं स्वयं बन्धनं विषहते अतो विषसादेति योज्यं सदिसञ्जगोः परस्य लिटि षत्वप्रतिषेधः पूर्वस्य तु सदिरप्रतेरिति भवत्येव विषहत इति न प्रतिषेधः तत्र सोढरूपस्य ग्रहणात् ॥ ९१ ॥ ज० म०

इति मूर्द्धन्याधिकारः ।

विषेत्यादि । इन्द्रजित् बन्धे बन्धान्तरकरणं बुद्धा ज्ञात्वा विषसाद विषादं गतवान् गीक इत्यादिना षत्वे प्राप्ते सत्स्वञ्जोष्ठयां नाखेरिति प्रकृतेः षत्वनिषेधः खेस्तु षत्वमेव यतो यस्मात् दिव्यबन्धोऽपरं बन्धनं न विषहते गीक इत्यादिना षत्वम् ॥ ९१ ॥ भ०

इति षत्वाधिकारः ।

इतः प्रभृति णत्वमधिकृत्याह मुष्णेत्यादि । राक्षसाः

बहुधा भिन्नमर्माणो भीमाः खरणसादयः ।
अग्रेवणं वर्त्तमाने प्रतीच्यां चन्द्रमण्डले ॥ ९३ ॥

---

पुरः कपिमादाय दशग्रीवमासेदुः ढौकितवन्तः न तु दर्शनगोचरं गताः अप्रभातत्वात् । कीदृशं तेजांसि मुष्णन्तं खण्डयन्तमिव विस्तीर्णोरस्थलं विस्तृतवक्षसं तत्र रषाभ्यां नो ण इति णत्वम् ॥ ९२ ॥ ज० म०

अथ णत्वाधिकारः । मुष्णन्तमित्यादि । राक्षसाः कपिं गृहीत्वा पुरोऽग्रतो दशग्रीवमुपसेदुः । कीदृशं तेजांसि मुष्णन्तमिव खण्डयन्तमिव स्वतेजसाऽभिभवात् विस्तीर्णवक्षसं उभयत्र षृ र्णोऽदान्ते न इति णत्वम् ॥ ९२ ॥ भ०

बह्वित्यादि । वानरद्विषो राक्षसा ऊचुरिति वक्ष्यमाणेन सम्बन्धः । कीदृशाः किमूचुरित्याह बहुधा भिन्नमर्माण इति यानि कालान्तरे प्राणहराणि मर्माणि तानि बहुधा भिन्नानि येषामिति बहुव्रीहिः अट्पवर्गसमुदायस्य व्यवधानादट्कुप्वाङित्यादिना णत्वं खरणसादयः खरस्येव नासिका यस्येति अञ्नासिकाया इत्यच् नसादेशश्च पूर्वपदात् संज्ञायामिति णत्वं खरणसादयो राक्षसाः वनस्याग्रे अग्रेवणं राजदन्तादित्वात्परनिपातः वनं परगेति णत्वं प्रतीच्यां दिशि यद्वनं तस्य वनस्याग्रे उपरि वर्त्तमाने चन्द्रमण्डले प्रभातसन्ध्यायामित्यर्थः ॥ ९३ ॥ ज० म०

बहुधेत्यादि । वानरद्विषो राक्षसा इत्यूचुरित्यग्रिमश्लोकेनान्वयः । कीदृशाः बहुधा भिन्नानि मर्माणि जीवितस्थानानि येषां तादृशाः षृ र्णोऽदान्ते इत्यादिना अवकुप्वन्तरेऽपीति णत्वं भीमा भयानकाः खरस्येव नसा नासिका येषां ते आदयो येषां ते तथा-षृ र्णं इत्यादावतद्वादित्यस्य योगविभा-

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



निर्वणं कृतमुद्यानमनेनाम्रवणादिभिः ।
देवदारुवनामिश्रैरित्यूचुर्वानरद्विषः ॥ ९४ ॥

मात् षत्वं नसाशब्दस्य रूपमिदम् । लपनं वदनं तुण्डमाननं नासिका नसेति रभसः । नसा नासा च नासिकेति कोषान्तरम् । खरखुराभ्यां नासिकाया नस्नसाविति परः । किमूचुरित्याह चन्द्रमण्डले प्रतीच्यां पश्चिमायां दिशि वनस्याग्रे वर्त्तमाने सति अनेनोद्यानं निर्वणं वनशून्यं कृतमिति परश्लोकेनान्वयः वनस्याग्रे अग्रेवणं तस्मिन् व्यंपूर्वमिति अग्रेशब्दस्य पूर्वनिपातः । अग्रेवणमिति पाठे देशाध्वकालेति ढसंज्ञा अग्रेवणमित्यनुस्वारवत् पाठोऽत्र प्रमादकृतः सप्तम्यन्तत्वादिति विद्याविनोदः । अग्रेवण इति खरणसवत्त्वं अग्रे मिश्रकासारिकामिश्रकापुरगाकोटराभ्यो वनस्य संज्ञायामिति परसूत्रे संज्ञायामिति सम्भवपरमुक्तं तेनासंज्ञायामपि षत्वं स्यादिति बोध्यं अग्रेवणे वर्त्तमाने प्रतीच्यां चन्द्रमण्डल इत्यनेन प्रातःसन्ध्या सूचिता ॥ ९३ ॥ भ०

निर्वेत्यादि । उद्यानं संनिवेशविशेषः निर्वणं वृक्षरहितं अनेन कपिना कृतं आम्रवणादिभिरुपलक्षितं उभयत्रापि प्रनिरन्तेति णत्वं देवदारुवनामिश्रैरिति विभाषौषधीत्यादिना णत्वं न भवति द्व्यक्षरत्र्यक्षरेभ्य इति वक्तव्यमिति वचनात् इत्येवमूचुः ॥ ९४ ॥ ज० म०

निर्वणमित्यादि । कीदृशमुद्यानं आम्रवणादिभिरुपलक्षितं कीदृशैः देवदारुवनामिश्रैः देवदारुवनयुक्तैः निर्वणाम्रवणयोः खरणसवत् णत्वं देवदारुवनेत्यत्र योगविभागस्य क्वचिद्विषयान्न णत्वं परमते आम्रप्लक्षपीयूक्षशरखदिरनिःप्रकार्श्यान्तरिक्षभ्यो वनस्य णत्वं तथा ईरिकामाद्रिकातिमिरवर्जं

उपास्थिषत सम्प्रीताः पूर्वाह्णे रोषवाहणम् ।
राक्षसाः कपिमादाय पतिं रुधिरपायिणाम् ॥ ९५ ॥

---

द्विवराचत्रचौषधिवृक्षेभ्यो वा वनस्य णत्वं देवदारुशब्दस्य चतुरक्षत्वाद्देवदारुवनामिश्रैरित्यत्र न णत्वम् ॥ ९४ ॥ भ०

उपेत्यादि । ते राक्षसाः पतिमुपास्थिषत उपागताः दृष्टिपथं गता इत्यर्थः उपाद्देवपूजेत्यादिना सङ्गतिकरणे तङ् स्थाघ्वोरिच्च सम्प्रीताः हृष्टा तेषामनुज्ञातप्रवेशत्वात् पूर्वाह्णे प्रत्यूषसि अह्नोऽदन्तादिति णत्वं रोषवाहणं कपिमादाय रोषस्यासनीकृतं वाहनमाहितादिति णत्वं रोषस्य तत्राधीयमानत्वात् पतिं रुधिरपायिणां राक्षसानां पानं देश इति णत्वम् ॥ ९५ ॥ ज० म०

उपेत्यादि । राक्षसाः कपिमादाय सम्प्रीताः सन्तः पूर्वाह्णे प्रत्यूषसि रुधिरपायिणां राक्षसानां पतिं रावणं उपास्थिषत उपगताः मैत्राध्वसङ्गाराध इति सङ्गे मं स्थादोर्डिंष्टौमि इति ङिः गुणाभावश्च मान्तोऽदनत इत्यत् । कपिं कीदृशं रोषवाहणं आरूढक्रोधं पूर्वाह्ण इति प्राग्वन्नो णोऽतोऽह्नस्येति णत्वं रोषवाहणमिति खरणसवसत्वं परमते वाह्यात्परवाहनस्य णत्वं रोषस्य वाह्यत्वात् रुधिरपायिणामिति रुधिरं रक्तं पिबन्तीति ग्रहादित्वात् णिन् षृ णोऽदान्त इत्यादौ नैकाचकोस्तु वेति पाक्षिकं णत्वं असृक्पाणाधिपं तूर्णं कपिमादाय राक्षसा इति क्वचित्पाठः तदा असृक् प्रधानं पानं येषां तेषामधिपं असृजां पानं यत्र सोऽसृक्पाणो देशः तस्याधिपमिति वा असृगेव पानं येषामिति वा खरणसवसत्वं देशे पानस्य णत्वं नित्यं भावकरणयोः पानस्य वा णत्वमिति परः ॥ ९५ ॥ भ०

सुरापाणपरिक्षीवं रिपुदर्पहरोदयम् ।
परस्त्रीवाहिणं प्रापुः साविष्कारा: सुरापिणः ॥ ९६ ॥
संहर्षयोगिणः पादौ प्रणेमुस्त्रिदशद्विषः ।
प्रहिण्वन्तो हनूमन्तं प्रमीणन्तं द्विषन्मती: ॥ ९७ ॥

---

सुरेत्यादि । सुरापाणात्परिक्षीवं मत्तं रावणं वा भाव-करणयोरिति णत्वं रिपुदर्पहर उदयो वृद्धिर्यस्य तं परस्त्रियं वाहयितुमुपभोक्तुं शीलं यस्य तं परस्त्रीवाहिणं प्रातिपदि-कान्त इति णत्वाभावः पाक्षिकः प्रापुः सुष्ठु निकटीकृता: साविष्कारा: साहङ्कारा: सुरापिणः सुरापैर्युक्ताः सुरां पिब-न्तीति गापोष्टक् ते येषां सन्तीति मत्वर्थीयः एकाजुत्तरपदे ण इति णत्वं उत्तरस्य प्रातिपदिकान्तस्यैकाच्त्वात् ॥ ९६ ॥ ज० म०

सुरेत्यादि । राक्षसा रावणं प्रापुः । कीदृशं सुरापाणेन परिक्षीवं मत्तं खरणसवत्त्वं भावकरणयोः पानस्य वा णत्व-मिति परः रिपूणां दर्पहारक उदयो यस्य तं परस्त्रियं वोढुं उपभोक्तुं शीलं यस्य तं षू,र्णोऽदान्ते इत्यादिना नैकाचकोस्तु वेति पक्षे णत्वं परस्त्रीकामिणमिति पाठे तेनैव कवर्गवत्त्वात् नित्यं णत्वम् । कीदृशाः साविष्कारा: साहङ्कारा: सुरापिणः सुरापैर्युक्ताः सुरां पिबन्तीति सुरापाः हनजनादिति डः ततोऽ-स्त्यर्थे इन् पूर्ववदेकाच्त्वात् नित्यं णत्वम् ॥९६॥ भ०

संहर्षेत्यादि । संहर्षयोगिणः स्पर्द्धायोगिनः कुमति चेति णत्वं ते अन्योन्याभिभवेच्छया त्रिदशद्विषो रावणस्य पादौ प्रणेमुः उपसर्गादसमासेऽपीति णत्वं हनूमन्तं प्रहिण्वन्तः ढौकयन्तः द्विषन्मतीः शत्रुबुद्धीः प्रमीणन्तं अभिभवन्तं मीञ हिंसायां क्र्यादिकः हिनुमिना इति णत्वम् ॥९७॥ ज० म०

भ ५१

प्रवपाणि शिरोभूमौ वानरस्य वनच्छिदः।
आमन्त्रयत संक्रुद्धः समितिं रक्षसां पतिः॥ ९८॥
प्रण्यगादीत् प्रणिघ्नन्तं घनः प्रणिनदन्निव।
ततः प्रणिहितः स्वार्थे राक्षसेन्द्रं विभीषणः॥ ९९॥

---

समित्यादि। राक्षसाः त्रिदशद्विषो रावणस्य पादौ प्रणेमुः प्रणतवन्तः प्राग्वन्नो ण इत्यादिना नादिधातुत्वाण्णत्वं संहर्षयोगिणः महाहर्षयुक्ताः षृ ्णं इत्यादिना कवर्गवत्वात् नित्यं णत्वं हनूमन्तं प्रहिण्वन्तः प्रापयन्तः। कीदृशं द्वषन्मतीः प्रबुद्धाः प्रमीणन्तं अभिभवन्तं प्राग्वन्नो ण इति मीनाहिन्वोर्णत्वम्॥ ९७॥ भ०

प्रवेत्यादि। अस्य वानरस्य वनच्छिदः शिरो भूमौ प्रवपाणि छित्त्वा पातयामि आनिलोडिति णत्वं वपिरत्र पातने वर्त्तते संक्रुद्धः रक्षसां पतिः स्वामी समितिं समूहं आमन्त्रयत भाषितवान्॥ ९८॥ ज० म०

प्रवेत्यादि। रक्षसां पतिः रावणः संक्रुद्धः सन् समितिं सभां आमन्त्रयत उक्तवान्। किं तदित्याह अहं वनच्छिदो वानरस्य शिरोभूमौ प्रवपाणि छित्त्वा पातयामीत्यर्थः वपिरत्र प्रहरणे प्राग्वन्नो ण इति आनिपो णत्वम्॥ ९८॥ भ०

प्रण्येत्यादि। तत उत्तरकालं विभीषणो राक्षसेन्द्रं प्रणिघ्नन्तं हन्तुमारभमाणं प्रण्यगादीत् वक्तुं प्रवृत्तः घन इव प्रणिनदन् गर्जन् स्वार्थे राक्षसेन्द्रस्य प्रणिहितोऽवहितमनाः सर्वत्र नेर्गदेति णत्वम्॥ ९९॥ ज० म०

प्रण्येत्यादि। ततोऽनन्तरं हनूमन्तं प्रणिघ्नन्तं हन्तुमारभमाणं राक्षसेन्द्रं विभीषणो घन इव प्रणिनदन् गर्जन्

प्रणिशाम्य दशग्रीव ! प्रणियातुमलं रुषम् ।
प्रणिजानीहि हन्यन्ते दूता दोषे न सत्यपि ॥१००॥
प्राणयन्तमरिं प्रोचे राक्षसेन्द्रो विभीषणम् ।
प्राणिणिषुर्न पापोऽयं योऽभाङ्क्षीत् प्रमदावनम् ॥१०१॥

---

प्रण्यगादीत् वक्तुं प्रवृत्तः स्वार्थे रावणप्रयोजने प्रणिहितः सावधानः सर्वत्र प्राग्वन्नो ण इति णत्वम् ॥ ९९ ॥ भ०

प्रणीत्यादि । हे दशग्रीव ! प्रणिशाम्य रोषं त्यज लोटि शमि रूपं शमामष्टानामिति दीर्घः रुषं प्रणियातुमलं न किञ्चित् पूर्ववत्सत्वं प्रणिजानीहि अवगच्छ सत्यपि दोषे न हन्यन्ते दूता इति जानातेः शेषधातोरुपदेशावस्थायां अककाद्यषान्तत्वात् शेषे विभाषेत्यादिना णत्वम् ॥१००॥ ज० म०

प्रणीत्यादि । हे दशग्रीव ! प्रणिशाम्य शान्तो भव शमेर्ण्यां रूपं यन्त्योशमादिमिद इति दीर्घः हेर्लोपः रुषं क्रोधं प्रणियातुं आश्रयितुं अलं नार्हसि निषेधार्थोऽलंशब्दः उभयत्र प्राग्वन्नो ण इति णत्वं त्वं प्रणिजानीहि अवगच्छ पूर्ववदकखाद्यषान्तान्तनेरिति पक्षे णत्वं दोषे सत्यपि दूता न हन्यन्ते नीतिज्ञैरित्यर्थात् ॥ १०० ॥ भ०

प्राणेत्यादि ! अरिं कपिं यः प्राणयति जीवयति तं प्राणयन्तं विभीषणं श्वसप्राणने अनचेत्यस्य रूपं अनितेरिति णत्वं प्रोचे राक्षसेन्द्रः न प्राणिणिषुः न जीवितुमिच्छुरयं पापः उभौ साभ्यासस्येति णत्वं द्वयोरपि योऽभाङ्क्षीत् भग्नवान् प्रमदावनं हलन्तलक्षणा वृद्धिः ॥ १०१ ॥ ज० म०

प्राणेत्यादि । अरिं हनूमन्तं प्राणयन्तं जीवयन्तं विभीषणं राक्षसेन्द्रः प्रोचे उक्तवान् अनितेर्जन्तस्य रूपम् । किमुक्तवानित्याह अयं पापो दुराचारो न प्राणिणिषुर्न जीवितुमिच्छुः

प्राघानिषत रक्षांसि येनाप्तानि वने मम ।
न प्रहण्मः कथं पापं वद पूर्वापकारिणम् ॥ १०२ ॥
वेश्मान्तर्हणनं कोपान्मम शत्रोः करिष्यतः ।
का कार्षीरन्तरयणं प्रयाणार्हमवेह्यमुम् ॥ १०३ ॥

---

अनितेः सनि रूपं प्राग्वन्नो ण इत्यादिना वा त्वनेति विभाषया णत्वं योऽयं प्रमदावनं अभाङ्क्षीत् भग्नवान् त्यां रूपम् ॥ १०१ ॥ स०

प्राघेत्यादि । मम आप्तानि अक्षप्रभृतीनि येन वने प्राघानिषत मारितानि कर्मणि लुङ् चिण्वदिट् होहन्तेरिति घत्वं तपरपरिच्छिन्नाकारपूर्वस्य नकारस्य हन्तेरत्पूर्वस्येति णत्वं न भवति तं पूर्वापकारिणं पापं कथं न प्रहण्मः न मारयाम इति वद कथय ख्वोर्वेति णत्वम् ॥ १०२ ॥ ज० म०

प्राघेत्यादि । येन ममाप्तानि रक्षांसि अक्षप्रभृतीनि रणे प्राघानिषत मारितानि कर्मणि टी हनग्रहदृशश्च इति मिण् खेर्ह्रो घो ञ्णिति चेति घः हनोक्रोघ्नोषन इत्यत्र घ्न इत्युपलक्षणं हस्यान्यथात्वे णत्वाभाव इति बोध्यं तेन घत्वेऽपि णत्वनिषेधः, होघत्वे इति णत्वनिषेधार्थं परसूत्रं तं पूर्वापकारिणं पापं कपिं कथं वयं न प्रहण्मः इति त्वं वद प्राग्वन्नो ण इत्यादौ मवान्तहन इति पक्षे णत्वं पूर्वापकारिणमिति पूर्वं इत्यादिना कवर्गवत्त्वात् नित्यं णत्वम् ॥ १०२ ॥ भ०

वेश्मेत्यादि । शत्रोर्वेश्मान्तः गृहमध्य एव हननं कोपान्मम करिष्यतः अन्तरदेश इति नकारस्य णत्वं हननस्याभावरूपस्यादेशत्वात् अन्तरयणमन्तरायणं विघातं मा कार्षीः अयनञ्चेति णत्वं प्रयाणार्हं दीर्घप्रस्थानार्हमसुमवेहि अवगच्छ

प्रहीणजीवितं कुर्य्युर्ये न शत्रुमुपस्थितम् ।
न्याय्याया अपि ते लक्ष्म्याः कुर्वन्त्याशु प्रहापणम् ॥१०४॥
कः कृत्वा रावणामर्षप्रकोपणमवद्यधीः ।
शक्तो जगति शक्तोऽपि कर्त्तुमायुःप्रगोपणम् ॥ १०५ ॥

---

कृत्यच इति णत्वं अच उत्तरस्य नकारस्य कृत्स्थत्वात् ॥१०३॥ ज० म०

वेश्मेत्यादि। वेश्मान्तर्गृहमध्ये शत्रोर्हननं करिष्यतो मम अन्तरयणं विघ्नं त्वं मा कार्षीः न कुरु हे विभीषण ! अमुं वानरं प्रयाणार्हं दीर्घप्रस्थानार्हं मरणयोग्यं अवेहि जानीहि अन्तर्हणनमिति प्राग्वन्तो ण इति णत्वं अन्तरोऽदेशे हन इति णत्वमिति परः। अन्तरयणमिति खरणसवत्त्वं अन्तरोऽदेशेऽयनस्येति णत्वमिति परः। प्रयाणार्हमिति नोऽचोऽन्तरदुर्गेरिति णत्वम् ॥ १०३ ॥ भ०

प्रहीत्यादि। शत्रुमुपस्थितं प्रहीणजीवितं ये न कुर्य्युः जहातेरोदितश्चेति निष्ठादेशनकारस्य पूर्ववत्त्वं ते न्याय्याया अपि कुलक्रमादागताया अपि लक्ष्म्याः प्रहापणं त्याजनं कुर्वन्ति णेर्विभाषेति णत्वम् ॥ १०४ ॥ ज० म०

प्रहीत्यादि। ये उपस्थितं शत्रुं प्रहीणजीवितं त्यक्तप्राणं न कुर्य्युः ओहाक्त्यागे दामागेहागिति ङी ओदित्वात् क्तस्य नः नोऽचोऽन्तरदुर्गेरिति णत्वं ते न्याय्याया न्यायप्राप्ताया अपि लक्ष्म्याः आशु प्रहापणं त्यागं कुर्वन्ति नोऽचोऽन्तरदुर्गेरित्यादिना अन्तात् पचे णत्वम् ॥ १०४ ॥ भ०

कः कृत्वेत्यादि। अवद्यधीः योऽबुद्धिः रावणामर्षस्य प्रकोपणमभिवृद्धिं कृत्वा आयुःप्रगोपणं कर्त्तुं शक्तोऽपि कः

वनान्तप्रेङ्खण: पाप: फलानां परिणिंसक: ।
प्रणिञ्चिष्यति नो भूय: प्रणिन्द्यास्मान् मधून्ययम् ॥ १०६॥
हरे: प्रगमनं नास्ति न प्रभानं हिमद्रुह: ।
नातिप्रवेपनं वायोर्मया गोपायिते वने ॥ १०७ ॥

---

शक्त: हलश्चेजुपधादिति णत्वं कुपगुपयोर्हलन्तयोरिगुपधत्वात् ॥ १०५ ॥ ज० म०

क इत्यादि । कोऽवद्यधीर्दुर्बुद्धि: शक्रोऽपि इन्द्रतुल्योऽपि रावणसम्बन्धिक्रोधस्य प्रकोपणमतिवृद्धिं कृत्वा आयुष: प्रगोपणं कर्त्तुं शक्त: समर्थो भवति नोऽचोऽन्तरदुर्गेरित्यादिना कुपगुपोरिजुङ्त्वात् विभाषया णत्वम् ॥ १०५ ॥ भ०

वनेत्यादि । प्रेङ्खति गच्छतीति प्रपूर्वादिङ्खे: कर्त्तरि ल्युट् वनान्तस्य वनसमीपस्य प्रेङ्खण: इजादे: सनुम इति णत्वं फलानां परिणिंसक: भक्षयिता णिसिचुम्बन इत्यस्य रूपं अस्मान् प्रणिन्द्य तिरस्कृत्य भूय: पुनरप्ययं मधूनि नोऽस्माकं प्रणिञ्चिष्यति भोक्ष्यति णिक्षचुम्बन इत्यस्य रूपं वानिंसनिक्षनिन्दामिति णत्वम् ॥ १०६ ॥ ज० म०

वनान्तेत्यादि । अयं पापोऽस्मान् प्रणिन्द्य तिरस्कृत्य भूय: पुनरपि मधूनि न: प्रणिञ्चिष्यति न चुम्बिष्यति न भक्षयिष्यतीत्यर्थ: । कीदृश: वनान्तप्रेङ्खण: वनमध्यग: इखिगतौ नन्द्यादित्वादन: नोऽचोऽन्तरदुर्गेरित्यादिना इजादीदित्वात् णत्वं फलानां परिणिंसक: चुम्बक: भक्षक इत्यर्थ: प्राग्वन्नो णोऽन्तरदुर्गेरित्यादिना निंसनिक्षनिन्दानां विभाषया णत्वम् ॥ १०६ ॥ भ०

हरेरित्यादि । मया गोपायिते रक्षिते वने हरेरिन्द्रस्यापि चन्द्रस्य वा प्रगमनं सञ्चारो नास्ति हिमद्रुह: आदित्यस्य न

दुष्पानः पुनरेतेन कपिना भृङ्गसम्भृतः ।
प्रनष्टविनयेनाग्र्यः स्वादुः पुष्पासवो वने ॥ १०८ ॥
रोषभीममुखेनैवं चुक्षुभतोक्ते प्लवङ्गमः ।
प्रोचे सानुनयं वाक्यं रावणं स्वार्थसिद्धये ॥ १०९ ॥

इति णत्वाधिकारः ।

---

प्रभानं न प्रकर्षेण दीप्तिः वायोर्नातिप्रवेपनं मन्दगमनं तदनेन भग्नमित्यर्थात् कृत्यच इति प्राप्तस्य णत्वस्य न भाभूपूकमिगमीत्यादिना प्रतिषेधः ॥ १०७ ॥ ज० म०

हरेरित्यादि । मया गोपायिते रक्षिते वने हरेरिन्द्रस्यापि चन्द्रस्य वा प्रगमनं सञ्चारो नास्ति हिमद्रुहः सूर्यस्य प्रभानं प्रकृष्टा दीप्तिर्नास्ति वायोरतिप्रवेपनं प्रचण्डगमनं नास्ति सर्वत्र नोऽचोऽन्तरदुर्गेरित्यादौ ख्याभादिवर्जनान्न णत्वम् ॥ १७ ॥ भ०

दुष्पेत्यादि । पुनरेतेन प्रनष्टविनयेन कपिना पुष्पासवो दुष्पानः दुःखेन पास्यते इति आतो युच् षात्पदान्तादिति णत्वस्य प्रतिषेधः भृङ्गसम्भृतो भ्रमरसञ्चितः प्रनष्ट इति नशेः षान्तस्येति प्रतिषेधः अग्र्यः श्रेष्ठः ॥ १०८ ॥ ज० म०

दुष्पानेत्यादि । प्रनष्टविनयेन एतेन कपिना वने भृङ्गेण भ्रमरेण सम्भृतः सञ्चितः श्रेष्ठः अग्र्यः स्वादुर्मिष्टः पुष्पासवः पुनर्दुष्पानः दुःखेन पास्यते मयाद्य ताड़नात् नोऽचोऽन्तरदुर्गेरित्यादौ दुर्वर्जनान्न णत्वं नशः तो शच्छ्राजिति षङ् प्राग्वन्नो ण इत्यादिना नशेः शान्तत्वाभावात् न णत्वम् ॥ १०८ ॥ भ०

रोषेत्यादि । रोषभीममुखेन इति पदव्यवायेऽपि णत्वप्रतिषेधः भीममुख इत्यनेन निमित्तनिमित्तिनोर्व्यवधानात् क्षुभ्नादिषु चेति णत्वप्रतिषेधः एवमुक्ते सति प्लवङ्गमः रावणं

दूतमेकं कपिं बद्धमानीतं वेश्म पश्यतः ।
लोकत्रयपतेः क्रोधः कथं तृणलघुस्तव ॥ ११० ॥
अग्न्याहितजनप्रह्वे विजिगीषापराङ्मुखे ।
कस्माद्वा नीतिनिष्णस्य संरम्भस्तव तापसे ॥ १११॥

---

प्रोचे वक्तुं प्रवृत्तः वाक्यं वक्ष्यमाणं सानुनयं अनुकूलं किमर्थं स्वार्थस्य सिद्धये स्वार्थश्च सीताप्रत्यर्पणम् ॥ १०९ ॥ ज० म०

इति णत्वाधिकारः ।

रोषेत्यादि । रोषेण भीमं दुष्प्रेक्ष्यं मुखं यस्य तेन क्षुभ्नता कलुषीभवता रावणेन एवमुक्ते सति प्लवङ्गमो हनूमान् स्वार्थस्य सीताप्रत्यर्पणरूपस्य सिद्धये सानुनयमनुकूलं वाक्यं रावणं प्रोचे रोषभीममुखेनेति षूर्ण इत्यादौ अतद्धितादिति अतद्धपदेन नकारवत् पूर्ववर्त्तिनिमित्तवदेकमात्रपदं गृह्यते प्रथमदृष्टत्वात् न तु पूर्वपूर्ववर्त्ति यावत् पदं तेनात्र कार्य्यकारणयोर्भीमपदव्यवधानात् न णत्वं अनाङ्पदव्यवायेऽपीति णत्वनिषेधार्थं परसूत्रं क्षुभ्नतेति मनीषादित्वात् भयुक्तस्य नस्य णत्वनिषेधः ॥ १०९ ॥ भ०

इति णत्वाधिकारः ।

इतः प्रभृति प्रकीर्णकश्लोकानाह दुतमित्यादि । दूतं सन्देशस्य हारकं एकमद्वितीयं बद्धं अस्वतन्त्रीकृतं वेश्मानीतं पश्यत इति सर्वमेतन्न रोषकारणं अतो लोकत्रयपतेस्तवायं तृणवल्लघुरसारः कथं कोपः ॥ ११० ॥ ज० म०

अथ प्रकीर्णकाः । दूतमित्यादि । एकमद्वितीयं बद्धं वेश्म गृहमानीतं कपिं दूतं सन्देशहारकं मां पश्यतो लोकत्रयपतेस्तव कथं तृणवत् लघुरसारः क्रोधः ॥ ११० ॥ भ०

अग्न्येत्यादि । अग्न्याहितजनप्रह्वे आहिताग्नौ जने

न सर्वरात्रकल्याण्यः स्त्रियो वा रत्नभूमयः।
यं विनिर्जित्य लभ्यन्ते कः कुर्य्यात् तेन विग्रहम्॥ ११२॥

---

प्रवणे वाहिताग्न्यादिषु पूर्वनिपातः तस्मिन् विजिगीषापराङ्मुखे व्यक्तराज्यत्वात् तापसे रामे तपःसहस्राभ्यां विनिनीषेण् चेत्यण् निष्णस्य तव नीतौ पटुप्रज्ञस्य कस्माद्धेतोः संरम्भः रोषः॥ १११॥ ज० म०

अग्न्येत्यादि। कस्माद्वा तव तापसे रामे संरम्भः क्रोधः। कीदृशे अग्न्याहितजनप्रह्वे याज्ञिकजनेषु नम्रे अग्निराहितो येन सोऽग्न्याहितः क्तान्तस्य पूर्वनिपात औत्सर्गिकः अत्र तु आहितादिरग्न्यादेरिति सूत्रेण क्तान्तस्य विकल्पेन परनिपात इति परः। स्वमते पूर्वनिपातपरनिपातयोरन्वयबोधेन कर्त्तव्यत्वं नियमाभावात् तथात्वे विवक्षाधीनत्वादुभयपदं सिद्धमेव विजिगीषापराङ्मुखे विजेतुमिच्छा विजिगीषा तत्र पराङ्मुखे विगतस्पृहे। कीदृशस्य नीतिनिष्णस्य नीतौ पण्डितस्य॥ १११॥ भ०

न सेत्यादि। यं विनिर्जित्य सर्वरात्रं कल्याण्यः स्त्रियो न लभ्यन्ते सर्वाश्च ता रात्रयश्चेति पूर्वकालेति सः अहःसर्वेत्यादिना अच् सर्वरात्रं कल्याण्य इति सः न रत्नभूमयः रत्नाकराः रत्नानि भूमयश्चेति सः कः तेन सह विग्रहं कुर्य्यात् सन्धिरेव युक्तः॥ ११२॥ ज० म०

न सेत्यादि। यं विनिर्जित्य सर्वरात्रान् व्याप्य कल्याण्यः सुखदाः स्त्रियो रत्नानि भूमयश्च न लभ्यन्ते तेन सह विग्रहं कः पुरुषः कुर्य्यात् सर्वाश्च ता रात्रयश्चेति सर्वरात्राः ततः सदाध्वादिव्याप्ताविति द्वितीयाविधानात् द्वितीयातत्पुरुषः

सङ्गच्छ रामसुग्रीवौ भुवनस्य समृद्धये ।
रत्नपूर्णाविवाम्भोधी हिमवान् पूर्वपश्चिमौ ॥ ११३ ॥
सुहृदौ रामसुग्रीवौ किङ्कराः कपियूथपाः ।
परदारार्पणेनैव लभ्यन्ते मुञ्च मैथिलीम् ॥ ११४ ॥
धर्मं प्रत्यर्पयन् सीतामर्थं रामेण मित्रताम् ।

---

सर्वैकदेशसंख्यातेति षः तदन्तरात्रिशब्दस्य पुंलिङ्गत्वं पूर्वरात्र इत्युदाहरणेन ज्ञापितम् ॥ ११२ ॥ भ०

तदेव दर्शयन्नाह । सङ्गेत्यादि । यथा रत्नपूर्णावम्भोनिधी पूर्वपश्चिमौ भुवनस्य समृद्धये हिमवान् सङ्गतवान् तथा त्वमपि रामसुग्रीवौ भुवनस्य समृद्धये सङ्गच्छ सङ्गतिं कुरु सकर्मकत्वात्समोगमिति तङ् न भवति ॥ ११३ ॥ ज० म०

सङ्गेत्यादि । भुवनस्य समृद्धये वृद्धये त्वं रामसुग्रीवौ सङ्गच्छ सकर्मकत्वात् समो गम्यृच्छेति न मं हिमवान् हिमालयः पर्वतः रत्नैः पूर्णौ पूर्वपश्चिमौ समुद्रौ यथा सङ्गतवान् ॥ ११३ ॥ भ०

तच्च सङ्गतं परदारार्पणेनैवेति दर्शयन्नाह सुहृदित्यादि । रामसुग्रीवौ सुहृदौ लभ्येते सुहृद्दुर्हृदौ मित्रामित्रयोरिति निपातनं तत्प्रीतिलाभात् किङ्करा लभ्यन्ते किं कुर्वन्तीति दिवाविभेति टः कपियूथपाः नीलप्रभृतयः तस्मान्मुञ्च मैथिलीमिति ॥ ११४ ॥ ज० म०

सुहृदित्यादि । रामसुग्रीवौ सुहृदौ त्वया लभ्येते एवं सति कपियूथपा नीलादयः किङ्करा लभ्यन्ते परस्त्रीसमर्पणेनैव न तु स्वकीयकिञ्चिद्द्रव्यप्रदानेन तस्मात् मैथिलीं मुञ्च त्यज ॥ ११४ ॥ भ०

किञ्च सीताप्रत्यर्पणात् पुरुषार्थप्राप्तिरिति दर्शयन्नाह धर्म-

कामं विश्वासवासेन सीतां दत्त्वाप्नुहि त्वयम् ॥ ११५ ॥
विराधताडकाबालिकबन्धखरदूषणैः ।
न च न ज्ञापितो यादृङ्मारीचेनापि ते रिपुः ॥ ११६ ॥
खरादिनिधनञ्चैव मा मंस्था वैरकारणम् ।
आत्मानं रक्षितुं यस्मात् कृतं तच्च जिगीषया ॥ ११७ ॥

---

मित्यादि। सीतां प्रत्यर्पयन् धर्मं अधर्मविरतेः अर्थं रामेण मित्रतां सर्वलाभानामर्थसम्पन्नमित्रलाभस्य महत्त्वात् विश्वासवासेन रामविश्वासपूर्वकेणावस्थानेन कामं अतः सीतां दत्त्वा आप्नुहि लभस्व त्वयं त्रिवर्गं त्रयोऽवयवा अस्येति द्वित्रिभ्यां तयस्यायज्वा ॥ ११५ ॥ ज० म०

सीतार्पणेन त्रिवर्गप्राप्तिं दर्शयति धर्ममित्यादि। सीतां दत्त्वा त्वयं त्रिवर्गं आप्नुहि लभस्व यथा सीतां प्रत्यर्पयन् धर्मं प्राप्स्यसि परस्त्रीहरणाभावात् रामेण सह मित्रतामर्थं प्राप्स्यसि विश्वासवासेन कामं प्राप्स्यसि त्रयोऽवयवा अस्येति द्वित्रेर्वायट् ॥ ११५ ॥ भ०

रिपुरेवास्तु किन्तेन मित्रीकृतेन न वासौ शक्तोऽपकर्त्तुमिति चेदाह विराधेत्यादि। यादृगसौ रिपुः तादृग्विराधादिभिः नच न ज्ञापितः तव अपितु ज्ञापित एवेत्यर्थः तस्मात्तेन सह मैत्री युक्ता न विग्रह इति भावः यादृगिति त्यदादिषु दृश इति क्विन् आसर्वनाम्नः ॥ ११६ ॥ ज० म०

शत्रुरपि रामः किं कर्त्तुं शक्नोतीत्यत आह विराधेत्यादि। तव रिपुर्यादृक् विराधाद्यैर्मारीचेन च न न ज्ञापितः अपितु ज्ञापित एव ॥ ११६ ॥ भ०

खरादीन् व्यपादयता तेनैव वैरकारणमाचरितं न मयेति चेदाह खरेत्यादि। खरादिनिधनञ्चापि वैरकारणं मा मंस्थाः

ततः क्रोधानिलापातकम्प्रास्याम्भोजसंहतिः ।
महाह्रद इव क्षुभ्यन् कपिमाह स्म रावणः ॥ ११८ ॥
हतराक्षसयोधस्य विरुग्णोद्यानशाखिनः ।
दूतोऽस्मीति ब्रुवाणस्य किं दूतसदृशं तव ॥ ११९ ॥

---

मा त्रासीः लुङि रूपं यस्मादात्मानं संरक्षितुं तत् खरादिनिधनं कृतं न तु जिगीषया विजेतुमिच्छया ॥ ११७ ॥ ज० म०

खरादीत्यादि । खरप्रभृतिविनाशमपि विरोधबीजं त्वं मा मंस्थाः मा त्रासीः व्यां रूपं यस्मात् आत्मानं रक्षितुं तत् कृतं न तु जेतुमिच्छया ॥ ११७॥ भ०

तत इत्यादि । ततः कपिवाक्यानन्तरं क्रोधोऽनिल इव तस्यापातेन संश्लेषेण कम्प्रा कम्पनशीला आस्याम्भोजानां मुखपद्मानां संहतिर्यस्य स एवं महाह्रद इव क्षुभ्यन् चलन् दैवादित्वात् श्यन् ॥ ११८ ॥ ज० म०

तत इत्यादि । कपिवचनानन्तरं रावणो महाह्रद इव क्षुभ्यन् सञ्चलन् कपिमाह स्म उक्तवान् की स्मेनातीते इति की पञ्चतिप्पञ्चणव्वाहश्चेति ब्रूञस्तिपो णप् आहादेशश्च । कीदृशः क्रोधोऽनिल इव तस्यापातेनागमनेन संश्लेषेण कम्प्रा कम्पनशीला मुखपद्मानां संहतिर्यस्य स तथा अतएव ह्रदतुल्यता ॥ ११८ ॥ भ०

हतेत्यादि । हताः राक्षसयोधाः अक्षप्रभृतयो येन विरुग्णाः भग्नाः ओदितश्चेति निष्ठानत्वं उद्यानशाखिनो येन तस्यैवंविधस्य तव दूतोऽस्मीति ब्रुवाणस्य किं दूतसदृशं सन्देशमात्रस्य प्रापका हि दूता इति भावः ॥ ११९ ॥ ज० म०

हतेत्यादि । हे वानर ! अहं दूतोऽस्मीति ब्रुवाणस्य तव किं कर्म दूतसदृशं न किमपि दूता हि सन्देशप्रापका भवन्ति

पङ्गुवालस्त्रियो निघ्नन् कबन्धखरताडकाः ।
तपस्वी यदि काकुत्स्थः कीदृक् कथय पातकी ॥ १२० ॥
अभिमानफलं जानन् महत्त्वं कथमुक्तवान् ।
रत्नादिलाभशून्यत्वान्निष्फलं रामविग्रहम् ॥ १२१ ॥
परस्त्रीभोगहरणं धर्म एव नराशिनाम् ।
सुखमस्तीत्यभाषिष्ठाः का मे साशङ्कता त्वयि ॥ १२२ ॥

---

तव कीदृशस्य हता राक्षसयोधा येन विरगुणा ज्यानवृत्ता येन स तस्य ॥ ११९ ॥ भ०

अग्न्याहितजनप्रश्ने तापसे कस्मात् संरम्भ इत्याह पङ्गुबाले-त्यादि । पङ्गुमङ्गविकलं कबन्धं बालं खरं स्त्रियं ताड़कां निघ्नन् व्यापादयन् यदि तपस्वी काकुत्स्थः कीदृक् पातकीति कथय इदं किमोरीग्की ॥ १२० ॥ ज० म०

कस्मात् संरम्भस्तव तापसे इत्यस्योत्तरमाह पङ्गुबाले-त्यादि । पङ्गुं कबन्धं बालं खरं स्त्रियं ताड़काञ्च निघ्नन् रामो यदि तपस्वी तदा पातकी कीदृगिति त्वं कथय ॥ १२० ॥ भ०

यदुक्तं यं विनिर्जित्य स्त्रियो रत्नभूमयश्च न लभ्यन्त इत्याह अभीत्यादि । अभिमानः फलं यस्य महत्त्वस्य तज्जानन् रत्ना-दिलाभशून्यं रामविग्रहं कथं निष्फलमुक्तवानसि, विग्रहे सति अभिमानफलं महत्त्वं स्यात् ॥ १२१ ॥ ज० म०

न सर्वरात्नकल्याण्य इत्यादि यदुक्तं तदुत्तरमिदम् अभी-त्यादि । अभिमानमेव फलं यस्य तन्महत्त्वं जानन् त्वं कथं रामविग्रहं रत्नादिलाभशून्यत्वात् निष्फलं उक्तवान् अभि-मानस्य फलत्वात् ॥ १२१ ॥ भ०

सीतां प्रत्यर्पयन् धर्ममाप्नुहीत्येतदप्ययुक्तमित्याह परे-त्यादि । परस्त्रीणां हरणं परेषाम्भोगहरणञ्च द्वयमपि नरा-

ब्रूहि दूरविभिन्नानामृद्धिशीलक्रियान्वयैः।
हनूमन्! कीदृशं सख्यं नरवानररक्षसाम्॥ १२३॥
एको द्वाभ्यां विरोधस्तु जिताभ्यामविवक्षितः।
हतस्छलेन मूढोऽयं तेनापि तव कः स्मयः॥ १२४॥

---

शिनां धर्म एव आचार एव अतो सुखमस्तीत्यभाषिष्ठाः अभिहितवानसीति सीतां प्रत्यर्पयन् धर्ममाप्नुहीति लुङि रूपं भयात् प्रत्यर्पयसि चेदाह का मे साशङ्कता त्वयीति त्रैलोक्यविजयित्वात् त्वयीति हनूमद्व्यपदेशेन रामं सूचयति॥ १२२॥ ज० म०

धर्मं प्रत्यर्पयन् सीतामित्यादि यदुक्तं तदप्ययुक्तमित्याह परेत्यादि। परेषां स्त्रीणां भोगानाञ्च यद्धरणं तदेव नराशिनां राक्षसानां धर्म आचारः अतएव सुखमस्ति इति हेतोः सीतां प्रत्यर्पयन् धर्ममित्यादि अभाषिष्ठाः उक्तवानसि त्वां रूपं भयात् सीतां प्रत्यर्पयिष्यति चेदाह का मे मम त्वयि साशङ्कता भयवत्ता त्रैलोक्यविजयित्वात् त्वयीति रामव्यपदेशेन हनूमतीति॥ १२२॥ भ०

सङ्गच्छ रामसुग्रीवावित्येतदपि न घटत इत्याह ब्रूहीत्यादि। ऋद्ध्या विभूत्या शीलेन स्वभावेन क्रियया अनुष्ठानेन अन्वयेन कुलेन दूरविभिन्नानां नरादीनां कीदृशं सख्यमिति हे हनूमन्! त्वमेव ब्रूहि॥ १२३॥ ज० म०

सङ्गच्छ रामसुग्रीवाविति यदुक्तं तदप्ययुक्तमित्याह ब्रूहीत्यादि। हे हनूमन्! त्वमेव ब्रूहि नरवानरराक्षसानां सख्यं कीदृशं कीदृशानां ऋद्ध्या सम्पत्त्या शीलेन स्वभावेन क्रियया अनुष्ठानेन अन्वयेन कुलेन चातिविभिन्नानाम्॥१२३॥ भ०

विराधादिभिर्ज्ञापितोऽसि यादृगरिरित्युक्तोत्तरमाह एक

मन्नियोगाच्च मारीचः पलायनपरायणः ।
युयुत्सारहितो रामं ममारापहरन् वने ॥ १२५ ॥
निजघानान्यसंसक्तं सत्यं रामो लताम्रगम् ।
त्वमेव ब्रूहि सञ्चिन्त्य युक्तं तन्महतां यदि ॥ १२६ ॥

---

इत्यादि । एकेनापि विराधेन प्रथमं द्वावपि जितौ ताभ्यां पश्चाद्धतः तत्रापि न प्रकाशं अपितु छलेन यतोऽसौ मूढोऽल्पबुद्धिः तथाप्यविवक्षितः शौर्य्यान्न प्रतीतः तेनापि हतेन तव विस्मयो जातः ॥ १२४ ॥ ज० म०

विराधादिभिर्न च न ज्ञापितो यादृगित्यस्योत्तरमिदम् । एक इत्यादि । एकेनापि विराधेन द्वावपि जिताविति जिताभ्यां द्वाभ्यां पश्चात् छलेन विराधोऽपि हतः यतोऽसौ मूढः अल्पबुद्धिः एकोऽद्वितीयः अविवक्षितः अप्रसिद्धः शौर्य्येणाप्रथितो वा तेनापि हतेन तव को विस्मयो जातः ॥ १२४ ॥ भ०

मन्नीत्यादि । मारीचस्तु यतो राममपहरन् ममार मन्नियोगादादेशात् पलायनपरायणः अपसर्पणनिष्ठः सन् पलायनपरायण इति परस्य नामरूपत्वादनुपसर्गत्वान्न णत्वं युयुत्सारहितः योद्धुमिच्छारहितः मन्नियोगादिति प्रत्ययोत्तरपदयोश्चेति अस्मदो मदादेशः ॥ १२५ ॥ ज० म०

मारीचेन च ज्ञापित इत्यस्योत्तरमाह मदित्यादि । मारीचस्तु मन्निदेशतः पलायनतत्परः सन् वने रामं अपहरन् योद्धुमिच्छया रहितो ममार तेन तव को विस्मय इति भावः ॥ १२५ ॥ भ०

निजघानेत्यादि । रामो लताम्रगं वानरं वालिनं निजघानेति सत्यमेतत् किन्तु अन्यसंसक्तं सुग्रीवेण सह युध्यमानं

पुंसा भक्ष्येण बन्धूनामात्मानं रक्षितुं वधः ।
क्षमिष्यते दशास्येन क्वत्येयं तव दुर्मतिः ॥ १२७ ॥
कपिर्जगाद दूतोऽहमुपायं तव दर्शने ।
द्रुमराक्षसविध्वंसमकार्षं बुद्धिपूर्वकम् ॥ १२८ ॥

---

हतवान् तच्च त्वमेव सञ्चिन्त्य निश्चित्य ब्रूहि युक्तं तन्महतां यदि ॥ १२६ ॥ ज० म०

बालिवधोऽप्ययुक्त इत्याह निजेत्यादि । लताभृगं बालिनं रामो निजघान । कीदृशं अन्यसंसक्तं सुग्रीवेण सह युध्यमानं सत्यं साधु सत्यं तथ्यं वा निजघानेत्यनेन ब्रूहीत्यनेन वा सम्बन्धः । हे हनूमन् ! त्वमेव सञ्चिन्त्य ब्रूहि तद्यदि महतां युक्तम् ॥ १२६ ॥ भ०

पुंसेत्यादि । आत्मानं रक्षितुं पुंसा भक्ष्येण भक्षणार्हेण सतां बन्धूनां खरदूषणादीनां वधो दशास्येन क्षमिष्यते सहिष्यते क्वत्येयं क्वभवेयं तव दुर्मतिर्दुष्टबुद्धिः क्वशब्दादव्ययात्त्यप् अमेहक्वतसित्रेभ्य इति परिगणनात् ॥ १२७ ॥ ज० म०

आत्मानं गोपितुं यस्मादिति यदुक्तं तस्योत्तरमिदम् । पुंसेत्यादि । भक्ष्यार्हेण पुंसा रामेण आत्मानं रक्षितुं बन्धूनां खरदूषणादीनां वधो मारणं दशास्येन क्षमिष्यते सहिष्यते इयं तव दुर्मतिः दुर्बुद्धि- क्वत्या क्वभवा कुत्र जातेत्यर्थः त्यब्- व्यचिरेत्यादिना त्यः ॥ १२७ ॥ भ०

इदानीं कपिर्दशाननोक्तं दूषयन्नाह कपिरित्यादि । तव दर्शने अन्य उपायो नास्तीति बुद्धिपूर्वकं बुद्ध्या निरूप्य द्रुम- भङ्गं राक्षसविनाशञ्च उपायमकार्षं क्वतवानस्मीति कपिर्ज- गाद अन्यथा दूतोऽहमागत इति मदावलिप्तः को मां गणयेत् अतः सदृशमेव मया क्वतमिति ॥ १२८ ॥ ज० म०

Funding: IKS/Tattva Heritage and IKS-MoE. Digitization: eGangotri.



आत्रिकूटमकार्षुर्ये त्वत्का निर्जङ्गमं जगत् ।
दशग्रीव ! कथं ब्रूषे तानबध्यान् महीपतेः ॥ १२९ ॥
अभिमानफलं प्रोक्तं यत्त्वया रामविग्रहे ।
विनिश्रुस्तेन शतशः कुलान्यसुररक्षसाम् ॥ १३० ॥

---

इदानीं रावणोक्तं क्रमेण दूषयन् कपिराह तत्र प्रथमं किं दूतसदृशं तवेत्यस्योत्तरमाह कपिरित्यादि। कपिर्जगाद किं तदित्याह दूतोऽहं तव दर्शने द्रुमाणां राक्षसानाञ्च विनाशरूपमुपायं अकार्षं कृतवानस्मि बुद्धिपूर्वकं बुद्ध्या निरूप्य अन्यथा दूतोऽयमागत इति को मां गणयेत् अतः सदृशमेव कृतमिति ॥ १२८ ॥ भ०

आत्रीत्यादि। हे दशग्रीव ! दशमूर्द्धन् ! ये त्वत्काः त्वद्ग्रामणीकाः कबन्धादयः स एषां ग्रामणीरिति कन् आत्रिकूटं त्रिकूटपर्वतमभिव्याप्य जगत् निर्जङ्गमं निर्जन्तुकमकार्षुः तान् महीपतेः रामस्य कथमबध्यान् ब्रूषे अशिष्टनिग्रहो हि महीपतेर्धर्मः जङ्गम इति गमेर्यङ्लुगन्तस्यापि रूपम् ॥१२९॥ ज० म०

पङ्गुबालस्त्रिय इत्यादि यदुक्तं तदुत्तरमाह आत्रीत्यादि। ये त्वत्कास्त्वत्सेवकाः कबन्धादयस्त्रिकूटपर्वतमभिवाप्य जगत् निर्जङ्गमं निर्जन्तुकं अकार्षुः कृतवन्तः कृत्रथ्यामनि रूपं त्वां सेवन्ते इति ढवेकादिति कः त्वमेव मुख्यो येषामिति वा तवामी इति वा विकारसंघेत्यादिना कः युष्मदस्मदोस्त्वाहावित्यादिना एकत्वे त्वदादेशः। हे दशग्रीव ! तान् महीपतेः राज्ञो रामस्याबध्यान् कथं ब्रूषे अशिष्टनिग्रहो हि महीपतेर्धर्मः ॥ १२९ ॥ भ०

अभीत्यादि। मा भूद्रामविग्रहे रत्नादिलाभः अभिमान-

यत् स्वधर्ममधर्मं त्वं दुर्बलं प्रत्यपद्यथाः।
रिपौ रामे च निःशङ्को नैतत् क्षेमङ्करञ्चिरम्॥ १३१॥
अन्वयादिविभिन्नानां यथा सख्यमनीप्सितम्।
नैषीर्विरोधमप्येवं सार्द्धं पुरुषवानरैः॥ १३२॥

---

फलं महत्त्वमस्तीति यत्त्वया प्रोक्तं तेन निमित्तेन शतशोऽनेकशः असुररक्षसां कुलानि विनेशुः विनष्टानि॥१३०॥ ज०म०

अभीत्यादि। मा भूद्रामविग्रहे रत्नादिलाभोऽभिमानफलं महत्त्वमस्तीति यत्त्वया प्रोक्तं तेन हेतुना शतशः शतं शतं असुराणां रक्षसाञ्च कुलानि विनेशुर्विनष्टानि॥ १३०॥ भ०

यत् स्वेत्यादि। यदधर्मं परस्त्रीभोगहरणं दुर्बलं असारं अश्रेयसां आवाहकत्वात् स्वधर्ममात्मीयमाचारं त्वं प्रत्यपद्यथाः प्रतिपन्नवानसि स्वधर्म एव नराशिनामिति लङि थनि रूपं यच्च रिपौ रामे निःशङ्कः निर्भयः विहरसि का मे साशङ्कता त्वयीति तदेतदुभयमपि न चिरं क्षेमङ्करं कल्याणकरं क्षेमप्रियमद्रोऽण् चेति खच्॥ १३१॥ ज० म०

यदित्यादि। परस्त्रीभोगहरणं यत् स्वधर्ममात्मीयमाचारं धर्मरहितं दुर्बलमसारं प्रत्यपद्यथाः प्रतिपन्नवानसि यच्च रामे रिपौ त्वं निःशङ्कः निर्भयः का मे साशङ्कता त्वयीत्युक्तवान् तदेतदुभयं चिरं क्षेमङ्करं कल्याणदायकं न भविष्यति क्षेमप्रियमद्रात् कुर्वेति खः॥ १३१॥ भ०

अन्वेत्यादि। यथा नरादीनां अन्वयादिभिर्दूरविभिन्नत्वात् सख्यमनीप्सितं आप्तुमनिष्टं एवं पुरुषवानरैः सार्द्धं विग्रहमपि नैषीः नेष्टवानसि॥ १३२॥ ज० म०

ब्रूहि दूरविभिन्नानामित्यादि यदुक्तं तदुत्तरमिदम्। अन्वयेत्यादि। अन्वयादिविभिन्नानां नरवानररक्षसां यथा सख्य-

विराधं तपसां विघ्नं जघान विजितो यदि ।
वरो धनुर्भृतां रामः स कथं न विवक्षितः ॥ १३२ ॥
प्रणश्यन्नपि नाशक्नोदत्येतुं बाणगोचरम् ।
त्वयैवोक्तं महामायो मारीचो रामहस्तिनः ॥१३४॥

---

मनोप्सितं नेष्टं विरोधमप्येवं पुरुषवानरैः सह नैषीः न इच्छ माबोगि टो ॥ १३२ ॥ भ०

विरेत्यादि । तपसां विघ्नं विराधं विहन्यतेऽस्मिन्निति घञर्थे कविधानमिति कः ताहक् छलेनापि हन्तुं न दोषायेति दर्शयति धनुर्भृतां वरः श्रेष्ठः सन् विजितोऽभिभूतोऽपि रामो यदि जघान स कथं न विवक्षितः यतो राममप्यसौ जितवान् ॥ १३३ ॥ ज० म०

एको द्वाभ्यामिति यदुक्तं तदुत्तरमाह विराधमित्यादि । धनुर्धराणां श्रेष्ठोऽपि रामः आदौ विजितोऽभिभूतोऽपि सन् पश्चात्तपसां विघ्नमन्तरायं विराधं यदि जघान तदा कथं स विराधो न विवक्षितः न प्रसिद्धः अपितु विवक्षित एव स राम इत्यन्ये विहन्यतेऽस्मिन्निति विघ्नः अभिधानादाधारे टक् ॥ १३३ ॥ भ०

प्रणेत्यादि । मारीचः प्रणश्यन्नपि पलायनपरोऽपि सन् महामायः कनकमृगरूपधारित्वात् रामहस्तिनः रामो हस्तीव तस्य बाणगोचरं बाणपदवीं अतिक्रमितुं अत्येतुं नाशक्नोत् न शक्तवानिति त्वयैवोक्तं ममारेत्यभिदधता न मया यदि शक्नोति अतिक्रमितुं न ममार ॥ १३४ ॥ ज० म०

मन्नियोगाच्च मारीच इत्यादि यदुक्तं तदुत्तरमाह प्रणश्यन्नित्यादि । महती माया यस्य स मारीचः प्रणश्यन्नपि पलायमानोऽपि रामहस्तिनो बाणगोचरं बाणपदवीं अत्येतुं अति-

अन्यासक्तस्य यद्वीर्यं न त्वं स्मरसि बालिनः ।
मूर्च्छावान् नमतः सन्ध्यां ध्रुवं तद्बाहुपीडितः ॥ १३५ ॥
असद्बन्धुबधोपज्ञं विमुञ्च बलिविग्रहम् ।
सीतामर्पय नन्तव्ये कोषदण्डात्मभूमिभिः ॥ १३६ ॥

---

क्रमितुं न अशक्नोत् न शक्तोऽभूत् इति तु त्वयैवोक्तं रामो हस्तीव बलवत्त्वात् एतेन रामस्य धन्विश्रेष्ठत्वमस्त्येवेति सूचितम् ॥ १३४ ॥ भ०

अन्येत्यादि । सन्ध्यादेवतां नमतो अन्यासक्तस्य बालिनो यद्वीर्यं सामर्थ्यं तत् ध्रुवमवश्यं त्वं न स्मरसि न चेतयसि कुतः बाहुपीडितः सन् मूर्च्छावान् जातः अतएव न स्मरसि येनैवमुक्तवानसि ॥ १३५ ॥ ज० म०

निजघानान्यसंसक्तमित्यादि यदुक्तं तदुत्तरमाह अन्येत्यादि । अन्यासक्तस्य बालिनः यद्वीर्यं तत्त्वं ध्रुवं न स्मरसि कीदृशस्त्वं सन्ध्यां नमतो वन्दमानस्य तस्य बाहुपीडितः सन् मूर्च्छावान् एतेन बालिबधेऽपि महत्त्वमस्तीति सूचितम् ॥ १३५ ॥ भ०

निजघानान्यसंसक्तमिति उपसंहरन्नाह असदित्यादि । यतो बलबद्भ्योऽपि बलीयान् रामः तस्माद्बलिना रामेण सह विग्रहं मुञ्च त्यज । कीदृशं बन्धुबधोपज्ञं प्रथमतो ज्ञातिविनाशेन विदितमित्यर्थः उपज्ञायते इत्युपज्ञा इगुपधेति कः बन्धुबधस्योपज्ञेति सः उपज्ञोपक्रममिति नपुंसकलिङ्गता तत् सामानाधिकरण्यादसदिति नपुंसकलिङ्गता नन्तव्ये प्रणामार्हे कोषदण्डात्मभूतिभिः सह सीतामर्पय ॥ १३६ ॥ ज० म०

असदित्यादि । तस्मात् बलिना रामेण सह विग्रहं विरोधं विमुञ्च त्यज । कीदृशं असतां बन्धूनां बधस्य उपज्ञं

स्फुटपरुषमसह्यमित्थमुच्चैः
सदसि मरुत्तनयेन भाष्यमाणः ।
परिजनमभितो विलोक्य दाहं
दशवदनः प्रदिदेश वानरस्य ॥ १३७ ॥

इति प्रकीर्णकाः ।

इति भट्टिकाव्येऽशोकवनप्रभञ्जनं नाम
नवमः सर्गः ।

---

प्रथमतो ज्ञातिबधेनावेदितमित्यर्थः उपज्ञायते यत इत्युपज्ञ आत इति ङः परमते उपज्ञोपक्रमयोरादिकथने क्लीवत्वं तन्मते असतां बन्धूनां बधस्य उपज्ञा प्रथमतो ज्ञानं यस्मादिति बहुब्रीहिः एतेन रावणस्य बन्धुबधो न भविष्यतीति यत् ज्ञानमासीत् बलिविग्रहेण तदभाव इति सूचितं तस्मात् नन्तव्ये प्रणम्ये रामे कोषादिभिः सीतां समर्पय ॥१३६॥ भ०

स्फुटेत्यादि । इत्थं स्फुटपरुषं उक्तप्रकारेण स्फुटं स्पष्टं परुषं रूक्षं अतएवासह्यं सोढुमशक्यं उच्चैर्महता ध्वनिना सदसि सभायां मरुत्तनयेन भाष्यमाणोऽभिहितः इत्थमित्यनेन वस्तुनः परिसमापितत्वात् तेन वर्त्तमानसामीप्य इति लट् परिजनमभितः उभयपार्श्वे स्थितान् भृत्यान् विलोक्य वानरस्य दाहं प्रदिदेश आदिष्टवान्॥ १३७ ॥ ज० भ०

इति भट्टिकाव्यटीकायां जयमङ्गलायामधिकारकाण्डे चतुर्थः परिच्छेदः । काव्यस्य मारुतिसंयमो नाम नवमः सर्गः ।

स्फुटेत्यादि । इत्थमुक्तप्रकारेण स्फुटं स्पष्टं परुषं रूक्षं अतएवासह्यं उच्चैर्महता ध्वनिना सदसि सभायां मरुत्तनयेन

हनूमता भाष्यमाण उक्तः सन् अभित उभयपार्श्वे परिजनं विलोक्य दशवदनो रावणो वानरस्य दाहं प्रदिदेश आदिष्ट-वान् ॥ १३७ ॥ भ०

इति प्रकीर्णकाः ।

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरत-सेनविरचितायां भट्टिटीकायां मुग्धबोधिन्यां नवमः सर्गः ।

समाप्तमधिकारकाण्डम् ।

---

